प्रायश्चित्तं तथाऽऽचारः, श्रौत-धर्म्मे तथेरणात्।
श्रौत-धर्म्मोऽग्निहोत्रादिराचारस्तदनुष्ठितिः।
अयथाविध्यनुष्ठाने प्रायश्चित्तं श्रुतौ श्रुतम्।
कल्प-सूत्र-कृतः श्रौते* प्रायश्चित्तमनुष्ठितिम्।
असूचयन्नुभे एव, व्यवहारन्तु(१) नाब्रुवन्।
तद्वदेवायमाचार्य्यः पर-लोक-प्रसाधनम्†।
स्मार्त्तं धर्म्मं विवक्षुः सन् काण्डद्वय(२)मवोचत।
(३)ननु चोदनयागम्ये‡ व्यवहारेऽपि धर्म्मता,—
अस्तीति चेदनुष्ठातुर्लोके§ऽस्मिन्नुपयुज्यते।

---

* सूत्रे,—इति मु० पुस्तकपाठः।
† प्रधानकम्,—इति मु० पुस्तकपाठः।
‡ न, तत्र चोदनागम्ये,—इति मु० पुस्तकपाठः।
§ चेदस्तु सा तु लोके,—इति मु० पुस्तकपाठः।

---

(१) "विनानार्थेऽवसन्देहे हरणं हार उच्यते। नाना-सन्देहहरणात् व्यवहार इति स्मृतः"—इत्याद्युक्तो भाषोत्तरक्रियानिर्णयाख्या चतुष्पात् व्यवहारः।
(२) आचारकाण्डं प्रायश्चित्तकाण्डञ्च।
(३) आशङ्कते नन्विति। चोदनयागम्ये इति हेतुगर्भविशेषणं। "चोदनालक्षणोऽर्थो धर्म्मः" (मी०१,१,२) जैमिनिसूत्रात् चोदनागम्यार्थस्यैव धर्म्मत्वावगतेर्व्यवहारस्यापि तथात्वात् तदकथनादाचार्य्यस्य न्यूनत्वमिति पूर्व्वपक्षार्थः। उत्तरमाह अनुष्ठातुरिति। तथाच पारलौकिकफलकधर्म्मस्यात्र विवक्षितत्वात् व्यवहारस्य चैहिकफलकत्वात्तदकीर्त्तनेऽपि न न्यूनत्वमिति भावः। ऐहिकमपि फलं व्यवहारानुष्ठातुर्व्वादिनः प्रतिवादिनश्च न तु व्यवहारद्रष्टूराज्ञ इति बोध्यं।

(१)कारीर्य्यादिश्रौतधर्म्मो दृष्टैक*फलको यथा ।
लाभ-पूजा-ख्याति-मात्र-फला व्यवहृतिस्तथा ।
जेतुर्लाभादिकं तद्वत् पराजेतुश्च दण्डनम् ।
तावेव स्वर्ग-नरकौ विहितप्रतिषिद्धजौ ।
(२)ननु, राज्ञश्च सभ्यानां साक्षिणां चान्यथाकृतौ ।
प्रत्यवायाद्व्यवहृतिः परलोकप्रयोजना ।
(३)"अदण्ड्यान् दण्डयन् राजा दण्ड्यांश्चैवाप्यदण्डयन् ।
अयशो महदाप्नोति नरकं वाऽपि† गच्छति" ।
"सभा वा न प्रवेष्टव्या‡ वक्तव्यं वा समञ्जसम् ।

---

* दृष्ठैक,—इति मु० पुस्तकपाठः ।
† नरकञ्चैव,—इति मु० म० पाठः । नरकं चापि,—इति मु० पुस्तकपाठः ।
‡ सभां वा न प्रवेष्टव्यं—इति मु० म० पाठः ।

---

(१) कारीरी यागविशेषः । स चैहिकमात्रफलकः अवग्रहेण शुष्यतां शस्यानां वृष्ट्या सञ्जीवनस्यैव तत्फलत्वात् । अतएव यावत्यनुष्ठिते वृष्टि र्भवति, तावतैव तत्समापनमनुशिष्यते ।
(२) व्यवहारस्यैहिकमात्रफलकत्वमसिद्धमित्याशङ्कते नन्विति । अत्र च, बुद्धिपूर्व्वकान्यथाकारणएव राज्ञः सभ्यानाञ्च प्रत्यवायः । तर्कवाक्यानुसारेण निर्णये कृते तु वस्तुनोऽन्यथात्वेपि व्यवहारदर्शिनां दोषोन भवतीति बोध्यं । अतएव गौतमेन, "न्यायाभ्युपगमे तर्कोऽभ्युपायस्तेन संगृह्य यथास्थानं गमयेत्"—इत्यभिधाय, "तस्मात् राजाचार्य्यावनिन्दितौ"—इत्युपसंहृतम् ।
(३) अन्यथा कृतौ राज्ञः सभ्यानां साक्षिणाञ्च प्रत्यवाये मानवीयं वाक्यचयमुदाहरति 'अदण्ड्यान्' इत्यादिना ।

अब्रुवन् विब्रुवन्(१) वापि नरोभवति किल्विषी"।
"साक्ष्येऽनृतं वदन् पाशैर्बध्यते वारुणैर्नरः।
विवशः शतमाजातीस्तस्मात्* साक्षी वदेदृतम्"†(२)।
(३)राजादेः प्रत्यवायोऽस्तु व्यवहारे किमागतम्?।
व्यवहारेण राजादेरर्थि-प्रत्यर्थिनोस्तु सः।
प्रत्यर्थिनोऽर्थिनो वाऽत्र प्रत्यवायेन हि स्मृतः।
पराजय-निमित्तेन प्रायश्चित्तं च न स्मृतम्।
ऋणाद्यैर्नरकोक्तिर्या साऽप्याचार-निबन्धना(४)।
(५)अस्तु वा नरकः शास्त्र-विरुद्ध-व्यवहारिणः।
पर-लोक-प्रधानत्वमेवास्माभिर्निवार्य्यते।

---

* शतवर्षाणि,—इति मु० पुस्तकपाठः।
† साक्ष्यं वदेदृतं—इति मु० म० पाठः।

---

(१) विब्रुवन् विरुद्धं ब्रुवन्।
(२) जातिर्जन्म। तथाच विवशः सन् शतजन्मानि यावत् वारुणैः पाशैर्बध्यते इत्यन्वयः। ऋतं सत्यं।
(३) आशङ्कां परिहरति 'राजादेः'—इति।
(४) आचारनिबन्धना लोकव्यवहारमूला। तथाच नरकोक्तिर्निन्दामात्रमिति भावः।
(५) ननु "ऋणानाद्धानपक्रिया"—इति मनुना उपपातकमध्ये पाठात् प्रत्यवायएव गम्यते। अपिच चतुष्पादात्मकव्यवहारे निर्णयस्य राजाद्यनुष्ठेयत्वात् तदन्यथाकरणे तेषां प्रत्यवायः स्यादेव। तथा चोभयथापि व्यवहारस्य परलोकप्रयोजनकत्वमक्षतमित्याशयवानाह अस्तु वेति। परलोकेति, तथाचायमाचार्य्यः परलोकप्रधानमेव धर्म्ममुपदिदेश, व्यवहारस्तु न तादृश इति न तदकथनात् न्यूनत्वशङ्केति भावः।

एतल्लोक-प्रधानोयः पर-लोकोपसर्जनः ।
स धर्म्मो व्यवहारः स्यादाचारस्तु विपर्य्ययात्*(१) ।
प्राधान्येऽप्यस्य लोकस्य स्यादेवाम्नाय-मूलता ।
गान्धर्व्वाद्युपवेदेषु तादृशेषु तदीक्षणात्(२) ।
(३)"जगाह वाक्यमृग्वेदात्† सामभ्योगीतिमेव च ।
यजुर्व्वेदादभिनयान् रसानाथर्व्वणादपि‡" ।
किं बहुतयाऽयमाचार्य्यः पर-लोकैक-दृष्टिमान् ।
व्यवहारन्तु नावोचत् किन्तु सूचितवानमुम्(४) ।
राज-धर्म्म-प्रसङ्गेन,(५) 'क्षितिं धर्म्मेण पालयेत्' ।
इति ब्रुवन् राज-दृश्यं व्यवहारमसूचयत् ।
(६)साक्षादिष्टाप्ति-हेतुत्वादाचारः पूर्व्वमीर्य्यते§ ।

* विपर्य्यये,—इति मु० पुस्तकपाठः ।
† पादमृग्वेदात्,—मु० पुस्तकपाठः ।
‡ सामान्याथर्व्वणादपि,—इति मु० पुस्तकपाठः ।
§ पूर्व्वमिष्यते,—इति मु० पुस्तकपाठः ।

(१) एतल्लोकोपसर्जनः परलोकप्रधानो धर्म्म आचार इत्यर्थः ।
(२) तादृशेषु एतल्लोकप्रधानेषु । तदीक्षणात् आम्नायमूलत्वदर्शनात् ।
(३) गान्धर्व्वोपवेदस्याम्नायमूलत्वे तमधिकृत्य पठितं वाक्यमुदाहरति जग्राहेति । अभिनयान् "भवेदभिनयोऽवस्थानुकारः"—इत्युक्तलक्षणानवस्थानुकारान् । रसान् शृङ्गारादीन् । एतच्चतुष्टयमेव खलु विषयो गान्धर्व्वस्य ।
(४) उपसंहरति किं बहुनेति । अमुं व्यवहारं ।
(५) राजधर्म्मप्रसङ्गेन,—इतिच्छेदः । एतच्च 'सूचितवान्' इति पूर्व्वेणान्वितं । सूचनप्रकारमेवाह क्षितिमित्यादिना ।
(६) इदानीमाचारकाण्ड-प्रायश्चित्तकाण्डयोः पौर्व्वापर्य्यमुपपादयितुमाह साक्षादिति ।

आचारस्यान्यथात्वे तु प्रायश्चित्त-गवेषणम्।
इत्याचारे चयोऽध्यायाः प्रायश्चित्ते नवोदिताः।
*आचारतश्चतुर्व्वर्ण-धर्म्मौ साधारणापरौ[१]।
शिष्टाचाराञ्चिके तत्र धर्म्मौ साधारणौ मतौ†।
षट्कर्म्म-क्षितिरक्षाद्याः वर्णासाधारणाः स्मृताः[२]।
आचारे‡ प्रथमाध्याये एतेऽर्थाः परिकीर्त्तिताः§।
कृष्यादिर्जीवनोपायो द्वितीयेऽध्याय ईरितः।
चतुराश्रमधर्म्माश्च सूचिताः आश्रमोक्तितः।
उक्तौ तृतीये [३]आशौच-विस्तर-श्राद्ध-संग्रहौ।
अध्याय-त्रयगाः अर्थाः प्रोक्ताः आचार-काण्ड-गाः।
तुर्य्ये[४] प्रकीर्ण-पापस्य प्रायश्चित्तं प्रपञ्चितम्।

* अवतारश्चतुर्व्वर्णधर्म्मौ साधारणे-तरौ,—इति मु० पुस्तकपाठः।
† शिष्टाचाराञ्चितस्तत्र धर्म्मः साधारणः स्मृतः,—इति मु० पुस्तकपाठः।
‡ आदितः,—इति मु० पुस्तकपाठः।
§ त एतेऽर्थाः प्रकीर्त्तिताः,—इति मु० पुस्तकपाठः।

(१) साधारणश्च अपरश्च (असाधारणश्च), साधारणापरौ। तथाच, आचारकाण्डे चतुर्णां वर्णानां साधारणोऽसाधारणश्चेति द्विविध एव धर्म्म उक्त इत्यर्थः।

(२) वर्णानामसाधारणा वर्णासाधारणाः। तत्र, षट्कर्म्माणि (सन्ध्यावन्दनादीनि) ब्राह्मणस्यासाधारणोधर्म्मः, क्षितिरक्षा क्षत्रियस्य। एवं वैश्यशूद्रयोरपि ज्ञेयं।

(३) आशौचं—इति अशुचिशब्दात् भावप्रत्ययान्तात् उभयपदवृद्ध्या साधु। उत्तरपदमात्रवृद्ध्या तु अशौचमित्यपि। एवं रीत्या आशौच्यं, आदिपदवृद्ध्या आशुच्यमित्यपि ज्ञेयं।

(४) "यदनुक्तं तत् प्रकीर्णम्"—इति अनुक्तलक्षणं पापं प्रकीर्णम्। तच्च अतिपातकादिवत् नामतेन विशेषतोऽनुक्तमिति बोध्यम्।

प्रसङ्गात् पुत्र-भेदादि प्रोक्तञ्च परिवेदनम्(१) ।
प्रकीर्ण-शेषः, संस्कारः आहिताग्नेश्च पञ्चमे ।
(२)मलावहे च सङ्कीर्णे तथा चैवोपपातके* ।
प्रायश्चित्तं षष्ठउक्तं शुद्धिश्चान्ने रसेऽपि च ।
अवशिष्ट-द्रव्य-शुद्धिः सप्तमाध्यायईरिता ।
प्रायश्चित्तं गोवधे चा सामान्येनाष्टमे स्मृतम् ।
†रोधनादिविशेषेण नवमे तदुदीरितम् ।
अगम्या-गमने प्रायश्चित्तं दशमईरितम् ।
अभोज्य-भोजनादौ तदेकादशउदीरितम् ।
द्वादशः परिशेषः स्यात् काण्डयोरुभयोस्तयोः ।
‡स्यादन्येषामनुक्तानामुपलक्षणमीक्ष्यताम् ।
अनुपातकमुख्येषु§ प्रायश्चित्तं क्वचित् क्वचित् ।

---

* सङ्कीर्णकरणे चोपपातके,—इति मु० पुस्तकपाठः ।
† गोवधस्य,—इति मु० पुस्तकपाठः ।
‡ सचान्येषामिति मु० पुस्तकपाठः ।
§ युक्तेषु,—इति स० सो० पुस्तकयोः पाठः ।

---

(१) परिवेदनं ज्येष्ठे अकृत विवाहे अकृताग्निहोत्रे च कनिष्ठस्य तदुभयकरणम् । तच्च "ज्येष्ठे अनिर्विष्टे कनीयान् निर्विशन् परिवेत्ता भवति" इत्यादि स्मृतिषूक्तम् ।
(२) "कृमिकीटवयोहत्यामद्यानुगतभोजनम् । फलैधः कुसुमस्तेयमधैर्य्यञ्च मलावहम्"—इत्युक्तलक्षणं पापं मलावहशब्दार्थः । सङ्कीर्णं सङ्करीकरणम् । तदपि,—"खराश्वोष्ट्रवराहाणामजाविकवधस्तथा । सङ्करीकरणं ज्ञेयं मीनाहिमहिषस्य च"—इत्युक्तलक्षणम्! उपपातकञ्च गोवधादिप्रभृततमभेदं मन्वाद्युक्तम् ।

नोक्तं, तथा रहस्यञ्च प्रायश्चित्तञ्च वर्णितम् ।
नापि पर्णादि कृच्छ्राणि* नोदितान्यत्र कानिचित् ।
नोक्तः कर्म्मविपाकश्च तत् सर्व्वमुपलक्षितम् ।
इत्थं नवभिरध्यायैः प्रायश्चित्तं प्रपञ्चितम् ।
कलिं प्रति प्रवृत्तत्वात् प्रायश्चित्तं प्रपञ्चितम् ।
कलौ हि पापबाहुल्यं दृश्यते स्मर्य्यतेऽपि च ।
नराः प्रायोऽल्पसामर्थ्यास्तेषामनुजिघृक्षया ।
समकोचयदाचारं प्रायश्चित्तं व्रतानि च† ।
"तेषां निन्दा न कर्त्तव्या युगरूपाहि ते द्विजाः" ।
इत्युक्तमादावन्ते च, प्रयुक्तैषा‡ कृपालुता ।
वेदैकदेशाध्ययनं कृष्या विप्रादि-जीवनम् ।
इत्यादिवचसाऽऽचारे सङ्कोचोभासते स्फुटम् ।
प्राजापत्यं गो-वधे स्यात्, ब्रह्म-घ्ने सेतु-दर्शनम् ।
इति मुख्यव्रतत्वोक्तेः सङ्कोचोऽचापि गम्यते ।
स्मृत्यन्तरानुसारेण विषयस्य व्यवस्थितिः ।
कल्पनीयेतिचेद् ब्रूहि सार्व्वज्ञ्यं मन्यसे कथम्§(१) !

---

* प्रायश्चित्तमित्यारभ्य कृच्छ्राणीत्यन्तं मुद्रितातिरिक्त पुस्तकेषु नास्ति ।
† प्रायश्चित्तव्रतानि च,—इति मु० पुस्तकपाठः ।
‡ प्रायुङ्क्तैषा,—इति मु० पुस्तकपाठः ।
§ मन्यसेऽथकम्,—इति मु० पुस्तकपाठः ।

---

(१) गोवधे प्राजापत्यं ब्रह्मबधे सेतुदर्शनञ्च न मुख्यव्रतं येन सङ्कोचःसिध्येत्
किन्तु "यथा वयो यथा कालं यथा प्राणाश्च ब्राह्मणे । प्रायश्चित्तं

यावत्यः स्मृतयस्तासां सर्व्वासामनुसारतः ।
साकल्याच्चेदस्मदादेस्तत्र शक्तिर्नविद्यते[१] ।
स्वेन दृष्टास्तु यावत्यस्तासामित्यप्ययुक्तिमत् ।
क्वचित् कदाचिदन्यासां दर्शनाद्व्यवस्थितेः[२] ।
[३]अल्पिका मानुषी बुद्धिस्तावन्नव्यवतिष्ठते* ।
अतएव निबन्धेषु दृश्यते नैकवाक्यता ।
इत्थेवं खण्डने शास्त्रं भवेद्दत्त-जलाञ्जलि ! ।

* कल्पिका मानुषीबुद्धिः सा च न व्यवतिष्ठते,—इपि मु० पुस्तके पाठः ।

प्रवक्तव्यं ब्राह्मणैर्धर्म्मपाठकैः । तस्मात् तुप्रमथाप्यर्द्धं पादं वापि विधानतः । ज्ञात्वा बलाबलं कालं प्रायश्चित्तं प्रकल्पयेत्"—इत्येवमादिस्मृत्यन्तरदर्शनात् गोवधादौ त्रैमासिकादिव्रतविधायकस्मृत्यन्तरदर्शनाच्च यथासमथमशक्तादिविषयतया तद्व्यवस्थापनीयमित्याशङ्कते स्मृत्यन्तरेति । प्रश्नारमुपहसति सार्व्वज्ञमिति । सार्व्वज्ञं विना स्मृत्यन्तराणां सामस्त्येन ज्ञातुमशक्यत्वात् सर्व्वत्रस्मृत्यन्तरानुसारेण विषयव्यवस्थायाः कर्त्तुमशक्यत्वादित्यभिप्रायः ।

(१) यावत्यः स्मृतयः साकल्येन तासां सर्व्वासां दर्शनाद्विषयव्यवस्था, स्वेन यावत्यो दृष्टास्तासामनुसाराद्वा । आद्ये यावत्य इति । तत्र यावत्यः स्मृतयस्तासां सर्व्वासां दर्शने, अस्मदादेः शक्तिर्नास्तीत्यर्थः ।

(२) द्वितीये त्वाह स्वेनेति । न युक्तिमत् अयुक्तिमत् । तत्र हेतुः क्वचिदिति । क्वचित् देशे कदाचित् काले अन्यासां पूर्व्वदृष्टाधिकानां स्मृतीनामित्यर्थः । तथा च पूर्व्वं कियतीः स्मृतीर्दृष्ट्वा या विषयव्यवस्था कल्पिता, उत्तरकालमन्यासां स्मृतीनां दर्शने तस्या विपर्य्ययः स्यात् ।

(३) मनुष्याणामल्पबुद्धित्वादपि यथायथं विषयव्यवस्था शक्या नोत्प्रेक्षितुमित्याह अल्पिकेति ।

न खण्डये—वारयेतु पण्डितम्मन्यतां तव(१)।
शृणु निर्णयमत्र त्वं स्वतः प्रामाण्य-वादिनः।
प्रतीतेऽर्थेऽखिलं शास्त्रं प्रमाणं बाधया विना(२)।
न पराशर-वाक्यस्य बाधः स्मृत्यन्तरे क्वचित्।
व्रतान्तरोपदेशस्य न बाधोऽस्यानिवारणात्(३)।
प्रियङ्गु-कोद्रव-व्रीहि-गोधूमादीन्यनेकशः।
साधनानि यथैकस्यास्तृप्तेर्दृष्टान्यबाधया।
(४)यथा च स्वर्ग एकस्मिन् विश्वजिच्चाग्निहोत्रकम्।
अग्निष्टोमस्य दर्शाद्या हेतवोबहवः श्रुताः*।
यथा वा ब्रह्मलोकस्य ह्येकस्य प्राप्ति-हेतवः।
उपास्तयो विकल्प्यन्ते शाण्डिल्य-दहरादयः(५)।

---

* स्मृताः,—इति स० से० पुस्तकयोः पाठः।

---

(१) पूर्व्वपक्षी शङ्कते हन्तेति। दत्तजलाञ्जलीति विषयव्यवस्थाया अभावे परस्परविरोधेन सर्व्वेषामेव शास्त्राणामप्रामाण्यापत्तेरिति भावः। सिद्धान्ती समाधत्ते न खण्डये इति।

(२) प्रामाण्यस्य स्वतस्त्वात्,असतिबाधके प्रतीतेऽर्थे प्रामाण्यं निराबाधं कारणान्तरापेक्षाविरहादित्यर्थः।

(३) स्मृत्यन्तरेषु व्रतान्तरोपदेशान्न पराशरोक्तव्रतस्य बाधः, व्रतान्तरोपदेशस्य व्रतान्तरबाधकत्वासम्भवात्। स्मृत्यन्तरेष्वपि पराशरोक्तव्रतादेर्निवारणाभावाच्च।

(४) प्रियङ्गुप्रभृतीनां तृप्तिविशेषेषु हेतुत्वात् कथं तत्र विकल्प इत्याशङ्क्याह यथा चेति।

(५) दृष्टान्तान्तरमाह यथा वेति। शाण्डिल्योपास्तिः, "सर्व्वं खल्विदं ब्रह्म" —इत्युपक्रम्य, "सक्रतुं कुर्व्वीत मनोमयः प्राणशरीरो भारूपः"—

तथैवैकस्य पापस्य निवृत्तौ बहवः स्मृताः ।
व्रतभेदा विकल्प्यन्तां श्रद्धाशाश्वन्तु ते वृथा*[१] ।
ननु क्व पञ्चगव्यादिः कुत्र वा मरणान्तिकम् ! ।
तयोः सम-विकल्पत्वं वदतस्तेऽति साहसम् ! [२] ।
क्व विश्वजित् क्वाग्निहोत्रं स्वर्गं साधयतोस्तयोः—
विकल्पं वदतस्ते वा कुतोनैवाति साहसम् [३] ।
कर्म्माधिक्यात् फलाधिक्यमिति न्याय-समाश्रयात् ।
साहसं परिहर्त्तव्यमित्येतदुभयोः समम्[४] ।

* व्रतभेदा विकल्प्यन्तां श्रद्धातः सन्तु ते तथा,—इति से० स० पुस्तकयोः पाठः ।

इत्यादिना छान्दोग्यादौ विहिता। इयमेव शाण्डिल्य विद्येत्याख्यायते। दहरोपास्तिस्तु,—"अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म"—इत्यादिना छान्दोग्यएवाभिहिता दहरविद्या चाख्यायते। आदिशब्दात् वैश्वानरविद्यादयः ।

(१) तथा च गोबधादौ पराशरोक्तं प्राजापत्यादिकं स्मृत्यन्तरोक्तं प्रायश्चित्तान्तरञ्च द्वयमपि मुख्यमेव इत्यनयोर्व्विकल्पएवेत्ययं स्वसिद्धान्तनिष्कर्षः ।

(२) पूर्व्वपक्षी शङ्कते नन्विति । अयमर्थः । क्वचिदेकेन मुनिना पञ्चगव्यादि लघुप्रायश्चित्तमुक्तं, तत्रैव पापे अपरेण मुनिना प्राणान्तिकमुक्तं । तदनयोर्गुरुलघुप्रायश्चित्तयोः समविकल्पत्वमसम्भवदुक्तिकमितिभावः ।

(३) सिद्धान्तीसमाधत्ते क्वविश्वजिदिति । तथाच विश्वजिदग्निहोत्रयोरपि लघुगुरुकर्म्मणोः स्वर्गसाधकयोर्व्विकल्पो न स्यात् । स च त्वयापीष्यते इति भावः ।

(४) पूर्व्वपक्षा विश्वजिदादौ विकल्पमुपपादयितुमाह कर्म्माधिक्यादिति । अयमभिसन्धिः । लघुगुरुप्रयत्नसाध्यानां विकल्पस्थले गुरूपायस्यानन-

न्यायाश्रये त्वस्मदुक्त-व्यवस्था* क्रियते कुतः?।
इति चेद्व्यवस्थोक्ता त्वयाऽतोद्वेष्मि ते वचः†(१)।
देश-भेदात् काल-भेदात् पुं-भेदादन्यथाऽन्यथा।
पर्य्यवस्यति‡ शास्त्रार्थ इति पूर्व्वमवादिषम्।
अतोनास्त्यार्थवादांश§ विधि-वाक्येषु यद्यथा।
प्रतीतं तत्तथाग्राह्यं बाधं वाचनिकं विना।
स्मृति-व्याख्यातृभिः सर्व्वैर्व्वचनानां व्यवस्थितिम्।

* त्वस्मदुक्तया व्यवस्था,—इति मु० पुस्तके पाठः।
† द्वेषितं वचः,—इति मु० पुस्तके पाठः।
‡ विपर्य्यस्यति,—इति सो० स० पुस्तकयोः पाठः।
§ अतोयेऽस्यार्थ वादांशाः,—इति सो० स० पुस्तकयोः पाठः।

स्थानलक्षणमप्रामाण्यमापद्येत। कः खल्वनुन्मत्तो लघूपायसाध्यं फल-भुत्पिपादयिषुर्गुरूपायमवलम्बेत। तस्मात् सत्यपि समफलत्वे गुरूपा-यात् किञ्चित् फलाधिक्यं वाच्यं। तावतैव द्वयोः साम्यार्हिकल्पोपपत्तेः। इतरथा लेकस्यैव नियमतोऽनुष्ठानं स्यात्। फलाधिक्यकल्पने तु नैवं एकत्र क्लेशाधिक्यवत् फलस्याप्याधिक्यात्। अन्यत्र क्लेशन्यूनत्वेऽप्यवा-न्तरफलाधिक्याभावात्। अतएवोक्तं। "यत्र स्यात् कृच्छ्रभूयस्त्वं श्रेय-सोऽपि मनीषिणः। भूयस्त्वं ब्रुवते तत्र कृच्छ्रात् श्रेयो ह्यवाप्यते"—इति। तथा, प्रधानफलस्य स्वर्गमात्रस्योभयत्राविशेषेऽपि उक्तरीत्या गुरुप्रयत्नसाध्योपायस्य फलाधिक्यहेतुत्वकल्पनया विश्वजिदग्निहोत्रयो-र्व्विकल्पो नानुपपन्न इति पूर्व्वपक्षयितुरभिप्रायः। स्वपक्षेपि तदविशि-ष्टमित्याह सिद्धान्ती इत्येतदिति।

(१) ननु यदि न्यायाश्रयणं तवाप्यभिप्रेतं तर्हि स्मृत्यन्तरानुसारेण विषय-व्यवस्थैवास्मदुक्ता किमिति नाङ्गीक्रियते इत्याशयेन पूर्व्वपक्षी शङ्कते न्यायेति। सिद्धान्ती समाधत्ते इति चेदिति। त्वयेति च्छेदः।

ब्रुवाणैर्मन्दमतयो व्युत्पाद्यन्ते हि केवलम्(१) ।
अन्यथाऽल्पस्य पापस्य कृते द्वादश-वार्षिके ।
नस्यान्निवृत्तिस्तन्-प्रोक्ता व्यवस्था तादृशी यतः(२) ।
अथाऽल्पं महता नश्येन्नाल्पेनान्यत्, तदा वद ।
इदमल्पं महच्चेदमिति ते किं नियामकम् ।
अनायास-महायासौ यद्यल्पत्व-महत्त्वयोः—
*हेतुर्म्महाव्रतास्तर्हि भवेयुः कृषकादयः ! (३) ।
सिंह-व्याघ्रादि-मूत्रादौ प्रयास-बहुलत्वतः† ।
पञ्च-गव्यात् प्रशस्तत्वं व्रताङ्गत्वञ्च ते भवेत् ! ।
इति कर्त्तव्य-बाहुल्यं महत्वञ्चेत्, तदाऽल्पता ।
‡जलाग्न्यादि-प्रवेशस्य प्रसज्येत व्रतान्तरात्(४) ।

---

* हेतू महाव्रता,—इति मु० पुस्तके पाठः ।
† प्रयासो बहुलः श्रुतः,—इति मु० पुस्तके पाठः ।
‡ तर्ह्यग्न्यादि,—इति मु० पुस्तके पाठः ।

---

(१) ननु यदि स्मृत्यन्तरानुसारेण स्मृत्यन्तरवचनानां विषयव्यवस्था न प्रामाणिकी, तर्हि कथं सर्व्वैरेव प्राचीननिबन्धृभिस्तथाविधा व्यवस्था कृतेत्याशङ्क्य तेषामाशयं प्रकाशयति स्मृतीति। तथा चापाततो विरुद्ध-वचनदर्शनात् मन्दबुद्धयो मामुह्येरन् इति तत्प्रबोधाय तैस्तादृशी व्यवस्था कृता, येन केनचिदनुष्ठितेनैव फलनिष्पत्तिसम्भवेन वस्तुतस्तदभावादिति भावः ।
(२) द्वादश वार्षिके कृते अल्पस्य पापस्य निवृत्तिर्न स्यात् । महापापनाश एव तद्धेतुताया व्यवस्थितत्वादित्यर्थः ।
(३) तेषामायासाधिक्यादिति भावः ।
(४) अग्न्यादिप्रवेशस्य व्रतान्तरादल्पता प्रसज्यते व्रतान्तरापेक्षया तत्रेति-कर्त्तव्यताया अल्पत्वादिति भावः ।

तस्माच्छास्त्रेण यश्चोक्ता प्रशंसा, तन्महाव्रतम्[(१)]।
[(२)]अस्तु वा वैध-दुःखस्य* बङ्कलत्वान्महाव्रतम्।
[(३)]यथाऽल्प-नाशो महता महन्नाशस्तथाऽल्पतः—
किं न स्यात्? विस्फुलिङ्गेन तृण-राशिर्हि दह्यते†।
[(४)]विस्फुलिङ्गो वर्द्धमानो दहत्येवं न तु व्रतम्—
वर्द्धते, ऽतोमहन्नाशो निःशेषो न भवेद् यदि।
तर्ह्येकदेश-नाशोऽस्तु तच्छेषस्तूपभुज्यताम्।
अमूर्त्तस्यापि पापस्य सन्ति भागा यथोचितम्‡।
अन्यथैकेन पापेन दुःखं बङ्कविधं कुतः[(५)]।

---

* बलवत्त्वात्—इति पाठान्तरम्।
† तृणराशिर्विदह्यते,—इति मु० पुस्तके पाठः।
‡ यथोदितम्,—इति स० सो० पुस्तकयोः पाठः।

---

(१) उपसंहरति तस्मादिति। तथाच पञ्चगव्यादेरपि गुरुपापनाशकतया विधानमुखेन प्रशंसायाः शास्त्रेणोक्तत्वात् तदपि महाव्रतमेवेति तात्पर्य्यम्।

(२) वैधक्लेशाधिक्यं महाव्रतत्वे हेतुरतो न कृषकादिष्वतिप्रसङ्ग इत्येतदभ्युपगच्छति अस्तुवेति।

(३) अभ्युपेत्यापि विषयव्यवस्थां दूषयति यथेति। तथापीत्यादिः। विस्फुलिङ्गोऽग्निकणः। तथाच निर्व्वासनैषा विषयव्यवस्थेति भावः।

(४) पूर्व्वपक्षी शङ्कते विस्फुलिङ्ग इति। विस्फुलिङ्गस्तृणराशिं न दहति किन्तु सएव वर्द्धमानो महानग्निर्भूत्वा दहति, — व्रतं तु नैवं वर्द्धते, तस्मात् नाल्पेन व्रतेन महापापस्य नाश इत्यर्थः। सिद्धान्ती दूषयति अत इति। अस्मात् कारणात् अल्पेन व्रतेन महतः पापस्य निःशेष नाशो मास्तु एकदेशनाशस्तु स्यादित्यर्थः।

(५) तर्ह्येकस्य पापस्य तेन तेनांशेन तत्तत् दुःखं जन्यते इत्यभिमानः।

तथा महाव्रतस्यापि भागेनाल्प-विनाशने ।
व्रत-शेष-विपाकेन स्मर्य्यते मङ्गलं सुखम् ।
(१)अतोऽल्पं वा महद्वापि व्रतं पाप-निवर्त्तकम्* ।
स्मर्त्तॄणां पण्डितानां च† वाक्यमेवं समञ्जसम् ।
(२)न महाव्रत-वैयर्थ्यं पापस्याशेषनाशने ।
अल्प-नाशोर्द्ध्वभाविन्यां सुखाप्तौ‡ चोपयोगतः ।
एवञ्चैकस्य पापस्य व्रतेषूक्तेष्वयं पुमान् ।
प्रवर्त्ततेऽतिविस्रम्भं§ यस्मिन् कस्मिंश्चिदिच्छया(३) ।
अन्यथा नास्य विस्रम्भो ||विषयस्य व्यवस्थितिम्—
अजानतो जानतोऽपि वचनान्तर-शङ्कया ।
सम्भावितेषु सर्व्वेषु¶ व्रतेषु(४) महति व्रते ।

---

* अतोऽल्पत्वमहत्त्वेपि व्रतं पापातिसर्ज्जकम्,— इति स० सो० पुस्तकयोः पाठः ।
† स्मर्त्तॄणामखिलानाञ्च,—इति मु० पुस्तके पाठः ।
‡ पापनाशोर्द्धभाविन्यां सुखादौ, इति स० सो० पुस्तकयोः पाठः ।
§ प्रवर्त्तयति विस्रम्भात्,— इति स० सो० पुस्तकयोः पाठः ।
|| विषयस्याव्यवस्थितेः, इति स० सो० पुस्तकयोः पाठः ।
¶ शक्येषु, इति मु० पुस्तके पाठः ।

---

(१) अल्पं महद्वा भवतु सर्व्वमेव व्रतं सकलपापनाशकं इत्येतत् स्मर्त्तॄणाम्मषीणां वाक्यं । तथाचात्र "कृच्छ्रचान्द्रायणादीनि शुद्ध्यभ्युदयकारणं" इत्याद्यभिधाय, "एते व्यस्ताः समस्ता वा प्रत्येकमेकशोऽपि वा । पातकादिषु सर्व्वेषु पापकेष प्रयत्नतः"—इत्यादि विश्वामित्रादि वचनान्यनुसन्धेयानि ।
(२) अल्पव्रतेन महापापनाशे महाव्रतं व्यर्थं स्यादित्याशङ्कानिराकरोति नेति ।
(३) एवञ्च सर्व्वव्रतानां सर्व्वपापनाशकत्वे च । प्रवर्त्तयतीति पाठे स्वार्थे णिच् ।
(४) निर्धारणे सप्तमीयम् ।

प्रवर्त्तमानः पुरुषः श्रेयः प्राप्नोत्यसंशयम्।
कलौ पराशरोक्तानां व्रतानामेव मुख्यता।
तैरन्यैरपि* तत्पापं निःशेषं वि-निवर्त्तते।
एतदेव विवक्षित्वा प्रतियज्ञे[१]विशेषतः।
पराशरेण यत् प्रोक्तं प्रायश्चित्तमितीदृशम्।
मुन्यन्तर-प्रणीतानां स्वल्पानां महतामपि।
व्रतानामुपयोगः स्यात् कलौ, [२]पूर्व्वोक्तनीतितः† ।
मुनिनैकेन यत् प्रोक्तं तदन्योन निषेधति।
प्रत्युतोदाहरेत् तस्मात् पूर्व्वोक्तं सर्व्वसम्मतम्।
[३]हन्तैवं सति, मीमांसा निष्फला ते प्रसज्यते।
शास्त्रान्तर-प्रणीतानां गुणानामप्युपसंहृतेः।
शृणु मीमांसकम्मन्य! मुनि-वाक्येषु किं बलात्।
उत्पाद्यातिविरोधन्तु पाण्डित्यं व्यज्यतां तव!‡ ।

---

* तैरन्यैरपि,—इति स० सो० पुस्तकयोः पाठः।
† पूर्व्वोक्तरीतितः,—इति मु० पुस्तके पाठः।
‡ उतपाद्यापि विरोधन्ते पाण्डित्यं व्यज्यतां त्वया,—इति मु० पुस्तके पाठः।

---

(१) प्रतिजज्ञे प्रतिज्ञातवान्।
(२) पूर्व्वोक्तनीतितः पूर्व्वोक्तन्यायात्। महाव्रतानुष्ठाने सुखादिश्रेयःप्राप्तिरिति पूर्व्वोक्तो न्यायः। समुच्चयेनोभयानुष्ठाने अर्थतो व्रतस्य महत्त्वादिति भावः। अथवा स्वल्पकस्य पापस्येत्यादिपूर्व्वोक्तन्यायोऽत्र द्रष्टव्यः।
(३) पूर्व्वपक्षी शङ्कते हन्तेति। एवं सति येन केनचित् व्रतेन यस्य कस्यचित् पापस्य क्षयेसति। मीमांसा निष्फलेत्यत्र हेतुरुत्तरार्द्धं। पूर्व्वोत्तरमीमांसयोर्गुणोपसंहारस्य सिद्धान्तितत्वात् अत्र च तदव्यवस्थापनात् मीमांसा व्यर्थेतिभावः।

(१)व्रतान्तरोक्तिमात्रेण* न विरोधः प्रसज्यते ।
समुच्चये विकल्पे वा का हानिस्तत्र ते भवेत् ।
स्नानं दानं जपो होम इति नैमित्तिका यथा ।
उपरागे समुच्चया स्तथा व्रत-समुच्चयः†(२) ।
(३)एकेन नाशिते पापे द्वितीयं चेत् निरर्थकम् ।
न, तपोरूपतस्तस्य‡ स्वर्ग-हेतुत्व-सम्भवात् ।
(४)चान्द्रायणादावस्त्वेवं§ तपस्त्वेन तदीरणात् ।
भिक्षा-ब्रह्मकपालादौ स्यात् कथं नष्टपाप्मनः ।
(५)एवं तर्ह्युदृशे स्थाने विकल्पोऽस्तु निजेच्छया ।

* व्रतान्तरोक्ति मात्रेपि,—इति स० सो० पुस्तकयोः पाठः।
† स्नानमित्यारभ्य समुच्चय इत्यन्तं स० सो० पुस्तकयोर्नास्ति।
‡ न तयोरुभयोस्तस्य,—इति स० सो० पुस्तकयोः पाठः।
§ स्मृतिष्वेव तदीरणात्,—इति स० सो० पुस्तकयोः पाठः।

(१) मुन्यन्तरवाक्ये व्रतान्तराभिधानादेव विरोध इत्याशङ्क्याह, व्रतेति ।
(२) समुच्चये दृष्टान्तमाह स्नानेत्यादिना । उपरागोग्रहणम् ।
(३) पूर्व्वपक्षी समुच्चयपक्षमाक्षिपति एकेनेति । व्रतेनेति शेषः । सिद्धान्ती समाधत्ते नेति । तस्य व्रतस्य ; स्पष्ट मन्यत् । न तयोरुभयोस्तस्येति पाठे, उभयोर्व्रतयोर्मध्ये तस्य द्वितीयव्रतस्य स्वर्गहेतुत्वसम्भवात् न निरर्थकत्वं तस्येत्यर्थः ।
(४) पूर्व्वपक्षीशङ्कते चान्द्रायणादाविति । चान्द्रायणादौ तपस्त्वस्य स्मरणात् चन्द्रलोकावाप्त्यादि फलश्रवणात् च तादृशस्थले द्वितीयस्य स्वर्गहेतुत्व मस्तु, भिक्षादौ तपस्त्वानभिधानात् फलविशेषाश्रवणात् च कथं तस्य स्वर्गहेतुत्वकल्पनमिति पूर्व्वपक्षार्थः ।
(५) सिद्धान्ती समाधत्ते एवं तर्हीति । तथाच यत्र स्वर्गादिहेतुत्वं शास्त्रादवगम्यते, तत्र नानामुन्युक्तव्रतानां समुच्चयः एकेन पापनाशेऽप्यपरेषां स्वर्गहेतुत्वसम्भवात् । यत्र तु स्वर्गसाधनत्वं शास्त्रान्नावगम्यते तत्र

न्यूनाधिकत्व-सन्देहे दत्तमेवोत्तरं पुरा ।
(१)सर्व्वथाऽपि त्वया* प्रोक्ता निर्मूला बुद्धि-कल्पिताम् ।
कामाकामादि-भेदेन नाङ्गीकुर्म्मो व्यवस्थितिम् ।
वचनेष्वेव कामादि-व्यवस्था लभ्यते यदि ।
सुखेनाभ्युपगच्छामो वाक्यैक-शरणावयम् ।
(२)"कपिलो यदि सर्व्वज्ञः कणादोनेति का प्रमा" ।
इति न्यायः प्रसज्येत बुद्धिमात्र-व्यवस्थितौ ।
मीमांसकत्वमेतत् स्याद्वाक्यानुसरणेन यत्—
(३)व्यवस्थापनमन्यत्तु पाण्डित्य-ख्यापनं परम् ।
"इयं विशुद्धिरुदिता(४) प्रमाप्याकामतोद्विजम्" ।

---

* तथा,—इति मु० पुस्तके पाठः ।

---

नानाव्रतानामिच्छाविकल्पएवेति सिद्धान्त निष्कर्षः । ननु न्यूनाधिकानां व्रतानां कथमिच्छाविकल्पः "तुल्यबलविरोधे विकल्पः"—इति गौतमविरोधादित्याशङ्क्याह न्यूनाधिकत्वेति । दत्तमुत्तरमिति 'तस्मात् शास्त्रेण यस्योक्ता प्रसंख्या तन्मस्त्वाव्रतम्'—इत्यादि ग्रन्थेनेत्यर्थः ।

(१) उपसंहरति सर्व्वथापीति । निर्मूलत्वेहेतुः बुद्धिकल्पितामिति ।

(२) बुद्धिमात्रव्यवस्थायामेकेन क्वचित् विषयव्यवस्था बुद्ध्या कल्पिता तदन्येन च तद्विपरीता, तत्र कस्या व्यवस्थायाः प्रामाण्यं स्यात्, द्वयोः प्रामाण्ये च संवाव्यवस्था, तस्मात् बुद्धिमात्राद्व्यवस्था न युक्ता पुरुषबुद्धेरप्रतिष्ठानादित्याशयेन आत्मतत्त्वविवेके न्यायाचार्य्योक्तं न्यायमुदाहरति कपिल इति । "उभौ च यदि सर्व्वज्ञौ व्याख्याभेदस्तु किं कृतः"—इत्युत्तरार्द्धं । परन्तु मुद्रितात्मविवेकग्रन्थे कपिलपदस्थाने जैमिनिपदं, सर्व्वज्ञपदस्थाने वेदज्ञपदं, कणादपदस्थाने कपिलपदञ्च दृश्यते ।

(३) व्यवस्थापनमितिच्छेदः । वाक्यानुसारेण यत् व्यवस्थापनं तदेव मीमांसकत्वमित्यर्थः ।

(४) प्रमाप्य मारयित्वा ।

इत्यकाम-कृते पापे नाशो निःशेष उच्यते ।
न तु काम-कृते शुद्धेरकिञ्चित्करतोच्यते[१] ।
स्मृत्यन्तरेषु तच्छुद्धेः[२] सामान्येनाभिधानतः ।
विशेषादर्शनं यावत् तावत् सामान्य-दर्शनम् ।
[३]मानमेवान्यथा ते स्यात् सर्व्वज्ञत्वेऽधिकारिता ।
गुणोपसंहृतिस्त्वेवं* यथादर्शनमिष्यताम्[४] ।
अदृष्टानुपसंहारेणाकिञ्चित्करतैव ते† ।
यथा च दृश्यते वाक्यं शक्ति-स्तैवास्य यावती‡ ।
तावत् कार्य्यं नत्वपेक्षा युक्ता वैगुण्य-शङ्कया ।
प्रायश्चित्ते तथाऽऽचारे यानि स्मृत्यन्तराण्यहम्—
दृष्टवांस्तान्युदाहृत्य संहरिष्ये गुणांस्ततः ।
पिषयस्य व्यवस्थां च मन्द-व्युत्पत्ति-सिद्धये—

---

* गुणोपसंहृतिस्त्वेव,—इति स० सो० पुस्तकयोः पाठः ।
† अदृष्टानुपसंहारे न किञ्चित् करतावते,—इति मु० पुस्तके पाठः ।
‡ यत् यावत् दृश्यते वाक्यं शक्तिस्वाचास्य यावती,—इति स० सो० पुस्तकयोः पाठः ।

---

(१) तथा चाकामकृतपापं निःशेषान्नश्यति, कामकृतन्तु निःशेषं न नश्यति अंशतस्तु नश्यत्येव, इत्येव इयं विशुद्धिरित्यादेस्तात्पर्य्यं न तु काम कृतपापस्य तद्विशुद्ध्या सर्व्वथैवानाश इति ।
(२) ब्रह्महा द्वादशवार्षिकं कुर्य्यादित्येवं सामान्यरूपेणेत्यर्थः ।
(३) मानमेव,—इतिच्छेदः । अन्यथा सर्व्वविशेषदर्शनेन सामान्यस्य प्रामाण्यमित्यभ्युपगमे ।
(४) यथा दृश्यते तथा गुणानुसंहृत्यानुष्ठानं कर्त्तव्यं । अदृष्टाशक्यगुणानामनुपसंहारे तु न दोषः । गुणोऽङ्गम् । गुणोपसंहारश्च पूर्व्वमीमांसायां द्वितीय-चतुर्थ-द्वितीये, शारीरके तृतीय-तृतीय-द्वितीये चाधिकरणे विचारितस्तत्रैव द्रष्टव्यः ।

प्रवक्ष्यामि, यथा पूर्व्वं निबन्धन-कृतस्तथा* ।
[१]यत् यस्मिन् विषये प्रोक्तं तत्र तस्य प्रशस्तता—
विवक्षिता, नेतरस्य निषेधोऽत्र विवक्ष्यते ।
[२]तद्विवेकाय कुर्व्वेऽहं व्याख्यां पाराशर-स्मृतेः ।

( टीकाकारोपक्रमणिका समाप्ता )

---

[३]प्रारिप्सित-प्रतिपत्तये श्रोतुर्ब्बुद्धि-समाधानाय†[४] संबन्धाधिकारि-विषय-प्रयोजनरूपमनुबन्ध-चतुष्टयमादौ श्लोक-द्वयेनोपनिबध्नाति,—

‡अथातो हिम-शैलाग्रे देवदारु-वनालये ।
व्यासमेकाग्रमासीनमपृच्छन्नृषयः पुरा ॥ १ ॥
मानुषाणां हितं धर्म्मं वर्त्तमाने कलौ युगे ।
शौचाचारं यथावच्च वद सत्यवती-सुत! ॥ २ ॥

---

* निबन्धनकृत स्ततः,— इति मु० पुस्तके पाठः ।

† प्रारिप्सितग्रन्थे श्रोतृ बुद्धिमनः समाधानाय,—इति मु० पुस्तके पाठः ।

‡ सदाशिव-सुतं वन्दे विदारित-विपद्भयम् ।
मुदे जगत्त्रयामोद-कारणं वारणाननम् ।
इत्ययं श्लोकः अथात इत्यादिश्लोकात् पूर्व्वं सो० मू० पुस्तके वर्त्तते ।

---

(१) स्वसिद्धान्तमुपसंहरति यदिति ।

(२) तद्विवेकाय कुत्र कस्य प्रशस्तत्वमित्येतद्विवेकाय ।

(३) उपोद्घातागतं विचारं समाप्य ग्रन्थं व्याचिख्यासुर्भूमिकामारचयति प्रारिप्सितेति ।

(४) अनुबध्यते इति व्युत्पत्त्या अनुबन्धपदं सम्बन्धादिचतुष्कपरं । प्रयोजनमन्तरेण न लोकः प्रवर्त्तते, एव विषयोऽपि प्रवृत्तौ प्रयोजकः । तदुभयाश्रितः सम्बन्धः । एवमधिकार्य्यभावे कस्य प्रवृत्तिः स्यात् । अतस्तच्चतुष्कं शास्त्रादौ वक्तव्यं । एतच्च मीमांसा-प्रथम-प्रथम-प्रथमसूत्रवार्त्तिके स्पष्टं ।

इति । अथशब्द आनन्तर्य्यार्थः, अनन्तरमपृच्छन्—इत्यन्वेतुं योग्यत्वात् ।[1]आरम्भार्थतायाम्, आरभ्यते अपृच्छन्—इत्यनन्वयः स्यात् । प्रश्नार्थत्वेऽपि सएव दोषः । पृच्छ्यते अपृच्छन्—इति पुनरुक्तिश्च । कात्स्न्र्यार्थतायां, कृत्स्नमपृच्छन्—इति सत्यप्यन्वये, संबन्धो न सूचितः स्यात् । आनन्तर्य्यार्थतायान्तु, तत् प्रतियोगिनः पूर्व्व-वृत्तस्य उत्तरकालीन-प्रश्नस्य च हेतु-हेतुमद्भावः सूचितोभवति[2] ।

ननु, "हृदयस्याग्रेऽवद्यत्यथ जिह्वाया अथ वक्षसः"—इत्यत्र सत्यप्यानन्तर्य्ये हेतु-हेतुमद्भावोनास्ति-इति चेत् । नायं दोषः, तत्रापेक्षितस्यानुष्ठान-क्रम-मात्रस्याभिधानात्[3] । प्रकृते तु, [4]सामग्री-तत्-कार्य्ययोर्यः क्रम-विशेषः, सएव परिगृह्यते, मुख्यत्वात् । विलम्ब-व्यभिचारयोरभावेन हि* मुख्यत्वम् । न खलु सत्यां सामग्र्यामस्या अभिनिर्वर्त्त्यं† कार्य्यं विलम्बते व्यभिचरति वा । एतच,—"अथातो

* हि,—इति मु० पुस्तके नास्ति ।

† अस्या अभिनिर्व्वर्त्त्यं,—इति मु० पुस्तके नास्ति ।

(१) "मङ्गलानन्तरारम्भप्रश्नकात्स्न्र्येष्वथो अथ"—इति कोषोक्तेष्वथशब्दार्थेषु आरम्भाद्यर्थानामसम्भवं प्रकृते प्रतिपादयति आरम्भार्थतायामित्यादिना ।

(२) आनन्तर्य्यं हि पूर्व्वापररूपप्रतियोगिद्वयनिरूप्यं । तयोश्च पूर्व्वस्य हेतुत्वं उत्तरस्य च हेतुमत्त्वं गम्यते, हेतोः पूर्व्ववर्त्तित्वनियमादित्यभिप्रायः ।

(३) यथेोरवदानत्रयं विहितं एतच्च युगपत् कर्त्तुमशक्यमिति क्रमोऽवश्यमपेक्षितः । तदपेक्षितक्रममात्रं 'हृदयस्य' इत्यादिकया श्रुत्योच्यते ।

(४) सामग्री कारणकलापः ।

ब्रह्म-जिज्ञासा" (शा० १,१,१ सू०) इत्यत्र विवरण-कारेण प्रपञ्चितम् । सामग्री च प्रश्नस्य, प्रष्टव्य-विषयं सामान्यज्ञानम्(१) । अत्यन्तमज्ञाते विशेषेण* ज्ञाते वा प्रश्नादर्शनात् । धर्म्म-विषयन्तु सामान्यज्ञानं—"धर्म्मेण पापमपनुदति" "धर्म्मं चरेत्"†—इत्यादि-वेद-वाक्याध्ययनादुपजायते । (२)तस्मादध्ययनानन्तर्य्यमथशब्दार्थः । अथवा । 'वर्त्तमाने कलौ'—इति विशेषणात्‡ युगान्तर-धर्म्मज्ञानान-न्तर्य्यमस्तु(३) ।

ननु, ग्रन्थारम्भे मङ्गलाचरणस्य शिष्टाचार-प्राप्तत्वात् माङ्गल्यम्§(४) अथ-शब्देन कुतोनाभिधीयते? । (५) मृदङ्गादि-ध्वनिवदथ-शब्द-श्रवण-मात्रेण माङ्गल्य‖ सिद्धेरिति ब्रूमः । अतएवोक्तम्,—

"ओँकारश्चाथ-शब्दश्च द्वावेतौ ब्रह्मणोमुखात्¶ ।

---

* तद्विशेषेण,—इति मु० पुस्तके पाठः ।
† धर्म्मंचर,—इति मु० पुस्तके पाठः ।
‡ विशेषण-प्रयोगात्,—इति सो० स० पुस्तकयोः पाठः ।
§ मङ्गलम्,—इति सो० स० पुस्तकयोः पाठः ।
‖ माङ्गल्य,—इति सो० स० पुस्तकयो र्नास्ति ।
¶ ब्रह्मणः पुरा,—इति स्मृत्यासंग्रहे पाठः ।

---

(१) सावधारणोऽयं निर्देशः । तेन प्रष्टव्यविषयसामान्यज्ञानं तद्विषयविशेषज्ञानाभावश्च प्रश्नहेतुरिति लभ्यते । एतच्चानुपदमेव स्पष्टम् ।
(२) यस्माद्वेदाध्ययनात् धर्म्मविषयं सामान्यज्ञानं जायते, तस्माद्वेदाध्ययनानन्तर्य्यमथशब्दार्थ इत्यर्थः ।
(३) अथशब्दार्थः,—इत्यनुकृष्यमाणेन संबन्धः ।
(४) मङ्गलमेव माङ्गल्यं । स्वार्थे तद्धितः ।
(५) कुतोनाभिधीयते,—इत्यनेनानभिधानहेतौ, पृष्टत्वात्तमेवाह मृदङ्गादीति ।

कण्ठं भित्त्वा विनिर्यातौ तेन* माङ्गलिकावुभौ" ।

इति । एवन्तर्हि, ओँकारोऽत्र प्रयुज्यतामिति चेत् । न, तस्य श्रुति-विषयत्वात्† । अतएवाचार्य्यैः प्रपञ्च-सारेऽभिहितम् ।

"अस्य(१)तु वेदादित्वात् सर्व्व-मनूनां(२) प्रयुज्यते ह्यादौ"‡— इति ।

ततः स्मृत्यादावथशब्दएव महर्षिभिः प्रयुज्यते । अधिकारि-पर्य्यालोचनेनापि§ ओँकाराथशब्दयोरत्र-विषय-व्यवस्था सिध्यति । त्रैवर्णिक-मात्राधिकारा हि श्रुतिः प्रसिद्धा(३) । ओँकारस्य तथाविधः(४), "सावित्रीं प्रणवं यजुर्लक्ष्मीं ||स्त्री-शूद्रयोर्नेच्छन्ति"(५) इति श्रुतेः । अथ-

* तस्मात्,— इति मु० पुस्तके पाठः ।

† श्रुतिमात्रविषयत्वात्,—इति मु० पुस्तके पाठः ।

‡ अस्य तु वेदादित्वं सर्व्वमनुष्याणामप्रयुज्यत्वात्,—इति सो० स० पुस्तकयोः पाठः ।

§ अधिकारिपर्य्यालोचनया च,—इति मु० पुस्तके पाठः ।

|| स्त्रीशूद्राणां,—इति मु० पुस्तके पाठः ।

(१) अस्य ओँकारस्य । तत्प्रस्तावे कथनात् ।

(२) मनुर्मन्त्रः । स च वैदिक एवार्थात् ।

(३) त्रैवर्णिकं ब्राह्मणक्षत्रियवैश्यास्त्रयोवर्णाः । स्वार्थे तद्धितः । प्रसिद्धेत्यनेन तत्रहेत्वपेक्षा नास्तीति सूचनात् न हेतुकथनेन न्यूनतेतिबोध्यं ।

(४) तथाविधः त्रैवर्णिकमात्राधिकारः ।

(५) सावित्री गायत्री । प्रणवः ओँकारः । यजुः गानपादविच्छेदरहित प्रश्लिष्टपठितमन्त्रजातं । तथाच जैमिनिसूत्रं । "शेषे यजुःशब्दः" (२, १, ३७ इति । ऋक् सामभिन्ने मन्त्रजाते यजुःशब्द इति तदर्थः । लक्ष्मीः श्रीवीजं । अत्र यजुर्ग्रहणमधिकदोषार्थं उपलक्षणं वा, "स्त्रीशूद्रौ नाधीयेताम्"—इति श्रुत्या वेदमात्राध्ययनएव स्त्रीशूद्रयोरनधिकारादितिमन्तव्यम् ।

शब्दस्य पौरुषेयग्रन्थानाञ्च सर्व्व-वर्ण-विषयत्वात्(१) सएव तेषु योग्यः।

अतः शब्दो हेत्वर्थः। यस्मादेक-शाखाध्यायिनोनाशेष-धर्म्म-ज्ञानं, यस्माच्च युगान्तर-धर्म्मावगत्या न कलि-धर्म्मावगतिः, तस्मात्,— इति हेतुर्द्रष्टव्यः।

अशेष-धर्म्म-मूलभूतानां विप्रकीर्णानन्त-वेद-वाक्यानां योगि-दृष्ट्यैव ग्राह्यत्वात् तस्याश्च दृष्टेर्योगावस्थायां*(२) सम्भवात् तदवस्था-योग्यं देश-विशेषं पद-द्वयेन निर्दिशति,—'हिम-शैलाग्रे देवदारु-वनालये'—इति। तत्र, 'हिम-शैलाग्रे'—इत्यनेन सर्व्व-प्राणि-दुर्ग-मत्वेन(३) विविक्ततामाह। तथाच, कैवल्योपनिषदि श्रूयते,—

"विविक्त-देशे च सुखासनस्थः"

इति। चुरिकायामपि श्रूयते,—

"निःशब्दं देशमास्थाय तत्रासनमुपाश्रितः"† ।

इति। 'देवदारु-वनालये'—इत्यनेन मनोऽनुकूलतामाह। अतएव श्वेताश्वतराणां मन्त्रोपनिषदि श्रुतम्,—

---

* युक्तावस्थायां,—इति मु० पुस्तके पाठः।

† तत्रासनमथास्थितः,—इति मु० पुस्तके पाठः।

---

(१) पौरुषेयग्रन्थानां सर्व्ववर्णविषयत्वञ्च, "चतुर्णामपि वर्णानां यानि प्रोक्तानि श्रेयसे। धर्म्मशास्त्राणि राजेन्द्र! शृणु तानि नृपोत्तम!" इत्यादि भविष्यपुराणवचनादिभ्योमलमासतत्त्वादौ व्यक्तम्।

(२) "योगश्चित्तवृत्तिनिरोधः" (१, २सू) इति योगसूत्रम्। स्पष्टोऽस्यार्थः। तात्पर्य्यार्थस्त्वग्रतो ग्रन्थकृतैव सूचयिष्यते।

(३) विविक्ततां विजनतां।

"समे शुचौ* शर्कर-वह्नि-वालुका—
विवर्ज्जिते † वाऽथ जलाश्रयादिभिः(१) ।
मनोऽनुकूले न च चक्षुःपीड़ने
गुहा-निवाताश्रयणे, प्रयोजयेत्"‡ ।

इति । चक्षुःपीड़नोमशकोपेतोदेशः ।

ननु "यत्रैकाग्रता तत्राविशेषात्"(२)(शा० ४,१,७सू०) इत्यस्मिन् अधिकरणे (शा० ४,१,६अ०) योगाभ्यासस्य दिग्देश-काल-नियमोवारितः(३) । (४)वाढ़म् । अदृष्ट-हेतु-वैध-नियमाभावेऽपि§ दृष्ट-चित्तैकाग्र्यस्य हेतुर्नियमोन निवार्य्यते ।

'एकाग्रम्'—इत्यनेन पञ्चविधासु चित्त-भूमिषु(५) अतीन्द्रिय-वस्तु-दर्शन-योग्या चतुर्थी भूमिर्निर्दिश्यते । तथाहि, पतञ्जलि-प्रोक्तानां योग-सूत्राणां व्याख्याने ||वैयासिक-भाष्ये भूमि-पञ्चकं

* शर्करा, इति मु० पुस्तके पाठः ।
† शब्दजालाश्रयादितिः,—इति मु० पुस्तके पाठः ।
‡ न योजयेत् —इति स० से० पुस्तकयोः पाठः ।
§ अत्र, 'वध',—इति मु० पुस्तके नास्ति ।
|| वैयासक, - इति मु० पुस्तके पाठः ।

(१) शर्कराः क्षुद्रपाषाणाः । जलाश्रयवर्जनं शीतनिवृत्त्यर्थं ।
(२) यत्रैव दिशि देशे काले वा मनस एकाग्रता भवति, तत्रैव उपासीत, इष्टाया एकाग्रतायाः सर्व्वत्राविशेषात् इति सूत्रार्थः ।
(३) तथाच कथं हिमशैलाग्रे,—इत्यादिना योगोपयोगिदेशविशेषनिर्देश इति व्याख्यातमिति पूर्व्वपक्षार्थः ।
(४) पूर्व्वपक्षमभ्युपगम्य परिहरति वाढ़मिति ।
(५) चित्तस्यभूमयोऽवस्थाविशेषाः ।

प्रदर्शितम् । "क्षिप्तं मूढं विक्षिप्तमेकाग्रं निरुद्धमिति चित्त-भूमयः" (यो० १,१ भा०)—इति । [१]तत्र, प्रतिक्षणं कर्म्म वायुना नानाविधेषु भोग्य-वस्तुषु व्यग्रतया प्रेर्य्यमाणं चित्तं क्षिप्तम्[२] । निद्रा-तन्द्रादि-युक्तं मूढम्[३] । *क्काचित्क-समाधि-युक्तं[४] क्षिप्ताद्विशिष्टं विक्षिप्तम् । [५]यम-नियमाद्यष्टाङ्गाभ्यास-पाटवादेकस्मिन् विषये वृत्ति-प्रवाहरूपेण प्रतिष्ठितमेकाग्रम् । [६]अवृत्तिकं संस्कार-शेषं निरुद्धम् । तत्र, क्षिप्तमूढयोर्योगानुपयोगः प्रसिद्धः[७] । [८]"विक्षि-

---

* कादाचित् क,—इति मु० पुस्तके पाठः ।

---

(१) उदाहृतं भाष्यांशं व्याख्यातुमारभते तत्रेति ।

(२) 'क्षिप प्रेरणे'—इति धातुपाठादितिभावः ।

(३) 'मुह वैचित्त्ये'—इति धातु पाठादितिभावः ।

(४) विक्षिप्तं हि चित्तं कदाचित् समाधीयते, क्षिप्तन्तु न कदाचित्, अतएव विक्षिप्तस्य क्षिप्ताद्विशिष्टता ।

(५) "यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानि" (२, २९सू.) इति योगसूत्रोक्तान्यष्टावङ्गानि । यमादय स्तत्रैव ज्ञेयाः, अत्र, समाधिः सविकल्पकोऽङ्गं निर्व्विकल्पकस्येति वेदान्तसारादयः । योगाङ्ग समाधेर्लक्षणं योगसूत्रोक्तन्तु पश्चाद्वक्ष्यामः । वृत्तिश्चित्तस्य विषयाकारः परिणामः । प्रवाहोऽविच्छेदः । सेयमेकाग्रावस्था पूर्व्व-निर्द्दिष्टा चतुर्थीभूमिरिति मन्तव्यं ।

(६) यद्यपि चित्तं त्रिगुणं परिणामस्वभावाश्च गुणानापरिणम्य क्षणमप्य-वतिष्ठन्ते इत्यवृत्तिक चित्तासम्भवः, तथापि निरुद्धावस्थायां निरोध-परिणामातिरिक्त परिणामाभावात् निरुद्धं चित्तमवृत्तिकमुच्यते । स्पष्टञ्चैतत् पातञ्जले तृतीयपादे ।

(७) क्षिप्तमूढयोः सत्यपि परस्परापेक्षया वृत्तिनिरोधे पारम्पर्य्येणापि निःश्रेयसहेतुत्वाभावात् प्रत्युत तदुपघातकत्वान्नतयोर्योगोपयोगः ।

(८) विक्षिप्ते चेतसीत्यादिकं योगभाष्यं (१.१सू.) विक्षिप्तपात्यंशतो विकल्पस्य

शेऽपि चेतसि, विक्षेपोपसर्ज्जनीभूतः समाधिर्न योगपक्षे वर्त्तते"* । (१)विपक्षवर्गान्तर्गतत्वेन दहनान्तर्गत-वीजवदकिञ्चित्करत्वात् । (२)"यस्त्वेकाग्रे चेतसि सद्भूतमर्थं प्रद्योतयति, क्षिणोति च क्लेशान्, कर्म्मबन्धनानि श्लथयति, निरोधमभिमुखं करोति, स संप्रज्ञातो योगः,—इत्याख्यायते" । तत्र संयमविशेषात् नानाविध-योगैश्वर्य्याविर्भ-

* विक्षेपोपसर्ज्जनः समाधि र्न योगः,—इति मु० पुस्तके पाठः ।

पठति विक्षिप्तेऽपीति । समाधिर्वृत्तिनिरोधः । 'न योगपक्षेवर्त्तते'—इत्यत्र हेतुगर्भविशेषणं विक्षेपोपसर्ज्जनीभूत इति ।

(१) विक्षेपोपसर्ज्जनीभूतः,—इत्यनेनोट्टङ्कितं हेतुमाह विपक्षवर्गेति ।

(२) पुनरपि योगभाष्यं (१, १सू) पठति यस्त्वेकाग्रे इति । य इति समाधेः परामर्शः । भूतं सत्यं । अनेनारोपितार्थव्यवच्छेदः आरोपितस्यासत्यत्वात् । सत् शोभनम् । अनेन निद्रावृत्तेर्व्यवच्छेदः । निद्रावृत्तिर्हि स्वावलम्बने सत्ये तमसि भवत्येकाग्रा, किन्तु तदवलम्बनं तमोन शोभनं क्लेशहेतुत्वात् । द्योतनं तत्वज्ञानं, प्रशब्देन तस्य साक्षात् कारतामाह । शास्त्रानुमान-प्रभव-परोक्ष-तत्त्वज्ञानस्यापरोक्षमिथ्याज्ञाननिवर्त्तकभावात्, दिङ्मोहादौ तथाऽदर्शनात् । तत्त्वज्ञानेन मिथ्याज्ञानरूपाविद्याविनाशे सुतरां तन्मूलानामस्मितादीनामपिनाश,—इत्याह क्षिणोति च क्लेशान् इति । क्लेशा अविद्यास्मितादयः । तथा च पातञ्जलसूत्रम् । "अविद्याऽस्मितारागद्वेषाभिनिवेशाः क्लेशाः" (१, सू) । इति । एषां विवरणं तत्रैवद्रष्टव्यं । कर्म्माण्येव बन्धानानि श्लथयति-स्वकार्य्यादवसादयति । कर्म्मपदेन धर्म्माधर्म्मयोः परिग्रहः कार्य्यकारणोपचारात् । निरोधमसंप्रज्ञातं निर्व्वीजसमाधिं । न तत्र किञ्चित्संप्रज्ञायते इत्यसंप्रज्ञातः । तदानीं चित्तस्य संस्कार शेषत्वात् तथात्वं । संप्रज्ञातेतु सवीजसमाधौ ध्येयं ध्यानञ्च ज्ञायते । स्पष्टमेतत्सर्व्वं पातञ्जले समाधिपादे ।

वति[१]। धारणा-ध्यानसमाधि-त्रयमेकविषयं संयमः,—इत्युच्यते[२]। शब्दार्थ-प्रत्ययेष्वन्योन्य-विभक्तेषु यः संयमः, तेनाशेष-शब्दादि-साक्षात्कारे सति पश्चादिभाषाज्ञायन्ते,—इति पतञ्जलिनोक्तम्[३]।

---

(१) तत्र एकाग्रेचेतसि, संयमविशेषात् योगशास्त्रोक्तेषु तेषु तेषु विषयेषु संयमात् नानाविधयोगैश्वर्य्यप्रादुर्भावोभवतीत्यर्थः। एतत् सर्व्वमपि पातञ्जले विभूतिपादे स्पष्टम्।

(२) अत्र यथाक्रमं योगसूत्राणि। "देशबन्धश्चित्तस्य धारणा" (३,१सू)। यत्र देशे ध्येयं चिन्तनीयं तत्र देशविशेषे हृदयपुण्डरीकादौ चित्तस्य स्थापनं धारणेति सूत्रार्थः। "तत्र प्रत्ययैकताननताध्यानम्" (३,२सू)। तस्मिन् देशे ध्येयगोचरप्रत्ययप्रवाहोध्यानमिति सूत्रार्थः। "तदेवार्थमात्रनिर्भासं स्वरूप शून्यमिवसमाधिः" (३,३सू०) ध्यानमेव ध्येयमात्रनिर्भासंसमाधिः। यदा तदेवध्यानं ध्येयाकारेणैव साक्षिणिनिर्भासते नतु प्रत्ययाकारेण, तदाध्यानमेव समाधिरुच्यते इत्यर्थः। मात्रशब्दविवरणं स्वरूपशून्यमिवेति। स्वं ध्यानं। तदानीं ध्यानस्यापि सत्वात् इवशब्दः। (सोऽयं देशविशेषे समाधिर्योगाङ्गं।) "त्रयमेकत्रसंयमः" (३,४सू०)। धारणाध्यानसमाधित्रय मेकविषयञ्चेत् संयम इत्युच्यते इति सूत्रार्थः।

(३) "शब्दार्थप्रत्ययानामितरेतराध्यासात् संकरस्तत्प्रविभागसंयमात् सर्व्वभूतरुतज्ञानम्" (३, १७सू०) इति पातञ्जलसूत्रम्। शब्द-तदर्थतद्गोचरप्रत्ययानां वस्तुतः प्रविभक्तानामपि इतरेतरस्याध्यासात् सङ्करोभवति, तत्प्रविभाग-विषयक-संयमात् साक्षात्कारपर्य्यन्तात् सर्व्वप्राणिनां शब्दज्ञानं योगिनः सम्पद्यते इति सूत्रार्थः। तत्र, गौरितिशब्दो गौरित्यर्थो गौरितिप्रत्यय इति सङ्करस्योदाहरणम्। प्रविभागस्त्वमीषां श्वेतते इति श्वेत इति चैवमादिरीत्या शब्दभेदेपि श्वेतगुणरूपार्थाभेदात् श्वेताकारप्रत्ययाभेदाच्च शब्दादर्थप्रत्ययौभिन्नौ। एवमेकस्मिन्नेव श्वेतगुणे, तदाकार-नाना-प्रत्ययोदयादर्थ-प्रत्ययथोः परस्पर भेदः। तथा स्वस्वावस्थाभिः परिणम्यमाणाः शब्दार्थप्रत्यया न तुल्यकालाः, नापि तुल्यदेशाः। शब्दोह्याकाशे, प्रत्ययोबुद्धौ, अर्थस्तु श्वेतगुणादिः प्रासादादावित्यमीषां प्रविभागः। स्पष्टमेतत् पातञ्जले विभूतिपादे।

(१)तेनैव न्यायेनानेकविध-वेद-शाखा-ज्ञानमभिप्रेत्य 'एकाग्रम्'—इत्युक्तम् ।

एकाग्रतामासीनस्य मन्वान:* 'आसीनम्'—इत्याह । तथा च व्यास-सूत्रम् । "आसीनः संभवात्" (अ०४,अ०१पा०,७सू०) इति । (२)शयानस्याकस्मादेव निद्राभिभवात्, उत्थितस्य देह-धारणोचित-व्यापारात्,(३) गच्छतोधावतोवा विक्षेप-बाहुल्यात्, परिशेषेणासीनस्यैवैकाग्रता-सम्भवात् आसीने,योगमभ्यस्यन्नुपासीतेत्यर्थः ।

अन्वय-व्यतिरेकाभ्यां प्रश्नस्यावगत्युपायतामभिप्रेत्य, 'अपृच्छन्,—इत्युक्तम् ।

"तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया" ।

इत्यन्वयः । "नापृष्टः कस्यचिद्ब्रूयात्"—इति व्यतिरेकः ।

'ऋषिः' शब्दोऽतीन्द्रियार्थ-दर्शनमाचष्टे(४) । ज्ञास्यमान-धर्मानुष्ठानोत्तरकालिकमृषित्वम् । (५)यथा भाविन्या संज्ञया 'कटं कुरु'—

* ऐकाग्र्याकृतामासनस्य मत्वा,—इति मु० पुस्तके पाठः ।

(१) यथोक्तसंयमात् अनेकविधभाषाज्ञानवत् अनेकविधवेदशाखाज्ञानमपि संभवतीत्यभिप्रायः ।
(२) व्याससूत्रं व्याचष्टे शयानस्येति ।
(३) तथाविध-व्यापार-व्यापृतस्य मनसोन ध्येयगोचर-व्यापार-सम्भवः,—इति भावः ।
(४) ऋषेर्गत्यर्थत्वात् गत्यर्थानाञ्च ज्ञानार्थत्वात् । तथाच शब्दोपचकाभावात् प्रसिद्धेश्च अतीन्द्रियार्थदर्शिनां ऋषित्वमिति भावः ।
(५) तथाच, भाविनि भूतवदुपचारः—इति भावः । तत्र दृष्टान्तो यथेति । संज्ञिनमन्तरेण संज्ञाया असम्भवात् उत्पत्तेरुत्तरकालमेव संज्ञाप्रवृत्तिः संज्ञया व्यवहारस्तु प्रागप्युत्पत्तेरिति यथेत्यर्थः ।

इति व्यवहारः, तद्वत्। अन्यथा, अतीन्द्रियार्थं पश्यतां तेषामवुभुत्सुतया प्रश्नोन संगच्छेत। अथ वा, स्वयमवुभूत्सूनामपि मन्द-बुद्ध्यनुग्रहार्थं आचार-शिक्षार्थं वा [१] प्रश्नोऽस्तु।

अपृच्छन्—इत्यनेनैवातीतकालत्वे सिद्धे [२] 'पुरा' शब्दं प्रयुञ्जानः सर्व्वेष्वपि कल्पेष्वीदृशी*धर्म्मशास्त्र-प्रवृत्तिरासीदिति सूचयति। तच्च विश्वासातिशयोत्पादने कारणम्। अन्यान् मुनीनुपेक्ष्य व्यासमेव पृष्टवतामृषीणाम्,—वैदिक-धर्म्मे वेदव्यासः प्रवीणः,—इत्याशयः।

तदेवं चिकीर्षितस्य ग्रन्थस्य† मुनि-प्रश्नेन साक्षात् संबन्धः, पिपृच्छिषोत्पादन-द्वारेण अध्ययनेन संबन्धः,—इति संबन्ध-द्वयमस्मिन् श्लोके प्रतिपादितम्। अधिकार्य्यादि-त्रयन्तु [३] द्वितीय-श्लोके प्रतिपाद्यते॥

ननु, "ब्राह्मणोवृहस्पतिसवेन यजेत" "राजा राजसूयेन यजेत" वैश्योवैश्यस्तोमेन यजेत,"—इत्यधिकारि-विशेषोयथा श्रूयते, न तथा पराशरोक्तधर्म्माः ईदृशैरनुष्ठेयाः‡,—इति किञ्चित् वचनमस्ति, तत् कथं निर्णयः,—इत्यतआह 'मानुषाणाम्'—इति। अर्व्वाचीनानां

---

* धर्म्मशास्त्रे,—इति स० सो० पुस्तकयोः पाठः।

† ग्रन्थस्य,—इति स० सो० पुस्तकयोर्नास्ति।

‡ पराशरोक्तमिदमीदृशैरनुष्ठेयम्,—इति स० सो० पुस्तकयोः पाठः।

---

(१) यस्मद्दृष्टान्तेन मन्दबुद्धयोपि धर्म्मं प्रक्ष्यन्ति, ततस्तेभ्यः सन्तोधर्म्ममुपदेक्ष्यन्ति, ते च तदाचरणेन फलभाजोभवेयुरिति मन्दबुद्ध्यनुग्रहः। धर्म्मबुभुत्सूनां तज्जिज्ञासायाः कर्त्तव्यत्वमाचारः।

(२) अपृच्छन्—इति लङोऽतीतकालस्यैव विधानादितिभावः।

(३) अधिकारि-विषय प्रयोजनरूपम्।

पश्वादीनामसामर्थ्यात्(१) उत्तमानां देवादीनां धर्मानुष्ठाने प्रयोजनाभावाच्च मनुष्याएव परिशिष्यन्ते। विशेषानिर्णये तु, सर्वेषां मनुष्याणामधिकारोऽस्तु।

ननु, नक्षत्रेष्ट्यादौ देवानामधिकारः श्रूयते,—"अग्निर्वा अकामयत; अन्नादोदेवानां स्यामिति, स एतमग्नये कृत्तिकाभ्यः पुरोडाशमष्टाकपालं निरवपत्"—इति। मैवम्। मनुष्यस्यैव कस्यचित् यजमानस्य भाविनीं संज्ञामाश्रित्य प्रथमाम्नेनाग्निशब्देन व्यवहारात्(२)। अन्यथा युगपदग्नि-द्वय-सृष्टि-प्रसङ्गात्(३)*। ननु, यत्र †द्वैगुण्य-दोषोनास्ति तत्रास्तु देवताऽधिकारः। तथाहि श्रूयते। "बृहस्पतिरकामयत, अन्मे देवादधीरन्‡ गच्छेयं पुरोधामिति, स एतं चतुर्विंशतिरात्रमपश्यत्, तमाहरत् तेनायजत, ततोवै तस्मै देवाः अदधन्§ अगच्छत् पुरोधाम्"—इति। अत्र|| विश्वासम्। मे मयि¶

* संसृष्टिप्रसङ्गात्,—इति मु० पुस्तके पाठः।
† देवद्वैगुण्य,—इति मु० पुस्तके पाठः।
‡ श्रद्धां देवानाम्,—इति स० सो० पुस्तकयोः पाठः।
§ तस्मै श्रद्देवा अदधत,—इति मु० पुस्तके पाठः।
|| श्रद्धाम्,—इति स० सो० पुस्तकयोः पाठः।
¶ मे मयि,—इति स० सो० पुस्तकयो र्नास्ति।

(१) मन्त्रपाठश्रव्यत्यागाद्यसामर्थ्यादित्यर्थः।
(२) कश्चिन्मनुष्योनक्षत्रेष्टिं कृत्वा अग्नित्वं लब्धवान्। तस्य चाग्नित्वलाभोत्तरकालभाविन्या अग्निसंज्ञया पूर्वमेव व्यवहारोऽग्निर्वा अकामयत इति, भाविनिभूतवदुपचार इति न्यायादिति भावः।
(३) समुद्दिश्य स्वस्य त्यागासम्भवात् एकोऽग्निरिज्यता, अपरश्च त्यागोद्देश्य इत्यग्निद्वयकल्पना।

पुरोधाम्, पौरोहित्यम्। चतुर्विंशतिरात्रम्,—एतन्नामक-सत्रयागमित्यर्थः। इत्यादौ फलश्रवणात् कर्म्मानुष्ठाने कथं प्रयोजनाभावः,—इति चेत्*। मैवम्। अत्रापि भावि-संज्ञायाएवादरणीयत्वात्। अन्यथा, वृहस्पतेः कञ्चित् कालं विश्वमनीयत्व-पौरोहित्ययोरभावप्रसङ्गात्। तच्च, श्रुत्यन्तरविरुद्धम्। "वृहस्पतिर्व्वै देवानां पुरोहित आसीत्"—इति श्रुत्या पौरोहित्य-पुरःसरःसरएव वृहस्पति-सद्भावः प्रकाश्यते। अथवा। स्वोपयोगाभावेऽपि मनुष्यान् प्रवर्त्तयितुं देवाः कर्म्माण्यनुष्ठितवन्तः।

"यद्यदाचरति श्रेष्ठस्तत्तदेवेतरोजनः"।

इति न्यायात्। अस्तु वा स्वोपयोगोऽपि, जगन्निर्व्वाहेऽधिकृतानां देवादीनां तद्धेतोः तपश्चरणीयत्वात्(१)। "वसन्ते ब्राह्मणोऽग्निमादधीत, ग्रीष्मे राजन्यआदधीत शरदि वैश्यआदधीत"—इति विहितस्याधानस्य देवेष्वत्रैवर्णिकेष्वसम्भवः‡(२)—इति चेत्। न, रथकारव-

* 'इत्यादौ' इत्यादि 'इति चेत्'—इत्यन्तं स० सो० पुस्तकयो र्नास्ति।

† सम्भवः,—इति स० सो० पुस्तकयोः पाठः।

‡ देवेष्वपि त्रैवर्णिकेष्विवासम्भवः,—इति मु० पुस्तके पाठः।

(१) देवाहि जगन्निर्व्वाहेऽधिकृताः धर्म्मस्य च तद्धेतुत्वं अतो देवानां कर्म्मोपयोगः। महाभागत्वाद्देवानां विनापि कर्म्म जगन्निर्व्वाहः स्यादिति न शङ्कनीयं, सुप्रकारणं विना कार्य्योत्पत्तेर्देवानामप्यभावात्, भावे वा तस्य कारणत्वमेव न भवेत् व्यभिचारात्। महाभागत्वस्यापि कर्म्मसाध्यत्वाच्च।

(२) 'अत्रैवर्णिकेषु'—इति हेतु-गर्भ-विशेषणम्। ब्राह्मणत्वादि-पुरस्का-

दुपपत्तेः[१] । अथ मन्यसे,—'अस्ति रथकारस्य समन्त्रकाधान-विधायकं वचनम्,—"ऋभूणां त्वा देवानां व्रतपते व्रतेनादधामीति रथकारस्य,"—इति श्रुतेः, न त्वेवं देवानां विधिरस्ति,—इति । एवन्तर्हि निषादस्थपति-न्यायोऽस्तु । यथा निषादस्य प्रभोराधान-विध्यश्रवणेऽपि यागोऽभ्युपगतः, तथा देवानामभ्युपेयताम् । "एतया निषाद-स्थपतिं याजयेत्"—इत्यस्ति निषाद-विषयं वचनम्,—इति चेत् । किं त्वया विस्मृतानि देव-विषयाणि पूर्व्वोदाहृत-वचनानि ? । [१]तेषामर्थवादत्वेपि मानान्तराविरोधात् अननुवादात्* स्वार्थेऽपि तात्पर्य्यं किं नस्यात्[२] ।

अथोच्येत,—स्मृतीनां धर्म्मशास्त्रत्वात् तासु धर्म्म-मीमांसा अनुसर्त्तव्या, तस्याञ्च न कस्याप्यर्थवादस्य वाच्यार्थे प्रामाण्यमभ्युपगतम्—इति । तदेतद्वचनं स्मृति-भक्तस्य† मीमांसकंमन्यस्य स्वानर्थायैव स्यात् । 'मुषिक-भिया स्व-गृहं दग्धम्',—इति न्यायावतारात् ।

---

* अत्र, 'अननुवादाच्च'—इति पाठो भवितुं युक्तः ।

† स्मृति-निर्व्वाहकम्मन्यस्य, --इति मु० पुस्तके पाठः ।

---

रेण वसन्तादिष्वाधान-विधानात् देवानाञ्च ब्राह्मणत्वाद्यभावात् आधाने तेषामधिकारोन सम्भवतीत्याशङ्कार्थः । तथाच, कथं देवानामाधान-साध्याग्नि-सम्पाद्य-यागेष्वधिकारः,—इत्याशयः ।

(१) रथकारः,—"माहिष्येण करण्याञ्च रथकार उदाहृतः"—इत्युक्त-सङ्कीर्ण-जातिविशेषः । तस्य यथा त्रैवर्णिकभिन्नस्याप्याधानेऽधिकारः तथा देवानामपि स्यादित्यर्थः ।

(२) ननु तेषामर्थवादत्वात् स्वार्थे प्रामाण्यं नास्तीत्याशङ्क्याह तेषामिति ।

(३) विधानुवादयोरेवार्थवादयोः स्वार्थे तात्पर्य्याभावाभ्युपगमादितिभावः।

कस्यचिदर्थवादस्य स्वार्थे प्रामाण्यं भविष्यति,—इति भयेन अर्थवादैक-प्रसिद्धानां सर्त्तृणां मन्वदीनां मीमांसा-मात्र*-कृतोजैमिनेश्च सद्भावस्यैव† परित्यक्तव्यत्वात्। अशेषेतिहासलोप-प्रसङ्गात्(१)। तस्मात् प्रमाणमेव भूतार्थवादः(२)। तथाच सति, "तं मनुराधत्त", "तं पूषाऽऽधत्त", "तं त्वष्टाऽऽधत्त" "तं धाताऽऽधत्त",—इत्यर्थवाद-वशादाधानमपि देवानां किं नस्यात्। ब्राह्मणाद्यभावे तु‡ कामं वसन्तादि-काल-विशेष-नियमोमाभूत्; किमायातमाधानस्य?। किञ्च, अन्तरेणापि आधानं लौकिकेऽग्नौ यागः क्वचिदुपलभ्यते। "अवकीर्णि-पशुश्च तद्वदाधानस्याप्राप्तकालत्वात्" (मी० अ० १ पा० २सू०) इति जैमिनिसूत्रात्। "योब्रह्मचारी स्त्रियमुपेयात् स गर्द्दभं पशुमालभेत"—इत्यवकीर्णिपशुः। यथा उपनयन-होमोलौकिकाग्नौ, तथा असौ पशुः,—इति सूत्रार्थः। एतावता प्रयासेन देवानां कर्म्माधिकारे साधिते किं तव फलिष्यति? तथा मीमांसायां§ किं क्रियते?। अभिनिवेशः केवलं शिष्यते,

---

* मीमांसा सम्र (मीमांसाशास्त्र?) इति स० सो० पुस्तकयोः पाठः।
† सद्भावस्यैवं,—इति स० सो० पुस्तकयोः पाठः।
‡ अत्र, 'ब्राह्मणत्वाद्यभावे तु'—इति पाठो भवितुं युक्तः।
§ तव वा मीमांसायां,—इति स० सो० पुस्तकयोः पाठः।

---

(१) तेषामर्थवादैकगम्यत्वादितिभावः।
(२) विरुद्धानुवादभिन्नोऽर्थवादोभूतार्थवादः। तथा चोक्तम्। "विरोधे गुणवादः स्यादनुवादोऽवधारणे। भूतार्थवादस्तद्धानावर्थवादस्त्रिधा मतः"—इति।

फलं तु जगन्निर्व्वाहः,—इति पूर्व्वमेवोक्तम्। अशेषाश्च पुराणादयः एवं सति अनुगृहीताभवन्ति। मनुष्यवद्देवानां स्वर्गाय कर्म्माणि माभूवन्, जगन्निर्व्वाहाय तु भविष्यन्ति। तपसैव तन्निर्व्वाहः,—इति चेत्। न, *दान-याग-होम-मौन-ध्यानादि-व्यतिरिक्तस्य तपसोऽनुपलम्भात्। अतएव सत्य-सङ्कल्पोऽपि परमेश्वरः राम-कृष्णाद्यवतारेषु लौकिक-वैदिक-कर्म्म-नटनेनैव जगन्निरवहत्। देवाअपि तथा नटन्तु,—इति चेत्। एवमपि नटनीय-कर्म्माधिकारोभवताऽभ्युपगम्यताम्। एवं तर्हि, 'मनुष्याणाम्'—इति कथमुक्तम्,—इति चेत्। पौरुषेय-ग्रन्थापेक्षया † इति वदामः। न खलु‡ स्वयंप्रभात-निखिल-वेदानां देवानां धर्म्म-ज्ञानाय पौरुषेय-ग्रन्थापेक्षा अस्ति। मनुष्याणान्तु अ-तथाविधत्वात् अस्त्यपेक्षा§।

ननु, पशूनामपि धर्म्मे अधिकारः श्रूयते;—"गावो वाएतत् सत्रमासताशृङ्गाः सतीः शृङ्गानि नोजायन्ता,—इति कामेन, तासां दश मासा निषण्णाआसन्, अथ, शृङ्गाण्यजायन्त, ताउदतिष्ठन्नरात्स्म इति, कामिताः॥ संवत्सरमाप्त्वोदतिष्ठन्नरात्स्म"—इति श्रुत्या तिरश्चां गवां सत्रानुष्ठातृत्वाभिधानात्। अरात्स्म इति, कामितार्थसिद्धिं प्राप्ताः,—इत्यर्थः। नायं दोषः। अस्याः श्रुतेरर्थवादत्वात्।

---

* अत्र, 'स्नान'—इति अधिकं स० सो० पुस्तकयोः।
† वचनापेक्षया,—इति मु० पुस्तके पाठः।
‡ स्वयं प्रभात,—इति स० सो० पुस्तकयोः पाठः।
§ अत्यन्तमपेक्षा,—इति मु० पुस्तके पाठः।
|| अथ यासां नाजायन्त, ताः,—इति स० सो० पुस्तकयोः पाठः।

"यएवं विद्यात्, स संवत्सरमुपयन्ति"*—इति वृद्धिकामस्य सत्रं विधातुं प्रथमतः,—"गो-सत्रं वै संवत्सरः"—इति प्रशंसा कृता, तां सम्भावयितुं 'गावोवा'—इत्यादि पठितम्। न चैतस्यार्थवादस्य, "यद्वै किञ्च मनुरवदत् तद्भेषजम्"—इत्यादिवत् स्वार्थेऽपि तात्पर्य्यं वर्णयितुं शक्यम्। प्रत्यक्षेण श्रुत्यन्तरेण च विरुद्धत्वात्(१)। तिरश्चां हि मन्त्रोच्चारणे कर्म्मानुष्ठाने च सामर्थ्याभावः प्रत्यक्ष-सिद्धः। श्रुत्यन्तरेच,—"अथेतरेषां पशूनां अशनाया-पिपासे वा अभिज्ञानं† वदन्ति, न विज्ञातं पश्यन्ति, न विदुः श्वस्तनम्"—इति पशूनां विवेकाभावं दर्शयति। अस्तु वा, अस्यार्थवादस्य स्वार्थे तात्पर्य्यम्, गो-शब्देन गवाभिमानि-देवतानां विवक्षितत्वात्। अतएव "अभिमानि-व्यपदेशस्तु" (शा०२अ०१पा०५सू०) इति सूत्रे भगवान् वादरायणः सर्व्वेषां मृदादि-वस्तूनां श्रुतिमूलत्वेनाभिमानि-देवताः प्रतिपादयामास। सर्व्वथा, मनुष्यमात्राधिकारकं स्मृतिशास्त्रम्।

'हितम्'—इति, अनेन शब्देन प्रयोजनं निर्दिश्यते। अभिमत-फल-साधनत्वं हि धर्म्मस्य हितत्वम्। तच्च फलं द्वेधा;—ऐहिकमामुष्मिकञ्च,(२)—इति। अष्टकादि-साध्यं(३) पुष्ट्यादिकमैहिकम्। आमुष्मिकं

* स य एवं विद्वान् संवत्सरमुपयन्ति,—इति स० सो० पुस्तकयोः पाठः
† न विज्ञातं,—इति स० सो० पुस्तकयोः पाठः।

(१) विरुद्धानुवादरूपस्यार्थवादस्य न स्वार्थे प्रामाण्यमिति पूर्व्वोक्तमत्र स्मर्त्तव्यम्।

(२) अमुष्मिन्-परलोके भवमामुष्मिकं पारलौकिकमित्यर्थः।

(२) "अष्टका रात्रिदेवता पुष्टिकर्म्म" (३प्र०१, का०१, २सू०) इति गोभिलसूत्रादष्टकायाः पुष्टिसाधनत्वं बोध्यं।

द्वेधा,—अभ्युदयोनिःश्रेयसञ्च[१] । तत्राभ्युदयस्य साक्षात् साधनं धर्म्मः *[२] । निःश्रेयसस्य तु तत्त्व-ज्ञानोत्पादन-द्वारेण । तथा च स्मर्य्यते,—

"धर्म्मात् सुखञ्च ज्ञानञ्च ज्ञानान्मोक्षोऽधिगम्यते" ।

इति । अत्र केचिदाहुः—"नित्य-कर्म्मणां फलमेव नास्ति; अकरणे प्रत्यवायाद्भीतैः केवलमनुष्ठीयते; तत्र, कुतोऽभ्युदय-हेतुत्वं निःश्रेयस-हेतुत्वञ्च,"—इति । अपरे † पुनराहुः,—"अभावाद्भावोत्पत्तेरदर्शनात् [३]अकरणे प्रत्यवायोन युक्तिसहः, नापि, तत्र प्रमाणमस्ति । ननु, उपनयनाध्ययनादि-विहितानामकरणे प्रत्यवायः स्मर्य्यते,—

"अतऊर्द्ध्वं पतन्त्येते यथाकालमसंस्कृताः ।
सावित्री-पतितात्राव्याभवन्त्यार्य्य-विगर्हिताः" ।
"योऽनधीत्य द्विजोवेदमन्यत्र कुरुते श्रमम् ।

* साक्षात् साधनत्वं,—इति मु० पुस्तके पाठः ।
† पुनरन्यथाहुः,—इति स० से० पुस्तकयोः पाठः ।

(१) अभ्युदयः स्वर्गादिः । निःशेषं श्रेयोनिःश्रेयसं मुक्तिः । तत्र हि सर्व्वं श्रेयः समाप्यते, न किञ्चिदवशिष्यते ।

(२) एतच्च विहितक्रियाजन्यमदृष्टं धर्म्मः,—इति न्यायादिमतावलम्बनेनाभिहितं । यत्रेदमुक्तं । "विहितक्रिययासाध्योधर्म्मः पुंसोगुणोमतः"—इति । विहितकर्म्मणामेव धर्म्मत्वमिति मीमांसामये तु अपूर्व्वद्वारैव तस्याभ्युदयसाधनत्वं मन्तव्यं । तच्च मीमांसा-प्रथम-द्वितीयाधिकरणे शावरभाष्यादौ स्पष्टम् ।

(३) अभावस्य सर्व्वदा सर्व्वत्र सौलभ्येन सर्व्वदा सर्व्वत्र सर्व्वोत्पत्तिप्रसङ्गात् । कार्य्यकारणयोः सारूप्यनियमाच्चेति भावः । स्पष्टमिदं न्यायशास्त्रीरकादौ प्रायः सर्व्वत्र ।

स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः"।

"अकुर्व्वन् विहितं कर्म्म निन्दितञ्च समाचरन्।

अनिग्रहाचेन्द्रियाणां नरः पतनमृच्छति"[१]।

इति। नैवम्। एतानि वचनानि नित्य-कर्म्माननुष्ठायिनः आलस्य-निमित्तं पूर्व्व-सञ्चितं दुरितं यत्, तत्-सद्भावं सूचयन्ति। एतच्च तैत्तिरीयोपनिषद्व्याख्याने भाष्य-कार-वार्त्तिक-काराभ्यां[२] प्रतिपादितम्"।[३] यदि अकरणं प्रत्यवायस्योत्पादकं यदि वा सूचकम्, उभयथाऽपि नित्य-कर्म्मानुष्ठानेन प्रत्यवायस्य प्रागभाव-परिपालनं प्रध्वंसाभावोत्पादनञ्च सम्पद्यते। दुरित-प्रध्वंसित्वञ्च, त्रिसन्ध्यमनुष्ठीयमानेषु, "सूर्य्यश्च" "आपः पुनन्तु" "अग्निश्च",—इति मन्त्रेषु[४]

(१) अस्य श्लोकस्य प्रथमार्द्धं मानवीयं, द्वितीयार्द्धन्तु याज्ञवल्क्यीयम्। मानवीयस्योत्तरार्द्धं यथा,—"प्रसजंश्चेन्द्रियार्थेषु प्रायश्चित्तीयते नरः"—इति। याज्ञवल्क्यीयस्य पूर्व्वार्द्धं यथा,—"विहितस्याननुष्ठानात् निन्दितस्य च सेवनात्"—इति। सम्भावयामः—श्लोकद्वयमेव ग्रन्थकारेणोद्धृतं लेखकप्रमादादिना तु पूर्व्वश्लोकस्योत्तरार्द्धं उत्तरश्लोकस्य पूर्व्वार्द्धञ्च आदर्शपुस्तकेषु भ्रष्टमिति।

(२) यत्र ग्रन्थे व्याख्येयग्रन्थानुसारिभिः पदैर्ग्रन्थो व्याख्यायते स्वपदार्थश्च वर्ण्यते, तद्भाष्यम्। यत्र तु उक्तानुक्त-दुरुक्त-चिन्ता क्रियते तद्वार्त्तिकम्।

(३) एवं मतद्वयमुपन्यस्य उभयमतेऽपि नित्यकर्म्मणां सफलत्वमाह यदीति। अकरणं प्रत्यवायस्योत्पादकमिति पक्षे नित्यकर्म्मकरणात् प्रत्यवायो नोत्पद्यते अपि तु प्रत्यवायप्रागभाव एवावतिष्ठते इति प्रत्यवायस्य प्रागभावपरिपालनं भवति। इदञ्चानुत्पत्स्यमानस्यापि प्रागभावोऽस्तीति वैशेषिकादिमतावलम्बनेनाभिहितम्। नित्यकर्म्मणोऽकरणं पूर्व्वसञ्चितस्य प्रत्यवायस्य सूचकमितिपक्षे तु नित्यकर्म्मकरणात् पूर्व्वसञ्चितः प्रत्यवायः प्रध्वंसते इति विवेकः।

(४) एतन्मन्त्रत्रयं यथाक्रमं प्रातर्म्मध्याह्न-सायाह्नकालीनसन्ध्योपासनीयाचमने विनियुक्तम्।

विस्पष्टमवभाषते। (१) "एवञ्च सति, उपभोग्य-फल-रहितानां नित्य-कर्म्मणां अभ्युदय-फल-हेतुत्वं* दूरापेतम्"—इति। अत्रोच्यते। अस्तु प्रत्यवाय-विरोधित्वम्। नैतावता फलाभावः(२)। मन्त्रलिङ्गेन श्रुति-स्मृति-वाक्याभ्याञ्च तत्तत्-फलावगमात्। "मयि वर्चोवलमो-जोविधत्त"—इति मन्त्र लिङ्गम्। छान्दोग्य-वाक्यं च, आश्रम-त्रयस्य लोक-हेतुतां, चतुर्थाश्रमस्य मोक्ष-हेतुतां(३) दर्शयति। "त्रयोधर्म्म-स्कन्धाः,—यज्ञोऽध्ययनं दानम्—इति, प्रथमस्तपएव, द्वितीयो ब्रह्मचार्य्याचार्य्यकुलवासी, तृतीयोऽत्यन्तमात्मानमाचर्य्यकुलेऽवसाद-यन्,(४) सर्व्वएते पुण्य-लोका भवन्ति, ब्रह्म-संस्थोऽमृतत्वमेति" इति। एतस्य वाक्यस्य आश्रम-परत्वम्,—"परामर्शं जैमिनिः" (शा० ३अ० ४पा० १८सू०) इत्यादिभिर्व्यास-सूत्रैः प्रतिपादितम्। स्मृति-वाक्यं चैतत्,—"तद्यथा,—आम्रे फलार्थे निर्म्मिते छायागन्धइत्यनूद्यते, एवं धर्म्मं चर्य्यमाणमर्था अनूद्यन्ते†"(५) इति। (६) इदञ्च वाक्यं नित्यकर्म्म-विषयत्वेन वार्त्तिके विश्वरूपाचार्य्यउदाजहार;—

* फल,—इति स० सो० पुस्तकयोर्नास्ति।
† अनुत्पद्यते,—इति स० सो० पुस्तकयोः पाठः।

(१) 'अत्र केचिदाहुः'—इत्यादिनोपक्रान्तं पूर्व्वपक्षमुपसंहरति एवञ्चेति। मतद्वयेपि समानोऽयमाक्षेप इत्यनुसन्धेयम्।
(२) अत्र फलपदं उपभोग्यफलपरम्।
(३) चत्वारः खल्वाश्रमिणः ब्रह्मचारि-गृहस्थ-वानप्रस्थ-भिक्षु-रूपाः। तेषां पूर्व्वे त्रयः पुण्यलोकभागिनो भवन्ति, चतुर्थस्तु मोक्षमाप्नोतीति बोध्यम्।
(४) आचार्य्यकुले अत्यन्तमात्मानमवसादयन् तृतीयोधर्म्मस्कन्धो भवतीत्यर्थः।
(५) अत्रानुपूर्व्वस्यवदेवर्थः—उत्पत्तिः, इति मन्तव्यम्।
(६) उदाहृतस्मृतिवाक्यस्य नित्यकर्म्मविषयत्वे प्रमाणं नास्तीत्याशङ्क्याह, इदञ्च वाक्यमिति।

(१)"आम्रे फलार्थे-इत्यादि ह्यापस्तम्ब-स्मृतेर्व्वचः ।
फलवत्त्वं समाचष्टे नित्यानामपि कर्म्मणाम्" ।

इति । तथा च मनुः,—

"वेदोदितं स्वकं कर्म्म नित्यं कुर्य्यादतन्द्रितः ।
तद्धि कुर्व्वन् यथाशक्ति प्राप्नोति परमां गतिम्" ।

इति । कूर्म्मपुराणेऽपि,—

यथाशक्ति चरेत्कर्म्म निन्दितानि विवर्ज्जयेत् ।
विधूय मोह-कलिलं लब्ध्वा योगमनुत्तमम् ।
गृहस्थोमुच्यते बन्धात् नात्र कार्य्या विचारणा" ।



इति । ननु, अस्त्वेवमभ्युदय-हेतुत्वं, निःश्रेयस-हेतुत्वन्तु न सम्भवति, प्रमाणाभावात् । प्रत्युत श्रुति-स्मृतिभ्यां तन्निषिध्यते ।

"न कर्म्मणा न प्रजया धनेन"—

इति श्रुतिः ।

"ज्ञानादेव तु कैवल्यम्" ।

इति स्मृतिः । मैवम् । परमात्म-प्रकरणे निःश्रेयस-हेतु-वेदनेच्छा-साधनत्वेन यज्ञादीनां विधानात्, "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति ; यज्ञेन दानेन"—इति श्रुतेः। निषेधस्तु साक्षान्निःश्रेयस-साधनत्वं गोचरयिष्यति । तस्मात्,—न मुक्तानां अग्न्याधानादि-कर्म्मापेक्षा अस्ति । वेदनोत्पत्तौ सा विद्यते । एतच्च उभयम्,—"अतएव चाग्नीन्धनाद्यनपेक्षा" (शा० ३अ० ४पा० २५सू०) "सर्व्वापेक्षा च यज्ञादिश्रुतेः" (शा० ३अ० ४पा० २६सू०)

---

(१) तद्वार्त्तिकं पठति आम्रे इति ।

इत्याभ्यामधिकरणाभ्यां निर्णीतम् । तथा च, कर्म्मणां परम्परया मोक्षहेतुत्वं वायवीयसंहितायामभिहितम्,—

"कर्म्मातिशयमासाद्य पशोः *पाप-परिक्षयः(१) ।
एवं प्रक्षीण-पापस्य बहुभिर्जन्मभिः क्रमात् ।
भवेद्विषय-वैराग्यं वैराग्याज्ज्ञान-शोधनम् ।
भाव-शुद्ध्युपपन्नस्य शिव-ज्ञान-समन्वयः ।
ज्ञान-ध्यान-नियुक्तस्य† पुंसो योगः प्रवर्त्तते ।
योगेन तु परा भक्तिः प्रसादस्तदनन्तरम् ।
प्रसादान्मुच्यते जन्तुर्मुक्तः शिव-समो भवेत्" ।

इति । ननु, "प्रत्यवाय-परिहाराय, पुण्य-लोक-प्राप्तये, ब्रह्म-वेदनाय च, प्रतिदिनं‡ नित्य-कर्म्मणस्त्रि-प्रयोगः प्राप्तः"(२) । तन्न, खादिरवत् सकृत् प्रयुक्तस्यैव वचन-संयोग-भेदेन फलभेदोपपत्तेः । "खादिरो यूपो भवति"—इति क्रत्वर्थं वचनम् । "खादिरं§ वीर्य-

* पाश,—इति मु० पुस्तके पाठः ।
† ज्ञान-ध्यानाभियुक्तस्य,—इति स० सो० पुस्तकयोः पाठः ।
‡ प्रतिपादितं,—इति स० सो० पुस्तकयोः पाठः ।
§ खादिरं,—इति मु० पुस्तके नास्ति ।

(१) पशवो जीवाः । पापमधर्म्मः । पाशोति पाठे मल-कर्म्म माया-रोधशक्ति-लक्षणश्चतुर्व्विधः पाशो बोद्धव्यः । एतच्च शैवदर्शने प्रसिद्धम् । योगः चित्तद्वारेणात्मेश्वरसंबन्ध इति पाशुपतदर्शनोक्तो बोध्यः । प्रसादः शैव-दर्शनोक्तः शिवस्य प्रसन्नताविशेषः । योगप्रसादौ यथाक्रमं चित्त-वृत्तिनिरोध-परवैराग्यापरनामधेयज्ञानप्रसादलक्षणौ पातञ्जलोक्तौ वा द्रष्टव्यौ ।

(२) प्रयोगोऽनुष्ठानम् । योगसिद्ध्यधिकरणसिद्धान्तवत् अत्रापि प्रयोग-भेदादेव फलभेदो युक्त इत्यभिमानः ।

कामस्य यूपं कुर्व्वीत"—इति वचनं पुरुषार्थम्। तदेतत् वचन-द्वयम् एकस्यैव खादिरस्य प्रयोजन-द्वैविध्ये हेतुः। "एकस्य तूभयत्वे संयोग-पृथक्त्वम्"—(मी० ४अ० ४पा० ३१सू०)—इति जैमिनि-सूत्रात्। एवमत्रापि पूर्व्वोदाहृत-वचन-त्रय-बलात् प्रयोजन-त्रैविध्येऽपि सकृदेव प्रयोगः। तच्च, "विहितत्वाच्चाश्रम-कर्म्मापि" (ब्रा० ३अ० ४पा० ३२सू०)—इत्यस्मिन्नधिकरणे निर्णीतम्। न च, नित्यस्यापि फलवत्त्वे नित्य-काम्ययोर्भेदाभावः,—इति शङ्कनीयम्, करणे फल-साम्येऽपि अकरणे प्रत्यवाय-तदभावाभ्यां तद्भेदात्। न खलु, आयुष्कामेष्टि-वृष्टिकामेष्ट्याद्यकरणे* कश्चित् प्रत्यवायः श्रूयते। एषएव नित्य-न्यायो नैमित्तिकेष्ववगन्तव्यः। "स्कन्ने जुहोति" "भिन्ने जुहोति"—इत्यादि अनियत-भेदनादि-कार्य्यविशेषणोपेतं नैमित्तिकम्। 'नित्यवत् काम्यस्यापि विहितत्वेन [१]शुद्धि-हेतुत्वात् मोक्ष-साधनत्वम्'—इति चेत्। न, राग-प्राधान्यात्[२]। शुद्धिस्तु उपसर्ज्जनत्वेन राग-विषय-भोगं सम्पाद्योपचीयते। अतएव, गीतायां भगवता मुमुक्षोरर्ज्जुनस्य फलासक्तिर्निषिद्धा;[३]—

* आयुष्काम-वृष्टिकामेत्यादि पाठः मु० पुस्तके।

(१) शुद्धिः पापक्षयः।

(२) रागोऽत्र नेच्छामात्रं, मुमुक्षाया अपि तथात्वात्। किन्तु विषय-गोचराभिलाषः। "सुखानुशयी रागः" (२ पा० ७ सू०) इति योग-सूत्रात्। "सुखाद्रागः" (६ अ० २ आ० १० सू०) इति वैशेषिक-सूत्राच्च। रागस्तु बन्धहेतुरेव, न मोक्षहेतुः। "रागस्य बन्धनसमाम्नानात्"—इति गौतमसूत्रात्।

(३) फलासक्तिस्तु रागएवेति बोध्यम्।

"योगस्थः कुरु कर्म्माणि सङ्गं त्यक्त्वा धनञ्जय! ।
सिद्ध्यसिद्ध्योः समोभूत्वा, समत्वं योगउच्यते ।
कर्म्मण्येवाधिकारस्ते मा फलेषु कदाचन ।
मा कर्म्म फल-हेतुः——————" ।

इत्यादिना। नित्य-कर्म्मणि तु बुद्धि-शुद्धिरेव प्रधानम्; फलमुपसर्ज्जनम्(१)। अतएव, भुज्यमानेनापि फलेन तदनित्यत्व-सातिशयत्व-दोष-दर्शन-रूपोविवेकोन प्रतिवध्यते(२)। तदुक्तं वार्त्तिककारेण,—

"नित्येषु शुद्धेः प्राधान्यात् भोगोऽप्यप्रतिवन्धकः ।
भोगं भङ्गुरमीचन्ते बुद्धि-शुद्ध्यनुरोधतः" ।

इति। नित्यं च कर्म्म द्विविधम्; संस्कारकं विविदिषा-जनकञ्च। विहितत्व-मात्र-बुद्ध्या क्रियमाणं संस्कारकम्। तथा च स्मर्य्यते। "यस्यैते अष्टाचत्वारिंशत् संस्काराः(३) स ब्रह्मणः सायुज्यं सलोकतां गच्छति"* इति। ईश्वरार्पण-बुद्ध्या क्रियमाणं विविदिषा-जनकम्। तच्च, भगवतेरितम्,—

---

* यस्यैते चत्वारिंशत्संस्कारा अष्टावात्मगुणाः ब्राह्मणाः,—इत्यादिपाठः मु० पुस्तके।

---

(१) फलपदमत्र पापक्षयातिरिक्तानुषङ्गिकफलपरं। तस्योपसर्ज्जनत्वादेवानुषङ्गिकत्वं।

(२) अनित्यत्वञ्च फलस्य सत्त्वे सति कार्य्यत्वादनुमितम्। "तद्यथेह कर्म्मचितोलोकः क्षीयते, एवमेवामुत्र पुण्यचितोलोकः क्षीयते"—इति श्रुतिसिद्धञ्च। सातिशयत्वं तारतम्यवत्त्वम्। परसम्पदुत्कर्षोहि हीनसम्पदं पुरुषं दुःखाकरोति इति तस्य विवेकोपयोगः।

(३) अष्टाचत्वारिंशत्संस्कारास्तु गौतमादिभिरुक्ताः।

"यत् करोषि यदश्नासि यज्जुहोषि ददासि यत्।
यत् तपस्यसि कौन्तेय! तत् कुरुष्व मदर्पणम्"।

इति गीतायामिति। तत्र, संस्कारेण चित्तस्य वेदन-योग्यता-मात्रं सम्पद्यते,* विविदिषा तु प्रवृत्तिमुत्पाद्य अवश्यं वेदनं सम्पादयति। तस्मात्, मुमुक्षोरीश्वरार्पणं प्रशस्तम्। तदेवं हितशब्देन धर्मस्याभिमतसाधनत्वाभिधानात् 'अभीष्ट-सिद्धिः, प्रयोजनम्'—इत्युक्तं भवति[१]।

'धर्म',—शब्देन विषयोनिर्दिश्यते। अभ्युदय-निःश्रेयसे साधनत्वेन धारयति,—इति धर्मः। स च, लक्षण-प्रमाणाभ्यां चोदना-सूत्रे[२] व्यवस्थापितः। ननु, "चोदनाऽवगम्यस्य न स्मृतिविषयत्वम्, सर्व्वेषामनन्य-लभ्यस्यैव विषयत्वावगमात्। अथ, मन्यसे!—चोदनागम्योऽपि, अर्थवाद-परिहारेण, शाखान्तर-गत-विशेषोपसंहारेण च, अनुष्ठान-क्रम-सौकर्य्याय संगृह्यते,'—इति। तत्र, कल्प-सूत्रेषु[३]

---

* 'विविदिषा जनकम्'—इत्यारभ्य, 'सम्पद्यते'—इत्यन्तं मु० पुस्तके नास्ति।

---

(१) 'हितमित्यनेन शब्देन प्रयोजनं निर्दिश्यते'—इति यत् पूर्व्वमुपक्रान्तं, तस्यैवायमुपसंहारः संवृत्तः। अतो न पौनरुक्त्यं।

(२) 'चोदना-लक्षणोऽर्थोधर्म्मः', (१ अ० १ पा० २ सू०) इत्यस्मिन् मीमांसासूत्रे इत्यर्थः। तत्रैतत् सिद्धम्,—श्रेयस्करत्वं लक्षणं, चोदना प्रमाणम्,—इति। तत्र, तत्रैव भाष्यादौ विस्तरतोऽवगन्तव्यम्।

(३) कल्पसूत्राणि च नानाशाखागतलिङ्गादिकल्पितानि प्रत्यक्षवेदमूलकानि श्रौतधर्म्मानुष्ठानक्रमप्रतिपादकानि। तानि च, आश्वलायनबौधायनादिभिः प्रणीतानि, तत्तन्नाम्ना प्रसिद्धानि, श्रौतसूत्रापरनामधेयानि बहूनि।

तथा संगृहीतत्वात् । अतोन धर्म्मस्य विषयत्वम्''—इत्याशङ्क्याह, 'शौचाचारम्'—इति । अयं भावः । द्विविधोधर्म्मः ; श्रौतः स्मार्त्तश्च । तत्र, * आधानादि-पूर्व्वकोऽधीत-प्रत्यक्ष-वेद-मूलोदर्श-पौर्णमासादिः श्रौतः, अनुमित-परोक्ष-शाखा-मूलः शौचाचमनादिः स्मार्त्तः । तत्र आधानादेः कल्प-सूत्रेषु संग्रहेऽपि शौचादेरसंग्रहात् विषयत्वम्,—इति ।

ननु स्मृत्यन्तरेष्वपि शौचादिरुक्तः,—इत्यतआह,—'वर्त्तमाने कलौ युगे'—इति । कलौ युगे वर्त्तमाने सति, याजनाध्यापनादीनां जीवनाय असम्पूर्त्तेः, मानुषाणां जीवनाय, अभ्युदयाय, † निःश्रेयसाय च, हितः, सुकरोयोधर्म्मः,—ब्राह्मण-कर्त्तृकः कृष्यादिः, सोऽत्र प्राधान्येन प्रतिपाद्यते, इति अनन्य-लभ्यत्वात् विषयत्वम्,—इत्यर्थः ।

'यथावत्'—इतिपदेन कार्त्स्न्यशाभिधायिना‡ सङ्कोचं निवारयति । तत्त्वन्यथा कथनम् निवार्य्यते, स्मर्त्तॄणां भ्रान्ति-विप्रलम्भाद्यप्रसक्तः§(१)। अतएव 'सत्यवती-सुत !'—इति सम्बोधनम् । यदा, योषिदपि सती‖ माता, सत्य-वादिनी, तदा किमु वक्तव्यं वेदाचार्य्यस्तत्-पुत्रः सत्य-वादी,—इति । 'च'कारेण सु-यत्नं समुच्चिनोति ।

* अग्न्याधानादि,—इति स० सो० पुस्तकयोः पाठः ।

† जीवनाभ्युदयाय,—इति मु० पुस्तके पाठः ।

‡ कार्त्स्न्यमभिदधानः—इति स० सो० पुस्तकयोः पाठः ।

§ स्मर्त्तॄणामभ्रान्त्यविप्रलम्भाभ्यां तदप्रसक्तेः,—इति स० सो० पुस्तकयोः पाठः ।

‖ योषिदपि सत्यवती,—इति मु० पुस्तके पाठः ।

(१) भ्रमादिभिरेव मिथ्याकथनं सम्भवतीतिभावः । इदमत्रावधेयम् । स्मर्त्तॄणां सर्व्वेषां भ्रान्त्यप्रसक्तिः प्रमाणविशेषाभावादसङ्गतेव प्रति-

अत्र, प्रोक्तानाम् * अधिकारि-प्रयोजन-विषयाणां परस्परसम्बन्धोविस्पष्टः । तत्र, प्रयोजनाधिकारिणोरर्थ्यमानार्थित्वम्; अधिकारिभिः प्रयोजनमर्थ्यते । प्रयोजन-विषययोश्च जन्य-जनकभावः; ज्ञाते धर्म्मे तदनुष्ठानेनाभ्युदय-निःश्रेयस-सिद्धेः(१) । अधिकारि-विषययोश्चोपकार्य्योपकारकभावः; विषयः प्रयोजनमुत्पाद्य अधिकारिणं प्रत्युपकरोति । विषय-ग्रन्थयोस्तु प्रतिपाद्य-प्रतिपादकभावः । तदेवमनुबन्ध-चतुष्टयस्य सुलभत्वात् समाहित-मनस्कैः श्रोतृभिरस्मिन् ग्रन्थे प्रवर्त्तनीयम्,—इति श्लोक-द्वयस्य तात्पर्य्यार्थः ॥

ननु, पराशर-स्मृत्यवतारे व्यासं प्रति-प्रश्नोव्यधिकरणः,—इत्याशङ्क्य श्लोक-द्वयेन परिहरति,—

**तत् श्रुत्वा ऋषि-वाक्यन्तु स-शिष्योऽग्न्यर्क-सन्निभः† ।**
**प्रत्युवाच महातेजाः श्रुति-स्मृति-विशारदः ॥३॥**
**न चाहं सर्व्व-तत्त्व-ज्ञः कथं धर्म्मं वदाम्यहम् ।**
**अस्मत्-पितैव प्रष्टव्यः—इति व्यासः सुतोऽब्रवीत्‡ ॥४॥**

---

* पूर्व्वोक्तानाम्, इति मु० पुस्तके पाठः ।
† समिद्धाग्न्यर्कसन्निभः—इति मु० मू० पुस्तके पाठः ।
‡ सुतोवदत्,—इति मु० मू०, स० सो० पुस्तकेषु पाठः ।

---

भाति । प्रत्युत, मीमांसायाः प्रथमेऽध्याये स्मृतिपादे विरोधाधिकरणे भाष्यकारादिभिः स्मर्त्तॄणामपि भ्रान्तिः समर्थिता दृश्यते । अतएव, "विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम्" (मी० १अ० ३पा० ३सू०) इति भगवतोजैमिनेः सूत्रम्, "श्रुति स्मृतिविरोधे तु श्रुतिरेव गरीयसी" इत्यादि जावालादिवचनञ्च संगच्छते इति ।

(१) धर्म्मस्याभ्युदयहेतुत्वं साक्षात्, निःश्रेयसहेतुत्वन्तु चित्तशुद्धिद्वारा वेदनोत्पादनेनेति स्मर्त्तव्यम् ।

इति । सुमन्तु-वैशम्पायन-जैमिनि-पैलैः चतुर्व्वेद-प्रवर्त्तकैः; पुराण-प्रवर्त्तक-सूत-सहितैः, शिष्यैः सह वर्त्तते,—इति सशिष्यः। यथा अग्नि-र्ज्वालाभिरुपेतः, यथा सूर्य्योरश्मिभिः, एवमसौ स्वसमान-विद्यैः शिष्यै-रुपेतः । अतएव महातेजस्त्वम् । तेजः-शब्देनात्र ब्रह्म-वर्च्चसं(१) विव-क्षितम्, इतरेण तेजसा प्रयोजनाभावात् । तामेव विवक्षां *'श्रुति-वि-शारदः'—इत्यनेन स्पष्टयति । श्रुति-स्मृत्योः क्रमेणाग्न्यर्क-दृष्टान्तौ योजनीयौ। अग्निः सन्निकृष्टमेव दहन्नपि, अहनि रात्रौ चाविशेषेण दहति; एवमधीयमान-प्रत्यक्ष-श्रुतिषु कतिपयाएव धर्म्माः †ख्याय-मानाभवन्ति । युक्तावस्थायामयुक्तावस्थायाञ्चाविशेषेण‡ ख्यायन्ते§ । अर्कोदिवैव भासयन्नपि, सन्निकृष्टं विप्रकृष्टञ्च अखिलं भासयति। एवं युक्तावस्थायामेव स्मर्य्यमानाअपि, विप्रकीर्णानेक-शाखा-निष्ठ-धर्म्माः सर्व्वेऽपि स्मर्य्यन्ते। अथ वा,—तपसा अत्यन्त-परिशुद्धोऽयम्,—इत्यस्मिन्नर्थे, अग्नि-दृष्टान्तः। "अग्निः शुचि-व्रत-तमः"‖ इति श्रुतेः। बहु-विषयाभिव्यक्ति-चतुरत्वे, अर्क-दृष्टान्तः ॥

ननु, एवं सति, 'न चाहं सर्व्व-तत्त्व-ज्ञः'—इति वचनं व्याहतम्, न, तस्य पितृ-प्रशंसा-रूपार्थ-वादत्वात् । "अपशवोवाअन्ये गो-

---

* श्रुतिस्मृतिविशारदः,—इति स० सो० पुस्तकयोः पाठः ।
† जायमाना,—इति मु० पुस्तके पाठः ।
‡ युक्तावस्थायाञ्च विशेषेण,—इति स० सो० पुस्तकयोः पाठः ।
§ जायन्ते,—इति मु० पुस्तके पाठः ।
‖ शुचिर्व्रततमः,—इति स० सो० पुस्तकयोः पाठः ।

---

(१) ब्रह्मवर्च्चसं वेदाध्ययनतदर्थज्ञानप्रकर्षकृतं तेजः ।

अश्वेभ्यः"—इति वचनं यथा गवाश्व-प्रशंसार्थं, न त्वजादीनां पशुत्वं निषेधति; प्रत्यक्ष-विरोधात्, अग्नीषोमीयादि-पशु विरोधाच्च, एवमिदं व्यास-वचनं न व्यासस्य सर्व्वज्ञत्वं निषेधति, किन्तु पितरं प्रशंसति। यद्वा,—गुरु-विषये विनयः कर्त्तव्यः,—इत्याद्याचार-शिक्षार्थमिदमुक्तम् । अथ वा,—'नचाहम्'—इति वदतो व्यासस्यायमाशयः;—संप्रति कलि-धर्म्माः पृच्छ्यन्ते, *न तावदहं स्वतः कलि-धर्म्म-तत्त्वं जानामि, अस्मत्-पितुरेव तत्र प्रावीण्यात्; अतएव, "कलौ पाराशर-स्मृतिः"—इति वक्ष्यते, यदि, पितृ-प्रसादात् मम तदभिज्ञानम्,† तर्हि, सएव पिता प्रष्टव्यः; न हि, मूल-वक्तरि लभ्यमाने, प्रणाड़िका(१) युज्यते,—इति ।

पालनात् 'पिता'। पालकत्वं च अत्र, कलि-धर्म्मोपदेशेन,—इति प्रस्तावानुसारेण द्रष्टव्यम् । अनयैव विवक्षया जनक-तातादि‡ शब्दाननुपेक्ष्य पितृ-शब्दं प्रयुङ्क्ते । 'एव'कारेण, अन्ये स्मर्त्तारो व्यावर्त्त्यन्ते§ । यद्यपि, मन्वादयः कलि-धर्म्माभिज्ञाः, तथापि, पराशरस्यास्मिन् विषये तपोविशेष-वलादसाधारणः कश्चिदतिशयो द्रष्टव्यः । यथा, काण्व-माध्यन्दिन-काठक-कौथुम-तैत्तिरीयादि-शाखासु कण्वादीनामसाधारणत्वम्,(२) तद्वदत्रावगन्तव्यम् ।

---

* अत्र, 'तत्र'—इति अधिकं स० सो० पुस्तकयोः ।
† मदभिज्ञानं,—इति मु० पुस्तके पाठः ।
‡ गुर्व्वादि,—इति स० पुस्तके पाठः ।
§ नव्यावर्त्त्यन्ते,—इति मु० पुस्तके पाठः ।

---

(१) प्रणाड़िका—परम्परा ।
(२) वैशम्पायनोऽहि सर्व्वां शाखामधीतवान्, कठः पुनरेकां, स तत्र श्रुत-

'व्यासः सुतः' इत्युक्तेरयमाशयः;- कलि-धर्म्म-सम्प्रदायोपेतस्यापि पराशर-सुतस्य यदा तद्धर्म्म-रहस्याभिधाने सङ्कोचः, तदा किमु वक्तव्यमन्येषाम्,—इति । तदेवं व्यास-मुखेन पराशरे गौरवातिशय-बुद्धिमुत्पादयितुं पराशर-स्तुत्यवतारेऽपि व्यासं प्रति प्रश्नोन व्यधिकरणः,—इत्यवगन्तव्यम् ॥

यथाविधि-गुरूपसत्त्या विद्या-प्राप्तिः,—इत्यभिप्रेत्य, उपसत्तिं दर्शयति,—

**ततस्ते ऋषयः सर्व्व धर्म्म-तत्त्वार्थ-कांक्षिणः ।**
**ऋषिं व्यासं पुरस्कृत्य गत्वा* वदरिकाश्रमम् ॥ ५ ॥**

इति । सर्व्वत्र वस्तुनि सामान्येन ज्ञाते विशेषेणाज्ञाते ज्ञानाकाङ्क्षा भवति । धर्म्म-शब्दोऽत्र सामान्यमभिधत्ते, तत्त्वार्थ-शब्दो विशेषम् । तत्र, सामान्यम्—अधीत-वेदेन श्रुत-व्याकरणेन लक्षण-प्रमाण-कुशलेन(१) पुरुषेण ज्ञायते । वेदोहि धर्म्म-सामान्यं निरूपयति;—"धर्म्मोविश्वस्य जगतः प्रतिष्ठा"—इति । (२)शाखान्तराध्यायि-

* गताः,—इति स० सो० मु० मू० पुस्तकेषु । जग्मुः,—सो० मू० पुस्तके पाठः ।

वङ्ग-परिश्रमोलब्धातिशयेोऽन्येभ्योविशिष्यते । एतन्निवन्धनैव काठादिसंज्ञाविशेषाः शाखाविशेषाणाम् । तथा च जैमिनिसूत्रम् । "आख्याप्रवचनात्" (मी० १ अ०, १ पा० ३ सू०) इति । प्रकृष्टं वचनं प्रवचनम् । तत्कृता काठादिसमाख्या वेदशाखानामिति सूत्रार्थः ।

(१) समानासमानजातीयेभ्यो व्यवच्छेदकम् यत्, तत् लक्षणम् । प्रमितिसाधनं प्रमाणम् ।

(२) ननु यस्यां शाखायामियं श्रुतिर्नास्ति तच्छाखाध्यायिनां कथं सामान्यतो

मस्तु व्याकरण-वशात् तदभिज्ञानम्। अभ्युदय-निःश्रेयसे धारयति,—इति व्युत्पत्तेर्दर्शितत्वात्। (१)औणादिक-प्रक्रियायामकुशलश्चेत् लक्षणेन जानाति*। अर्थत्वे सति चोदना-गम्योधर्म्मः,—इति लक्षणम्। तत्र, अर्थ-शब्देन श्येनाद्यभिचाराणाम्† अनर्थानां निवृत्तिः। "श्येनेनाभिचरन् यजेत"—इति श्रुत्युक्तस्य‡ श्येन-नामक-याग-फलस्य शत्रु-वधस्य "न हिंस्यात् सर्व्वाभूतानि"§ इति निषेध-विषयत्वेन अनर्थत्वात् तद्धेतोः श्येनस्याप्यनर्थत्वम्; श्येनस्य स्वरूपतोनिषेधाविषयत्वात् विधेयत्वमप्यविरुद्धम्(२)। न च, निषेध-विषयत्वेनाग्नीषोमीय-वधस्यापि अर्थशब्देन व्यावर्त्यत्वादव्याप्तिः,—इति शङ्कनीयम्। तत्र, विशेष-विधिना सामान्य-निषेधस्य अपोदितत्वात्‖। चोदना-

* जानातु,—इति स० सो० पुस्तकयोः पाठः।
† श्येनाभिचरणादीनाम्,—इति मु० पुस्तके पाठः।
‡ इति श्रुतेरुक्तस्य,—इति मु० पुस्तके पाठः।
§ सर्व्वभूतानि,—इति मु० पुस्तके पाठः।
‖ अपोपितत्वात्,—इति स० सो० पुस्तकयोः पाठः।

---

धर्म्मज्ञानमित्याशङ्क्याह शाखान्तराध्यायिन इति। कर्त्तरि षष्ठीयम्। कर्तृत्वञ्चाभिज्ञानक्रियापेक्षया द्रष्टव्यम्।

(१) दर्शितायाव्युत्पत्तेरौणादिकप्रक्रियासाध्यत्वात् तत्राव्युत्पन्नस्य सामान्येन धर्म्मज्ञाने उपायमाह औणादिकेति।

(२) तथा च श्येनादेः स्वरूपतोविधेयत्वं वास्तवमेव। फलद्वारा त्वनर्थत्वमौपचारिकमेवेति भावः। तदुक्तम् (मी० श्लो० वा० १ अ० १ पा० २ सू०)। "श्येनादीनां विधेयत्वादिष्टस्यापि च साधनात्। उपचारादनर्थत्वं फलद्वारेण वर्ण्यते"—इति। सर्व्वमेतत् चोदनासूत्रवार्त्तिके विस्तरतो विचारितम्।

शब्देन प्रत्ययादेर्व्याहत्तिः। 'घटं कुरु'—इति लौकिक-विधावति-व्याप्तिः[१]—इति चेत्। न, चोदना-शब्दस्य वेद-विषये प्रसिद्धत्वात्, पङ्कजादाविव अवयवार्थस्य प्रवृत्त्यनिमित्तत्वात्[२]। उक्त-लक्षणाभिधानेनैव 'धर्म्मे चोदना प्रमाणम्'—इत्यर्थादभिहितं भवति[३]। एवं लक्षणादिभिः सामान्येन ज्ञातेऽपि ऋषीणां तद्विशेष-ज्ञाने भवत्येवाकाङ्क्षा।

तत्र, विशेष-प्रश्न-कुशलत्वात् व्यासस्य पुरस्कारः[४]। कलि-कल्मष-विमोचन-हेतुत्वात् अक्षय्य-फल-हेतुत्वाच्च वदरिकाश्रम-निवासः[५]। तदुक्तं कूर्म्म-पुराणे,—

"वदर्य्याश्रममासाद्य मुच्येत कलि-कल्मषात्।
तत्र नारायणोदेवोनरेणास्ते सनातनः।
अक्षय्यं तत्र दत्तं स्याज्जप्यं वाऽपि तथाविधम्।
महादेव-प्रियं तीर्थं पावनं तद्विशेषतः।
तारयेच्च पितॄन् सर्व्वान् दत्त्वा श्राद्धं विशेषतः"।

इति॥ ५॥

---

(१) तस्यापि क्रियाप्रवर्त्तकवाक्यत्वेन चोदनात्वाविशेषादित्यभिमानः।

(२) तथाच चोदनाशब्दः पङ्कजादिशब्दवत् योगरूढ़ः, इति न योगार्थमात्रं तत्र प्रवृत्तिनिमित्तं येन लौकिकविधावतिव्याप्तिः स्यात्। किन्तु प्रसिद्ध्या वैदिकविधिवाक्यमात्रे तस्य प्रवृत्तिरितिभावः।

(३) "चोदनालक्षणोऽर्थोधर्म्मः"—(मी० १अ०, १पा०, २सू०) इति सूत्रं प्रणयता जैमिनिनेतिशेषः।

(४) पुरस्कारोऽग्रतः करणम्।

(५) पराशरस्येति शेषः। पराशरं प्रत्युत्मर्षीणां तत्र गमनेन तस्य तन्निवासस्य प्रतीतेः।

पराशरस्य तपोमहिमानं प्रख्यापयितुमाश्रमं विशिनष्टि,—

नाना-पुष्प-लता-ऽऽकीर्णं* फल-पुष्पैरलङ्कृतम् ।
नदी-प्रस्रवणोपेतं पुण्य-तीर्थोपशोभितम् ॥ ६ ॥
मृग-पक्षि-निनादाढ्यं† देवताऽऽयतनावृतम्‡ ।
यक्ष-गन्धर्व-सिद्धैश्च§ [१]नृत्त-गीतैरलङ्कृतम्|| ॥ ७ ॥

इति । अत्युत्कटेन तपसा फलमिहैवाविर्भवति । तथा सति, यादृशं फलमुत्कृष्टमुपलभ्यते, तादृशस्य तपसउत्कर्षोऽनुमातव्यः; इह च, तेषु तेषु ऋतुषु¶ सम्भाव्यमानानां पुष्पाणां नानाविधानां** निरन्तरं सङ्कीर्णत्वमुपलभ्यते, ततोदेवार्चन-लक्षणं तपः पक्कम्,—इति गम्यते । एवं फल-वृन्दोत्कर्षात् आहार-नियतेः[२] परिपाको-

* नानावृक्षसमाकीर्णम्,—इति मु० मू० से० मू० पुस्तकयोः पाठः ।
† मृगपक्षिगणाढ्यञ्च,—इति मु० मू० पुस्तके पाठः ।
‡ देवतायतनास्पदं,—इति से० मू० पुस्तके पाठः ।
§ यक्षकिन्नरसिद्धैश्च,—इति से० मू० पुस्तके पाठः ।
|| नृत्यगीतैरलङ्कृतम्,—इति स० से० पुस्तकयोः, नृत्तगीतसमाकुलं,—इति मु० मू०, से० मू० पुस्तकयोः पाठः ।
¶ ऋतुषु,—इति स० से० पुस्तकयोर्नास्ति ।
** नानाविधानां पुष्पाणाम्,—इति स० से० पुस्तकयोः पाठः ।

(१) "नृत्यं पदार्थाभिनयोनृत्तं ताललयाश्रितम्",—इति चन्द्रिका ।
(२) नियतिर्नियमः । अभिलाषनियमने खल्वभिलषनीयसौकर्य्यं पतञ्जलिना प्रायः सिद्धिफलतया कथितम् । यथा, अस्तेयसिद्धौ सत्यां रत्नानामुपस्थानम् । तच्च व्यक्तं पातञ्जल-साधन-पादादौ । तुल्यन्यायतया प्रकृतेपि आहार्य्योत्कर्षः आहार-नियमस्य फलतया कल्प्यते,—इति भावः । एवं परत्रापि ।

निश्चीयते। घर्म्म-कालेऽपि अविच्छिन्नेन नदी-प्रवाहेण स्नान-निष्पत्ति-पाकात्ववगमः। पुण्यतीर्थे* विष्णु-गङ्गादि† । पुण्य-तीर्थ-शोभया च आश्रमस्यैतस्य तपोऽतिशय-जनकत्वे हेतुरुपन्यस्तः॥

मृगादीनामन्योन्य-वैर-त्यागेन निर्भयाणां विस्रम्भोयोनिनादः, तेनाहिंसाऽनुष्ठान-सिद्धिर्दर्शिता। तथाच योग-शास्त्रे पतञ्जलिः, यम-नियमादीनां क्रमेण सिद्धि-लिङ्गानि[१] सूचयन् अहिंसा-सिद्धिं सूचयामास;—"तत्सन्निधौ वैर-त्यागः"—(२ पा० ३५सू०)[२] इति।

पूर्व्वं महर्षयोऽत्र तपस्यन्तः एकैकं देवालयं निर्म्मिमिरे‡ तैः सर्व्वैरावृतत्वम्— अस्याश्रमस्य तपोऽतिशय-हेतुतायां, सर्व्व-सम्प्रतिपत्तेर्लिङ्गम्[३]। अथवा,—चन्द्र-सूर्य्यादयोदेवाः पूर्व्वस्मिन् जन्मनि मनुष्याः सन्तोऽत्रैव नानाविधेष्वायतनेषु तपस्तप्त्वा देवत्वं लेभिरे,—इति विवक्षया देव-नामाङ्कितैरायतनैरावृतम्,—इत्युक्तम्। यज्ञादयः§ पूर्व्व-जन्मानुष्ठित-तपः-फलं देव-योनित्वमनुभवन्तोऽप्यत्रागत्य एतदीय-

* उष्णतीर्थं,—इति मु० पुस्तके पाठः।
† विष्णुगयादि,—इति स० से० पुस्तकयोः पाठः।
‡ निर्म्मितवन्तः,—इति स० से० पुस्तकयोः पाठः।
§ यक्ष्यादयः,—इति स० से० पुस्तकयोः पाठः। एवं परत्र।

(१) यमनियमादयश्च,"यम-नियमासन-प्राणायाम-प्रत्याहार धारणा ध्यान-समाधयोऽष्टावङ्गानि" (२ पा०, २९ सू०) इति योगसूत्रोक्ताः। एषां विवरणं तत्रैव द्रष्टव्यम्।
(२) तस्य अहिंसा-प्रतिष्ठस्य सन्निधानात् शाश्वतिक-वैराणामप्यहि-नकुलादीनां वैरत्यागो भवतीत्यर्थः।
(३) यदि हि अस्याश्रमस्य तपोऽतिशय-हेतुतायां कस्यचिद्विप्रतिपत्तिः स्यात्, तदा सर्व्वेषामृषीणां तत्र तपस्यया देवालय-निर्म्माणञ्च नोपपद्यते,—इति भावः।

तपोऽतिशयं दृष्ट्वा हृष्यन्तोनृत्यन्ति गायन्ति च। अनेन देवैरपि अर्थनीयत्वम् आश्रमस्य प्रदर्शितम्। युक्तं चैतत्, देव-जन्मनोऽप्युत्तमस्य[१] फलस्यात्र सम्पादयितुं शक्यत्वात्। अथवा,—यत्नादयोमुमुक्षवः सन्तोऽत्रागत्य *मोक्ष-साधनत्वेन नृत्त-गीताभ्यां† ईश्वरं भजन्ते। अतएव याजवल्क्येनेदमुक्तम्—

"वीणा-वादन-तत्त्वज्ञः श्रुति-जाति-विशारदः।
ताल-ज्ञश्चाप्रयासेन मोक्ष-मार्गं निगच्छति"[२] ॥

इति ॥

गुरूपसत्तावनुष्ठेयं प्रकार-विशेषं दर्शयति,—

**तस्मिन्नृषि-सभा-मध्ये ‡शक्ति-पुत्रं पराशरम्।**
**सुखासीनं महातेजाः§ मुनि-मुख्य-गणावृतम् ॥ ८ ॥**
**कृताञ्जलि-पुटोभूत्वा व्यासस्तु ऋषिभिः सह॥।**
**प्रदक्षिणाभिवादैश्च स्तुतिभिः समपूजयत्¶॥ ९ ॥**

---

* मोक्ष,—इति मु० पुस्तके नास्ति।
† नृत्यगीताभ्यां,—इति स० सो० पुस्तकयोः पाठः।
‡ शक्तिं,—इति मु० मू० पुस्तके पाठः।
§ महात्मानं,—इति मु० मू० पुस्तके, महातेजोमुनिमुख्य,—इति सो० मू० पुस्तके पाठः।
॥ व्यासश्च ऋषयस्तथा,—इति सो० मू० पुस्तके पाठः।
¶ पर्य्यपूजयत्, इति सो० मू० पुस्तके पाठः

---

(१) मोक्षरूपस्येत्यर्थः।
(२) श्रुतिर्नाम स्वरावयवः शब्दविशेषः। जातयः षड्जाद्याः स्वरभेदाः सप्त शुद्धाः, सङ्कीर्णास्त्वेकादश। मिलित्वा त्वष्टादश भवन्ति। तालः कालक्रियामानं गीतप्रमाणमिति यावत्।

इति । 'तस्मिन्',—इति आश्रमोक्तिः । वक्ष्यमाण-धर्म्माणामशेष-मुनि-सम्मतत्वं दर्शयितुम्, 'ऋषि-सभा'—इत्युक्तम् । ऋषिष्वपि विशेषेण स्मृति-कारिणां गोत्र-प्रवर्त्तकानां(१) च, अत्रि-याज्ञवल्क्यादीनां सम्पत्तिं विवक्षित्वा आह, 'मुनि-मुख्य'—इति । न केवलं तपोबलेन पराशरस्य महिमा, किन्तु विशिष्ट-जन्मनापि,—इत्याह, शक्ति-पुत्रम्,—इति । अयञ्च महिमा, 'पराशर'—शब्द-निर्व्वचन-पर्य्यालोचनया विस्पष्टमवगम्यते । तच्च निर्व्वचनं महद्भिरुदाहृतम्,—

"पराकृताः शराः यस्मात् राक्षसानां वधार्थिनाम् ।
अतः पराशरोनाम ऋषिरुक्तोमनीषिभिः ।
परस्य कामदेवस्य शराः संमोहनादयः(२) ।
न विद्यन्ते यतस्तेन ऋषिरुक्तः पराशरः ।
परेषु पाप-चित्तेषु नादत्ते कोप-लक्षणम् ।
शरं, यस्मात् ततः प्रोक्त ऋषिरेष* पराशरः ।
परं मातुर्निजायायदुदरं तदयं यतः ।
ऋचमुच्चार्य्य निर्भिद्य निरगात् स पराशरः" ।

इति । 'मुख'-शब्देनैकाग्र्यं च विवक्षितम्;—चित्तस्याशेष-विक्षेप-

* ऋषिरेव,—इति मु० पुस्तके पाठः ।

(१) गोत्रं वंशपरम्पराप्रसिद्धमादिपुरुषब्राह्मणस्वरूपम् । तच्च काश्यपादि प्रसिद्धमेव ।

(२) सम्मोहनादयश्च, —"सम्मोहनोन्मादनौ च शोषणस्तापनस्तथा । स्तम्भनश्चेतिकामस्य पञ्च वाणाः प्रकीर्त्तिताः"—इत्यनेनोक्ताः ।

परिहारेणैकाग्र्यं यथा भवति, तथोपविष्टमित्यर्थः। ऐकाग्र्य-आसीन-महातेजः-पदानि पूर्व्वं व्याख्यातानि ॥

'अञ्जलि'-पदेन भक्त्यतिशयोद्योत्यते। परया भक्त्या गुरूपदिष्टार्थ-तत्त्वमाविर्भवति। तथाच, श्वेताश्वतर-शाखायां श्रूयते,—

"यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः"।

इति। अन्तरेण गुरुभक्तिमुपदिष्टोऽप्यर्थोनिष्फलोभवति। तदपि क्वचित् श्रूयते,—

"अध्यापिता ये गुरून्* नाद्रियन्ते
विप्रावाचा मनसा कर्म्मणा वा।
यथैव ते न गुरुभिर्भोजनीयाः†
तथैव तान् न भुनक्ति श्रुतं तत्"।

इति। यथा गुरुमनाद्रियमाणाः शिष्याः न गुरुणा पालनीयाः(१) तथा तत् श्रुतमपि तान्‡ शिष्यान् स्व-फल-दानेन न पालयति,—इत्यर्थः। देववद्गुरोः पूजनीयत्वात् तस्मिन् प्रदक्षिणादयोयुज्यन्ते। तर्हि, आवाहनासन-स्वागतादयोऽप्युपचाराः प्राप्यन्ते,—इति चेत्, प्राप्यन्तां नाम, प्रदक्षिणादीनामुपलक्षणत्वात्। अथवा,—दूरादागत्य

---

* गुरुं,—इति स॰ सो॰ पुस्तकयोः पाठः।
† गुरोर्भोजनीयाः,—इति स॰ सो॰ पुस्तकयोः पाठः।
‡ तत् श्रुतमधीतान्,—इति मु॰ पुस्तके पाठः।

---

(१) 'भुजपालनाभ्यवहारयोः'—इति धातुपाठादयमर्थोलभ्यते।

गुरु-दर्शनं कुर्व्वतामुचिताः प्रदक्षिणादयएव,—इति तावन्तोऽत्र निर्दिश्यन्ते ॥

उक्तोपपत्तेर्यथाविधित्वं द्योतयितुं, गुरोः परितोष-पूर्व्वकं कृपा-विशेषमादर्शयति,—

ततः * सन्तुष्ट-हृदयः† पराशर-महामुनिः ।
आह सुस्वागतं ब्रूहीत्यासीनोमुनि-पुङ्गवः ॥१०॥

इति । गुरु-सन्तोषस्य श्रेयोहेतुत्वमन्वय-व्यतिरेकाभ्यां पुराणसारेऽभि-हितम्,—

"गुरावतुष्टेऽतुष्टाः स्युः सर्व्वे देवाः द्विजोत्तमाः! ।
तुष्टे तुष्टायतस्तस्मात् सर्व्व-देवमयोगुरुः ।
श्रेयोऽर्थी यदि; गुर्व्वाज्ञां मनसाऽपि न लङ्घयेत् ।
गुर्व्वाज्ञा-पालकोयस्मात् ज्ञान-सम्पत्तिमश्नुते" ।

इति । आदर-पूर्व्वकेण स्वागत-प्रश्नेन कृपाविशेषोदर्शितः । आद-रार्था सु-शब्दस्य द्विरुक्तिः(१) । अथवा,—सु-शब्देनैकेन आगमने‡ लौकिकं सौख्यमुक्तम्, द्वितीयेन यथाविध्युपपत्ति-लक्षणं शास्त्रीयं सौष्ठवमुच्यते । ऋषिष्वागतेषु पराशरेणाभ्युत्थातव्यम् § इति शङ्कां

* अथ,—इति स०, सो०, मु० मू० पुस्तकेषु पाठः ।
† सन्तुष्ट-मनसा,—इति मु० मू० पुस्तके पाठः ।
‡ आगमने,—इति मु० पुस्तके नास्ति ।
§ पराशरेणाप्युत्थातव्यम्,—इति मु० पुस्तके पाठः ।

(१) स्वागतशब्देपि सुशब्दस्य प्रविष्टत्वात् यस्य द्विरुक्तिरिति बोध्यम् ।

वारयति 'आसीनः'—इति। तत्र हेतुत्वेन पराशरोमहामुनि-मुनिपुङ्गव-शब्द-द्वयेन* विशिष्यते। महामुनि-मुनिपुङ्गव-शब्दौ क्रमेण वयसा विद्यया च ज्येष्ठत्वमाहतुः। उभयविध-ज्यैष्ठ्यात् न अनेनाभ्युत्थातव्यम्॥

आसीनेन यथा स्वागतं पृष्टम्, एवमागतेनाप्यवस्थितस्य कुशलं प्रष्टव्यम्। अतः प्रथमं तत् पृष्ट्वा† गुरूणां स्वकीये कुशलेऽभिहिते सति पश्चात् बुभुत्सितार्थं पृच्छति,—इत्याह,—

**कुशलं सम्यगित्युक्त्वा व्यासः पृच्छत्यनन्तरम्‡।**

इति। उक्त्वा, गुरु-मुखात् कुशलं श्रुत्वा च,—इत्यध्याहृत्य§ योजनीयम्॥

बुभुत्सितार्थे प्रश्न-प्रकारं दर्शयति,—

**यदि जानासि भक्तिं मे॥ स्नेहाद्वा भक्त-वत्सल ॥११॥**
**धर्मं कथय मे तात! अनुग्राह्योह्यहं तव¶।**

---

* पराशरः शब्दद्वयेन,—इति स० सो० पुस्तकयोः पाठः।
† ततः प्रथमं तत्त्वविदा,—इति मु० पुस्तके पाठः।
‡ व्यासः सुस्वागतं ये च ऋषयस्तु समन्ततः। कुशलं सम्यगित्युक्त्वा व्यासोऽपृच्छत्ततः परम्,—इति सो० मू० पुस्तके पाठः। मु० मू० पुस्तके तु, पूर्व्वार्द्धमेवमेव। उत्तरार्द्धे तु,—कुशलं कुशलैर्युक्ता व्यासः पृच्छत्यतः परम्,—इति विशेषः।
§ इत्याहृत्या,—इति स० सो० पुस्तकयोः पाठः।
|| मे भक्तिं—इति सो० मू०, मु० पुस्तकयोः पाठः।
¶ ह्यनुग्राह्योप्यहं तव,—इति मु० पुस्तके, अनुग्राह्योजनस्तव,—इति सो० मू० पुस्तके पाठः।

इति। प्रियः शिष्यः पुत्रोवा रहस्योपदेशमर्हति, नेतरः। सोऽयमर्थः छन्दोगैर्मधु-विद्यायामाम्नायते। "इदं वाव ज्येष्ठाय पुत्राय पिता ब्रह्म प्रब्रूयात् प्रणाय्याय(१) वाऽन्तेवासिने नान्यस्मै* कस्मैचन"—इति। अतोऽत्र, व्यासस्य पुत्रत्वं शिष्यत्वं च अस्ति,—इत्यभिप्रेत्य पक्ष-द्वयोपन्यासः। यदि लिङ्गैर्मदीये मानसे भक्ति-विशेषोऽनुमीयते, तदा तव भक्त-वत्सलत्वात् शिष्य-बुद्ध्या मामनुगृहाण, अननुमानेऽपि पुत्र-स्नेहात् अनुग्राह्योऽहम्। सर्व्वथाऽप्युपदेष्टव्यएव धर्म्मः॥

ननु, सन्ति बहवोधर्म्माः मन्वादिभिः प्रोक्ताः, तत्र कोधर्म्मो भवता बुभुत्सितः? इत्याशङ्क्य, बुभुत्सितं परिशेषयितुं बहून् धर्म्मानुपन्यस्यति,—

**श्रुतामे मानवाधर्म्मावाशिष्ठाः काश्यपास्तथा॥ १२॥**
**गार्गेयागौतमीयाश्च† तथा चोशनसाः श्रुताः‡।**
**अत्रेर्व्विष्णोश्च संवर्त्तात् दक्षादङ्गिरसस्तथा§॥ १३॥**

---

* प्राणाय्यायसेऽन्तेवासिने वाऽन्यस्मै,—इति मु० पुस्तके पाठः।

† गार्गेय-गौतमीयाश्च,—इति मु० पुस्तके पाठः।

‡ 'श्रुताः' इत्यत्र, स्मृताः—इति स० से० पुस्तकयोः पाठः। इदं स्रो-कार्द्धमेवान्यत्रान्यथा पठितम्। तथाहि,—गार्गेया गौतमाश्चैव तथा, चौशनसाः स्मृताः,—इति मु० मू० पुस्तके, गार्गेय-गौतमाधर्म्माः तथा गोपालकस्य च,—इति से० मू० पुस्तके पाठः।

§ अत्रेर्व्विष्णोश्च सांवर्त्तादाद्या आङ्गिरसस्तथा,—इति मु० मू० पुस्तके, अत्रेर्व्विष्णोश्च संवर्त्ताद्दक्षाङ्गिरस एव च,—इति से० मू० पुस्तके-पाठः।

---

(१) प्रणाय्याय सम्मताय।

**शातातपाच्च हारीतात् याज्ञवल्क्यात्तथैव च* ।**
**आपस्तम्ब-कृता धर्म्माः शङ्खस्य लिखितस्य च ॥ १४ ॥**
**कात्यायन-कृताश्चैव तथा प्राचेतसान्मुनेः† ।**

इति । 'मे श्रुताः' मया श्रुताः,—इत्यर्थः । संबन्ध-सामान्य-वाचिन्याः षष्ठ्याः‡ कर्त्तृ-कृति-लक्षणे विशेषे पर्य्यवसानात् । 'अत्रेः'—इत्यादीनां पञ्चम्यन्तानां 'श्रुताः'—इत्यनेनानुषक्तेन संबन्धः । आपस्तम्बेन कृताः प्रोक्ताः,—इति यावत् । शङ्खस्य लिखितस्य च संबन्धिनोधर्म्माः[१] । ताभ्यां प्रोक्तत्वं तत्संबन्धित्वम् । प्रचेताएव प्राचेतसः । वायस-राक्षसादावित्र स्वार्थे तद्धितः[२] । अस्तु वा, प्रचेतसः पुत्रः कश्चित् धर्म्मशास्त्रकारः ।

ननु, मानवादयः[३] स्मार्त्त-धर्म्माः श्रुताश्चेत्, तर्हि मा नाम ते वुभुत्स्यन्तां श्रौतास्त्वग्निहोत्रादयोवुभुत्सिष्यन्ते§ इत्याशङ्क्याह,—

---

* शातातपाश्च हारीता याज्ञवल्क्यकृताश्च ये,—इति मु० मू० पुस्तके, शातातपस्य हरितः याज्ञवल्क्यकृतास्तथा,—इति सो० मू० पुस्तके पाठः ।

† प्राचेतसकृताश्च ये,—इति मु० मू० पुस्तके पाठः । आपस्तम्ब,—इत्यादि, कात्यायन, इत्यादि श्लोकार्द्धद्वयं विपर्य्यस्य पठितं मु० मू० पुस्तके, सो० मू० पुस्तके च ।

‡ संवद्धसामान्यवाचिन्या षष्ठ्या,—इति मु० पुस्तके पाठः ।

§ वुभुत्स्यन्ते,—इति मु० पुस्तके पाठः ।

---

(१) श्रुताः,—इत्यनुषक्तेनान्वयोद्रष्टव्यः ।

(२) वयः (पक्षी) एव, वायसः, रक्ष एव राक्षसः,—इति स्वार्थे तद्धितः ।

(३) मनोरिमे मानवाः (प्रोक्तत्वं तत्सम्बन्धः) ते आदयोयेषां स्मार्त्तधर्म्माणां ते तथोक्ताः ।

**श्रुताह्येते भवत्-प्रोक्ताः श्रुत्यर्थास्ते* न विस्मृताः ॥ १५ ॥**
**अस्मिन् मन्वन्तरे धर्म्माः कृत-त्रेतादिके युगे ।**

इति। ये प्रत्यक्ष-श्रुतीनामर्थाः अग्निहोत्रादयोधर्म्माः, एते मया श्रुताः। तदेतत् तत्रापि प्रसिद्धम्,—इति द्योतनार्थोहि-शब्दः। तत्र हेतुः; 'भवत्-प्रोक्ताः'—इति। व्यासः पराशरादधीतवान्,—इति पौराणिकाः। श्रुतानामपि विस्मृतिश्चेत्, पुनरपि स्मरणमपेक्ष्येत†,—इत्याशङ्क्य 'न विस्मृताः'—इत्युक्तम्। प्रायेणाग्निहोत्रादीनां कलौ दुर्लभत्वमभिप्रेत्य 'कृत-त्रेतादिके' इत्युक्तम्। आदि-शब्देन द्वापरं गृह्यते। 'अस्मिन् मन्वन्तरे'—इति निर्द्देशः प्रदर्शनार्थः। ननु, मन्वन्तराण्यतीतान्यनागतानि वा व्यवच्छिद्यन्ते। तद्व्यवच्छेदे प्रयोजनाभावात्। न हि, नानाविधेषु मन्वन्तरेषु धर्म्मं भिद्यमानं कचिदुपलभामहे। अस्मिन् मन्वन्तरे कृतादिकेषु युगेषु प्रायेण सम्भावितानुष्ठानाः प्रत्यक्ष-श्रुत्यर्थाः ये धर्म्माः, तेऽपि मानवादि-स्मार्त्त-धर्म्मवत् श्रुतत्वान्न बुभुत्सिताः॥

इदानीं परिशिष्टं बुभुत्सितं पृच्छति,—

**सर्व्वे धर्म्माः कृते जाताः सर्व्वे नष्टाः कलौ युगे ॥ १६ ॥**
**चातुर्व्वर्ण्य-समाचारं किञ्चित् साधारणं वद ।**

इति। सर्व्व-शब्दोदेश-कालावस्थादि-भेदेन धर्म्माणां बहुविधत्वमाचष्टे। एतच्च महाभारते आनुशासनिके पर्व्वणि उमा-महेश्वर-संवादे प्रपञ्चितम्,—

---

* श्रौतार्थास्ते,—इति स०, सो०, मु० मू० पुस्तकेषु पाठः।
† श्रवणमपेक्ष्येत,—इति समीचीनः पाठः।

"धर्म्माः बहुविधाः* लोके श्रुति-भेद-मुखोद्भवाः(१)।
देश-धर्म्माश्च दृश्यन्ते कुल-धर्म्मास्तथैव च।
जाति-धर्म्माः वयो-धर्म्माः गुण-धर्म्माश्च शोभने!।
शरीर-काल-धर्म्माश्च आपद्धर्म्मास्तथैव च(२)।
एतद्धर्म्मस्य नानात्वं क्रियते लोक-वासिभिः"।

इति। ते च सर्व्वे धर्म्माः प्राणिभिः कृत-युगे यथावदनुष्ठिताभवन्ति, युग-सामर्थ्येन धर्म्मस्य चतुष्पदोऽपि अपरिचयात्†। त्रेतादिषु क्रमेण क्षीयमाणाधर्म्माः कलि-युगावसाने सर्व्वात्मना विनष्टाभवन्ति। तदेतत् सर्व्वं पुराण-सारे‡ विस्तरेण प्रदर्शितम्,—

"कृते चतुष्पात् सकलोव्याजोपाधि-विवर्ज्जितः§।

---

* चतुर्व्विधाः,—इति स० सो० पुस्तकयोः पाठः।
† अपरिक्षयः,—इति मु० पुस्तके पाठः।
‡ पुराणकारेण,—इति स० सो० पुस्तकयोः पाठः।
§ निर्व्याजोपाधिवर्ज्जितः,—इति स० सो० पुस्तकयोः पाठः।

---

(१) मुखशब्दोऽत्र आद्यर्थः। श्रुतिभेदमुखेभ्य उद्भवोयेषां ते तथोक्ताः।
(२) देशधर्म्माः प्राच्यादिभिरनुष्ठीयमानाहोलाकादयः। कुलधर्म्माः, "वाशिष्ठाः पञ्चचूड़ाः स्युः"—इत्यादयः। जातिधर्म्माः ब्राह्मणादीनां याजनादयः। वयोधर्म्माः अष्टवर्षस्योपनयनमित्येवमादयः। गुणधर्म्माः अभिषिक्तस्य प्रजापालनमित्यादयः। यत्त्वेदमुक्तम्, "योगुणेन प्रवर्त्तेत गुणधर्म्मः स उच्यते। यथा मूर्द्धाभिषिक्तस्य प्रजानां परिपालनम्"—इति। शरीरधर्म्माः कृष्णकेशस्याधानं पलितशिरसोवन-गमनमित्यादयः। कालधर्म्माः संक्रान्त्यादौ दानादयः। आपद्धर्म्माः आपदि सर्व्वेषामनन्तरावृत्तिरित्यादयः।

वृषः(१) प्रतिष्ठितोधर्म्मोमनुष्येष्वभवत् * पुरा ।
धर्म्मः पाद-विहीनस्तु त्रिभिरंशैः प्रतिष्ठितः—
त्रेतायां, द्वापरेऽर्द्धेन व्यामिश्रोधर्म्मदृष्यते † ।
त्रि-पाद-हीनस्तिष्ये तु सत्ता-मात्रेण तिष्ठते" ।

इति । तिष्यः कलिः । तथा वृहस्पतिरपि‡—

"कृतेऽभूत् सकलोधर्म्मस्त्रेतायां त्रिपदः§ स्थितः ।
पादः प्रविष्टोऽधर्म्मस्य मत्सर-द्वेष-सम्भवः(२) ।
धर्म्माधर्म्मौ समौ भूत्वा द्विपादौ द्वापरे स्थितौ ।
तिष्येऽधर्म्मस्त्रिभिः पादैः ||धर्म्मः पादेन संस्थितः" ।

इति । तथा लैङ्ग-पुराणे कलौ धर्म्म-नाशं प्रस्तुत्य तद्धेतुत्वेन पुरुष-दोषउपन्यस्तः,—

"आद्ये कृते तु योधर्म्मः स त्रेतायां प्रवर्त्तते ।
द्वापरे व्याकुलीभूतः प्रणश्यति कलौ युगे ।
तिष्ये मायामसूयाञ्च वधञ्चैव तपस्विनाम्—

---

* मनुष्येष्ववसत्,—इति स० सो० पुस्तकयोः पाठः ।
† द्वापरे त्वर्द्धं तथा धर्म्मोऽवतिष्ठते,—इति स० सो० पुस्तकयोः पाठः ।
‡ वृहस्पतिनापि,—इति मु० पुस्तके पाठः ।
§ त्रिपदि,—इति मु० पुस्तके पाठः ।
|| तिष्ये धर्म्मः स्थितिः पादैः,—इति मु० पुस्तके पाठः ।

---

(१) वृषः वृषरूपी ।
(२) मत्सरद्वेषसम्भवोऽधर्म्मस्य पादः धर्म्मस्य क्षीणपादस्थाने प्रविष्ट इत्यर्थः ।

साधयन्ति नरास्तत्र तमसा व्याकुलेन्द्रियाः"।

इति। विष्णु-पुराणेऽपि,—

"वर्णाश्रमाचारवती प्रवृत्तिर्न कलौ नृणाम् * ।

न साम-यजुर्ऋग्वर्ग-विनिष्पादन-हेतुका"† ।

इति। आदित्य-पुराणेऽपि—

"यस्तु कार्त्त-युगे धर्म्मो न कर्त्तव्यः कलौ युगे ।

पाप-प्रसक्तास्तु यतः कलौ नार्य्यो नरास्तथा"।

इति। अतः कलौ प्राणिनां प्रयास-साध्ये धर्म्मे प्रवृत्त्यसम्भवात् सुकरो धर्म्मोऽत्र बुभुत्सितः। स च द्विविधः चतुर्णां वर्णानां साधारणोऽसाधारणश्च। तत्र, साधारणो बृहस्पतिना निरूपितः,—

"दया क्षमाऽनसूया च शौचानायास-मङ्गलम्(१) ।

अकार्पण्यास्पृहत्वे च सर्व-साधारणा इमे"‡ ।

इति। तथा विष्णुनाऽपि,—

"क्षमा सत्यं दमः शौचं दानमिन्द्रिय-संयमः ।

अहिंसा गुरु-शुश्रूषा तीर्थानुसरणं दया ।

---

* युगे,—इति स० सो० पुस्तकयोः पाठः।

† न सामऋग्यजर्व्वर्गविनिष्पादनहेतुकी,—इति स० सो० पुस्तकयोः पाठः।

‡ सर्व्वसाधारणोविधिः,—इति स० सो० पुस्तकयोः पाठः।

---

(१) दयादिलक्षणानि बृहस्पतिनैव दर्शितानि। परन्तु प्रसिद्धत्वात्तान्युपेक्ष्य केवलमनायास—मङ्गलयोर्लक्षणमुच्यते। "शरीरं पीड्यते येन सुशुभेनापि कर्म्मणा। अत्यन्तं तन्न कुर्व्वीत अनायासः स उच्यते। प्रशस्ताचरणं नित्यमप्रशस्तविवर्जनं। एतद्धि मङ्गलं प्रोक्तमृषिभिस्तत्त्वदर्शिभिः"—इति।

आत्म-पत्नमलोभत्वं*(१) देवतानाञ्च पूजनम्† ।
अनभ्यसूया च तथा धर्म्मः सामान्यउच्यते" ।

असाधारणोऽपि बृहस्पतिना स्मर्य्यते‡—

"स्वाध्यायोऽध्यापनञ्चापि यजनं याजनं तथा ।
दानं प्रतिग्रहश्चापि षट् कर्म्माण्यग्रजन्मनः ।
इज्याऽध्ययन-दाने च प्रजानां परिपालनम् ।
शस्त्रास्त्र§धारणं(२) सेवा कर्म्माणि क्षत्रियस्य तु ।
स्वाध्यायोयजनं दानं पशूनां पालनं तथा ।
कुसीद-कृषि-वाणिज्यं(३) वैश्य-कर्म्माणि सप्त वै ।
शौचं ब्राह्मण-शुश्रूषा सत्यमक्रोधएवच ।
शूद्र-कर्म्म तथा मन्त्रोजमस्कारोऽस्य चोदितः" ।

इति । गीतास्वपि भगवानाह,—

"ब्राह्मण-क्षत्रिय-विशां शूद्राणाञ्च परन्तप! ।
कर्म्माणि प्रविभक्तानि स्वभाव-प्रभवैर्गुणैः ।

---

* आत्मव्रतमलोभत्वं—इति स० सो० पुस्तकयोः। आर्जवत्वमलोभश्च,—इति मु० वि० स० पाठः।
† देवब्राह्मणपूजनम्,—इति मु० वि० स० पाठः।
‡ असाधारणाश्च बृहस्पतिना स्मर्य्यन्ते,—इति मु० पुस्तके पाठः।
§ शस्त्रभास्त्र,—इति मु० पुस्तके पाठः।

---

(१) आत्मपत्नमात्मरक्षितत्वम्।
(२) येन गृहीतेन परोहन्यते, तत् शस्त्रम्। येन च मुक्तेन, तदस्त्रम्।
(३) कुसीदं वृद्धिजीविका।

शमोदमस्तपः शौचं चान्तिरार्ज्जवमेव च ।
ज्ञानं विज्ञानमास्तिक्यं ब्राह्मं कर्म्म* स्वभावजम् ।
शौर्य्यं तेजोधृतिर्दाच्यं युद्धे चाप्यपलायनम् ।
दानमीश्वरभावश्च चात्रं कर्म्म स्वभावजम् ।
कृषि-गो-रच-वाणिज्यं वैश्यं कर्म्म† स्वभावजम् ।
परिचर्य्यात्मकं कर्म्म शूद्रस्यापि स्वभावजम्" ।

इति । एवं द्वैविध्ये सति साधारणोऽस्मिन् श्लोके‡ पृच्छ्यते । 'किञ्चित्' —इति क्रिया-विशेषणम् । तथा सति, किमः सङ्कोचवाचित्वात् संचेपेणेत्यर्थः सम्पद्यते । (१) युक्तञ्चैतत्, असाधारण-धर्म्म-प्रश्ने "विस्तरात्" इति वच्यमाणत्वात्(२) इति ॥

अथ, असाधारणं धर्म्मं पृच्छति,—

**चतुर्णामपि वर्णानां कर्त्तव्यं धर्म्म-कोविदैः ॥ १७ ॥**
**ब्रूहि धर्म्म-स्वरूप-ज्ञ! सूक्ष्मं स्थूलञ्च विस्तरात्§ ।**

इति । धर्म्म-स्वरूपे वादि-विप्रतिपत्तेः तदीय-विवेकस्य दुःशक-

---

* ब्रह्मकर्म्म,—इति स० सो० पुस्तकयोः, इ० गीतासु च पाठः ।
† वैश्यकर्म्म,—इति स० सो० पुस्तकयोः, इ० गीतासु च पाठः ।
‡ कलौ,—इति मु० पुस्तके पाठः ।
§ श्लोकोऽयं मु० मू० पुस्तके नास्ति ।

---

(१) अत्र श्लोके साधारणधर्म्मप्रश्न इत्येतदुपपादयति युक्तञ्चैतदिति ।
(२) तथा च, साधारणधर्म्यस्य संक्षेपेण कथनं असाधारणस्य तु विस्तरेण, —इति प्रश्नाशयः ।

त्वात् च* तत्र प्रावीण्यं विवक्षित्वा 'धर्म्म-स्वरूप-ज्ञ!' इति मंत्रोध्यते।
(१)तार्किकास्तावत् आत्म-गुणौ धर्म्माधर्म्मौ,—इत्याहुः।

"विहित-क्रियया साध्योधर्म्मः पुंसोगुणोमतः† ।
प्रतिषिद्ध-क्रिया-साध्यः स गुणोऽधर्म्मउच्यते‡" ।

इति। मीमांसकास्तु, "चोदना-लक्षणोऽर्थोधर्म्मः" (मी० १ अ० १ पा० २ सू०) इत्यसूत्रयन्। तत्र, भाट्टामन्यन्ते,—

"द्रव्य-क्रिया-गुणादीनां धर्म्मत्वं स्थापयिष्यते।
तेषामैन्द्रियकत्वेऽपि न तादृप्येण धर्म्मता।
श्रेयः-साधनता ह्येषां नित्यं वेदात् प्रतीयते।
तादृप्येण च धर्म्मत्वं तस्मान्नेन्द्रिय-गोचरः" ।

इति। प्राभाकरास्तु, कार्य्य-नियोगापूर्व्व-शब्दैरुच्यमानं धात्वर्थ-साध्यं स्वर्गादि-फल-साधनमात्म-गुणं धर्म्ममाहुः। (२)दुर्व्विवेच्यत्वञ्च§ महाभारते धृष्टद्युम्नेनोक्तम्||—

"अधर्म्मोधर्म्मइति च व्यवसायोन शक्यते।
कर्त्तुमस्मद्विधैर्ब्रह्मन्! अतोन¶ व्यवसाम्यहम्" ।

---

* दुःशकत्वात्,—इति स० सो० पुस्तकयोः पाठः।
† पुंसोधर्म्मोगुणोमतः,—इति मु० पुस्तके पाठः।
‡ पुंगुणोऽधर्म्मउच्यते,—इति मु० पुस्तके पाठः।
§ दुर्व्विवेचत्वञ्च,—इति स० सो० पुस्तकयोः पाठः।
|| अत्र, द्रोणपर्व्वणि,—इत्यधिकं स० सो० पुस्तकयोः।
¶ ततोन,—इति मु० पुस्तके पाठः।

---

(१) धर्म्मे वादिविप्रतिपत्तिं दर्शयति तार्किका इति।
(२) धर्म्मविवेकस्य दुःशकत्वमाह दुर्व्विवेच्यत्वञ्चेति।

इति। ईदृशस्यापि धर्म्मस्य स्वरूपमव्याकुलोजानातीत्यस्ति तत्र प्रावीण्यम्। धर्म्म-स्वरूपञ्च विश्वामित्रश्चाह,—

"यमार्य्याः क्रियमाणन्तु शंसन्त्यागमवेदिनः* ।
सधर्म्मोयं विगर्हन्तो† तमधर्म्मं प्रचक्षते‡ ।
ईदृशस्य हि धर्म्मस्य स्वरूपं व्याकुलोन तु।
जानातीत्यस्ति तत्रापि प्रावीण्यं धर्म्म-शालिनाम्"§ ।

इति। मनुरपि,—

"विद्वद्भिः सेवितः सद्भिर्नित्यमद्वेष-रागिभिः।
हृदयेनाभ्यनुज्ञातोयोधर्म्मस्तं निवोधत"(१) ।

इति। नन्वेवं धर्म्म-स्वरूपमनिरूपितमेव स्यात्॥ तथाहि, विश्वामित्र-मनु-वाक्याभ्यां तावत् सामान्याकारः प्रतीयते, नतु द्रव्य-गुणादि-

---

* शंसन्त्यागमवेदिभिः,—इति तिथितत्त्वे पाठः। "आगमवेदिभिः क्रियमाणमिति संवन्धः,"—इति व्याख्यातञ्च तत्र।
† विगर्हन्ति,—इति तिथितत्त्वे पाठः।
‡ एतदनन्तरं 'इति'शब्दोमुद्रितपुस्तके प्रामादिक इति लक्ष्यते। उत्तर-श्लोकस्यापि विश्वामित्रीयत्वं वक्तव्यं अन्यथा असङ्गतेः। विश्वामित्र वाक्ययोर्मध्ये च 'इति'शब्दो न सङ्गच्छते।
§ श्लोकोऽयं स० सो० पुस्तकयोर्नास्ति।
|| धर्म्मोऽनिरूपितएव स्यात्,—इति मु० पुस्तके पाठः।

---

(१) विद्वद्भिरित्यस्य वेदविद्भिरित्यर्थः। वेदविद्भिः सेवितः,—इत्यनेन वेद-प्रमाणकत्वमुक्तं। हृदयेनाभ्यनुज्ञातइत्यनेन श्रेयःसाधनत्वमुक्तं। तत्र हि हृदयमभिमुखीभवति। तथा च, वेदप्रमाणकः श्रेयःसाधनोधर्म्म इत्युक्तं भवति।

रूपोविशेषाकारः, वादिनस्तत्र विप्रतिपन्नाः,—इति भवतैवोक्तम्। एतदेवाभिप्रेत्य महाभारते राज-धर्म्मे स्मर्य्यते,—

"न कल्माषेन कपिलेन कृष्णेन च लोहितः।
अणीयान् क्षुर-धारायाः, कोधर्म्मं वक्तुमर्हति"।

इति। नैष दोषः। उक्त-वाक्ययोरधर्म्म-व्यावृत्तस्याकार-विशेषस्य स्फुटं प्रतीयमानत्वात्। वादि-विप्रतिपत्तेश्च समाधातुं शक्यत्वात्। स्वर्गादि-साधनस्य शास्त्रैकसमधिगम्यस्यातिशयस्य धर्म्मत्वेन सर्व्व-सम्प्रतिपत्तेः। स चातिशयोद्विविधः द्रव्यादि-निष्ठः, आत्म-निष्ठश्च। तत्रात्म-निष्ठस्यातिशयस्य साचात् फल-साधनत्वात्, फल-निष्पत्ति-पर्य्यन्तं चिर-कालमुपस्थानाच्च तद्विवक्षया आत्मगुणोऽपूर्व्व-शब्द-वाच्योधर्म्मः,—इति तार्किक-प्रभाकरावाहतुः। उक्तस्यापूर्व्वस्य फलोत्पत्ति-दशात्वमभिप्रेत्य तत्-साधनभूतोद्रव्याद्यतिशयो धर्म्मः,—इत्याहुर्भाट्टाः। ब्रह्मवादिनामप्येतदविरुद्धम्, "व्यवहारे भट्ट-नयः" (१)इत्यभ्युपगमात्। एवं धर्म्म-स्वरूपे निरूपिते सति, अव्याकुलत्वेन तदभिधानं सम्भवति*।

चतुर्णां वर्णानां मध्ये धर्म्म-कोविदैरसाधारण-धर्म्माभिज्ञैः कार्त्स्न्यं विस्तराद्ब्रूहि। स च कर्त्तव्योधर्म्मोद्विविधः,—स्थूलः सूक्ष्मश्च। मन्द-

---

* भवति,—इति मु० पुस्तके पाठः।

---

(१) यद्यपि अद्वैतवादिनां नास्त्येव ब्रह्मातिरिक्तं किञ्चित्, तथापि तेषां मतेऽपि परमार्थदशायामेव तथात्वं। व्यवहारदशायान्तु भाट्टमतं तैरनुस्रियते, —इति भावः।

मतिभिरपि सुखेन बुध्यमानः शौचाचमन-सन्ध्या-वन्दनादिः स्थूल-धर्म्मः। शास्त्र-पारङ्गतैः पण्डितैरेव बोद्धुं योग्यः; इतरेषामधर्म्मत्व-भ्रान्ति-विषयो द्रौपदी-विवाहादिः सूक्ष्मोधर्म्मः। तथा च महाभारते,—द्रुपदः एकस्याः योषितो* बहु-पतित्वं लोक-वेद-विरुद्धं मन्वानः अधिचिक्षेप†(१)। तत्र, लोक-विरोधः स्फुटएव तिर्य्यक्ष्वपि, एकस्यां गवि वृषभ-द्वय-युद्ध-दर्शनात्। वेदेऽप्येवं श्रूयते। "एकस्य बह्व्यो जायाभवन्ति, नैकस्यावह्वः स्युः‡ पतयः"—इति। "यदेकस्मिन् यूपे द्वे रशने परिव्ययति, तस्मादेकोद्वे जाये विन्दते, यन्नैकांगु§ रशनां द्वयोर्यूपयोः परिव्ययति तस्मान्नैका द्वौ पती विन्दते"—इति च। तत्र, द्रुपद-भ्रान्ति-निवृत्तये युधिष्ठिरआह,—

"लोक-वेद-विरुद्धोऽयं धर्म्मोधर्म्मभृतां वर! ‖।
सूक्ष्मोधर्म्मोमहाराज! नास्य विद्म गतिं वयम्"।

इति। धर्म्मत्वञ्च बहु-पतित्वस्य तत्रैव बहुधा प्रपञ्चितम्। एवं धर्म्म-व्याधोपाख्याने,—विद्याऽभ्यासाद्गरीयसी मातापितृ-शुश्रूषा, विना-ऽप्यभ्यासं तच्छुश्रूषयैव तस्य ज्ञानोत्पत्तेः,—इति प्रतिपाद्य सूक्ष्मत्वं धर्म्मस्य निगमितम्,—

---

* कन्यायाः,—इति स० सो० पुस्तकयोः पाठः।
† आचचक्षे,—इति मु० पुस्तके पाठः।
‡ स्युः,—इति स० सो० पुस्तकयोर्नास्ति।
§ यन्नैकां,—इति स० सो० पुस्तकयोः पाठः।
‖ धर्म्मवतां वर, इति मु० पुस्तके पाठः।

---

(१) एकस्याद्रौपद्याः पञ्चभिः पाण्डवैर्व्विवाहमधिक्षिप्तवानित्यर्थः।

"बहुधा दृश्यते धर्म्मः सूक्ष्मएव द्विजोत्तम !"

इति। इत्थं स्थूल-सूक्ष्मयोः सद्भावात् युक्तस्तदुभय-विषयः प्रश्नः ॥ उक्त-प्रश्नस्य वक्ष्यमाणोत्तरस्य च असाङ्कर्य्यायोत्तरमवतारयति,—

**व्यास-वाक्यावसाने तु मुनि-मुख्यः पराशरः ॥ १८ ॥**
**धर्म्मस्य निर्णयं प्राह सूक्ष्मं स्थूलञ्च विस्तरात् ।**

इति। 'मुनि-मुख्य'—इति विशेषणेन सूक्ष्म-निर्णय-कौशलं दर्शितम्। ननु, "कस्यायं श्लोकः?, न तावत् व्यासस्य, प्रश्न-रूपता-भावात्, नापि पराशरस्य, उत्तर-रूपतायाः अभावात्। 'ननु, अत्यल्पमिदमुच्यते, आद्य-श्लोकेऽपि समानमिदं चोद्यम्'। एवन्तर्हि ईदृशेषु सर्व्वेषु परिहारोऽन्वेष्टव्यः"। उच्यते,—पराशरएव भाविशिष्य-बुद्धि-समाधानाय स्वकीय-वृत्तान्त-ज्ञापकान् ईदृश-श्लोकान् निर्म्ममे,—इति द्रष्टव्यम्। भारतादौ व्यास-वृत्तान्त-श्लोकानां व्यासेनैव निर्म्मितत्वेन सर्व्व-संप्रतिपत्तेः[१] ॥

वक्ष्यमाण-धर्म्म-रहस्य-ग्रहणाय अप्रमत्तत्वं विधत्ते,—

---

(१) 'आचार्य्याणामियं शैली,—यत् स्वाभिप्रायमपि परोपदेशमिव वर्णयन्ति'—इति न्यायोऽत्र स्मर्त्तव्यः। अनयैव रीत्या,—"कर्म्माण्यपि जैमिनिः फलार्थत्वात्" (मी० ३ अ० १ पा० ४ सू०) इति जैमिनेः, "तदुपर्य्यपि वादरायणः सम्भवात्" (शा० १ अ० ३ पा० २६ सू०) इति वादरायणस्य च सूत्रमुपपद्यते। यदि तु पराशरोक्तोधर्म्मः केनचित् तच्छिष्येण पश्चादुपनिवद्धः,—इति समाधीयते, तदा न काचिदस्तुक्षतिः। पराशरोक्तधर्म्मप्रतिपादकतया तु ग्रन्थस्यास्य पराशरीयत्वस्याप्युपपत्तेरिति ध्येयम्।

**शृणु पुत्र! प्रवक्ष्यामि शृण्वन्तु मुनयस्तथा ॥ १९ ॥**

इति। तत्र, मुनि-सम्बोधनेनैव पुत्रस्य सम्बोधने सिद्धेऽपि सम्प्रदाय-प्रवर्त्तकत्वेन विशेषतस्तत्-सम्बोधनम् ॥

धर्म्मे श्रद्धातिशयाय धर्म्मस्य प्रवाह-रूपेण अनादितां वक्तुं स्मृति-शास्त्रस्य कर्तॄणां च सृष्टि-संहारौ संक्षिप्याह,—

**कल्पे कल्पे क्षयोत्पत्तौ* ब्रह्म-विष्णु-महेश्वराः।**
**श्रुति-स्मृति-सदाचार-निर्णेतारश्च सर्व्वदा† ॥ २० ॥**

इति। कल्प्यते जगदस्मिन् काले,—इति सृष्ट्यादिमारभ्य प्रलयोपक्रम-पर्य्यन्तोजगदविच्छिन्नः‡ कालः कल्पः। स च द्विविधः,—महाकल्पोऽवान्तर-कल्पश्च। (१)मूल-प्रकृतेर्यः सर्गः, तमारभ्य चतुर्मुखायुः-परिमितोमहाकल्पः, चतुर्मुखस्य दिनमात्रमवान्तर-कल्पः। तदुक्तं कूर्म्मपुराणे,—

---

* क्षयोत्पत्त्या,—इति मु० पुस्तके, क्षये वृत्ते,—इति सो० मू० पुस्तके पाठः।

† सर्व्वथा'—इति मु० पुस्तके पाठः। चतुर्थचरणे, 'न क्षयन्ते कदाचन' इति सो० मू० पुस्तके पाठः। 'श्रुतिः स्मृतिः सदाचारानिर्व्वेतव्याश्च सर्व्वदा,—इति मु० मू० पुस्तके उत्तरार्द्धपाठः।

‡ जगदवच्छिन्नः,—इति स० सो० पुस्तकयोः पाठः।

---

(१) मूलप्रकृतिः समस्तजगदुपादानं कारणद्रव्यम्। तच्च साम्यावस्थोपलक्षितं सत्त्वादिगुणत्रयम्। सत्त्व-रजस्तमसाञ्च जगदुपादानतया द्रव्यत्वं बोध्यम्। तेषु गुणत्वव्यपदेशः पुरुषोपकरणत्वादिना भाक्तः, एतत् सर्व्वं सांख्यदर्शने व्यक्तम्।

"ब्राह्ममेकमहः कल्पस्तावती रात्रिरुच्यते ।
चतुर्युग-सहस्रन्तत् कल्पमाहुर्मनीषिणः" ।

इति । सोऽयमवान्तरः कल्पः । महाकल्पस्तु ब्राह्मेण मानेन[१] शत-संवत्सर-परिमितः,—इति पुराणादिषु प्रसिद्धम् । 'कल्पे कल्पे',—इति वीप्सया द्विविधानामपि कल्पानामसंख्यत्वं विवक्षितम् । तथा च लिङ्ग-पुराणे,—

"एवं कल्पास्तु संख्याताः* ब्रह्मणोऽव्यक्त-जन्मनः ।
कोटि-कोटि-सहस्राणि कल्पानां मुनि-सत्तमाः !" ।

इति । तत्र, द्वयोर्द्वयोः कल्पयोर्मध्ये क्षयोभवति । स च क्षयश्चतुर्व्विधः ;—नित्योनैमित्तिकः प्राकृतिकश्चात्यन्तिकश्चेति । तदुक्तं कूर्म्म-पुराणे,—

"नित्योनैमित्तिकश्चैव प्राकृतात्यन्तिकौ तथा ।
चतुर्धाऽयं पुराणेषु प्रोच्यते प्रतिसञ्चरः[२] ।
योऽयं संदृश्यते नित्यं लोके भूत-क्षयस्त्विह ।
नित्यः संकीर्त्त्यते† नाम्ना मुनिभिः प्रतिसञ्चरः ।
ब्राह्मोनैमित्तिकोनाम कल्पान्ते योभविष्यति ।

---

* एवं कल्पास्त्वसंख्याताः,—इति पाठो भवितुं युक्तः ।
† अत्र, नित्यः स कीर्त्त्यते,—इति पाठोभवितुं युक्तः ।

---

(१) ब्रह्मणोमानञ्च,—"दैविकानां युगानान्तु सहस्रं परिसंख्याया । ब्राह्म-मेकमहर्ज्ज्ञेयं तावती रात्रिरेव च"—इति मन्वाद्युक्तम् ।
(२) प्रतिसञ्चरः प्रलयः ।

[१]महदादि-विशेषान्तं यदा संयाति संचयम् ।
प्राकृतः प्रतिसर्गोऽयं प्रोच्यते काल-चिन्तकैः ।
ज्ञानादात्यन्तिकः प्रोक्तो योगिनः परमात्मनि"[२] ।

इति । तत्र, प्राकृतः प्रलयः स्कन्द-पुराणे सूत-संहितायामेवं निरूपितः,—

"त्रिंशतैः षष्टिभिः कल्पैर्ब्रह्मणोवर्षमीरितम् ।
वर्षाणां यत् शतं तस्य तत्पराईमिहोच्यते ।
ब्रह्मणोऽन्ते मुनि-श्रेष्ठाः ! मायायां लीयते जगत् ।
तथा विष्णुश्च रुद्रश्च प्रकृतौ विलयं गतौ ।

---

(१) प्राकृतप्रलयमाह महदादीति । महदादिविशेषान्तमिति महदहङ्कारपञ्चतन्मात्रैकादशेन्द्रियपञ्चमहाभूतानीत्यर्थः । तत्र महत्तत्त्वं प्रकृतेः प्रथमः परिणामः, तत् बुद्धितत्त्वमित्यप्युच्यते । तत्रैकादशेन्द्रियाणि पञ्चमहाभूतानि च,—इति षोड़शकोगणोविशेषइत्युच्यते । अहङ्कारः पञ्चतन्मात्राणि च इति षड़विशेषाः । तत्राहङ्कारस्याविशेषस्य विशेषा एकादशेन्द्रियाणि,तन्मात्रलक्षणानाञ्चाविशेषाणां विशेषाः पञ्चमहाभूतानीतिविवेकः । महत्तत्त्वन्तु न विशेषोनाप्यविशेषः किन्तु लिङ्गमात्रमित्याख्यायते । प्रकृतिस्त्वालिङ्गमित्युच्यते । एतत् सर्व्वं पातञ्जले सांख्ये च व्यक्तम् । अत्र महदादीनां सर्व्वेषां प्रकृतौ लयात् प्राकृतोऽयं प्रलयः । प्रतिसर्गः प्रलयः ।

(२) ज्ञानात् सत्त्वपुरुषान्यता-साक्षात्कारात् योगिनोयः परमात्मनि लयः सोऽयमात्यन्तिकः । न तस्य पुनरावृत्तिरस्ति, "न स पुनरावर्त्तते"—इति श्रुतेः । प्रकृतिलीनस्य त्वस्ति पुनरावृत्तिः ऋते विवेकख्यातेरिति सांख्ये पातञ्जले च व्यक्तम् । तस्मात् प्रकृतिलयस्य नास्त्यात्यन्तिकप्रलयत्वमिति बोध्यम् ।

ब्रह्मणश्च तथा विष्णोस्तथा रुद्रस्य सुव्रताः ! * ।
मूर्त्तयो विविधास्तेषु कारणेषु लयं ययुः ।
माया च प्रलये काले परस्मिन् परमेश्वरे ।
सत्य-बोध-सुखानन्ते ब्रह्म-रुद्रादि-संज्ञिते" ।

इति । तथा कूर्म्मे ब्रह्म-विष्ण्वादि-लयानन्तरं† पञ्च-भूतादि-लयः‡ पठ्यते,—

(१)संस्थितेष्वथ देवेषु ब्रह्म-विष्णु-पिनाकिषु ।
गुणैरशेषैः पृथिवी विलयं याति वारिषु ।
तद्वारि-तत्त्वं सगुणं ग्रसते हव्य-वाहनः ।
तेजस्तु गुण-संयुक्तं वायौ संयाति संचयम् ।
आकाशे सगुणोवायुः प्रलयं याति विश्व-भृत् ।
भूतादौ च तथाऽऽकाशोलीयते गुण-संयुतः ।
इन्द्रियाणि तु सर्व्वाणि तैजसे यान्ति संचयम् ।
वैकारिकस्तैजसश्च भूतादिश्चेति सत्तमाः ! ।
त्रिविधोऽयमहङ्कारोमहति प्रलयं व्रजेत् ।
महान्तमेभिः सहितं प्रकृतिर्ग्रसते द्विजाः !" ।

---

* सुव्रत ! इति मु० पुस्तके पाठः ।
† प्रलयानन्तरं,—इति स० सो० पुस्तकयोः पाठः ।
‡ पञ्चभूतादिप्रलयः,—इति स० सो० पुस्तकयोः पाठः ।

---

(१) संस्था मरणं प्रलय इति यावत् ।

इति। एवं विष्णु-पुराणादिषु प्राकृत-प्रलयोद्रष्टव्यः*। एवमेव प्रलयमभिप्रेत्य भगवान् बादरायणः सूचयामास ;—"विपर्य्ययेण तु क्रमोऽतउपपद्यते च" (अ०२अ०३पा०१४सू०) इति। अतोऽस्मात् सृष्टि-क्रमात् विपर्य्ययेण प्रलय-क्रमोऽभ्युपगन्तव्यः। सृष्टि-क्रमस्य तत्रत्येषु पूर्व्व-सूत्रेषु विचारितत्वात् 'अतः'शब्देन परामर्शः। उपपद्यते ह्ययं विपरीत-क्रमः, उपादान-कारण-भूतायां मृद्यवस्थितायां कार्य्यस्य घटस्य विलीयमानत्वात्। यदि, सृष्टि-क्रमएव प्रलयेऽप्याद्रियेत† तर्ह्यवस्थिते घटे मृद्विनाशः प्राप्नुयात्। न ह्येवं क्वचित् दृष्टम्। तस्मादुपपन्नोविपरीत-क्रमः। तथा सति, सृष्टौ परमात्मादेरस्मद्देहान्तस्य‡ क्रमस्य वक्ष्यमाणत्वात् प्रलये तद्विपर्य्ययेण अस्मद्देहादिः परमात्मान्तः क्रमोयुक्तः। प्राकृत-प्रलये प्रकृत्यन्तःक्रमोवक्तव्यः, —इति चेत्। बाढम्। उच्यते एवासौ,(१) परमात्मनः प्रकृतित्वात्। तथा च, वह्वृचोपनिषदि परमात्मनोजगत्-प्रकृतित्वं श्रूयते,— "आत्मा वाइदमेकएवाग्रआसीन्नान्यत् किञ्चनमिषत्, स ईक्षत; लोकान्नु सृजा इति, स इमान् लोकानसृजत"—इति।

* प्राकृतलयोद्रष्टव्यः,—इति मु० पुस्तके पाठः।
† प्रलयस्याद्रियेत,—इति मु० पुस्तके पाठः।
‡ परमात्माद्येतद्देहान्तस्य,—इति मु० पुस्तके पाठः।

(१) असौ प्रकृत्यन्तःक्रमः उच्यतएवास्माभिरित्यर्थः। ननु परमात्मान्तःक्रमएव पूर्व्वमुक्तः न प्रकृत्यन्तःक्रमः इत्याशङ्क्याह परमात्मनइति। तथा च परमात्मनः प्रकृतित्वात् परमात्मान्तःक्रमएव प्रकृत्यन्तःक्रमइति भावः।

ननु, 'श्वेताश्वतरोपनिषदि मायायाः[1] प्रकृतित्वं परमात्मनस्तन्नियन्तृत्वं श्रूयते,—

"मायान्तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरम्" ।

इति' । नायं दोषः । मायायाः परमात्म-शक्तित्वेन शक्तिमतोऽप्यात्मनः प्रकृतित्वावश्यम्भावात् । दहन-शक्ति-युक्ते अग्नौ दाहकत्व* व्यवहार-दर्शनात् । आत्म-शक्तित्वञ्च मायायास्तस्यामेवोपनिषदि श्रुतम्,—

"ते ध्यान-योगानुगता अपश्यन्
देवात्म-शक्तिं स्व-गुणैर्निगूढाम्" ।

इति । बादरायणश्च प्रथमाध्यायस्योपान्त्याधिकरणे[2] माया-विशिष्टस्य ब्रह्मणः प्रकृतित्वं निमित्तञ्च,—इत्युभयविध-कारणत्वमुपपादयामास । कुलालवत् चेतनत्वात् निमित्तत्वं, घटे मृदद्व कार्य्ये † तस्यानुगमात्

---

* दाहक,—इति मु० पुस्तके पाठः ।
† स्वकार्य्ये,—इति स० सो० पुस्तकयोः पाठः ।

---

(१) माया तु त्रिगुणात्मिका सदसद्भ्यामनिर्व्वाच्या विशुद्ध-सत्त्व-प्रधाना भावरूपा । यत्रेदमुक्तम् । "चिदानन्दमय-ब्रह्म-प्रतिबिम्ब-समन्विता । तमोरजः-सत्त्व-गुणा प्रकृतिर्द्विविधा च सा । सत्त्व-शुद्ध्यविशुद्धिभ्यां मायाऽविद्ये च ते मते"—इति ।

(२) "प्रकृतिश्च प्रतिज्ञा-दृष्टान्तानुपरोधात्" (शा० १अ० ४पा० २३ सू०) इत्यस्मिन् अधिकरणे । प्रकृतिश्च उपादानकारणञ्च ब्रह्माभ्युपगन्तव्यं निमित्त-कारणञ्च। एक-विज्ञानेन सर्व्व-विज्ञान-प्रतिज्ञायाः मृद्घटादि-दृष्टान्तस्य च अनुपरोधोपपत्तेरिति सूत्रार्थः । कारणे हि विज्ञाते कार्य्यं विज्ञातं भवति कारणातिरिक्तस्य वस्तुतः कार्य्यस्याभावात् । विवर्त्त-वादाभ्युपगमेन कार्य्यस्य कारणानतिरेकात् । एतच्च तत्रैव द्रष्टव्यम् ।

प्रकृतित्वम्, अनुगम्यते* हि जगति माया-विशिष्टं ब्रह्म। तत्र, सच्चिदानन्दत्वं ब्रह्मणोलक्षणं विकारित्वन्तु मायायाः। तदुभयमपि जगत्यवेक्षामहे; 'घटोऽस्ति'—इति सद्रूपत्वं, 'घटोभाति'—इति चिद्रूपत्वं, 'घटः प्रियः'—इत्यानन्दरूपत्वम्† 'घट उत्पद्यते, विनश्यति च'—इति विकारित्वम्। अयमेवार्थः उत्तर-तापनीये श्रूयते,—"सच्चिदानन्दरूपमिदं सर्व्वं सत् सदिति चितीत्थं सर्व्वं प्रकाशते च‡" इत्यादि। तदेवमौपनिषदे मते ब्रह्मणोमूल-प्रकृतित्वात् स्मृति-पुराणयोश्च श्रुत्यनुसारित्वात्§ ब्रह्मावशेषो|| जगद्विलयोऽत्र विवक्षितः—इति मन्तव्यम्¶। वैशेषिकादि-मत-सिद्धस्तु लयोऽस्माभिर्नात्र प्रपञ्च्यते** तस्य पुरुष-बुद्धि-रूप-तर्क-मूलत्वेन बुद्धिमद्भिः स्वयमेवोहितुं शक्यत्वात्।

अथ†† श्रुत्यनुसारेणोत्पत्तिरभिधीयते। सन्ति हि सृष्टि-प्रतिपादिकाः बह्व्यः श्रुतयः। तत्र, "आत्मावाइदमेकएवाग्रआसीत्"—इत्यादि वह्वृचोपनिषद्वाक्यं पूर्व्वमुदाहृतम्। "सत्यं ज्ञानमनन्तं

---

* अवगम्यते,—इति मु० पुस्तके पाठः।

† इत्याद्यानन्दरूपत्वं—इति मु० पुस्तके पाठः।

‡ सद्वीदं सर्व्वं सदिति चिदिदं सर्व्वं काशते काशते च,—इति मु० पुस्तके पाठः।

§ स्मृत्यनुकारित्वात्,—इति मु० पुस्तके पाठः।

|| ब्रह्माद्यशेष,—इति मु० पुस्तके पाठः।

¶ इत्यवगन्तव्यम्—इति मु० पुस्तके पाठः।

** वैशेषिकादिमतप्रसिद्धस्तु प्रलयोनास्माभिः प्रपञ्च्यते,—इति स० सो० पुस्तकयोः पाठः।

†† संप्रति,—इति स० सो० पुस्तकयो पाठः।

ब्रह्म"—इत्युपक्रम्य, "तस्माद्वाएतस्मादात्मनआकाशः सम्भूतः"—इत्यादिकं तैत्तिरीयक-वाक्यम् । 'सदेव सोम्येदमग्रआसीत्"—इत्युपक्रम्य, "तदैचत; बहु स्यां प्रजायेयेति, तत्तेजोऽसृजत"—इति छन्दोग-वाक्यम् ।

"यथा सुदीप्तात् पावकाद्विस्फुलिङ्गाः
सहस्रशः प्रभवन्ते सरूपाः ।
तथाऽक्षराद्विविधाः सोम्य ! भावा*
प्रजायन्ते तत्र चैवापि यन्ति" ॥

इत्यथर्व्व†वाक्यम् । "तद्वेदं‡ तर्ह्यव्याकृतमासीत् तन्नाम-रूपाभ्यामेव व्याक्रियत"—वाजसनेय-वाक्यम् । ननु, नैतेषु वाक्येषु सृष्टिर्व्यवस्थापयितुं शक्यते, विप्रतिपत्तेर्व्बहुलत्वात् । अत्र, ब्रह्म-सद्-अक्षराऽव्याकृत-शब्दैर्व्वाच्यानि वस्तूनि कारणतया श्रूयन्ते । न च, एकस्य जगतोविलक्षणानि बहून्युपादानानि युक्तानि§ । नैष दोषः । आत्मादि-शब्दैरेकस्यैव वस्तुनोऽभिधीयमानत्वात् । आत्म-ब्रह्म-शब्दयोस्तावदेकार्थ्यं स्पष्टम् । ब्रह्म वाक्यशेषे "तस्माद्वाएतस्मादात्मनआकाशः सम्भूतः"—इत्युक्तत्वात् । सद्-आत्म-शब्दयोस्त्वैकार्थत्वम् युक्तम् । आत्म-शब्दस्य स्वरूप-वाचित्वात्, सत्तायास्त्वौपनिषदैः सर्व्व-स्वरूपत्वाभ्युपगमात्, अनुभूयते च सत्तायाः सर्व्व-स्वरूपत्वं, नर-विषाणादीनामपि

---

* तथाऽक्षरात् प्रभवन्ते हि भावाः—इति मु० पुस्तके पाठः ।
† अत्र 'वेद' इत्यधिकं वर्त्तते स० सो० पुस्तकयोः ।
‡ तदेवं—इति मु० पुस्तके पाठः ।
§ युक्तानि,—इति मु० पुस्तके नास्ति ।

ज्ञान-जनकत्वाकारेण सत्-स्वरूपत्वात्। अक्षर-शब्दस्य,—'अश्नुतः'—इति वा, 'न क्षरति'—इति वा, परमात्मानमाचष्टे। अव्याकृतशब्दोऽपि, तस्मिन् योजयितुं शक्यते; 'वि स्पष्टम् आ समन्तात् कृतम्'—इति व्युत्पत्त्या, जगतः प्रतीति-योग्य-स्थूलत्व-दशा व्याकृतम्, 'न व्याकृतम्'—इति, अव्याकृतशब्दः सूक्ष्मत्व-दशामाह*। एकस्यैव वस्तुनः† स्थूल-सूक्ष्म-दशे जगद्-अक्षर-शब्दाभ्यामुच्येते। विवर्त्त-वादिभिरखण्डैकरसस्य ब्रह्मणोजगद्रूपेण प्रतिभासाभ्युपगमात्[१]। तस्मात् अव्याकृतब्रह्मादीनां पञ्चानां शब्दानाम्[२] एकएवार्थः।

ननु, क्वचित् शून्यस्य[३] जगत्-कारणत्वं श्रूयते;—"असद्वाइदमग्र आसीत्, ततोवै सदजायत"—इति। मैवम्। तत्र, सद्-असत्-शब्दाभ्यां व्याकृताव्याकृतयोरभिधानात्। श्रुत्यन्तरे, "कथमसतः

* सूक्ष्मां दशामाह,—इति स० सो० पुस्तकयोः पाठः।
† एकस्यैव च,—इति स० सो० पुस्तकयोः पाठः।

(१) विवर्त्तवादे अन्यस्यान्यरूपेण प्रतिभासमात्रं मायिकम्। न तु वस्तुनोऽन्यथाभावः। यथा रज्जुरेव सर्पाकारेण प्रतीयते, न तु रज्ज्वाअन्यथात्वं भवति, एवं ब्रह्मैव जगदाकारेण प्रतीयते न तु ब्रह्मणोऽन्यथाभावोभवति। तथा चोक्तम्। "स-तत्त्वतोऽन्यथा प्रथा विवर्त्तइत्युदीरितः"—इति। तथाच, ब्रह्मणः स्थूलरूपत्वं प्रातिभासिकं सूक्ष्मरूपत्वन्तु तात्त्विकमिति विवेकः। परिणामवादे तु स्थूलरूपत्वमनायासगम्यमिति तन्नोक्तम्। आरम्भवादस्तु वैशेषिकाद्यनुमतः पुरुषबुद्ध्युत्प्रेक्षामात्रमूल-इति मूलप्रमाणाभावादुपेक्षित इति मन्तव्यम्।
(२) अव्याकृत-ब्रह्म-सत्-अक्षर-आत्म-शब्दानामित्यर्थः।
(३) शून्यमभावः।

सञ्जायत*"—इति शून्यस्य कारणता-प्रतिषेधात् । ननु† प्रतीयमान-जगदाकार-रहितं शून्यादपि विलक्षणं चेत् ब्रह्म, तर्हि, तत् कीदृशं बुद्धावारोपयितव्यम्‡ इति चेत्। इदानीं प्रष्टुं यादृशमनूदितं, तादृशमेव§ तदिति बुद्धिं समाधत्स्व(१)। दृष्टान्तं चेत् पृच्छसि, न वयं वक्तुं शक्नुमः । तत्-समस्य वस्त्वन्तरस्याभावात् । तथा च श्रुतिः,—

"न तस्य कार्य्यं करणञ्च विद्यते
न तत्-समश्चाभ्यधिकश्च दृश्यते" ।

इति। यदि, शिष्य-व्युत्पादनाय दृष्टान्ताभासोऽपेक्षितः|| (२), तर्हि, अद्वैताकारे सुषुप्तिर्निदर्शनम्, पुरुषार्थ-स्वरूपत्वे च¶ विषयानन्दो-निदर्शनीयः। "आनन्दो ब्रह्मेति व्यजानात्"—इति** "विज्ञानमानन्दं ब्रह्म"—इत्यादि श्रुतेः । अशेष-शङ्का निवृत्त्यपेक्षा चेत्, ब्रह्म-मीमांसां पठ,—इत्यलमतिविस्तरेण ।

---

* सञ्जायेत,—इति स० पुस्तके पाठः ।
† ननु,—इति मु० पुस्तके नास्ति ।
‡ बुद्ध्यादावारोपयितव्यम्,—इति मु० पुस्तके पाठः ।
§ तादृशशब्दं—इति मु० पुस्तके पाठः ।
|| दृष्टान्ताभ्यासोऽपेक्षितः,—इति मु० पुस्तके पाठः ।
¶ 'च'—इति मु० पुस्तके नास्ति ।
** 'इति' शब्दः स० सो० पुस्तकयोर्नास्ति ।

---

(१) तथा च जगदाकाररहितं शून्यादपि विलक्षणं ब्रह्म,—इत्येव बुद्धावारोपयितव्यमित्यर्थः ।

(२) दृष्टान्तवदाभासते,—इति दृष्टान्ताभासः, न तु परमार्थदृष्टान्त इत्यर्थः ।

यावन्तं कालमभिव्यक्त-जगदाकारोपेतं ब्रह्म पूर्व्वमासीत्, तावन्तमेव कालमनभिव्यक्तदशायामवस्थाय[१] पश्चादभिव्यक्तौ प्रयतते। ननु, महाप्रलये, कालोवा तदियत्ता वा कथं घटते?[२]। उच्यते। कं प्रत्येतच्चोद्यम्?[३] न तावत् ब्रह्म-वादिनं प्रति, 'तन्मते वियदाद्यनन्त-भेद-जगत्-प्रतीतिं * कल्पयन्त्यामायायाः कश्चिन्महाप्रलयः एतावत्-काल-परिमितश्चासीत्,—इत्येवं विध-प्रतीति-मात्र-कल्पने कोभारः?[४]। [५]परमाणु-वादेऽप्यस्त्येव नित्यः कालः। [६]प्रधान-वादे

* भेदभिन्नं जगत् प्रतीतं—इति स० से० पुस्तकयोः पाठः।

(१) अनभिव्यक्तदशा महाप्रलयः।

(२) कालस्य क्रियारूपत्वात् महाप्रलये च क्रियाया असम्भवादिति भावः। तदियत्तापि क्षणादिलक्षणा क्रियासाध्यैव। प्रश्नोयं 'क्रियैव कालः'—इति मतानुसारेणेति बोध्यम्।

(३) क्रियातिरिक्तः पदार्थान्तरं कालः,—इति मतमाश्रित्य प्रथमं तावत् वेदान्तमते परिहारमाह न तावदिति।

(४) तथा च एतन्मते सृष्टिप्रलयौ द्वावेव माया-कल्पिताविति भावः।

(५) न्याय-वैशेषिकमते परिहारमाह परमाणुवादे इति। एतन्मते प्रलय-कालस्येयत्ताव्यवहारोध्वंसेनोपपादनीयः,—इत्याकरे व्यक्तम्।

(६) सांख्यमते परिहारमाह प्रधानवादे इति। प्रधानं प्रकृतिः। पञ्च-विंशति तत्त्वानि तु प्रकृतिमहदहङ्कारपञ्चतन्मात्र एकादशेन्द्रिय-पञ्च महाभूत-पुरुषरूपाणि सांख्ये प्रसिद्धानि। एतन्मते, प्रलयेऽपि प्रधानस्य सदृशपरिणामप्रवाहसत्त्वात् नानुपपत्तिस्तदियत्ताया इति ध्येयम्। इदमत्रावधेयम्। सांख्यीये सिद्धान्ते न कालोनाम पदार्थोऽस्ति, किन्तु यैरुपाधिभिरेकस्य कालस्य भूतभविष्यदादिव्यवहारभेदं वैशेषिकादयोमन्यन्ते, तएवोपाधयोभूतादिव्यवहारं प्रयोजयन्तीति कृतमत्र कालेन, इति सांख्यतत्त्वकौमुद्यामभिहितम्। एतच्च कालमाधवीयग्रन्थे ग्रन्थकृताप्युरीकृतम्।

पञ्च-विंशति-तत्त्वेभ्योवहिर्भूतस्य कालतत्त्वस्याभावात् प्रधानमेव काल-शब्देन व्यवह्रियताम् । अतः प्रलय-कालावसाने परमेश्वरः सृष्टिं कामयते । तथाच, श्रुतयः,—"कामस्तदग्रे समवर्त्ततांधि" "सोऽकामयत बहु स्यां प्रजायेय"—इति, "तदैक्षत बहु स्यां प्रजायेय इति" "स ईक्षां चक्रे"—इत्यादि । ननु,* कामोनाम मनो-वृत्ति-विशेषः, "कामः सङ्कल्पोविचिकित्सा-श्रद्धा-ऽश्रद्धा-धृतिरधृतिः ह्रीर्धीर्भीरित्येतत् सर्व्वं मनएव,'—इति श्रुतेः । मनश्च भौतिकम्, "अन्नमयं हि सोम्य ! मनः"—इति श्रुतेः । तथा सति, भूतोत्पत्तेः पूर्व्वमविद्यमाने मनसि कुतः कामः ? । उच्यते । न तावत् सर्ग-समये सोऽयमिदमुदेति, तन्मनसोभौतिकत्वाभावात्, नित्यायाः ईश्व-रेच्छायाः मनोऽनपेक्षत्वाच्च । सिसृक्षात्वन्तु सर्गोपहितत्वाकारेण नित्येच्छायामप्युपपद्यते । औपनिषदे मते तु जीवेच्छायाः भौतिक-मनः-कार्य्यत्वेऽपि, ईश्वरेच्छायाः माया-परिणाम-रूपत्वात् न मनोऽपेक्षाऽस्ति । अन्तरेणापि देहेन्द्रियाण्यशेष-व्यवहार-शक्तिर-चिन्त्या परमेश्वरस्य श्रुतिष्ववगम्यते,—

"न तस्य कार्य्यं करणञ्च विद्यते
न तत्-समश्चाभ्यधिकश्च दृश्यते ।
पराऽस्य शक्तिर्व्विविधैव श्रूयते
स्वाभाविकी ज्ञान-बल-क्रिया च" ॥ इति ।

---

* "तथा च"—इत्यारभ्य, "ननु"—इत्यन्तः पाठः स० से० पुस्तकयो र्नास्ति ।

"अपाणि-पादो जवनो ग्रहीता
पश्यत्यचक्षुः स शृणोत्यकर्णः"।

इति च। एवञ्च सति, 'असङ्गस्य कथमुत्पादकत्वम्, उत्पत्स्यमानानि वा वियदादीनि योग्य-सामग्रीमन्तरेण कथमुत्पद्येरन्"—इत्यादीनि चोद्यान्यनवकाशानि। अनन्त-शक्त्यैव अशेष-चोद्यानां दत्तोत्तरत्वात्। तस्मात्, यथाश्रुति निःशङ्कैः सृष्टिरभ्युपेतव्या। श्रुतिश्चैवमाह,—"तस्माद्वा एतस्मादात्मनः आकाशः सम्भूतः, आकाशाद्वायुः, वायोरग्निः, अग्नेरापः, अद्भ्यः पृथिवी, पृथिव्यामोषधयः, ओषधिभ्योऽन्नम्, अन्नात् पुरुषः"—इति। तत्र, पुरुष-शब्देन शिरःपाण्यादि-युक्तो देहोऽभिधीयते। स च देहो ब्रह्मादिः स्तम्बान्तोबहुप्रकारः। तत्र, ब्रह्मदेहस्य निरतिशय-पुण्य-पुञ्ज-फल-रूपत्वात् इतरसकल-देह-कारणत्वेनादित्वम्। तथाच श्रुति-स्मृती,*—

"हिरण्य-गर्भः समवर्त्तताग्रे
भूतस्य जातः पतिरेकआसीत्"। इति श्रुतिः†।
"ब्रह्मा देवानां प्रथमः संबभूव।
विश्वस्य कर्त्ता भुवनस्य गोप्ता"।

इति च।

"स वै शरीरी प्रथमः स वै पुरुषउच्यते।
आदि-कर्त्ता स भूतानां ब्रह्माऽग्रे समवर्त्तत"।

---

*श्रुतिः,—इति सु० पुस्तके पाठः।
† श्रुतिः,—इति सु० पुस्तके नास्ति।

इति स्मृतिः । एतेन, विष्णु-महेश्वर-देहयोरप्यादित्वं* व्याख्यातम् । एकेनैव चेतनेन गुण-त्रय-व्यवस्थायै देह-त्रयस्य स्वीकृतत्वात् । तथा च, मैत्रेय-शाखायां श्रूयते । "तस्य प्रोक्ताग्र्यास्तनवोब्रह्मा रुद्रोविष्णुरिति† अथह‡ योवै खलु वावाऽस्य राजसोऽंशोऽसौ स योऽयं ब्रह्मा, यथाह§ खलु वावाऽस्य तामसोऽंशोऽसौ स योऽयं रुद्रः, यथाह खलु वावाऽस्य सात्त्विकोऽंशोऽसौ स योऽयं विष्णुः, स वाएष एकस्त्रिधा भूतः"—इति । तथोत्तर-तापनीये, मायां प्रकृत्य श्रूयते । "सैषा चित्रा सुदृढ़ा बह्वंकुरा स्वयं गुण-भिन्नांकुरेष्वपि गुणभिन्ना सर्व्वत्र ब्रह्म-विष्णु-शिव-रूपिणी चैतन्य-दीप्ता, तस्मादात्मनएव त्रैविध्यं सर्व्वत्र"—इति । स्कन्द-पुराणेऽपि,—

"एकएव शिवः साक्षात् सृष्टि-स्थित्यन्त-सिद्धये ।
ब्रह्म-विष्णु-शिवाख्याभिः कलनाभिर्व्विजृम्भते" ।

इति । तदेवं ब्रह्म-विष्णु-महेश्वराः तस्मिन्|| महाकल्पावसाने लीयन्ते, पुनः¶ तत्-कल्पादावुत्पद्यन्ते,—इति सिद्धम् ।

अक्षरार्थस्तु, लय-सहिता उत्पत्तिः लयोत्पत्तिः** तयोर्लक्षिता भवन्ति,—इति । एवं तन्मध्यवान्तर-कल्पानामवसाने प्रारम्भे च

---

* विष्णु-महेश्वरयोरप्यादिरूपत्वम्,—इति मु॰ पुस्तके पाठः ।
† ब्रह्मा विष्णुरुद्र इति,—इति मु॰ पुस्तके पाठः ।
‡ अथयोह्व=इति स॰ सो॰ पुस्तकयोः पाठः ।
§ अथाह,—इति स॰ सो॰ पुस्तकयोः पाठः ।
|| खस्मिन्,—इति मु॰ पुस्तके पाठः ।
¶ तत्र महाकल्पादादित्यादि स॰ पुस्तके पाठः ।
** लयोत्पत्तिः—इति मु॰ पुस्तके नास्ति ।

श्रुत्यादीनां निर्णेतारः चयोत्पत्तिभ्यामुपलक्ष्यन्ते। तत्र, श्रुति-निर्णेतारः,—वेद-विभाग-कारी व्यासः, तद्वेद-शाखा-सम्प्रदाय-प्रवर्त्तकाः कठ-कौथुमादयः, कल्प-सूत्र-काराः बोधायनाश्वलायनापस्तम्बादयः, मीमांसा-सूत्र-कृतोजैमिन्यादयश्च। स्मृति-निर्णेतारोमन्वादयः प्रसिद्धाः। तत्र, पैठीनसिः,—

"तेषां मन्वङ्गिरोव्यास-गौतमात्र्युशनोयमाः।
वशिष्ठ* दक्ष-संवर्त्त-शातातप-पराशराः।
विष्णवापस्तम्ब-हारीताः शंखः कात्यायनोभृगुः।
प्रचेतानारदोयोगि(१) बोधायन-पितामहाः।
सुमन्तुः कश्यपोवभ्रुः पैठीनोव्याघ्रएवच†।
सत्य-व्रतोभरद्वाजोगार्ग्यः कार्ष्णाजिनिस्तथा‡।
जावालिर्जमदग्निश्च लोकाचि§ ब्रह्म-सम्भवः।
इति धर्म्म-प्रणेतारः षट्त्रिंशदृषयस्तथा"।

ननु, किमियं परिसंख्या? (२)। मैवम्। तथा सति, वत्स-मरीचि-

* वसिष्ठ,—इति मु० पुस्तके पाठः।
† व्यासएव च,—इति स० सो० पुस्तकयोः पाठः।
‡ कार्ष्णाजिनस्तथा,— इति मु० पुस्तके पाठः।
§ लोगाक्षि,—इति स० सो० पुस्तकयोः पाठः।

(१) योगी याज्ञवल्क्यः। अयञ्च, क्वचित् योगीश्वरः—इति, क्वचित् याज्ञवल्क्यः—इति, क्वचिच्च योगियाज्ञवल्क्यः,—इति च निर्दिश्यते। याज्ञवल्क्यीयात् धर्म्मशास्त्रात् पृथक् योगियाज्ञवल्क्यीयं धर्म्मशास्त्रमप्यस्माभिरुपलब्धम्।

(२) परिसंख्या परितः संख्यानम्। एतावन्तएव धर्म्मप्रणेतारोनत्वन्ये इत्यर्था किमेषा गणना इति प्रश्नार्थः। तथा चोक्तम्। "अन्यार्थश्रूय-

देवल-पारस्कर-पुलस्त्य* पुलह-क्रतु† वैयाघ्रपद्‌-शङ्ख-लिखित‡ छागले-यात्रेयादीनां धर्म्म-शास्त्र-प्रणेतृत्वं न स्यात्। आश्वमेधिके पर्व्वण्यपि तत्तन्मुनि-प्रोक्त-धर्म्मानुक्रमणात् धर्म्मशास्त्र-कर्त्तारोगम्यन्ते(१)। 'श्रुता मे मानवाधर्म्माः'—इत्युपक्रम्य एवं पठ्यते,—

"औमा-माहेश्वराश्चैव§ नन्दि-धर्म्माश्च पावनाः।
ब्रह्मणा कथिताश्चैव कौमाराश्च श्रुतामया।
धूम्रायन-कृताधर्म्माः काण्वा|| वैश्वानराश्चपि।
भार्गवायाज्ञवल्क्याश्च मार्कण्डेयाश्च कौशिकाः।
भरद्वाज-कृताये च वृहस्पति-कृताश्च ये।
कुणेश्च कुणि-वाहोश्च¶ विश्वामित्र-कृताश्च ये।
सुमन्तु-जैमिनि-कृताः शाकुनेयास्तथैव च।
पुलस्त्य-पुलहोद्गीताः पावकीया** स्तथैव च।
अगस्त्य-गीतामौद्गल्याः शाण्डिल्याः सौलभायनाः††।

* पुलस्त्य—इति मु॰ पुस्तके नास्ति।
† क्रतु,—इति मु॰ पुस्तके नास्ति।
‡ विलिखित,—इति मु॰ पुस्तके पाठः।
§ उमामहेश्वराश्चैव,—इति स॰ सो॰ पुस्तकयोः पाठः।
|| काव्या,—इति स॰ सो॰ पुस्तकयोः पाठः।
¶ कुशिताहेश्च,—इति स॰ सो॰ पुस्तकयोः पाठः।
** पावणीया,—इति मु॰ पुस्तके पाठः।
†† अगस्त्यगीताः सोधन्याः शाण्डिल्याः शौलभाञ्जनाः,—इति स॰ सो॰ पुस्तकयोः पाठः।

माणा च यान्यार्थप्रतिषेधिका। परिसंख्या तु सा ज्ञेया यथा प्रोक्षित-भोजनम्"—इति।

(१) वत्सादय इति शेषः।

वालखिल्य-कृताये च ये च सप्तर्षिभिः कृताः।
वैयाघ्रव्यास-गीतास्च विभण्डक* कृतास्च ये।
तथा विदुर-वाक्यानि भृगोरङ्गिरसस्तथा।
वैशम्पायन-गीतास्च ये चान्ये एवमादयः।"

इति। 'सदाचारः',—होलाकोद्वृषभ-यज्ञाङ्गीनैवुकादिः† (१)। तस्य निर्णेतारस्तत्तत्-कुल-वृद्धाः। 'च'कारः उक्तानुक्त-समुच्चयार्थः। उक्ताः,—मन्वादयोब्रह्मादयश्च स्मृति-शास्त्रकर्त्तारः। अनुक्तस्तु,—धर्म्मः। तस्यापि, पूर्व्व-कल्पान्ते चीणस्योत्तर-कल्पादौ सृष्टिर्भवति। तथा च, वाजसनेय-ब्राह्मणे सृष्टि-प्रकरणे,‡ प्रजापतिर्मनुष्यादि-पिपीलिकान्त-प्राणिनां चतुर्व्वर्णाभिमानि-देवतानाञ्च सृष्टिमाम्नाय, अत्युग्रमपि चत्रियादिकं नियन्तुं समर्थस्य धर्म्मस्य सृष्टिराम्नायते। "स नैव व्यभवत्तत् श्रेयोरूपमत्यसृजत धर्म्मं तदेतत् चत्रस्य चत्रं यद्धर्म्मः तस्मात् परं नास्ति" इति। अस्यायमर्थः;—स प्रजापति-मन्वादि-रूप-धारी जगत्-स्रष्टा परमेश्वरः प्रजाः सृष्ट्वाऽपि तन्नियामकाभावात् कृत-कृत्यता-रूपं विभवं नैव प्राप्तवान, ततोविचार्य्य नियामकत्वेन श्रेष्ठं धर्म्ममतियत्नेनासृजत,—इति। अहो! महदिदं धर्म्मस्य सामर्थ्यं; यत् चत्रियादिलग्रोमारणे समर्थोऽपि धर्म्माधीनः§ कर-प्रदानाद्यनुप-

* वितण्डक,—इति स० सो० पुस्तकयोः पाठः।
† समाचारो लोके वृषभयज्ञादि नैर्ऋतादि,—इति मु० पुस्तके पाठः।
‡ अत्र, प्रजापति-मनुष्यादि,—इति पाठो भवितुं युक्तः।
§ धर्म्माधीनः—इति स० सो० पुस्तकयोः पाठः।

(१) होलाका वसन्तोत्सवविशेषः प्राच्यैः क्रियते, उद्वृषभयज्ञः उदीच्यैः, आङ्गीनैवुकादयोदाक्षिणात्यैः। स्पष्टमिदं मीमांसा-प्रथम-तृतीयाष्टमाधिकरणे भाष्यादौ।

योगिनं याचकं विप्रादिकं न मारयति*। प्रत्युत, तस्मै धनं ददाति, भटाश्चातिशूराः धनुः-खड्गादि-धारिणोलक्ष-सङ्ख्याकाः एकेन† निरायुधेन रुग्णेन‡ स्वामिना अधिक्षिप्यमाणा§ स्ताड्यमानाः सन्तोऽपि स्वामि-द्रोहादिभ्यति। ततोधर्म्मादप्युत्कृष्टं न किञ्चिन्नियामकमस्तीति। 'प्रलय-काले धर्म्मस्यापि संहारे भाविसृष्टेर्धर्म्माधर्म्म-कार्य्यायाः असम्भवः',[१] इति चेत्, न, पूर्व्व-कल्पानुष्ठान-सञ्चितस्य फल-वीजस्यापूर्व्वस्य संहारानङ्गीकारात्[२]। द्रव्य-गुण-क्रिया-रूपएव हि धर्म्मः संह्रियते पुनरुत्पद्यते च सर्व्वदा[३] इति। अनेन, सृष्टि-संहार-प्रवाहस्यानादितामनन्तताञ्च दर्शयति[४]॥

---

* ताड़यति,—इति मु० पुस्तके पाठः।
† स्वकीयेनैकेन, - इति स० सो० पुस्तकयोः पाठः।
‡ रुग्णेन, –इति मु० पुस्तके नास्ति।
§ विक्षिप्यमाणा,—इति मु० पुस्तके पाठः।

---

(१) धर्म्माधर्म्मौ विना जगद्वैचित्र्यासम्भवात् सृष्टेः धर्म्माधर्म्मकार्य्यत्वमिति वोध्यम्।

(२) तथाचापूर्व्वरूपौ धर्म्माधर्म्मौ प्रलयेपि तिष्ठतः,—इति न विचित्रसृष्ट्यनुपपत्तिरिति भावः। तदानीं धर्म्माधर्म्मयोः सत्त्वञ्च कार्य्यदर्शनादनुमातव्यम्।

(३) द्रव्यं सोमादि, गुणः "अरुणया पिङ्गाक्ष्या गवैकहायन्या सोमं क्रीणाति"—इत्याद्युक्तः आरुण्यादिलक्षणः, क्रिया अग्निहोत्रादिका। धर्म्मत्वञ्चामीषां न स्वरूपतः किन्तु श्रेयःसाधनतारूपेणेति मीमांसाश्लोकवार्त्तिकादौ व्यक्तम्।

(४) यद्यपि प्रवाहस्यावस्तुत्वात् प्रवाहिव्यक्तीनाञ्च सादित्वात् प्रवाहस्यानादित्वासम्भवः, तथापि, प्रवाहिव्यक्तीनां मध्ये अन्यतमया व्यक्त्या विना अनादिकालस्यानवस्थानमेव कार्य्यानादित्वमिति सिद्धान्तः। एतञ्च

यदर्थं सृष्टि-संहारौ संचिप्योक्तौ, तत् प्रवाह-नित्यत्वमिदानी-माह,—

**न कश्चिद्वेद-कर्त्ता च वेदं स्मृत्वा* चतुर्मुखः।**
**तथैव धर्म्मान् † स्मरति मनुः कल्पान्तरेऽन्तरे ‡ ॥२१॥**

इति। स्मृति-निर्म्मातॄणां मन्वादीनां स्मृति-कर्त्तृत्व-दर्शनात् तथैव श्रुति-निर्म्मातॄणामपि वेद-कर्त्तृत्वमाशङ्क्य निराचष्टे 'न कश्चित्'-इति। न तावत् व्यासोवेद-कर्त्ता, तस्य विभाग-मात्र-कारित्वात्। नापि चतुर्मुखः, ईश्वरेण चतुर्मुखाय वेद-प्रदानात्। नापि जगदीश्वरः, तस्य सिद्ध-वेदाभिव्यञ्जकत्वात्। तदुक्तं मत्स्य-पुराणे,—

"अस्य वेदस्य§ सर्व्वज्ञः कल्पादौ परमेश्वरः।
व्यञ्जकः केवलं विप्राः! नैव कर्त्ता न संशयः।
ब्रह्माणं मुनयः! पूर्व्वं सृष्ट्वा तस्मै महेश्वरः।
दत्तवानखिलान् वेदान् विप्राः! आत्मनि|| संस्थितान्¶।

* वेदं श्रुत्वा,—इति मु० पुस्तके, वेदं स्मर्त्ता,—इति मु० मू० पुस्तके, वेदकर्त्ता,—इति सो० मू० पुस्तके पाठः।
† तदेव धर्म्मं,—इति सो० मू० पुस्तके पाठः।
‡ कल्पान्तरान्तरे,—इति मु० मू०, सो० मू० पुस्तकयोः पाठः।
§ धर्म्मस्य,—इति मु० पुस्तके पाठः।
|| विप्रयात्मनि,—इति स० पुस्तके पाठः।
¶ सुस्थितान्,—इति मु० पुस्तके पाठः।

शारीरकटीकायां रत्नप्रभायामन्यत्र च व्यक्तम्। एषएव न्यायः प्रवाहस्यानन्तत्वेपि योजनीयः।

ब्रह्मणा चोदितो विष्णुर्व्यास-रूपी द्विजोत्तमाः ! ।
हिताय सर्व्व-भूतानां वेद-भेदान् करोति सः" ।

इति । कठादीनान्तु* तत्-कर्त्तृत्वं दूरापास्तम्† । उपपत्तयस्तु वेदापौरुषेयत्वाधिकरणे(१) द्रष्टव्याः । ननु, 'शास्त्र-योनित्वाधिकरणे(२) ब्रह्मणः सर्व्वज्ञत्व-सर्व्वशक्तित्व-दार्ढ्याय वेद-कर्त्तृत्वं व्यासेन सूचितम् ।(३) ननु, तेनैव देवताधिकरणे(४) वेद-नित्यत्वमपि, "अतएव च नित्यत्वम्' (शा० १अ० ३पा० २८सू०) इति सूत्रेण प्रदर्शितम् । (५)एवं तर्हि, विरोधः परिहर्त्तव्यः । उच्यते । वर्णानां पदार्थ-तत्-संबन्धानां वाक्यानाञ्चानित्यत्वं वैशेषिक-काणादादयो वर्णयन्ति(६), तान् प्रति-

* इतरेषान्तु,—इति मु० पुस्तके पाठः ।
† दूरापेतम्,—इति स० सो० पुस्तकयोः पाठः ।

(१) "वेदांश्चैके सन्निकर्षं पुरुषाख्याः" (मी० १अ० १पा० २७ सू०) इत्यस्मिन्नधिकरणे इत्यर्थः ।
(२) शारीरक-प्रथम-प्रथम-द्वितीयाधिकरण-प्रथमवर्णके ।
(३) सिद्धान्तयति नन्विति ।
(४) शारीरक-प्रथम-तृतीयाष्टमाधिकरणे ।
(५) पूर्व्वापरविरोधमुद्भावयति एवन्तर्हीति ।
(६) शब्दानित्यत्वञ्च वैशेषिकद्वितीयाध्यायद्वितीयाह्निके, न्याय-द्वितीयाध्याय-द्वितीयाह्निके च वर्णितम् । शब्दानामनित्यत्वे च तत्सम्बन्धस्य शब्दसमूहात्मकवाक्यस्य च सुतरामनित्यत्वम्, तदपि आत्मतत्त्वविवेके न्यायकुसुमाञ्जलौ च स्पष्टम् । पदार्थानां घटादीनामनित्यत्वञ्च सकृच्च वर्णितम् । अत्र, वैशेषिककाणादादयः,—इति पाठो लेखकप्रमादकृत इति प्रतिभाति, कणादस्यैव वैशेषिकदर्शनकर्त्तृत्वात् । किन्तु

मीमांसकाः प्रथम-पादे(१) कालाकाशादीनामिव वर्णानां नित्यत्वं वर्णयामासुः,"व्यवहारे भट्टनयः",—इत्यभ्युपगमं* सूचयितुं देवताधिकरणे तदेव व्यावहारिकं नित्यत्वं सूचितम्(२)। अतः कालिदासादिग्रन्थेष्विव(३) वेदेष्वर्थाववोध-पूर्व्विकायाः पद-विशेषावापोद्वापाभ्यां(४) प्रवृत्तायाः वाक्य-रचनायाः अभावादपौरुषेयत्वं युक्तम्। ब्रह्म-विवर्त्तत्वं वियदादेरिव वेदस्याप्यस्ति,-इति मत्त्वा शास्त्र-योनित्वाधिकरणे वेद-कर्तृत्वं ब्रह्मणोदर्शितम्। अतएव भट्टपादाः सत्यपि पुरुष-संवन्धे स्वातन्त्र्यं निवारयामासुः,—

"यत्नतः प्रतिषेध्या नः पुरुषाणां स्वतन्त्रता"।

इति। तस्मात्, "स्वतन्त्रः कर्त्ता" (पा०१अ०४पा०५४सू०) इत्यनेन लक्षणेन लक्षितः कर्त्ता न कोऽपि वेदस्यास्ति(५)।

---

* इत्यभ्युपगतिं—इति मु० पुस्तके पाठः।

---

सर्व्वंच दर्शनात्तथैव रक्षितः,—इति वोध्यम्। वैशेषिकोयः काणादः,—इति कथञ्चित् सङ्गमयितव्यम्।

(१) मीमांसा-प्रथमाध्याय-प्रथमपादे।

(२) व्यावहारिकं वेदान्तमते, भट्टमते तु पारमार्थिकमेवेतिमन्तव्यम्।

(३) कालिदासादिग्रन्थे यथा वुद्धिपूर्व्विकाप्रवृत्तिर्न तथा वेदे, इति व्यतिरेके दृष्टान्तः।

(४) आवापः पदान्तरानयनं उद्वापः पूर्व्वपदापनयः। पदपरिवृत्तिरिति फलितार्थः।

(५) तथाच निःश्वासवदनायासेन वेदाः ब्रह्मणः सम्भृताः,—इति ब्रह्मणो वेदकर्तृत्वव्यवहारः स्वातन्त्र्याभावात्तु पारमार्थिकं कर्तृत्वं नास्तीति सिद्धान्तार्थः।

'च'कारः तु-शब्दार्थे वर्त्तमानो वैलक्षण्यमाह ; सन्ति हि वहवश्चतुर्मुख-मनु-प्रभृतयः स्मृति-कर्त्तारः, वेद-कर्त्ता न कोऽपीति वैलक्षण्यम्। 'वेदं स्मृत्वा* इत्यत्र वाक्यो† अनुषङ्ग-न्यायेन द्वितीयार्द्ध-गतं पदत्रयमन्वेतव्यम् । अनुषङ्ग-न्यायश्च,—(१)द्वितीयाध्याय-प्रथम-पाद वर्णितः । तथाहि,—ज्योतिष्टोम-प्रक्रियायाम्‡ उपसदामुपहोमेषु§ चयोमन्त्राः श्रूयन्ते,—"याते ऽग्ने ऽयाशया रजाशया हराशया तनुर्वर्षिष्ठा गह्वरेष्ठा, उग्रं वचो अपावधीत् ‖ त्वेषं वचो अपावधीत् स्वाहा"¶ इति । तत्र, 'अयाशया' 'रजाशया' 'हराशया'—इति पद-भेदान्मन्त्र-भेदः(२) । तत्र, प्रथम-मन्त्रस्य, तनूरित्यादि-वाक्य-शेषापेक्षाऽस्ति, चरम-मन्त्रः, 'याते ऽग्ने'—इत्यमुं वाक्यादिमपेक्षते, मध्य-मन्त्रस्त्वाद्यन्तावपेक्षते । तत्रैवं संशयः,—किमपेक्षितार्थ-परिपूरणाय लौकिकः कियानपि पद-सन्दर्भोऽध्याहरणीयः, किं वा श्रूयमाणं पदजातम-

---

* वेदं श्रुत्वा,—इति मु० पुस्तके पाठः ।
† अत्र 'पुराणानाम्'—इत्यधिकः पाठः मु० पुस्तके ।
‡ ज्योतिष्टोमप्रक्रियायाम्,—इति मु० पुस्तके पाठः ।
§ उपसद्धोमेषु,—इति स० सो० पुस्तकयोः पाठः ।
‖ इत्यमेव विसन्धिः पाठः सर्व्वत्र । एवं परत्र ।
¶ मीमांसाभाष्ये तु 'याते ऽग्ने ऽयाशया तनुर्व्वर्षिष्ठा'—इत्यादि स्वाहान्तं मन्त्रं लिखित्वा, पश्चात्, 'रजाशया' 'हराशया'—इति प्रतीकद्वयं लिखितम् ।

---

(१) मीमांसायाः,—इत्यादि ।
(२) याते ऽग्ने ऽयाशया तनुर्व्वर्षिष्ठा,—इत्यादिरेको मन्त्रः, याते ऽग्ने रजाशया तनुर्व्वर्षिष्ठा,—इत्यादिर्द्वितीयः, याते ऽग्ने हराशया तनुर्व्वर्षिष्ठा,—इत्यादिस्तृतीयः, इति विवेकः ।

नुषञ्जनीयम्? इति। वाक्यादेः[1] प्रथम-मन्त्रेणैव संबन्धात् वाक्य-शेषस्य चरम-मन्त्रेणैव संबन्धात् लौकिकाध्याहारः,—इति पूर्व्वः पक्षः। वैदिकाकाङ्क्षायाः सति सम्भवे वैदिक-शब्दैरेव पूरणीयत्वात् अन्य-मन्त्र-संबन्धानामपि पदानां बुद्धिस्थत्वेनाध्याहार्य्येभ्यः पदेभ्यः प्रत्यासन्नत्वाच्च, अनुषङ्ग एव कर्त्तव्यो नाध्याहारः,—इति सिद्धान्तः। एवञ्च सति, प्रकृतेऽपि 'कल्पान्तरे धर्म्मान् स्मरति'—इति पदत्रयं पूर्व्वार्द्धेऽनुषञ्जनीयम्। [2]चतुर्मुखस्तस्मिंस्तस्मिन् महाकल्पे परमेश्वरेण दत्तं वेदं स्मृत्वा, तत्र विप्रकीर्णान् वर्णाश्रम-धर्म्मान् सङ्कलय्य स्मृति-ग्रन्थ-रूपेण उपनिबध्नाति। तथा च, पितामह-वचनानि तत्र तत्र निबन्धन-कारैरुदाह्रियन्ते। चतुर्मुखस्य स्मृति-शास्त्र-कर्तृत्वं मनुनाऽप्युक्तम्,—

"इदं शास्त्रन्तु कृत्वाऽसौ मामेव स्वयमादितः।
विधिवद्ग्राहयामास मरीच्यादीनहं मुनीन्"।

इति। यथा चतुर्मुखः, तथैव च स्वायम्भुवोमनुः तस्मिन् तस्मिन्नवान्तर-कल्पे वेदोक्तधर्म्मान् ग्रथ्नाति। मनु-ग्रहणेन, अत्रि-याज्ञवल्क्य-विष्णवादयः उपलक्ष्यन्ते। तदेवं प्रतिमहाकल्पं येन येन* चतुर्म्मुखेन, प्रत्यवान्तर-कल्पञ्च तैस्तैर्मन्वादिभिः स्मृति-प्रणयनात्, धर्म्मादेः प्रवाह-नित्यत्वं सिद्धम्। एतदेवाभिप्रेत्याश्वमेधिके पर्व्वणि पठ्यते,—

"युगेष्वावर्त्तमानेषु धर्म्मोऽप्यावर्त्तते पुनः।
धर्म्मेष्वावर्त्तमानेषु लोकोऽप्यावर्त्तते पुनः"।

---

* अत्र 'तेन तेन', - इति पाठोभवितुं युक्तः।

---

(१) वाक्यस्य य आदिभागस्तस्येत्यर्थः।
(२) एतत् पदत्रयस्य पूर्व्वार्द्धे अनुषङ्गे कृते सति, यो वाक्यार्थः सम्पद्यते, तमाह चतुर्मुख इत्यादिना।

इति। युग-भेदेन धर्म्म-वैलक्षण्यमभ्युपेत्य, 'धर्म्मान्'—इति बहु-वचन-निर्द्देशः॥

तदेव वैलक्षण्यं प्रतिजानीते,—

**अन्ये कृत-युगे धर्म्मास्त्रेतायां द्वापरे युगे* ।**
**अन्ये कलि-युगे नृणां युग-रूपानुसारतः ॥ २२ ॥**

इति। अत्र, अन्य-शब्देन धर्म्मस्य स्वरूपान्यत्वमाचष्टे, किन्तु प्रकारान्यत्वम्। अन्यथा, धर्म्म-प्रमाण† चोदनानामपि युग-भेदेन भेदापत्तेः(१)। न हि, इयं चोदना कृतेऽध्येतव्या, इयन्तु त्रेतायाम्,—इत्यादि व्यवस्थापकं किञ्चिदस्ति। प्रकारान्यत्वे त्वस्ति दृष्टान्तः। एकस्याप्यग्नि-होत्रस्य‡ सायं-प्रातः-काल-भेदेन अनुष्ठान-प्रकार-भेद-श्रवणात्। "ऋतं त्वा सत्येन परिषिञ्चामि"—इति सायं परिषिञ्चति, सत्यं त्वर्त्तेन परिषिञ्चामीति प्रातः"—इति। ननु, तत्रार्थवादेन मन्त्रः प्रकार-भेदेन उपपादितः§ ; "अग्निर्व्वा ऋतम्, असावा-

* परे,—इति मु० मू० पुस्तके पाठः। ऽवरे,—इति से० मू० पुस्तके पाठः।

† धर्म्मप्रधान,—इति स० से० पुस्तकयोः पाठः।

‡ एकस्याग्निहोमस्य,—इति मु० पुस्तके पाठः।

§ मन्त्रप्रकारभेद उपपादितः—इति स० से० पुस्तकयोः पाठः।

(१) धर्म्मप्रमाण,—इति हेतुगर्भविशेषणम्। चोदनागम्यार्थस्यैवधर्म्मत्वात् धर्म्मस्य स्वरूपतोऽन्यत्वे चोदनाभेदस्यार्थसिद्धत्वादितिभावः।

दित्यः सत्यम्, अग्निमेव तदादित्येन सायं परिषिञ्चति, अग्निनादित्यं प्रातः सह"—इति। एवन्तर्हि, अत्रापि, 'युग-रूपानुसारतः'—इत्यनेन प्रकारभेदः उपपद्यते। युगानां स्वरूपमनुष्ठातृ-पुरुष-शक्ति-तारतम्योपेतम्, तदनुसारेणानुष्ठान-वैषम्यं सम्भवति। "यथा शक्नुयात्, तथा कुर्य्यात्"—इति नित्य-कर्म्मसु निर्णीतत्वात्। तथाहि, षष्ठाध्याये तृतीय-पादे विचारितम्। "यावज्जीवमग्निहोत्रं जुहुयात्"—इति श्रूयते। तत्र, संशयः; किं सर्व्वाङ्गोपसंहारेणाधिकारः, उत, यदा यावन्ति शक्नोत्युपसंहर्त्तुं, तदा तावद्भिरङ्गैरुपेतं प्रधानं कुर्व्वन्नधिक्रियते? इति। सर्व्वाङ्गोपेतस्य प्रधानस्य फल-साधनत्वात् अङ्ग-वैकल्ये फलानुदयात् सर्व्वोपसंहारः,—इति पूर्व्वः पक्षः। (१)अत्र हि जीवनमग्निहोत्रस्यैव निमित्ततया श्रूयते, नत्वङ्गानाम्, सति च निमित्ते नैमित्तिकमवश्यम्भावि, अन्यथा निमित्तत्वासम्भवात्, ततो ऽशक्याङ्ग-परित्यागेन प्रधानं कर्त्तव्यम्, तावतैव शास्त्र-वशात् फल-सिद्धिः,—इति। बौधायनश्च* स्मरति,—

"यथाकथञ्चिन्नित्यानि शक्त्यवस्थाऽनुरूपतः† ।
येन केनापि कार्य्याणि, नैव नित्यानि लोपयेत् ।

इति। पुरुष-शक्ति-तारतम्य-कृतमनुष्ठान-वैषम्यमिति विवक्षया 'नृणाम्'—इत्युक्तम्॥

* बोधायनश्च,—इति मु० पुस्तके पाठः।

† शक्त्यवस्थानुरूपतः,—इति स० सो० पुस्तकयोः पाठः। शक्त्यवस्तुनिरूपितः,—इति तु तत्त्वकारधृतः।

(१) सिद्धान्तमाह अत्र हीति।

अथ, प्रतिज्ञातं वैलक्षण्यं षड्भिः श्लोकैरुपन्यस्यति। तत्र, चतुर्षु युगेषु प्राधान्येनानुष्ठातुं सुकरान् परम-पुरुषार्थ-हेतून् धर्मान् विभजते,—

**तपः परं कृत-युगे त्रेतायां ज्ञानमुच्यते* ।**
**द्वापरे यज्ञमेवाहुः† दानमेव‡ कलौ युगे ॥ २३ ॥**

इति। 'तपः' कृच्छ्र-चान्द्रायणादि-रूपेण अशन-वर्ज्जनम्। "तपो-नानशनात् परम्"—इति श्रुतेः। यद्यपि, दानस्यापि तपस्त्वं श्रूयते;— "एतत् खलु वाव तपइत्याहुः यः स्वं ददाति"—इति, तथापि, नात्र तद्विवक्षितम्, दानस्य पृथगुक्तत्वात्। ननु, व्यासेन तपोऽन्यथा स्मर्य्यते,—

"तपः स्वधर्म्म-वर्त्तित्वं शौचं सङ्कर-वर्ज्जनम्"।

इति। नायं दोषः। कृच्छ्रादेरपि स्व-धर्म्म-विशेषत्वात्। "तप सन्ताप"—इत्यस्माद्धातोरुत्पन्नस्य तपःशब्दस्य देह-शोषणे वृत्तिर्मुख्या। अतएव, स्कान्देऽभिहितम्,—

"वेदोक्तेन प्रकारेण तथा चान्द्रायणादिभिः।
शरीर-शोषणं यत्, तत् तपइत्युच्यते बुधैः"।

---

* ज्ञानमुत्तमम्,—इति वे० मू० पुस्तके पाठः।

† यज्ञमित्याहुः,—इति मु० पुस्तके, यज्ञमित्यूचुः,—इति मु० मू० पुस्तके पाठः।

‡ दानमेकम्—इति मु० मू० पुस्तके पाठः।

इति । यत्तु तत्रैवोक्तम्,—

"कोऽसौ मोक्षः, कथं, केन संसारं प्रतिपन्नवान् ।
इत्यालोचनमर्थज्ञास्तपः शंसन्ति पण्डिताः" ।

इति । सोऽन्यएव तपः-शब्दः, "तप आलोचने"—इत्यस्माद्धातोस्तदुत्पत्तेः । तत् * तपोऽत्र ज्ञान-शब्देन संगृहीतम् । 'पर' शब्दः प्राधान्येनानुष्ठेयतामाह । तर्हि, त्रेतादिषु तपोनाद्रियेत, कृते च ज्ञान-यज्ञ-दानानि नाद्रियेरन्,—इति चेत्, न, इतर-व्यावृत्ति-रूपायाः परिसंख्यायाः अत्राविवक्षितत्वात् । न खलु, इदानीं कश्चिदनुष्ठान-विधिः वक्तुमुपक्रान्तः, येन विधि-विशेषः शङ्क्येत(१) । भविष्यति तु "षट्-कर्म्माभिरतः"—इत्यादिना तदुपक्रमः । युग-सामर्थ्यं केवलमत्र निरूप्यते । यथा, 'वसन्ते पुष्प-प्राचुर्य्यं ग्रीष्मे सन्ताप-बाहुल्यम्'—इत्यादि ऋतु-सामर्थ्यम्, तथा कृतादि-सामर्थ्येन तपआदि-प्राचुर्य्यं विवक्षितम् । अतएव, 'युगे युगे तु सामर्थ्यम्'—इति वक्ष्यति । सामर्थ्य-ज्ञान-प्रयोजनञ्चाभिधास्यते,—

'तेषां निन्दा न कर्त्तव्या युग-रूपाहि ते द्विजाः' ।

---

* तत्र—इति मु० पुस्तके पाठः ।

---

(१) विधित्वस्याभावे तद्विशेषरूपायाः परिसंख्यायाः कुतः शङ्केति भावः । तथाहि,—अज्ञात-ज्ञापनं, प्रवृत्त्यङ्ग-प्रमिति-जनकं, अभिधा-नामक-पदार्थान्तर-बोधकपद-घटितं वा वाक्यं विधिः । स च त्रिविधः विधिर्नियमपरिसंख्याभेदात् । यत्रेदमुक्तम् । "विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति । तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते" —इति ।

इति । एतत्सामर्थ्यं* बृहस्पतिरपि दर्शयति,—

"तपोधर्म्मः कृत-युगे ज्ञानं त्रेता-युगे स्मृतम् ।
द्वापरे चाध्वरः प्रोक्तस्तिष्ये[१] दानं दया दमः" ।

इति ॥

धर्म्मान् विभज्य तद्वत् प्रमाणानि विभज्यंते†—

**कृते तु‡ मानवाधर्म्मास्त्रेतायां गौतमाः स्मृताः ।**
**द्वापरे शङ्ख-लिखिताः कलौ पाराशराः स्मृताः§ ॥ २४ ॥**

इति । [२]मानवादि-ग्रन्थोक्त-धर्म्माणां प्रचुर-प्रवृत्त्या ग्रन्थ-प्रामाण्य-प्राचुर्य्यमर्थ-सिद्धम् ॥

धर्म्मवदधर्म्मस्यापि वक्तुमिष्टत्वात्[३] अधर्म्म-प्रापकं स्थान-विशेषं हेयतया विभज्यते,—

**त्यजेद्देशं कृत-युगे त्रेतायां ग्राममुत्सृजेत् ।**
**द्वापरे कुलमेकन्तु कर्त्तारन्तु|| कलौ युगे ॥ २५ ॥**

---

* एतत् सामर्थ्यं, इति स० सो० पुस्तकयोर्नास्ति ।
† विभजते,—इति स० सो० पुस्तकयोः पाठः ।
‡ मानवोधर्म्मः,—इत्येकवचनान्तपाठः मु० मू० पुस्तके एवं परत्र ।
§ पाराशरस्मृतिः,—इति सो० मू० पुस्तके पाठः ।
|| कर्त्तारञ्च,—इति मु० मू० पुस्तके पाठः ।

---

(१) तिष्यः कलिः ।
(२) ननु कृते तु मानवाधर्म्मा इत्यादिना मानवादिधर्म्माणां कृतादिषु प्राचुर्य्यमुक्तं तत्कथमयं प्रमाणविभागः इत्याशङ्क्याह मानवादीति ।
(३) धर्म्मो यथा उपादेयतया वक्तुमिष्टः, तथा अधर्म्मोऽपि हेयतयेति भावः ।

इति। पतितः प्राधान्येन यस्मिन्—एकेन राज्ञा परिपाल्यमाने* ग्राम-समूहात्मनि देशे निवसेत्, सदेशः सर्व्वोऽपि कृते सामर्थ्यात्† अध-र्म्मापादकः। एवं ग्रामे योज्यम्। कुल-त्यागोनाम,—पतितस्य कुले विवाह-भोजनाद्यप्रवृत्तिः। कर्त्तृ-त्यागः सम्भाषणादि-वर्ज्जनम्॥

त्याज्य-देशवत् निमित्तान्यपि त्याज्यानि विभजते,—

**कृते सम्भाषणादेव‡ त्रेतायां स्पर्शनेन च§।**
**द्वापरे त्वन्नमादाय॥ कलौ पतति कर्म्मणा॥ २६॥**

इति। कृतादिष्विव कलौ पतित-सम्भाषणादिना न स्वयं पतति, किन्तु वधादिना कर्म्मणा पतितोभवति(१)॥

महापुरुष-तिरस्कारादौ तदीय-शाप-परिपाक-हेतुं कालं वि-भजते,—

---

* पतितः पुमान् यस्मिन् येन केन राज्ञा परिपालिते,—इति मु० पुस्तके पाठः।

† कृतसामर्थ्यात्,—इति मु० पुस्तके पाठः।

‡ सम्भाषणात् पापं,—इति मु० मू० पुस्तके पाठः।

§ स्पर्शनात्तथा,—इति सो० मू० पुस्तके पाठः। त्रेतायाञ्चैव दर्शनात्,—इति मु० मू० पुस्तके पाठः।

॥ द्वापरे त्वर्थमादाय,—इति तत्त्वकारधृतः पाठः।

---

(१) कर्त्तारन्तु कलौ युगे,—इत्यनेन कर्त्तृसंसर्गस्य निषिद्धत्वात तत्कर्त्ता कलावपि पापी भवति, न तु पतितोभवति। पतनन्तु स्वयं कृतेन वधादिकर्म्मणैवेति भावः।

**कृते तत्क्षणिकः* शापस्त्रेतायां दशभिर्दिनैः ।**
**द्वापरे चैक-मासेन† कलौ संवत्सरेण तु‡ ॥ २७ ॥**

इति ॥

धर्म्मस्य तारतम्यापादकानि निमित्तानि विभजते,—

**अभिगम्य कृते दानं त्रेतास्वाहूय दीयते ।**
**द्वापरे याचमानाय§ सेवया दीयते कलौ ॥ २८ ॥**

इति । यत्र प्रतिग्रहीता वर्त्तते, तत्र दाता स्वयं गत्वा गुरुमिव तमभिगम्य(१) कृते दानं करोति । त्रेतायां प्रतिग्रहीतारमाहूय तस्मै दीयते । 'त्रेतासु'—इति बहु-वचनं कृत-द्वापरादिषु जातावेक-वचनमिति प्रदर्शनार्थम्(२) । द्वापरे स्वयमागत्य याचमानाय प्रति-ग्रहीत्रे दीयते । कलौ न याच्ञा-मात्रेण, किन्तु सेवया । बृहस्प-तिरपि अमुं विभागमाह,—

---

* तात्कालिकः,—इति सो० स० पुस्तकयोः पाठः । कृते तु तत्क्षणा-च्छापः,—इति मु० मू० पुस्तके पाठः ।
† द्वापरे मासमात्रेण,—इति मु० स० पुस्तके पाठः ।
‡ संवत्सरेण तत्,—इति सो० मू० पुस्तके पाठः ।
§ याचमानस्य,—इति सो० मू० पुस्तके पाठः ।

---

(१) अभिगम्य विनयादिभिराराध्य ।
(२) कृतादीनां प्रत्येकं बहूनामपि भेदस्याविवक्षितत्वादेकवचनम् । अविवक्षितभेदा व्यक्तिरेव हि जातिरित्याख्यायते । यत्रेदमुक्तम् । "अर्थक्रियाकारितया भिन्नास्तु हि व्यक्तयः । ता एव व्यक्तयस्त्यक्तभेदा जातिरुदाहृता" इति । प्रवृत्तितावच्छेदकवत्त्वसंबन्धेनैकत्वस्यान्वयः,—इत्यपि वदन्ति ।

"कृते प्रदीयते गत्वा त्रेतास्वानीयते गृहे ।
द्वापरे च प्रार्थयतः कलावनुगमान्विते" ।

इति ॥

निमित्त-कृतं तारतम्यं दर्शयति,—

**अभिगम्योत्तमं दानमाहूयैव तु* मध्यमम् ।**
**अधमं याचमानाय†सेवा-दानन्तु निष्फलम् ‡ ॥२९ ॥**

इति । उत्तमत्वाद्यवान्तर-विशेषः पुराण-सारे फल-द्वारेणोपपादितः,—

"गत्वा यत् दीयते दानं तदनन्त-फलं स्मृतम् ।
सहस्र-गुणमाहूय याचितन्तु तदर्द्धकम् ।
अभिगम्य तु§ यद्दानं यद्वा दानमयाचितम्‖ ।
विद्यते सागरस्यान्तस्तस्यान्तो नैव विद्यते" ।

इति ।

कलि-धर्माणामस्मिन् ग्रन्थे प्राधान्येन वक्ष्यमाणत्वात् कलि-सामर्थ्यं विशेषतः प्रपञ्चयति,—

---

* माहूतश्चैव,—इति मु० मू० सो० मू० पुस्तकयोः पाठः ।
† अधमं याच्यमानं स्यात्,—इति मु० मू० पुस्तके, कनिष्ठं याचमानं स्यात्,—इति सो० मू० पुस्तके पाठः ।
‡ सेवया निष्फलं भवेत्,—इति सो० मू० पुस्तके पाठः ।
§ अभिगम्यन्तु,—इति स० सो० पुस्तकयोः पाठः ।
‖ दानेष्वयाचितम्,—इति मु० पुस्तके पाठः ।

*जितोधर्म्मोह्यधर्म्मेण सत्यञ्चैवानृतेन च† ।
जिताश्चोरैस्तु‡ राजानः स्त्रीभिश्च पुरुषाः कलौ§ ॥ ३० ॥
सीदन्ति चाग्निहोत्राणि गुरु-पूजा प्रणश्यति ।
कुमार्य्यश्च प्रसूयन्ते तस्मिन् कलि-युगे सदा‖ ॥ ३१ ॥

इति । अधर्मस्य जयोनाम, पाद-त्रयोपेतत्वम्(१) । एकेन पादेन वर्त्तमानत्वम् धर्म्मस्य पराजयः । तदाह वृहस्पतिः,—

"तिष्येऽधर्मस्त्रिभिः पादैर्धर्म्मः पादेन संस्थितः" ।

इति । सत्यानृतयोर्धर्म्माधर्म्म-रूपत्वेऽपि पृथगुपादानं धर्म्माधर्म्मावुदाहृत्य प्रदर्शनार्थम् । यावत् यावत् कलिर्व्विवर्द्धते, तावत्तावदधर्म्मो-विवर्द्धते,—इति विवक्षया चोराद्युदाहरण-बाहुल्यम्(२) ।
तदुक्तं विष्णुपुराणे,—

"यदा यदा सतां हानिर्व्वेद-मार्गानुसारिणाम् ।
तदा तदा कलेर्व्वृद्धिरनुमेया विचक्षणैः ।

* जित इत्यादि श्लोकात् पूर्व्वम्,—'क्षते चास्थिगताः प्राणाः' इत्यादि वक्ष्यमाणः श्लोकः पठ्यते मूलपुस्तकद्वये ।
† जितः सत्योऽनृतेन च,—इति मु० मू० पुस्तके पाठः ।
‡ चौरैस्तु,—इति स० सो० पुस्तकयोः, भृत्यैस्तु,—इति मु० मू० पुस्तके पाठः ।
§ जिताः,—इति मु० मू०, सो० म० पुस्तकयोः पाठः ।
‖ अस्मिन् कलियुगे तथा,—इति सो० मू० पुस्तके पाठः ।

(१) पादश्चतुर्थांशः ।
(२) तथाच, इदमपि उदाहरणप्रदर्शनार्थमेवेतिभावः ।

न प्रीतिर्व्वेद-वादेषु पाषण्डेषु दया-रसः* ।
तदा तदा कालेर्व्वृद्धिरनुमेया द्विजोत्तमैः" ।

इति ॥

यदुक्तम्,—'तपः परं कृत-युगे'—इत्यादि, तत्र, हेतुमाह,—

†कृते त्वस्थि-गताः प्राणास्त्रेतायां मांसमाश्रिताः‡ ।
द्वापरे रुधिरञ्चैव§ कलौ त्वन्नादिषु स्थिताः‖ ॥ ३२ ॥

इति । 'प्राण' शब्दोवायु-विशेषं वृत्ति-पञ्चकोपेतं हृदयादि-स्थान-निवासिनमाचष्टे । प्राण-स्वरूपञ्च मैत्रेय-शाखायां विस्पष्टं श्रूयते । "प्रजापतिर्व्वाएकोऽग्रेऽतिष्ठत्, स नारमतैकः, स आत्मानमभिध्यायन् बह्वीः प्रजाअसृजत, ताअश्मेवाप्रबुद्धाअप्राणाः स्थाणुरिव सन्तिष्ठमाना अपश्यत्, स नारमत, सोऽमन्यत; एतासां प्रतिवोधनायाभ्यन्तरं विशानि,—इति, स वायुमिवात्मानं कृत्वाऽभ्यन्तरं प्राविशत्, स एकोनाशक्यत्, पञ्चधाऽऽत्मानं प्रविभज्योच्यते; यः प्राणोऽपानः समानउदानोव्यानः,—इति, अथ योऽसमूर्द्ध्वमुत्क्रामयति एषवाव स प्राणः, अथ योऽयमवाञ्चं संक्रामति एषवाव सोऽपानोऽथ योऽयं

* दया रतिः,- इति स० सो० पुस्तकयोः पाठः ।

† अयं श्लोकः, 'जितोधर्म्मोह्यधर्म्मेण'—इत्यादि श्लोकात् पूर्व्वं पठ्यते मू० पुस्तकद्वये ।

‡ मांससंस्थिताः,—इति मु० मू० पुस्तके पाठः ।

§ द्वापरे रुधिरं यावत्,—इति मु० मू० पुस्तके, द्वापरे त्वग्गताः प्राणाः,—इति सो० मू० पुस्तके पाठः ।

‖ कलावन्नादिषु स्थिताः,—इति मु० मू० पुस्तके, कलौ रक्तगताः स्मृताः,—इति सो० मू० पुस्तके पाठः ।

स्थविष्ठमन्न-धातुमपाने स्थापयति अणिष्ठश्चाङ्गे समं नयति एषवाव समानोऽथ योऽयं पीताशितमुद्गिरति निगरति एषवाव सउदानोऽथ ये नैताः शिरा* अनुव्याप्ताएषवाव स व्यानः,—इति । अश्मेव पाषाणवदित्यर्थः । वाक्-चक्षुरादीनीन्द्रियाण्यपि प्राणाधीन-व्यापारत्वात् प्राण-शब्देन व्यवह्रियन्ते । अतएव छन्दोगाश्चामनन्ति;—"न वै वाचोन चक्षूंषि न श्रोत्राणि न मनांसीत्याचक्षते प्राणइत्येवाचक्षते"—इति । तस्मात् —इन्द्रिय-वायु-समुदाय-रूपं लिङ्ग-शरीरं लोकान्तर-गमन-क्षमं(१) प्राण-शब्देन विवक्षितम् । तच्च, अस्थि-मांसादि-मये स्थूल-शरीरे कर्म्म-रज्जुभिर्व्विबध्यते । तच्च बन्धनं तत्तद्युगसामर्थ्यादस्थ्यादिषु व्यवतिष्ठते । तथा च, कृच्छ्र-चान्द्रायणादिषु अन्नाद्याहार-परित्यागात् † मांसाद्युपचयेऽप्यस्थ्नां सहसाऽनुपचयात् प्राणानामव्याकुलतेति कृत-युगे तपः सुकरम् । त्रेतादिषु मांसाद्युपचयेण प्राणानां व्याकुलत्वात् तपोदुष्करम् ।

---

* सिरा,—इति मु० पुस्तके पाठः ।

† कृच्छ्रचान्द्रयणाद्यर्थमाहारपरित्यागात्,—इति स० सो० पुस्तकयोः पाठः ।

---

(१) व्यापकस्यात्मनः लोकान्तरगमनादिलक्षणा क्रिया न सम्भवति, तस्मात् लिङ्गशरीरलोकान्तरगमनादिनैव तस्य लोकान्तरगमनादिव्यपदेशः । उक्तञ्च, "पञ्चप्राणमनोबुद्धिदशेन्द्रियसमन्वितम् । अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनम्"—इति । शरीरं तावत् त्रिविधं लिङ्गशरीरापरपर्य्यायंसूक्ष्मशरीरमेकम् । स्थूलशरीरमपरं परिदृश्यमानम् । अन्यच्च कारणशरीरमविद्यारूपमित्येकेषां दर्शनम्, अधिष्ठानशरीरं स्थूलभूतानान्तरभेदसूक्ष्मभूतमयमित्यन्येषाम् । इह च प्रथमोक्तशरीरद्वयस्योपयोगइति मन्तव्यम् ।

यद्यपि, प्राणानां मांसाद्याश्रयेण ज्ञानादिषूपकार-विशेषोदुर्लभः, तथापि, तपसोऽसम्भवं वक्तुं तद्वर्णनम्[1]। अतएव, कूर्म्मपुराणे, युगान्तराभिप्रायेण तपोऽन्तरं वर्णितम्,—

"अहिंसा सत्य-वचनमानृशंस्यं दमोघृणा[2]।
एतत्तपोविदुर्धीरान शरीरस्य शोषणम्"।

इति॥

इदानीं युग-सामर्थ्य-वर्णनस्य प्रयोजनमाह,—

**युगे युगे च ये धर्म्मास्तत्र तत्र च* ये द्विजाः।**
**तेषां निन्दा न कर्त्तव्या युग-रूपा हि ते द्विजाः॥३३॥**

इति। 'युग-रूपाः' युगानुरूपाः, काल-पर-तन्त्राः,—इति यावत्। तदुक्तमारण्य-पर्व्वणि,—

"भूमिर्नद्योनगाश्चैते† सिद्धादेवर्षयस्तथा।
कालं समनुवर्त्तन्ते तथा भावायुगे युगे।

---

* तेषु तेषु च,—इति सो० मू० पुस्तके पाठः।
† नगाः शैलाः,—इति स० सो० पुस्तकयोः पाठः।

---

(१) यथा कृतयुगधर्म्मे तपसि प्राणानामस्थिगतत्वमुपयुज्यते, तथा त्रेतादि-युगधर्म्मेषु ज्ञानादिषु तेषां मांसादिगतत्वं नोपयुज्यते इत्याशङ्कार्थः। ज्ञानादिष्वनुपयोगेऽपि तपआदीनामसम्भवे तदुपयोगोऽस्त्येवेतिनास-ङ्गतिरिति सिद्धान्तार्थः।
(२) आनृशंस्यमनैष्ठुर्य्यम्, दमइन्द्रियनिग्रहः। घृणा दया।

कालं कालं समासाद्य नराणां नर-पुङ्गवाः! ।
बल-वर्ण-प्रभावा हि* प्रभवन्त्युद्भवन्ति च" ।

इति ॥ नन्वेवं कलौ पापिनामनिन्द्यत्वात् कृत्स्नं धर्माधर्म-व्यवस्थापक-शास्त्रं विप्लवेत । तथा हि;—'जितोधर्मोह्यधर्मेण'—इति यदुक्तम्, तच, "धर्मं चर"—इति श्रूयमाणोविधिः पीड्येत;

"नास्ति सत्यात् परोधर्मोनानृतात् पातकं परम् ।
स्थितिर्हि सत्ये धर्मस्य तस्मात् सत्यं न लोपयेत्" ।

इति राज-धर्मेषूक्तम्, तच्च, अनृतस्यानिन्द्यत्वे बाध्येत;

"अदण्ड्यान् दण्डयन् राजा दण्ड्यांश्चैवाप्यदण्डयन् ।
अयशोमहदाप्नोति नरकञ्चैव गच्छति" ।

इति वचनं चोरस्यानिन्द्यत्वे बाध्येत;

"स्त्रीभिर्भर्त्तृर्वचः† कार्य्यमेष धर्म्मः परः स्त्रियाः" ।

इति याज्ञवल्क्योक्तिः;

"भर्त्तारं लङ्घयेद् या तु जाति-स्त्री-गुण-दर्पिता ।
तां श्वभिः खादयेद्राजा संस्थाने बहुसंस्थितः‡" ।

इति मनूक्तिः;

"परित्याज्या त्वया भार्य्या भर्त्तुर्वचन-लङ्घिनी ।
तत्र दोषान चाप्नोति त्वं हि वेत्थ यथातथम् ।
सर्व्व-लक्षण-युक्तापि या तु भर्त्तुर्व्यतिक्रमम् ।

---

* बलवर्णप्रभावा हि,—इति स० सो० पुस्तकयोः पाठः ।
† भर्त्तृवचः,—इति स० सो० पुस्तकयोः पाठः ।
‡ संस्थितः,—इति मु० पुस्तके पाठः ।

करोति स परित्याज्येत्येष धर्म्मः सनातनः"।

इति ब्रह्मपुराणे महर्षीणामुक्तिः; तदिदमुक्ति-त्रयं स्त्री-जितस्य* अनिन्द्रायां बाधितं स्यात्; अच्छिद्र-काण्डे अग्निहोत्र-प्रायश्चित्तं बहुधा श्रुतम्; आश्वमेधिके पर्व्वणि चैतदाम्नातम्,—

"होतव्यं विधिवद्राजन्! ऊर्द्ध्वामिच्छन्ति ये गतिम्।
आ-जन्म-सत्रमेतत् स्यादग्निहोत्रं युधिष्ठिर!
न त्याज्यं क्षणमप्येतद्गृहीतव्यं† द्विजातिभिः‡।
यद्वैतस्यां§ पृथिव्यां हि किञ्चिदस्ति चराचरम्।
तत् सर्व्वमग्निहोत्रस्य कृते सृष्टं स्वयम्भुवा।
नावबुध्यन्ति ये चैतन्नरास्तु तमसाऽऽवृताः।
ते यान्ति नरकं घोरं रौरवं नाम विश्रुतम्"।

इति; तदेतत्‖ श्रुति-द्वयमग्निहोत्रावसादस्यानिन्द्रायां बाध्येत;

"गुरोरनिष्टाचरणं गुरोरिष्ट-विवर्ज्जनम्।
गुरोश्च सेवाऽकरणं ज्ञानानुत्पत्ति-कारणम्।
आचार्य्य-निन्दा-श्रवणं तद्बाधस्य च दर्शनम्(१)।
विवादश्च तथा तेन ज्ञानानुत्पत्ति-कारणम्"।

* स्त्रीविजयस्य,—इति मु० पुस्तके पाठः।
† अत्र, गृहीतव्यम्,—इत्यशुद्धः पाठः सर्व्वेष्वेव पुस्तकेषु।
‡ द्विजादिभिः,—इति मु० पुस्तके पाठः।
§ यच्चैतस्यां,—इति मु० पुस्तके पाठः।
‖ तदेतत्—इति मु० पुस्तके नास्ति।

(१) बाधो बन्धनादि दुःखम्।

इति स्कान्द-पुराण-वचनम्, एतच्च गुरु-पूजा-प्रणाशस्य* अनिन्द्यायां नाध्येत ;

"प्राप्ते तु द्वादशे† वर्षे यः कन्यां न प्रयच्छति ।
मासि मासि रजस्तस्याः पिता पिबति शोणितम्" ।

इति यम-वचनम्,

"पितुर्गेहे तु या कन्या रजः पश्यत्यसंस्कृता ।
भ्रूण-हत्या पितुस्तस्याः सा कन्या वृषली स्मृता" ।

इति वचनम्,‡ तदुभयं कुमारी-प्रसवस्यानिन्द्यायां बाध्येत । ततः कथमनिन्द्या ? इत्यत आह,—

**युगे युगे तु सामर्थ्यं§ शेषं मुनि-वि-भाषितम्॥ ।**
**पराशरेण चाप्युक्तं प्रायश्चित्तं विधीयते¶ ॥ ३४ ॥**

इति । 'शेषम्' अवशिष्टं तत्तद्युग-सामर्थ्यं मुनिभिरन्यैर्विशेषेण भाषितम् । तथा चारण्य-पर्व्वणि पठ्यते,—

"कृतं नाम युगं श्रेष्ठं यत्र धर्म्मः सनातनः ।
कृतमेव न कर्त्तव्यं तस्मिन् काले युगोत्तमे ।

---

* गुरुशुश्रूषा प्रणाशस्य,—इति मु० पुस्तके पाठः ।
† प्राप्ते द्वादशमे,—इति स० से० पुस्तकयोः पाठः ।
‡ वचनम्,—इति मु० पुस्तके नास्ति ।
§ युगसामर्थ्यविप्रेषु,—इति से० मू० पुस्तके पाठः ।
|| मुनिभिर्भाषितम्,—इति मु० मू० पुस्तके पाठः ।
¶ प्रधीयते,—इति मु० मू० पुस्तके पाठः ।

न तत्र धर्म्माः सीदन्ति न जीर्य्यन्ते च वै प्रजाः ।
ततः कृतयुगं नाम कालेन गुणतां गतम् ।
कृते युगे चतुष्पादश्चातुर्वर्ण्यश्च शाश्वतम् ।
एतत् कृतयुगं नाम त्रैगुण्य-परिवर्ज्जितम्* ।
पादेन त्वसतेऽधर्म्मोरक्ततां याति चाच्युतः ।
ज्ञान-प्रवृत्ताश्च नराः क्रिया-धर्म्म-परायणाः ।
ततोयज्ञाः प्रवर्त्तन्ते धर्म्माश्च विविधाः क्रियाः ।
स्व-धर्म्म-स्थाः क्रियावन्तो जनास्त्रेता-युगेऽभवन् ।
विष्णुः पीतत्वमायाति चतुर्द्धा वेदएवच ।
सत्यस्य भूरि विभ्रंशः सत्ये कश्चिदवस्थितः† ।
सत्यात् प्रच्यवमानानां व्याधयोवहवोऽभवन् ।
कामाश्चोपद्रवाश्चैव तथा दैवत-कारिताः ।
काम कामाः ह्यर्थ-कामायज्ञांस्तन्वन्ति चापरे ।
एवं द्वापरमासाद्य प्रजाः चीयन्त्यधर्म्मतः ।
पादेनैकेन कौन्तेय! धर्म्मः कलि-युगे स्थितः ।
वेदाचाराः प्रशाम्यन्ते धर्म्मोयज्ञ-क्रियास्तथा ।
आधयोव्याधयस्तन्द्री-दोषाः क्रोधादयस्तथा(१)" ।

इति । तत्रैव,—

---

* इदं श्लोकार्द्धं मु० पुस्तके नास्ति ।

† सत्येनास्त्येव विभ्रंशोसत्ये कश्चिदवस्थितः,—इति मु० पुस्तके पाठः ।

---

(१) आधिर्मानसी व्यथा । व्याधिः प्रसिद्धएव । तन्द्री निद्राप्रमीलयोरिति-कोषः ।

"ब्राह्मणाः क्षत्रियावैश्याः संगिरन्ते* परस्परम् ।
शूद्र-तुल्याभविष्यन्ति तपः-सत्य-विवर्ज्जिताः ।
स्वभावात् क्रूर-कर्म्माणश्चान्योन्यम् अविशङ्किताः† ।
भवितारोनराः सर्व्वे संप्राप्ते युग-संक्षये" ।

इत्यादि । ब्रह्म-पुराणेऽपि,—

"दीर्घ-कालं ब्रह्म-चर्य्यं धारणञ्च कमण्डलोः ।
गोत्रान्मातृ-सपिण्डात्तु‡ विवाहोगो-वधस्तथा ।
नराश्व-मेधौ मद्यञ्च कलौ वर्ज्यं द्विजातिभिः" ।

क्रतुरपि,—

"देवराच्च सुतोत्पत्तिर्दत्ता कन्या न दीयते ।
न यज्ञे गो-वधः कार्य्यः कलौ न च कमण्डलुः" ।

इति । पुराणेऽपि,—

"ऊढ़ायाः पुनरुद्वाहं ज्येष्ठांशं गो-वधन्तथा ।
कलौ पञ्च न कुर्व्वीत भ्रातृ-जायां कमण्डलुम्" ।

इति । तथा, अन्येऽपि धर्म्मज्ञ-समय-प्रमाणकाः§ सन्ति,—

"विधवायां प्रजोत्पत्तौ देवरस्य नियोजनम् ।
बालिका-ऽक्षतयोन्योश्च वरेणान्येन संस्कृतिः ।
कन्यानामसवर्णानां विवाहश्च द्विजातिभिः ।

---

* संगिरन्तः,—इति मु० पुस्तके पाठः ।
† अभिशङ्किताः,—इति स० सो० पुस्तकयोः पाठः ।
‡ सपिण्डान्वा,—इति ग्रन्थान्तरे पाठः ।
§ धर्म्मज्ञप्रमाणकाः—इति स० सो० पुस्तकयोः पाठः ।

(१)आततायि-द्विजाग्र्याणां धर्म्म-युद्धेन हिंसनम् ।
द्विजस्याब्धौ तु निर्याणं* शोधितस्यापि संग्रहः(२) ।
सत्र-दीक्षा च सर्व्वेषां कमण्डलु-विधारणम् ।
महाप्रस्थान-गमनं गो-संज्ञप्तिश्च गो-सवे(३) ।
सौत्रामण्यामपि सुरा-ग्रहणस्य च संग्रहः(४) ।
अग्निहोत्र-हवन्याश्च लेहोलीढ़ा-परिग्रहः†(५) ।
वान-प्रस्थाश्रमस्यापि प्रवेशोविधि-चोदितः ।
. वृत्त-स्वाध्याय-सापेक्षमघ-सङ्कोचनन्तथा(६) ।

---

* द्विजस्याब्धौ तु नौ-यातुः,—इति निर्णयसिन्धौ पाठः ।
† लीढ़ालेह्या परिग्रहः,—इति मु० पुस्तके पाठः ।

---

(१) आततायिनश्च,—"अग्निदोगरदश्चैव शस्त्रपाणिर्धनापहः । क्षेत्र-दारापहारी च षड़ेते आततायिनः"—इति स्मृत्युक्ताः ।

(२) द्विजानां समुद्रयात्रा, समुद्रयात्रायां कृतायां प्रायश्चित्तशोधितस्यापि संग्रहो व्यवहारः ।

(३) गोसंज्ञप्तिर्गोवधः । गोसवोयागविशेषः ।

(४) सुराग्रहणां सुराग्रहः । (ग्रहः पात्रविशेषः)। तद्ग्रहणञ्च, "सुराग्रहं गृह्णाति"—इत्यादिना सौत्रामन्यां विहितः । सुराग्रहणस्य तत्कर्त्तुः संग्रहः इति वाऽर्थः ।

(५) अग्निहोत्रं हूयते यया, सा अग्निहोत्रहवनी वैकङ्कतस्रुक् । तस्या अग्निहोत्रहवन्याहुतावग्निष्ठशाम्यनार्थं लेहनं लीढ़ायाश्च तस्याः परिग्रहः ।

(६) वृत्तमग्निहोत्रादि, स्वाध्यायोवेदाध्ययनम् । तत्सापेक्षमशौचसङ्कोचः,—"एकाहात् शुध्यते विप्रोयोग्निवेदसमन्वितः"—इत्यादिना विहितः ।

प्रायश्चित्त-विधानञ्च विप्राणां मरणान्तिकम् ।
संसर्ग-दोषः स्तेनाद्यैर्महापातक-निष्कृतिः[१] ।
वरातिथि-पितृभ्यश्च पशूपाकरण-क्रिया[२] ।
दत्तौरसेतरेषान्तु पुत्रत्वेन परिग्रहः ।
सवर्णान्याङ्गना-दुष्टौ* संसर्गः शोधितैरपि ।
अयोनौ संग्रहे वृत्तौ† परित्यागोगुरु-स्त्रियाः[३] ।
अस्थि-सञ्चयनादूर्द्धमङ्ग-स्पर्शनमेव च[४] ।
शामित्रं‡ चैव विप्राणां[५] सोम-विक्रयणं तथा ।
षड्भक्तानशनेनान्न-हरणं हीन-कर्म्मणः[६] ।

---

* सवर्णानां तथा दुष्टौ,—इति मु० पुस्तके पाठः ।
† अयोनौ संग्रहेवित्ते,—इति मु० पुस्तके पाठः ।
‡ सामित्रं,— इति स० सो० पुस्तकयोः पाठः ।

---

(१) संसर्गदोषस्तेयान्यमहापातकनिष्कृतिः,—इति निर्णयसिन्धौ पठितं व्याख्यातञ्च; संसर्गदोषस्तेयेतरमहापातकत्रये ब्रह्महत्या-सुरापान-गुरुतल्पगमनरूपे ज्ञानकृते या निष्कृतिर्मरणरूपेति ।

(२) उपाकरणमभिमन्त्रणपूर्व्वकहननं तच्च गृह्योक्ते मधुपर्काख्यकर्म्मणि वरातिथये विहितम् । पितृभ्यश्चाष्टकादौ विहितम् ।

(३) अयोनौ शिष्यादौ । "चतस्रस्तु परित्याज्याः शिष्यगा"—इत्यादिना तत्परित्यागोविहितः ।

(४) अस्थिसञ्चयनं मरणाच्चतुर्थाहादौ विहितम् । अङ्गस्पर्शश्च तदुत्तरं विहितः ।

(५) शामित्रं यागे विहितम् शमितुः ऋत्विग्विशेषस्य कर्म्म ।

(६) अन्नाभावात् षड्भक्तमनश्नतः "बुभुक्षितस्त्र्यहं स्थित्वा धान्यमब्राह्मणाद्धरेत्"—इत्यादिना अन्नहरणं विहितम् ।

शूद्रेषु दास-गोपाल-कुलमित्रार्द्ध-सीरिणाम् ।
भोज्यान्नता, गृहस्थस्य-तीर्थ-सेवाऽति दूरतः ।
शिष्यस्य गुरु-दारेषु गुरुवद्वृत्तिरीरिता*(१) ।
आपद्वृत्तिर्द्विजाग्र्याणामश्वस्तनिकता तथा(२) ।
प्रजार्थन्तु द्विजाग्र्याणां प्रजाऽरणि-परिग्रहः(३) ।
ब्राह्मणानां प्रवासित्वं मुखाग्नि-धमन-क्रिया(४) ।
बलात्कारादि-दुष्ट-स्त्री-संग्रहोऽविधि-चोदितः(५) ।
यतेस्तु सर्व्व-वर्णेभ्यो† भिक्षा-चर्य्या विधानतः ।

---

* गुरुवद्वृत्तिशीलता,—इति निर्णयसिन्धौ पाठः ।
† यतेस्तु सर्व्ववर्णेषु,—इति निर्णयसिन्धौ पाठः ।

---

(१) नैष्ठिकब्रह्मचारिणोगुरौ परेते गुरुदारेषु गुरुवद्वृत्तिर्मन्वादिभिः कथिता ।

(२) आपदि सर्व्वतः प्रतिग्रहोऽनन्तरवृत्तिश्च ब्राह्मणानां विहिता । अश्वस्तनिकता एकदिनमात्रनिर्व्वाहोचितधनत्वम् । श्वोभवं श्वस्तनं तदस्य पुरुषस्यास्ति,—इति मत्वर्थीयष्ठकः । पश्चात् नञ समासः । अश्वस्तनिकत्वञ्च ब्राह्मणस्य "अश्वस्तनिकएव वा"—इति मन्वादिभिर्व्विहितम् ।

(३) जातकर्म्महोमे सन्ततिजीवनार्थमरणिपरिग्रहः कस्याञ्चिच्छाखायामुक्तः ।

(४) दारेष्वग्निं निक्षिप्य साग्निकानां प्रवासः कर्म्मप्रदीपादौ विहितः "निःक्षिप्याग्निं स्वदारेषु परिकल्प्य द्विजं तथा प्रवसेत् कार्य्यवान् विप्रः"—इत्यादिना । तस्यैवात्र "ब्राह्मणानां प्रवासित्वम्"—इत्यनेन परामर्शः । मुखाग्निधमनञ्च, "मुखेनैके धमन्त्यग्निम्"—इत्यनेन विहितम् ।

(५) बलात्कारादिदुष्टस्त्रीसंग्रहश्च, "बलात् प्रमथ्य भुक्ता चत्"—इत्यादिना विहितः ।

नवोदके दशाहञ्च दक्षिणा गुरु-चोदिता(१) ।
ब्राह्मणादिषु शूद्रस्य पचनादि-क्रियापि च ।
भृग्वग्नि-पतनाद्यैश्च वृद्धादि-मरणन्तथा(२) ।
गो-तृप्ति-शिष्टे पयसि शिष्टैराचमन-क्रिया ।
पितापुत्र-विरोधेषु साक्षिणां दण्ड-कल्पनम् ।
यत्र-सायं-गृहत्वञ्च* सूरिभिस्तत्त्व-तत्-परैः†(३) ।
एतानि लोक-गुप्त्यर्थं(४) कलेरादौ महात्मभिः ।
निवर्त्तितानि कर्म्माणि व्यवस्था-पूर्व्वकं बुधैः ।
समयश्चापि(५) साधूनां प्रमाणं वेदवद्भवेत् ।

इति । (६)तदुक्तमापस्तम्बेनापि,—"धर्म्मज्ञ-समयः प्रमाणं वेदाश्च"—इति । एवमन्यदप्युदाहार्य्यम् । यथा, मुनिभिस्तत्तत्-युग-सामर्थ्यं विधि-निषेधाभ्यां विशेषेण भावितम्, तथा, विहितातिक्रम-निषिद्धाचरणयोः प्रायश्चित्तमपि चिरन्तनेन पराशरेणोक्तम् । पठ्यन्ते हि वृद्ध-पराशरस्य वचनानि,—

---

* यतेः सायं गृहस्थत्वं,—इति मु० पुस्तके पाठः ।
† तत्त्वदर्शिभिः,—इति निर्णयसिन्धौ पाठः ।

---

(१) नवोदके दशाहञ्च,—"दशाहेनैव शुध्येत भूमिष्ठञ्च नवोदकम्"—इत्यादिनोक्तम् । "गुरवे वरं दत्त्वा"—इत्याद्युक्ता दक्षिणा ।
(२) एतच्च,—"वृद्धः शौचस्मृते लुप्तः प्रत्याख्यातभिषक्क्रियः । आत्मानं घातयेद्यस्तु"—इत्यादिना विहितम् । भृगुश्चदेशः ।
(३) "यत्रसायंगृहोमुनिः"—इत्यनेन विहितं यत्रसायंगृहत्वम् ।
(४) गुप्तिः रक्षा ।
(५) समयः सम्वित् प्रतिज्ञा इति यावत् ।
(६) साधूनां समयस्य प्रमाणत्वमापस्तम्बेनाप्युक्तम् इत्यर्थः ।

"जरायु-जाण्ड-जाश्चैव जीवाः संखेद-जाश्च ये।
अवध्याः सर्व्व एवैते बुधैः समनुवर्णितम्।
निश्चयार्थं विशुद्धानां प्रायश्चित्तं विधीयते।
अनस्थि-शतमेकन्तु* यदि प्राणैर्व्वियोजयेत्।
उपोष्यैकाहमादध्यात् प्राणायामांस्तु षोड़श†।
त्रि-स्नानमुदके कृत्वा तस्मात् पापात् प्रमुच्यते।
अस्थिमद्वधेतु‡ द्विगुणं प्रायश्चित्तं विधीयते।
अनेन विधिना वाऽपि स्थावरेषु नसंशयः।
कायेन पद्भ्यां हस्ताभ्यामपराधाद्विमुच्यते।
चतुर्गुणं कर्म्म-कृते द्विगुणं वाक-प्रदूषिते§।
कृत्वा तु मानसं पापं तथैवैक-गुणं स्मृतम्"।

इति। 'च'कारो याज्ञवल्क्य-मन्वादि-समुच्चयार्थः। प्रसिद्धा हि तदीय-ग्रन्थेषु प्रायश्चित्ताध्यायाः। पराशर-ग्रहणन्तु कलि-युगाभिप्रायम्। सर्व्वेष्वेव कल्पेषु पराशर-स्मृतेः कलि-युग-धर्म्म-पक्ष-पातित्वात् प्रायश्चित्तेष्वपि कलि-युग-विषयेषु पराशरः प्राधान्येनादरणीयः। अतः, पराशर-मन्वादि-प्रोक्तं प्रायश्चित्तं तत्तत्-पाप-परिहाराय विद्वत्-परिषदा विधीयते। एतदुक्तं भवति,—नाना-मुनिभिस्तत्तद्-युग-सामर्थ्यस्य प्रायश्चित्तस्य प्रपञ्चितत्वात् तदुभयं पर्य्यालोच्य

---

* अनस्थिमत्स्यमेकन्तु,—इति मु० पुस्तके पाठः।
† द्वादश,—इति स० सो० पुस्तकयोः पाठः।
‡ अस्थिबन्धेषु,—इति मु० पुस्तके पाठः।
§ वाक्यदूषिते,—इति स० सो० पुस्तकयोः पाठः।

निन्दाऽनिन्दयोः* व्यवस्था कल्पनीया । यः पुरुषोयुग-सामर्थ्यमनुसृत्य† विहितानुष्ठानं प्रतिषिद्ध-वर्ज्जनं प्रमाद-कृत-पापस्य प्रायश्चित्तञ्च कर्त्तुं शक्तोऽपि न कुर्य्यात्, तद्विषयाणि,—

"भ्रूण-हत्या पितुस्तस्य‡ सा कन्या वृषली स्मृता" ।

इत्यादि-निन्दा-वचनानि; अशक्त-विषयं 'तेषां निन्दा न कर्त्तव्या'— इत्यादि वचनम् । अतएव शैवागमे§ पठ्यते,—

"अत्यन्त-रोग-युक्तेऽङ्ग राज-चौर-भयादिषु ।
गुर्व्वग्नि-देव-कृत्येषु नित्य-हानौ न पाप-भाक्" ।

इति । तस्मात् न कोऽपि धर्म्माधर्म्म-शास्त्रस्य|| विप्लवः—इति ॥

ननु, उक्त-प्रकारेण युग-सामर्थ्यस्याशेषस्यानेक-ग्रन्थ-परिचयमन्तरेण दुर्व्बोधत्वात् कथं मन्द-प्रज्ञानामकल्पायुषां युग-सामर्थ्यानुसारिणश्चातुर्व्वर्ण्य-समाचारस्य निर्णयः ? इत्यत आह,—

---

* निन्द्यानिन्द्ययोः,—इति स० सो० पुस्तकयोः पाठः ।
† युगसामर्थ्यमनुसृत्य,—इति स० सो० पुस्तकयोः पाठः ।
‡ इत्थमेव सर्व्वत्र पाठः । ग्रन्थान्तरे तु "पितुस्तस्याः"—इति पाठः ।
§ सौरागमे,—इति स० सो० पुस्तकयोः पाठः ।
|| धर्म्मशास्त्रस्य,—इति स० सो० पुस्तकयोः पाठः ।

---

☞ पूर्व्वपृष्ठायाम्,—(१) 'नन्वेवं कलौ पापिनामनिन्द्यत्वात्'—इत्यादिना सन्दर्भेण भूमिकायां यः पूर्व्वपक्ष उपक्रान्तः, तस्य सिद्धान्तमिदानीमाह एतदुक्तं भवतीत्यादिना ।

**अद्यैवमहं तत् सर्व्वं* मनुस्मृत्य ब्रवीमि वः ।**
**चातुर्व्वर्ण्य-समाचारं शृण्वन्तु मुनि-पुङ्गवाः! † ॥३५॥**

इति । अनुस्मृत्य‡ सर्व्वस्य संकलय्याभिधानात् मन्दानामप्येतत् सुग्रहम् । 'अद्यैव'—इति काल-विलम्ब-निषेधात् अल्पायुषामप्यत्र ग्रन्थे निर्णयः सुलभः । चत्वारोवर्णाश्चातुर्व्वर्ण्यम्, तस्य समाचारोधर्म्मः । आचार-शब्दः शील-पर्य्यायः लौकिकं वृत्तमाचष्टे[१] । समीचीनः शिष्टाभिमतश्चाचारोयस्य धर्म्मस्य कारणत्वेन वर्त्तते, सोऽयं यजन-याजनादि-कर्म्म-लक्षणोधर्म्मः समाचारः । अतएव, आचार-धर्म्मयो र्हेतु-हेतुमद्रूपेण भेदं वक्ष्यति; 'आचारोधर्म्म-पालकः'—इति । श्रुतिश्च धर्म्माचारौ भेदेन व्यपदिशति;—"यथाकारी यथाऽऽचारी तथा भवति"—इति । श्रुत्यन्तरे च कर्म्म-वृत्तयोर्भेदश्चाम्नायते;—"अथ, यदि ते कर्म्म-विचिकित्सा वा वृत्त-विचिकित्सा वा स्यात्" इति । यद्यपि,—

'शृणु पुत्र! प्रवक्ष्यामि शृण्वन्तु मुनि-पुङ्गवाः!' ।

इत्यप्रमत्तत्वं पूर्व्वमेव विहितम्, तथापि युग सामर्थ्य-प्रपञ्चनेन

---

* तद्धर्म्मं,—इति स० से० मु० मू० पुस्तकेषु पाठः । तत्धर्म्मं, इति से० मू० पुस्तके पाठः ।

† ऋषिपुङ्गवाः,—इति स० से० पुस्तकयोः पाठः ।

‡ अनुस्मृतस्य,—इति स० से० पुस्तकयोः पाठः ।

---

(१) वृत्तं चरित्रम् । लौकिकपदेन, "ब्रह्मण्यता देवपितृभक्तता"—इत्यादि हारीताद्युक्तशास्त्रीयशीलस्य व्यवच्छेदः ।

व्यवहितत्वात् तदेव पुनः स्मार्य्यते। अथ वा, पूर्व्वोक्तं युग-सामर्थ्य-श्रवण-विषयम्, इदन्तु धर्म्म-श्रवण-विषयम्,* इत्यपुनरुक्तिः॥

वक्ष्यमाण-धर्म्म-जातस्य† परम-पुरुषार्थ-हेतुतां कैमुतिक-न्यायेन(१) अभिधातुं ग्रन्थ-पाठ-तदर्थ-ज्ञाने(२) प्रशंसति,—

**पराशर-मतं‡ पुण्यं पवित्रं पाप-नाशनम्।**
**चिन्तितं ब्राह्मणार्थाय धर्म्म-संस्थापनाय च॥ ३६॥**

इति। पराशरेण प्रोक्तं ग्रन्थ-जातं 'पराशर-मतं', तच्च पाठ-मात्रेण पुण्य-प्रदम्। पुण्यञ्च द्विविधम्,—इष्ट-प्रापकमनिष्ट-निवर्त्तकञ्च। तदुभयं 'पवित्र-पापनाशन'-शब्दाभ्यां विवक्ष्यते। तदेव ग्रन्थ-जातं 'चिन्तितम्' अर्थतोविचारितं सत् पूर्व्ववत् पुण्य-प्रदं भवति। अर्थ-विचारस्य प्रयोजनं द्वेधा,—स्वानुष्ठानं परोपदेशश्च। तदुभयं 'ब्राह्मण'—इत्यादि-पद-द्वयेनोच्यते। ब्राह्मणस्यार्थोब्राह्मणार्थनिमित्तं§ स्वधर्म्मानुष्ठानमिति यावत्। 'धर्म्म-संस्थापनम्' परेषां धर्म्मोपदेशः-

---

* इदन्तु श्रवणं धर्म्मविषयम्,—इति मु० पुस्तके पाठः।
† धर्म्मज्ञानस्य,—इति स० सो० पुस्तकयोः पाठः।
‡ पराशर्य्यं मतं,—इति सो० मू० पुस्तके, पाराशरमतं,—इति मु० मू० पुस्तके पाठः।
§ ब्राह्मणार्थोब्राह्मणनिमित्तं,—इति मु० पुस्तके पाठः।

---

(१) कैमुतिकन्यायस्तु,—"समवायश्च यत्रैषां तत्रान्ये बहवोमलाः। नमं सर्व्वे क्षयं यान्ति किमुतैकं नदीरजः"—इति छन्दोगपरिशिष्टवाक्यादुन्नेयः।
(२) द्वितीयाद्विवचनान्तं पदमिदम्।

मानुष्ठापनम्* । यदा, ग्रन्थ-पाठ-तदर्थ-ज्ञानयोरपीदृशोमहिमा, तदा किमु वक्तव्यम्; अनुष्ठानं पुरुषार्थ-हेतुः,—इति[१]। युक्तञ्चैतत्, पराशरस्य पुलस्त्य-वशिष्ठ-प्रसाद-लब्ध-वरेण सर्व्व-शास्त्र-हृदयाभिज्ञत्वात्† । तथा च, विष्णु-पुराणम्,—

"वैरे महति मद्वाक्यात् गुरोरस्याश्रिता क्षमा ।
त्वया, तस्मात् समस्तानि भवान् शास्त्राणि वेत्स्यति‡ ।
सन्ततेर्न समुच्छेदः§ क्रोधेनाऽपि यतः कृतः ।
त्वया, तस्मान्महाभाग ! ददाम्यन्यमहं वरम् ।
पुराण-संहिता-कर्त्ता भवान् वत्स ! भविष्यति ।
देवता-पारमार्थ्यञ्च यथावद्वेत्स्यते भवान् ।
प्रवृत्ते च निवृत्ते च[२] कर्म्मण्यस्त-मला|| मतिः ।
मत्-प्रसादादसन्दिग्धा तव वत्स ! भविष्यति" ।

इत्याचार-काण्डे प्रथमाध्याये आचारावतारः समाप्तः ॥०॥

---

(॥ ग्रन्थानुक्रमणिका समाप्ता ॥)

---

* अत्र, 'ब्राह्मणेत्यादिपदयोरर्थः' इत्यधिकः पाठः स० सो० पुस्तकयोः।

† हृदयाभिज्ञत्वम्, इति मु० पुस्तके पाठः ।

‡ अत्र, 'इति'—इत्यधिकः पाठः मु० पुस्तके । स चासङ्गतः, परवचनानामपि विष्णुपुराणोक्तत्वेन मध्ये 'इति' शब्दस्यायुक्तत्वात् ।

§ समच्छेदः,—इति मु० पुस्तके पाठः ।

|| कर्म्मणि त्वमला,—इति स० सो० पुस्तकयोः पाठः ।

---

(१) तदनेन कैमुतिकन्यायः प्रकृते समर्थितः,—इति मन्तव्यम् ।

(२) कामनापूर्व्वकं क्रियमाणं काम्यं कर्म्म शरीरप्रवृत्तिहेतुत्वात् प्रवृत्तं, ब्रह्मज्ञानाभ्यासपूर्व्वकं क्रियमाणं निष्कामं कर्म्म संसारनिवृत्तिसाधनत्वात् निवृत्तमुच्यते । तदुक्तं मनुना ; "इह चामुत्र वा काम्यं प्रवृत्तं कर्म्म कीर्त्त्यते । निष्कामं ज्ञानपूर्व्वन्तु निवृत्तमुपदिश्यते"—इति ।

स्थाचारोनिरूप्यते। यत् पृष्टम्,—

'चातुर्व्वर्ण्य-समाचारं किञ्चित् साधारणं वद'।

इति, तत्रोत्तरमाह,—

**चतुर्णामपि वर्णानामाचारोधर्म्म-पालकः।**
**आचार-भ्रष्ट-देहानां भवेद्धर्म्मः पराङ्मुखः॥ ३७॥**

इति। आचारस्यान्वय-व्यतिरेकाभ्यामैहिकामुष्मिक-श्रेयोहेतुत्वम्, आचार-लक्षणञ्च, आनुशासनिके पर्व्वण्यभिहितम्,—

"आचाराल्लभते ह्यायु* राचाराल्लभते श्रियम्।
आचारात् कीर्त्तिमाप्नोति पुरुषः प्रेत्य(१) चेह च।
दुराचारोहि पुरुषोनेहायुर्व्विन्दते महत्।
त्रसन्ति† चास्य भूतानि तथा परिभवन्ति च।
तस्मात् कुर्य्यादिहाचारं यदीच्छेद्‡ भूतिमात्मनः।
अपि पाप-शरीरस्य आचारोहन्त्यलक्षणम्।
आचार-लक्षणोधर्म्मः सन्तश्चाचार-लक्षणाः।
साधूनाञ्च यथावृत्तमेतदाचार-लक्षणम्"।

---

* चायु,— इति मु० पुस्तके पाठः।
† न सन्ति,—इति स० पुस्तके पाठः।
‡ यदिच्छेत्, इति मु० स० पुस्तकयोः पाठः।

---

(१) प्रेत्य परलोके।

इति। हारीतोऽपि* स्मरति,—

"साधवः क्षीण-दोषाः स्युः सच्छब्दः साधु-वाचकः।
तेषामाचरणं यत्तु सदाचारः स उच्यते॥

इति। मनुरप्याह—

"तस्मिन्† देशे य आचारः पारम्पर्य्य-क्रमागतः।
वर्णानां सान्तरालानां स सदाचार उच्यते"(१)।

इति‡। सन्तः शिष्टाः। तेषां स्वरूपमाह भगवान् बोधायनः§। "शिष्टाः खलु विगत-मत्सराः निरहङ्काराः कुम्भी-धान्याः(२) अलोलुपाः दम्भ-दर्प-लोभ-मोह-क्रोध-विवर्ज्जिताः"—इति। आरण्य-पर्व्वणि,—

"अक्रुध्यन्तोऽनसूयन्तो निरहङ्कार-मत्सराः।
ऋजवः शम-सम्पन्नाः शिष्टाचारा भवन्ति ते।

---

* हृतोऽपि,—इति मु॰ पुस्तके पाठः।
† यस्मिन्, —इति मु॰ पुस्तके पाठः।
‡ मनुरप्याह- —इत्यादि, 'इति'—इत्यन्तः पाठो नास्ति स॰ सो॰ पुस्तकयोः।
§ बौधायनः,—इति स॰ सो॰ पुस्तकयोः पाठः। एवं सर्व्वत्र।

---

(१) तस्मिन् देशे ब्रह्मावर्त्तदेशे। इदं हि पूर्व्वमुक्तम,—"सरस्वती-दृषद्वत्योर्देवनद्योर्यदन्तरम्। तं देव-निर्म्मितं देशं ब्रह्मावर्त्तं प्रचक्षते"—इति। पारम्पर्य्यक्रमागतो नत्विदानीन्तनः। अन्तरालाः सङ्कीर्णाः।

(२) 'वर्षनिर्व्वाहोचितधान्यादिधनः कुम्भीधान्यः,—इति कुल्लूकभट्टः। 'कुम्भो उष्ट्रिका, षाण्मासिकधान्यादिनिचयः कुम्भीधान्यकः'—इति मेधातिथिः।

त्रैविद्य-वृद्धाः शुचयोवृत्तवन्तोयशस्विनः ।

गुरु-शुश्रूषवोदान्ताः शिष्टाचाराभवन्ति ते" ।

इति । अत्र, शिष्टानामभिमतोदया-दाक्षिण्य-विनयाद्यन्वितोवृत्त-विशेषआचारः,—इत्युक्तं भवति । स आचारः श्रौतं स्मार्त्तञ्च* धर्म्मं पालयति । धर्म्म-विघातिनां नैघृण्य-क्रोधादीनामभावात् । असति त्वाचारे विरोधि-सद्भावात् धर्म्मएव न प्रवर्त्तते, कथञ्चित्† प्रवृत्तो-ऽपि परावर्त्तते । सोऽयं धर्म्म-पालकआचारश्चतुर्णां वर्णानां साधा-रणः । ननु, 'किञ्चित् साधारणं वद,'—इति धर्म्मः पृष्टः प्रत्युत्तर-न्त्वाचार-विषयम्,—इति न सङ्गच्छते,—इति चेत् । न, निमित्त-नैमित्तिकयोराचार-धर्म्मयोरभेदस्य विवक्षितत्वात् ॥

इदानीं ब्राह्मणस्यासाधारणं धर्म्मं दर्शयति,—

**षट्-कर्म्माभिरतोनित्यं देवता-ऽतिथि-पूजकः ।**
**हुत-शेषन्तु भुञ्जानो‡ ब्राह्मणोनावसीदति ॥ ३८ ॥**

इति । यजन-याजनाध्ययनाध्यापन-दान-प्रतिग्रहाः षट् कर्म्माणि । तदाह मनुः,—

"अध्यापनं चाध्ययनं यजनं याजनं तथा ।

दानं प्रतिग्रहश्चापि षट् कर्म्माण्यग्र-जन्मनः" ।

---

* श्रौतं स्मार्त्तञ्च,—इति स० सो० पुस्तकयोर्नास्ति ।

† तत् कथञ्चित्,—इति मु० पुस्तके पाठः ।

‡ भुञ्जीयात्,—इति सो० मू० पुस्तके पाठः ।

इति। अथाध्यापनं कूर्म्म-पुराणे प्रपञ्चितम्,—

"एवमाचार-सम्पन्नमात्मवन्तमदाम्भिकम्।
वेदमध्यापयेद्धर्म्म-पुराणाङ्गानि नित्यशः।
संवत्सरोषिते शिष्ये गुरुर्ज्ञानमनिर्द्दिशन्।
हरते दुष्कृतं तस्य शिष्यस्य वसतोगुरुः।
आचार्य्य-पुत्रः शुश्रूषुर्ज्ञानदोधार्म्मिकः शुचिः।
आप्तः शक्तोऽर्थदः साधुः स्वोऽध्याप्यादश धर्म्मतः[१]।
कृत-ज्ञश्च तथाऽद्रोही मेधावी शुभ-कृन्नरः।
आप्तः प्रियोऽथ विधिवत् षड्ध्याप्याद्विजोत्तमैः"।

इति। विष्णुरप्याह,—"नापरीक्षितं याजयेत् नाध्यापयेत् नोपनयेत्"—

इति। वशिष्ठः,—

विद्या ह वै ब्राह्मणमाजगाम
गोपाय मां शेवधिस्तेऽहमस्मि।
असूयकायानृजवे शठाय
न मां ब्रूयावीर्य्यवती तथा स्याम्"॥

इति। अध्यापने नियममाह यमः,—

"सततं प्रातरुत्थाय दन्त-धावन-पूर्व्वकम्।
स्नात्वा हुत्वा च शिष्येभ्यः कुर्य्यादध्यापनं नरः"।

इति। मनुरपि,—

अध्येष्यमाणन्तु गुरुर्नित्यकालमतन्द्रितः।
अधीष्व भो इति ब्रूयाद्विरामोऽस्त्विति वा रमेत्॥

(१) स्वः ज्ञातिः। तदेते आचार्य्यपुत्रादयो दश अध्याप्याः।

इति। अध्येष्यमाणः शिष्यः, तं प्रति* वेदमुच्चारयिष्यन् प्रतिदिनमध्यापन-प्रारम्भे अतन्द्रितः,—"अधीष्व भोः"—इति ब्रुवन्नारभेत, समाप्तौ "विरामोऽस्तु"—इति ब्रुवन्नुपरमेत; ईश्वर-प्रीतये†। एतत् सर्व्वमभिप्रेत्य श्रुतिराह,—"अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीत"—इति।

अत्र प्रभाकरो मन्यते,—'उपनयीत'—इति नयतेरात्मनेपदस्य आचार्य्य-करणे पाणिनिना सूचितत्वात्(१) उपनयनाध्यापनयोस्त्वाङ्गाङ्गिभावत्वेनैक-कर्तृकत्वात् (२)आचार्य्यत्व-कामोऽध्यापनेऽधिकारी। अत एव मनुना स्मर्य्यते,‡—

"उपनीय तु यः शिष्यं वेदमध्यापयेद्द्विजः।
स-कल्पं स-रहस्यञ्च तमाचार्य्यं प्रचक्षते"॥

इति। एवं चाध्यापन-विधौ सुस्थिते सत्यध्ययनस्य पृथग्विधिर्न कल्पनीयो भविष्यति; विहितस्याध्यापनस्याध्ययनमन्तरेणानुपपत्तेरध्ययनस्यार्थ-सिद्धत्वात्(३)। ननु, नाध्ययन-विधौ कल्पना-दोषोऽस्ति,

* अध्येष्यमाणः शिष्यं प्रति,—इति मु० पुस्तके पाठः।
† ईश्वरप्रीतये,—इति नास्ति शा० पुस्तके।
‡ उपनयीत,—इत्यादि,स्मर्य्यते,—इत्यन्तः पाठः स० सो० पुस्तकयोर्भ्रष्टः।

(१) "सम्माननोत्सञ्जनाचार्य्यकरण-ज्ञान-भृति-विगणन-व्ययेषु नियः" (१अ० ३पा० ३६ सू०) इति पाणिनिसूत्रम्।

(२) "अष्टवर्षं ब्राह्मणमुपनीयत तमध्यापयीत"—इति श्रुत्या तयोरेककर्तृकत्वमवगम्यते। तच्च तयोरङ्गाङ्गिभावमन्तरेण नोपपद्यते। अङ्गाङ्गिभावस्य ह्यभावे इच्छया कश्चित् किञ्चित् कुर्य्यात् कश्चिच्च किञ्चिदिति नैककर्तृकत्वनियमः स्यात्। तथाचोपनयनमङ्गं अध्यापनञ्चाङ्गीति वक्ष्यमाणमनुवचनात् व्यक्तम्।

(३) तथाच, अर्थापत्त्या माणवकस्याध्ययनं लभ्यते, इति भावः।

कृत्स्नस्यैव विधेः सत्त्वात्* "स्वाध्यायोऽध्येतव्यः" इति श्रुतेः। मैवम्, अधिकार्य्यश्रवणेनास्य विधेरनुष्ठापकत्वायोगात्। अथोच्येत,— विश्वजिन्न्यायेन रात्रिसत्र-न्यायेन वाऽधिकारी परिकल्प्यतां;—"विश्वजिता यजेत" इत्यत्र 'एतत्कामः'—† इति [१]नियोज्य-विशेषणस्याश्रवणादनुष्ठानाप्राप्तौ स्वर्गस्य सर्व्वैरिष्यमाणत्वात्[२] सएव[३]तद्विशेषणत्वेन परिकल्पितः, एवमत्र स्वर्गकामोमाणवको‡[४] नियोज्योऽस्तु। रात्रिसत्रे,— "प्रतितिष्ठन्ति ह वै यएतारात्रीरुपयन्ति"* इत्यर्थ-वाद-श्रुतायाः प्रति-

* कल्पनादोषः स्यात्,—इति मु॰ पुस्तके पाठः।

† तत्कामः,— इति मु॰ पुस्तके पाठः।

‡ मानवको,—इति स॰ सो॰ पुस्तकयोर्दन्त्यमध्यः पाठः। एवं परत्र।

* प्रतितिष्ठन्तीह वा एते य एता रात्रोरुपयन्ति,—इति मु॰ पुस्तके पाठः। रुपयन्ति,—इत्यत्र रुपयजन्ति,—इत्यन्यत्र पाठः।

(१) नियुज्योऽधिकारी। कामनावानेव हि काम्ये अधिक्रियते इत्यतः तद्विशेषणीभूतायाः फलकामनायाः परिकल्पना आवश्यकी।

(२) सर्वैरिष्यमाणत्वं फलान्तरमपरिकल्प्य स्वर्गस्य परिकल्पनायां विनिगमकम्। तथाच जैमिनिसूत्रम्। "स स्वर्गः स्यात् सर्वान् प्रत्यविशिष्टत्वात्" (मी॰ ४अ॰ ३पा॰ १५ सू॰) इति। स इति विधेय प्राधान्यविवक्षया पुंसा निर्द्देशः। स्वर्गोनियोज्यविशेषणं स्यात् सर्वान् पुरुषान् प्रति अविशेषात्। "सर्व्वे हि पुरुषाः स्वर्गकामाः। कुतएतत्? प्रीतिर्हि स्वर्गः। सर्व्वश्च प्रीतिं प्रार्थयते"—इति शावरभाष्यम्।

(३) यद्यपि 'काम्यं कामान्वितेन च'—इत्यादि स्मरणात् स्वर्गकामनैव नियोज्यविशेषणं, तथापि स्वर्गकामनायानियोज्यविशेषणत्वे स्वर्गोऽपि तद्विशेषणतया भासते, इत्यभिप्रायेण 'सएव' इत्युक्तम्।

(४) माणवकोऽनधीतवेदोवटुः। 'अन्धोमाणवको ज्ञेयः'—इति स्मरणात्।

छायाः, अत्यन्तमश्रुतात्* स्वर्गतः प्रत्यासन्नतया, प्रतिष्ठाकामोऽधिकारी कल्पितः(१), एवमच, पयः-कुल्यादि-कामोऽधिकारी स्यात्,— "यदृचोऽधीते पयसः कुल्याः अस्य पितॄन् स्वधाअभिवहन्ति, यद्यजूंषि घृतस्य कुल्याः,यत्सामानि सोमएभ्यः पवते"—इत्यर्थवादात्,—इति† । मैवम्, पयः-कुल्यादेर्ब्रह्मयज्ञ-विधि-शेषत्वात्, माणवकस्याप्रवुद्धत्वेन स्वर्गकामत्वाऽसम्भवाच्च(२)। कथञ्चित् सम्भवेऽप्यन्योन्याश्रयत्वं दुर्व्वारम्; अधीते स्वाध्याये पश्चादध्ययन-विध्यवगमः, तदवगमे चाध्ययनम्,—इति। तस्मात्, अध्ययनस्याध्यापन-प्रयुक्तत्वादध्यापनमेव विधीयते नाध्ययनम्(३),—इति ।

तदेतद्गुरु-मतमन्ये वादिनो‡ न क्षमन्ते; अनित्येनाध्यापनेन नित्य-

---

* अत्यन्तमश्रुतत्वात्,—इति स० सो० पुस्तकयोः पाठः ।
† इत्यर्थवादस्तुतिरिति,—स० सो० पुस्तकयोः पाठः ।
‡ मन्यवादिनो,—इति स० सो० पुस्तकयोः पाठः ।

---

(१) अत्र, "फलमात्रेयोनिर्द्देशादश्रुतौ ह्यनुमानं स्यात्" ( मी० ४ अ० ३ पा० १८ सू० ) इति जैमिनिसूत्रम् । रात्रिसत्रादौ अर्थवाद-निर्दिष्टमेव फलं स्यात्, फलस्यात्यन्तमश्रुतौ हि स्वर्गस्यानुमानमित्यात्रेय आचार्य्योमन्यते इति सूत्रार्थः ।

(२) तथाच, न पयः कुल्यादेरध्ययनफलत्वकल्पनसम्भव इति रात्रिसत्र-न्यायस्यानवकाशः । स्वर्गकामनाया असम्भावात् विश्वजिन्न्यायस्याप्य-नवकाशः ।

(३) तथाच अध्यापनविधिनैवाध्ययनस्य लाभेन "स्वाध्यायोऽध्येतव्यः"—इति श्रूयमाणवाक्यं विधित्वासम्भवान्नित्यानुवादएवेति गुरूणां सिद्धान्तः । एतच्च जैमिनीयन्यायमालाविस्तरे स्पष्टम् ।

स्याध्ययनस्य प्रयोक्तुमशक्यत्वात्, अनित्यं चाध्यापनं जीवन-कामस्य(१) तत्राधिकारात्। तदाह मनुः,—

"षस्णान्तु(२) कर्म्मणामस्य त्रीणि कर्म्माणि जीविका।
याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः" ॥

इति। अध्ययनन्तु नित्यम्, अकरणे प्रत्यवायस्य मनुना स्मृतत्वात्;

"योऽनधीत्य द्विजोवेदानन्यत्र* कुरुते श्रमम्।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः" ॥

इति। अतः स्व-विधि-प्रयुक्तमेवाध्ययनम्। न चान्योन्याश्रयः, अध्ययनात् प्रागेव सन्ध्या-वन्दनादाविव पित्रादि-मुखेन विध्यर्थावगमात्, पित्रादिभिर्नियमितत्वादेव माणवकस्य न अप्रबुद्धत्व-दोषोऽस्ति†। यद्यपि, तैत्तिरीय-शाखायाम्,—"स्वाध्यायोऽध्येतव्यः" इति वाक्यस्य पञ्च-महायज्ञ-प्रकरणे पठितत्वाद् ब्रह्मयज्ञ-विधि-रूपता‡, तथाप्यशेष-स्मृतिषपनयन-पूर्व्वकस्याध्ययनस्य प्रपञ्च्यमानत्वान्मूल-भूत-श्रुतिरनुमातव्या§। विवरणकारस्तु,—'अध्यापयीत'—इत्यत्र णिजर्थस्य जीवनार्थत्वेन रागतः प्राप्तत्वात्, प्रकृतस्याध्ययनस्य विधेयतामभिप्रेत्य, "अष्टवर्षोब्राह्मण-उपगच्छेत्सोऽधीयीत"—इति वाक्यं विपरिणमय्य¶ उप-

* वेदमन्यत्र,—इति ग्रन्थान्तरे पाठः।

† पित्रादिनियमितत्वात् एवं माणवकस्य नाप्रबुद्धत्वे दोषोऽपि,—इति मु० पुस्तके पाठः।

‡ ब्रह्मयज्ञविधिरयम्,—इति मु० पुस्तके पाठः।

§ श्रुतिरर्थानुगन्तव्या,—इति स० सो० पुस्तकयोः पाठः।

¶ विपरीतान्योपपादयामास,—इति स० सो० पुस्तकयोः पाठः।

(१) जीवनं जीविका वृत्तिरिति यावत्।

(२) षस्णां यजनयाजनाध्ययनाध्यापनदानप्रतिग्रहरूपाणाम्।

पादयामास[१]। सर्व्वथाप्यस्ति नित्यः स्वाध्यायाध्ययनस्य विधिः—
"स्वाध्यायोऽध्येतव्य" इत्येवमात्मकः श्रौतः। तथा स्मृतिरपि,—

"तपोविशेषैर्विविधैर्व्रतैश्च विधि-चोदितैः।
वेदः क्रत्स्नोऽधिगन्तव्यः स-रहस्यो द्विजन्मना"[२]॥

इति। *अधिगतिरर्थ-विचार-पर्य्यन्तमध्ययनम्। तथा च कूर्म्म-पुराणे, अध्ययन-तदर्थ-विचारयोरभावे प्रत्यवायः स्मर्य्यते,—

"योऽन्यत्र कुरुते यत्नमनधीत्य श्रुतिं द्विजः।
स वै मूढ़ोन सम्भाष्योवेदवाह्योद्विजातिभिः॥
वेदस्य पाठ-मात्रेण सन्तुष्टोवै भवेद्द्विजः।
पाठ-मात्रावसायी तु पङ्के गौरिव सीदति॥
योऽधीत्य विधिवद्वेदं वेदार्थं न विचारयेत्।
स सान्वयः शूद्र-समः पात्रतां न प्रपद्यते"॥

इति। अध्ययनस्येतिकर्त्तव्यतामाह याज्ञवल्क्यः,—

"गुरुञ्चैवाप्युपासीत स्वाध्यायार्थं समाहितः।
आहूतश्चाप्यधीयीत लब्धं चास्मै निवेदयेत्॥
हितं चास्याचरेन्नित्यं मनोवाक्काय-कर्म्मभिः"।

* अधिगमि,—इति स० पुस्तके पाठः।

(१) अध्यापयीत—इत्यत्र णिजर्थोऽध्ययनप्रयोजकत्वं, तच्चाध्यापनपर्य्यवसितं। अध्यापनस्य जीविकार्थत्वन्तु 'सस्मान्तु कर्म्मणामस्य'—इति पूर्व्वोक्त-मनुवचनात् व्यक्तम्। तथाच तस्य जीवनानुकूलव्यापारतया रागतः प्राप्तत्वात् न विधेयत्वं। किन्तु अप्राप्तस्याध्ययनस्यैव। तथाच, 'अष्टवर्षं ब्राह्मणमुपनयीत'—इत्यादिवाक्यं 'अष्टवर्षोब्राह्मणउपगच्छेत्' इत्या-दिविपरिणामेणोपपादनीयमिति विवरणकारस्याशयः।

(२) रहस्यमुपनिषत।

इति। विष्णु-पुराणेऽपि,—

"उभे सन्ध्ये रविं भूप! तथैवाग्निं समाहितः।
उपतिष्ठेत्, तथा कुर्य्याद्गुरोरप्यभिवादनम्॥
स्थिते तिष्ठेद्व्रजेत् याते नीचैरासीत चासने*।
शिष्योगुरोर्नर-श्रेष्ठ! प्रतिकूलं न सञ्चरेत्॥
तेनैवोक्तः पठेद्वेदं नान्य-चित्तः पुरः-स्थितः।
अनुज्ञातश्च भिक्षान्नमश्नीयात् गुरुणा ततः॥
शौचाचारवता तत्र कार्य्यं शुश्रूषणं गुरोः।
व्रतानि[१] चरता ग्राह्योवेदश्च कृत-बुद्धिना"॥

इति। कौर्म्मेऽपि,—

"आहूतोऽध्ययनं कुर्य्याद्वीक्षमाणो गुरोर्मुखम्।
नित्यमुद्धृत-पाणिः स्यात् साध्वाचारः सुसंयतः"॥

इति। स्व-कुल-परम्पराऽऽगतायाः शाखायाः पाठोऽध्ययनम्। तदाह वशिष्ठः,—

"पारम्पर्य्यागतोयेषां वेदः स-परिबृंहणः[२]।
तच्छाखं कर्म्म कुर्व्वीत तच्छाखाऽध्ययनं तथा"॥

इति। स्व-शाखा-परित्यागं सएव निषेधति,—

"यः स्व-शाखां परित्यज्य पारक्यमधिगच्छति।
स शूद्रवद्बहिः कार्य्यः सर्व्व-कर्म्मसु साधुभिः॥

* चासिते,—इति स० सो० पुस्तकयोः पाठः।

(१) व्रतानि तत्तद्वेदभागाध्ययने विहितानि गोभिलाद्युक्तानि।

(२) सपरिबृंहणः षडङ्गोपाङ्गेतिहासादिसहितः।

स्वीया शाखोज्झिता येन ब्रह्म तेनोज्झितं परम्।
ब्रह्महैव स विज्ञेयः सद्भिर्नित्यं विगर्हितः" ॥

इति। स्व-शाखाऽध्ययन-पूर्व्वकन्त्वन्य-शाखाऽध्ययनं तेनैवाङ्गीकृतम्,—

"अधीत्य शाखामात्मीयां परशाखां ततः पठेत्"।

इति। वेदवद्धर्म्म-शास्त्रमधीयीत। तदाह वृहस्पतिः,—

"एवं दण्डादिकैर्युक्तं संस्कृत्य तनयं पिता।
वेदमध्यापयेत् पश्चात् शास्त्रं मन्वादिके तथा ॥
ब्राह्मणोवेद-मूलः स्याच्छ्रुति-स्मृत्योः समः स्मृतः।
सदाचारस्य च तथा ज्ञेयमेतत्त्रिकं सदा ॥
अधीत्यचतुरोवेदान् साङ्गोपाङ्ग-पद-क्रमान्(१)।
स्मृति-हीनाः न शोभन्ते चन्द्र-हीनेव सर्व्वरी" ॥

इति। अत्र, अध्ययनेन पञ्चधा वेदाभ्यासः उपलक्षितः।
तथाच दक्षः,—

"वेद-स्वीकरणं पूर्व्वं विचारोऽभ्यसनं* जपः†।
तद्दानं चैव शिष्येभ्योवेदाभ्यासोहि पञ्चधा" ॥

---

* विचारोध्ययनं,—इति मु० पुस्तके पाठः।
† तपः—इति स० सो० पुस्तकयोः पाठः।

---

(१) अङ्गानि,—"शिक्षाकल्पोव्याकरणं निरुक्तं ज्योतिषाचितिः। छन्दसां विचितिश्चैव षड्ङ्गोवेद इष्यते"—इत्युक्तानि। उपाङ्गानि पुष्पसूत्रादीनि। पदोग्रन्थविशेषः यत्र ऋचां पदानि पृथक् पठ्यन्ते। क्रमोऽपि ग्रन्थविशेषः यत्र पूर्वपदं त्यक्त्वा उत्तरपदमुपादीयते।

इति। हारीतोऽपि,—

"मन्त्रार्थ-ज्ञो जपन् जुह्वंस्तथैवाध्यापयन् द्विजः।

स्वर्ग-लोकमवाप्नोति नरकन्तु विपर्य्यये" ॥

इति। गुरु-मुखादेवाध्येतव्यं नतु लिखित-पाठः कर्त्तव्यः। तदाह नारदः,—

"पुस्तक-प्रत्ययाधीतं नाधीतं गुरु-सन्निधौ।

भ्राजते न सभा-मध्ये जार-गर्भ इव स्त्रियाः" ॥

इति। अध्ययने वर्जनीयानाह मनुः,—

"नाविस्पष्टमधीयीत न शूद्र-जन-सन्निधौ।

न निशाऽन्ते परिश्रान्तो* ब्रह्माधीत्य पुनः स्वपेत्" ॥

इति। नारदोऽपि,—

"हस्त-हीनन्तु योऽधीते स्वर-वर्ण-विवर्ज्जितः[१]।

ऋग्यजुः-सामभिर्दग्धो वियोनिमधिगच्छति" ॥

इति। व्यासोऽपि,—

"अनध्यायेष्वधीतं यच्च शूद्रस्य सन्निधौ।

प्रतिग्रह-निमित्तं च नरकाय तदुच्यते"।

॥ इत्यध्ययनाध्यापनयोः प्रकरणे ॥

---

* प्रतिश्रान्तः,—इति मु० पुस्तके पाठः।

---

(१) वैदिकानां द्विविधा ह्यध्ययनप्रणाली वर्त्तते, हस्तस्वरकण्ठस्वरभेदात्। तदुभयविधस्वररहितमध्ययनमत्र निन्द्यते,—इति मन्तव्यम्।

अथानध्यायाः। ते च द्विविधाः; नित्यानैमित्तिकाश्च। तत्र नित्यानाह हारीतः,—

"प्रतिपत्सु चतुर्द्दश्यामष्टम्यां पर्वणोर्द्वयोः।
श्वोऽनध्यायेऽद्य शर्व्वर्यां नाधीयीत कदाचन"॥

इति। नैमित्तिकानाह याज्ञवल्क्यः,—

"श्व-क्रोष्टु-गर्द्दभोलूक-साम-वाणार्त्त-निस्वने(१)।
अमेध्य-शव-शूद्रान्त्य-श्मशान-पतितान्तिके॥
देशेऽशुचावात्मनि च विद्युत्-स्तनित-संप्लवे।
भुक्त्वाऽऽर्द्रपाणिरम्भोन्तरर्द्धरात्रेऽतिमारुते॥
पांशु-वर्षे दिशां दाहे* सन्ध्या-नीहार-भीतिषु।
धावतः पूति-गन्धे च शिष्टे च गृहमागते॥
खरोष्ट्र-यान-हस्त्यश्व-नौ-वृक्षेरिण-रोहणे(२)।
सप्त-त्रिंशदनध्यायानेतांस्तात्कालिकान् विदुः"॥

इति। अन्ये त्वनध्यायास्तत्र तत्र स्मर्य्यन्ते। तथाच नारदः,—

"अयने विषुवे चैव शयने बोधने हरेः।
अनध्यायस्तु कर्त्तव्योमन्वादिषु युगादिषु"॥

---

* पांशुप्रवर्षे दिग्दाहे,—इति मु० पुस्तके पाठः।

---

(१) सामनिस्वने ऋग्यजुषोरनध्यायोबोद्धव्यः। "सामध्वनावृग्यजुषी नाधीयीत कदाचन"—इत्युक्तेः।

(२) ईरिणं वालुकामयभूमिः।

इति। मन्वादयोमत्स्य-पुराणेऽभिहिताः,—

"अश्वयुक्-शुक्ल-नवमी कार्त्तिके द्वादशी तथा।
तृतीया चैत्र-मासस्य* तथा भाद्र-पदस्य च॥
फाल्गुनस्य त्वमावास्या पौषस्यैकादशी तथा†।
आषाढ़स्यापि दशमी माघमासस्य सप्तमी‡॥
श्रावणस्याष्टमी कृष्णा आषाढ़स्यापि पूर्णिमा§।
कार्त्तिकी फाल्गुनी चैत्री ज्यैष्ठी पञ्चदशी सिता।
मन्वन्तरादयस्त्वेते दत्तस्याक्षय-कारकाः||"॥

इति। युगादयोविष्णु-पुराणे वर्णिताः,¶—

"वैशाख-मासस्य च या**तृतीया
नवम्यसौ कार्त्तिक-शुक्ल-पक्षे।
नभस्य मासस्य च कृष्णपक्षे††
त्रयोदशी पञ्चदशी च माघे"॥

कूर्मपुराणे,—

---

* तृतीयाचैवमाघस्य—इति स० से० पुस्तकयोः पाठः।

† अयं पाठोग्रन्थान्तरेषु बहुषु दृष्टत्वादादृतः। 'पुष्यस्यैकादशी तथा'—इतित्वादर्शपुस्तकेषु पाठः।

‡ तथा माघस्य सप्तमी,—इति ग्रन्थान्तरे पाठः।

§ तथाऽऽषाढ़स्य पूर्णिमा,—इति ग्रन्थान्तरे पाठः।

|| मन्वन्तरादयस्त्वेतादत्तस्याक्षयकारिकाः,—इति ग्रन्थान्तरधृतः पाठः।

¶ वर्णिताः,—इति नास्ति स० से० पुस्तकयोः।

** सिता,—इति ग्रन्थान्तरीयः पाठः।

†† तमिस्रपक्षे,—इति पाठो ग्रन्थान्तरधृतः।

"उपाकर्म्मणि चोत्सर्गे(१) त्रिरात्रं क्षपणं स्मृतम् ।
अष्टकासु त्वहोरात्रमृत्वन्तासु च रात्रिषु ॥
मार्गशीर्षे तथा पौषे माघ-मासे तथैवच ।
तिस्रोऽष्टकाः समाख्याताः कृष्ण-पक्षे तु सूरिभिः" ॥

इति । गौतमोऽपि,—"कार्त्तिकी-फाल्गुन्याषाढ़ी-पौर्णमासी* तिस्रोऽष्टकाः त्रिरात्रम्",—इति । उक्त-पौर्णमासीरारभ्य त्रिरात्रम् । तथा तिस्रोऽष्टकाः सप्तम्यादयः, तास्वपि त्रिरात्रमनध्ययनमित्यर्थः । पैठीनसिः,—"कृष्णे भवाः तिस्रोऽष्टकाः, मार्गशीर्ष-प्रभृतयः इत्येके"—इति । आपस्तम्बस्तु, उपाकर्म्मारभ्य मासं प्रदोषेऽनध्यायमाह,—"श्रावण्यां पौर्णमास्यामध्यायमुपाकृत्य मासं प्रदोषे नाधीयीत"—इति । प्रदोष-शब्देनाच पूर्व्व-रात्रिः विवक्षिता । त्रयोदश्यादि-प्रदोषेष्वपि नाधीयीत । तथाच आदित्य† पुराणम्,—

"मेधा-कामस्त्रयोदश्यां सप्तम्याञ्च विशेषतः ।
चतुर्थ्याञ्च प्रदोषेषु न स्मरेन्न च कीर्त्तयेत्" ॥

इति । चतुर्थ्यादि-तिथि-द्वैविध्ये प्रजापतिः,—

"षष्ठी च द्वादशी चैव अर्द्धरात्रोन-नाड़िका‡ ।
प्रदोषे नत्वधीयीत तृतीया नव-नाड़िका" ॥

---

* पौर्णमासीति,—इति पाठः मु० पुस्तके ।
† आदित्य, इति नास्ति स० सो० पुस्तकयोः ।
‡ अर्द्धरात्र्योननाडिकाः,—इति मु० पुस्तके पाठः ।

---

(१) उपाकर्म्मोत्सर्गौ गृह्याद्युक्तकर्म्मविशेषौ अध्ययनारम्भसमाप्त्योः कर्त्तव्यौ । परमेतौ गृह्यस्थादिभिरपि मन्त्राणामयातयामत्वार्थं प्रत्यब्दं कर्त्तव्याविति अत्र विस्तरः ।

इति। याज्ञवल्क्योऽपि,—

"त्र्यहं प्रेतेष्वनध्यायः शिष्यर्त्विग्-गुरु-बन्धुषु।
उपाकर्म्मणि चोत्सर्गे स्व-शाखे श्रोत्रिये तथा* ॥
सन्ध्या-गर्जित-निर्घात-भू-कंपोल्का-निपातने(१)।
समाप्य वेदं द्यु-निशमारण्यकमधीत्य च ॥
पञ्चदश्यां चतुर्द्दश्यामष्टम्यां राहु-सूतके।
ऋतु-सन्धिषु भुक्त्वा च श्राद्धिकं प्रतिगृह्य च ॥
पशु-मण्डूक-नकुल-श्वाहि-मार्ज्जार-मूषिकैः† ।
कृतेऽन्तरे त्वहोरात्रं शक्र-पाते तथोच्छ्रये" ॥

इति। मनुरपि,—

"चौरैरुपप्लुते ग्रामे सम्भ्रमे वाऽग्नि-कारिते।
आकालिकमनध्यायं विद्यात्सर्व्वाद्भुते(२) तथा" ॥

---

* स्व-शाखाश्रोत्रिये मृते,—इति म० पुस्तके पाठः।
† मूषकैः, इत्यादर्शपुस्तकेषु पाठः।

---

(१) निर्घातोल्के यथाक्रमम्,—"यदान्तरीक्षे बलवान् मारुतो मरुता हतः। पतत्यधः स निर्घातो जायते वायुसम्भवः"। "वृक्षच्छिखा च सूक्ष्माग्रा रक्तनीलशिखोज्ज्वला। पौरुषी च प्रमाणेन उल्कानामाविधा स्मृता" इत्युक्तलक्षणे।

(२) "प्रकृतिविरुद्धमद्भुतमापदः प्राक् प्रबोधाय देवाः सृजन्ति"—इतिवचनात्, "अतिलोभादसत्याद्वा नास्तिक्याद्वाऽप्यधर्म्मतः। नरापचारान्नियतमुपसर्गः प्रवर्त्तते। ततोऽपचारान्नियतमपवर्ज्जन्ति देवताः। ताः सृजन्त्यद्भुतांस्तांस्तु दिव्यनाभसभूमिजान्। तएव त्रिविधालोके उत्पाताः देवनिर्म्मिताः। विचरन्ति विनाशाय रूपैः सम्भावयन्ति-

इति । कूर्म्म-पुराणे,—

"श्लेष्मातकस्य छायायां शाल्मलेर्मधुकस्य च ।
कदाचिदपि नाध्येयं कोविदार-कपित्थयोः" ॥

इति । उक्तानामप्यनध्यायानामपवादमाह मनुः,—

"वेदोपकरणे चैव स्वाध्याये चैव नित्यके* ।
नानुरोधोऽस्त्यनध्याये होम-मन्त्रेषु चैव हि" ॥

इति । वेदोपकरणान्यङ्गानि । नित्य-स्वाध्यायो ब्रह्म-यज्ञः । शौनकोऽपि,—

"नित्ये जपे च काम्ये च क्रतौ पारायणेऽपि च ।
नानध्यायोऽस्ति वेदानां, ग्रहणे ग्राहणे स्मृतः"† ।

इति । कूर्म्म-पुराणेऽपि,—

"अनध्यायस्तु नाङ्गेषु नेतिहास-पुराणयोः ।
न धर्म्म-शास्त्रेष्वन्येषु पर्व्वण्येतानि वर्ज्जयेत्" ॥

इति ।

॥०॥ इत्यनध्यायप्रकरणं ॥०॥

पूर्व्वमध्ययनाध्यापने स्वेतिकर्त्तव्यते‡ निरूपिते, अथ यजन-याजने निरूपयामः ।

---

* नैत्यिके,—इत्यन्यत्र पाठः ।
† तथा,—इति स० सो० पुस्तकयोः पाठः ।
‡ इतिकर्त्तव्यत्वेन,—इति मु० पुस्तके पाठः ।

---

च"—इत्युक्तेस्त्व आपज्ज्ञानाय देवकर्त्तृकोभूम्यादीनां स्वभावप्रख्यातेः ऽद्भुत इति ज्ञेयम् ।

तत्र, यजनस्य सृष्टिं प्रयोजनं चाह भगवान्,—

"सह-यज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजा-पतिः।
अनेन प्रसविष्यध्वमेष वोऽस्त्विष्ट-काम-धुक्॥
देवान् भावयतानेन ते देवा भावयन्तु वः।
परस्परं भावयन्तः श्रेयः परमवाप्स्यथ॥
इष्टान् भोगान् हि वो देवा दास्यन्ते यज्ञ-भाविताः।
तैर्द्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः"॥

इति। तस्य च यजनस्य सात्विक-राजस-तामस-भेदेन त्रैविध्यं स एवाह,—

"अ-फलाकांक्षिभिर्यज्ञो विधि-दृष्टो य इज्यते।
यष्टव्यमेवेति मनः समाधाय स सात्त्विकः॥
अभिसन्धाय तु फलं दम्भार्थमपि चैव यत्।
इज्यते भरत-श्रेष्ठ! तं यज्ञं विद्धि राजसम्॥
विधि-हीनमसृष्टान्नं मन्त्र-हीनमदक्षिणम्।
श्रद्धा-विरहितं यज्ञं तामसं परिचक्षते"॥

इति। आश्वमेधिके पर्व्वणि द्विजादि-सृष्टे* यज्ञार्थत्व-प्रतिपादनेन यज्ञः प्रशस्यते,†—

"यजनार्थं द्विजाः सृष्टास्तारकाद्दिवि देवताः।
गावो यज्ञार्थमुत्पन्ना दक्षिणार्थं तथैव च॥
सुवर्णं रजतं चैव पात्री‡ कुम्भार्थमेव च।

---

* द्विजातिसृष्टे,—इति स० सो० पुस्तकयोः पाठः।
† प्रसूयते,—इति स० सो० शा० पुस्तकेषु पाठः।
‡ पात्रं,—इति मु० पुस्तके पाठः।

इध्मार्थमथ यूपार्थं ब्रह्मा चक्रे वनस्पतिम् ॥
ग्राम्यारण्याश्च पशवो(१)जायन्ते यज्ञकारणात्" ।

इति । हारीतोऽपि, अन्वय-व्यतिरेकाभ्यां यज्ञ-महिमानं दर्शयति;—

"यज्ञेन लोकाविमलाविभान्ति,
यज्ञेन देवाः अमृतत्वमाप्नुवन् ।
यज्ञेन पापैर्बहुभिर्विमुक्तः,
प्राप्नोति लोकानमरस्य विष्णोः ॥
नास्त्ययज्ञस्य लोकोऽवै नायज्ञोविन्दते शुभम् ।
अनिष्ट-यज्ञोऽपूतात्मा भ्रश्यति* छिन्न-पर्णवत्" ॥

इति । यज्ञ-विशेषास्त्वग्नि-होत्रादयः । तथाच श्रूयते,†—"प्रजापति-र्यज्ञानसृजताग्नि-होत्रं चाग्नि-ष्टोमञ्च पौर्णमासीं चोक्थ्यं चामा-वास्यां चातिरात्रं च"—इति । अग्नि-होत्रादीनां संस्कृतैरग्निभिः साध्यत्वात्तत्-संस्कारकमाधानमादावनुष्ठेयम् । तत्र प्रजापतिः,—

"सर्व्वयज्ञाधिकारी स्यादाहिताग्निर्धने सति‡ ।
आदध्यान्निर्धनोऽप्यग्नीन् नित्यं पापभयात्|| द्विजः" ॥

---

* नश्यति, इति स० सो० पुस्तकयोः पाठः ।
† श्रूयते,—इति मु० पुस्तके पाठः ।
‡ सर्वसंस्थाधिकारः स्यादाहिताग्नेर्धनेसति,—इति मु० पुस्तके पाठः ।
|| पापन्तयात्,—इति स० सो० पुस्तकयोः पाठः ।

---

(१) "ग्राम्यारण्याश्चतुर्दश । गौरविरजोऽश्वोऽश्वतरोगर्दभोमनुष्याश्चेति सप्त ग्राम्याः पशवः । महिष-वानर-ऋक्ष-सरीसृप-रुरु-पृषत-मृगाश्चेति सप्तारण्याःपशवः"—इति पैठिनसिवचनमत्र सर्त्तव्यम् ।

इति। अकरणे प्रत्यवायः कूर्म्म-पुराणे दर्शितः,*—

"नास्तिक्यादथवाऽऽलस्याद्योऽग्नीन्नाधातुमिच्छति।
यजेत वा न यज्ञेन स याति नरकान् बहून्॥
तस्मात्सर्व्व-प्रयत्नेन ब्राह्मणोहि विशेषतः।
आधायाग्नीन् विशुद्धात्मा यजेत परमेश्वरम्"॥

इति। श्रुतिश्च, कालादि-विशिष्टमाधानं विधत्ते,—"वसन्ते ब्राह्मणोऽग्निमादधीत; वसन्तोवै ब्राह्मणस्यर्त्तुः, स्वएवैनमृतावाधाय ब्रह्मवर्च्चसी भवति, ग्रीष्मे राजन्यआदधीत; ग्रीष्मोवै राजन्यस्यर्त्तुः, स्वएवैनमृतावाधाय इन्द्रियवान्† भवति, शरदि वैश्यआदधीत; शरद्वै वैश्यस्यर्त्तुः, स्वएवैनमृतावाधाय पशुमान् भवति",—इति। आश्वमेधिकेऽपि,‡—

"वसन्ते ब्राह्मणस्य स्यादाधेयोऽग्निर्नराधिप!
वसन्तोब्राह्मणः प्रोक्तोवेद-योनिः सउच्यते॥
अग्न्याधानं§ तु येनाय वसन्ते क्रियते नृप!।
तस्य श्रीर्ब्रह्मवृद्धिश्च ब्राह्मणस्य विवर्द्धते॥
क्षत्रियस्याग्निराधेयो ग्रीष्मे श्रेष्ठः स वै|| नृप!।
येनाधानन्तु वै ग्रीष्मे क्रियते तस्य वर्द्धते॥
श्रीः प्रजाः पशवश्चैव वित्तञ्चैव वलं यशः।

---

* दर्शितः,—इति नास्ति स० सो० पुस्तकयोः।
† इन्द्रियावी,—इति मु० पुस्तके पाठः।
‡ आश्वमेधिकेपर्व्वणि,—इति मु० पुस्तके पाठः।
§ अन्याधेयं,—इति मु० पुस्तके पाठः।
|| श्रेष्ठस्य वै,—इति स० सो० पुस्तकयोः पाठः।

शरत्-काले तु* वैश्यस्याप्याधानीयोऽक्षतात्मनः ॥
शरद्राचः† स्वयं वैश्योवैश्य-योनिः सउच्यते ।
शरद्याधानमेवं वै क्रियते येन पाण्डव ॥
तस्य श्रीः वै प्रजाऽऽयुश्च‡ पशवोऽर्थश्च वर्द्धते"।

इति । आधान-पूर्व्वकाश्च यज्ञाः, दर्शादयः । तथाच वशिष्ठः,—"अवश्यं ब्राह्मणोऽग्नीनादधीत, दर्श-पूर्णमासाग्रयणेष्टि-चातुर्मास्यैः पशुसोमैश्च§ यजेत"—इति । हारीतोऽपि,—

"पाक-यज्ञान् यजेन्नित्यं हविर्यज्ञांस्तु नित्यशः ।
सौम्यांस्तु विधिपूर्व्वेण यद्दच्छेत् धर्म्ममव्ययम्||" ॥

इति । ते च गोतमेन¶ दर्शिताः,—"अष्टका पार्व्वण-श्राद्धं श्रावण्याग्रहायणी चैत्र्याश्वयुजीति सप्त पाक-यज्ञ-संस्थाः, अग्न्याधेयमग्निहोत्रं दर्श-पूर्णमासावाग्रयणं चातुर्मास्यं निरूढ़-पशु-बन्धः सौत्रामणीति सप्त हविर्यज्ञसंस्थाः, अग्निष्टोमात्यग्निष्टोमउक्थ्यः षोड़शी वाजपेयोऽतिरात्रोऽप्तोर्यामः इति सप्त सोम-संस्थाः" इति । अपरांस्तु महायज्ञ-क्रतून् देवलोदर्शितवान्,—"अश्वमेध-राजसूय-पौण्डरीक-

* शरद्यात्रेय,—इति स० सो० पुस्तकयोः पाठः ।
† शरद्याचि,—इति मु० पुस्तके पाठः ।
‡ तस्यैव श्रीः प्रजायुश्च,—इति मु० पुस्तके पाठः ।
§ सोमांश्च,—इति स० सो० पुस्तकयोः पाठः ।
|| ब्रह्मचाव्ययम,—इति स० सो० पुस्तकयोः पाठः ।
¶ गौतमेन,—इति स० सो० पुस्तकयोः पाठः । एवं सर्व्वत्र ।

गोसवादयोमहायज्ञाः-क्रतवः*" इति। एते सर्व्वे यज्ञाः यथायोगं नित्य-नैमित्तिक-काम्य-भेदेन त्रिविधाः;—

"नित्यं नैमित्तिकं काम्यं त्रिविधं कर्म्म पौरुषम्"।

इति महालसोक्तेः। तत्र, यज्ञानां नित्यत्वं आथर्वणशाखायां† श्रूयते,—"मन्त्रेषु कर्म्माणि कवयोयान्यपश्यंस्तानि त्रेतायां वहुधा सन्ततानि, तान्याचरथ‡ नियतम्"—इति। राजसनेयि§ शाखायामपि,—

"कुर्व्वन्नेवेह कर्म्माणि जिजीविषेच्छतं समाः"।

इति। "एतद्वै जरामर्य्यमग्निहोत्रं जरसा वाह्येवास्मान्मुच्यते मृत्युना च"—इति च। विधि-वाक्येषु च जीवनाद्युपवन्धस्तु नित्यत्व-लत्तकं¶। तथा|| "यावज्जीवमग्निहोत्रं—जुहुयात्" "यावज्जीवं दर्श-पौर्णमासाभ्यां यजेत"—इति। अकरणे प्रत्यवायस्य नित्यत्व-गमकः। तथाचाथर्वणे श्रूयते,—"यस्यानग्निहोत्रमदर्श-पौर्णमासमनाग्रयणमतिथिवर्जितं वाहुतमवैश्वदेव* मविधिना हुतमासप्तमांस्तस्य लोकान् हिनस्ति" इति। तथाच श्रुत्यन्तरम्,—"यस्य पिता पितामहोवा सोमं न पिवेत्, स व्रात्यः"—इति। जीवन-कामना-व्यतिरिक्त-गृह-दाहाद्यनियत-निमित्तमुपजीव्य प्रवृत्तं नैमित्तिकम्। तथाच श्रुतिः,—

* महायज्ञक्रतवः,—इति स० सो० पुस्तकयोः पाठः।
† कुथुमशाखायां,—इति स० सो० शा० पुस्तकेषु पाठः।
‡ तान्याहरथ,—इति मु० पुस्तके पाठः।
§ राजसनेय,—इति मु० पुस्तके पाठः।
¶ अत्र, नित्यत्वलक्षकः,—इति पाठो भवितुं युक्तः।
|| अत्र, यथा,—इति पाठो भवितुं युक्तः।
* वाहुतवैश्वदेव,—इति मु० पुस्तके पाठः।

"यस्य गृहं दहत्यग्नये चामवते पुरोडाशमष्टाकपालं निर्व्वपेत्"—इति। कामनया प्रवृत्तं काम्यम्। तद्यथा "वायव्यं श्वेतमालभेत भूतिकामः, वायुर्व्वै चेपिष्ठा देवता"—इत्याद्याः काम्यपशवः; "ऐन्द्राग्नमेकादश-कपालं निर्वपेत् प्रजा-कामः" इत्याद्याः काम्येष्टयः।"(१) तत्र, काम्यानां कामितार्थ-सिद्धिः फलम्। नित्य-नैमित्तिकयोस्तु यथाविध्यनुष्ठितयोरिन्द्रलोक-प्रापकत्वमाथर्वणे श्रूयते,—

"काली कराली च मनोजवा च
सुलोहिता याच*सुधूम्र-वर्णा।
स्फुलिङ्गिनी विश्वरुची च देवी
लेलायमाना† इति सप्त जिह्वाः॥
एतेषु यश्चरते भ्राजमानेषु
यथाकालं चाहुतयो ह्याददायन्।
तं नयन्त्येताः सूर्य्यस्य रश्मयो—
यत्र देवानां पतिरेकोऽधिवासः‡॥
एह्येहीति तमाहुतयः सुवर्चसः
सूर्य्यस्य रश्मिभिर्यजमानं वहन्ति।
प्रियाञ्च वाचमभिवदन्त्योर्च्चयन्त्य—
एषवः पुण्यः सुकृतोब्रह्मलोकः"॥

* चापि,—इति मु० पुस्तके पाठः।

† लेलीयमाना,—इति मु० पुस्तके पाठः।

‡ देवानामतिरेकोऽधिवासः,—इति स० सो० शा० पुस्तकेषु पाठः।

(१) इष्टिपश्वोर्भेदस्तु,—"इष्टिस्तु चरुणा यागः पशुस्तु पशुनास्मृतः। एतच्छेषः क्रतुः प्रोक्तो होमोन्यत् पूजनं स्मृतम्"—इत्युक्तदिशाऽवसेयः।

इति। आनुशासनिकेऽपि,—

"सु-शुद्धैर्यजमानैश्च ऋत्विग्भिश्च तथाविधैः।
शुद्धैर्द्रव्योपकरणै(१)र्यष्टव्यमिति निश्चयः॥
तथा कृतेषु यज्ञेषु देवानां तोषणं भवेत्।
तुष्टेषु देव-संघेषु यज्वी यज्ञ-फलं लभेत्॥
देवाः सन्तोषिता यज्ञैर्लोकान् सम्वर्द्धयन्त्युत।
उभयोर्लोकयोर्देवि, भूतिर्यज्ञैः प्रदृश्यते॥
तस्माद्यज्ञाद्दिवं यान्ति अमरैः सह मोदते।
नास्ति यज्ञ-समं दानं नास्ति यज्ञ-समो विधिः॥
सर्व्व-धर्म्म-समुद्देशो देवि, यज्ञे समाहितः"।

इति। यदि कथञ्चिन्नित्य-कर्म्माणि लुप्येरन्, तदा तत्समाधानमाह प्रजापतिः,—

"दर्शश्च पूर्णमासश्च लुप्तोऽथोभयमेव वा।
एकस्मिन् कृच्छ्र-पादेन द्वयोरर्द्धेन शोधनम्॥
हविर्यज्ञेष्वशक्तस्य लुप्तमप्येकमादितः।
प्राजापत्येन शुद्ध्येत पाक-संस्थासु चैव हि॥
सन्ध्योपासन-हानौ तु नित्य-स्नानं विलोप्य च*।
होमं नैमित्तिकं, शुद्ध्येद् गायत्र्यष्ट-सहस्र-कृत्॥

* नित्यस्नानं तु लोप्य च, इति स० सो० पुस्तकयोः, लोप्य वा,— इति शा० पुस्तके पाठः।

(१) शुद्धञ्च द्रव्यम्,—"श्रुत-शौर्य्य-तपः-कन्या-शिष्य-याज्यान्वयागतम्। धनं सप्तविधं शुद्धं मुनिभिः समुदाहृतम्"— इत्युक्तलक्षणं स्वाभाविकम् कृतसंस्कारादिकञ्चागतुकम्।

समाऽन्ते सोम-यज्ञानां हानौ चान्द्रायणञ्चरेत् ।
अकृत्वाऽन्यतमं यज्ञं यज्ञानामधिकारतः ॥
उपवासेन भुञ्जीत पाक-संस्थासु चैवहि" ।

इति । कात्यायनोऽपि,—

"पितृ-यज्ञात्यये चैव वैश्वदेवात्ययेऽपि च ।
अनिष्ट्वा नव-यज्ञेन नवान्न-प्राशने तथा ॥
भोजने पतितान्नस्य चरुर्वैश्वानरोभवेत्" ।

इति । विहित-दक्षिणा-पर्य्याप्त-द्रव्याभावेऽपि* नित्यं न लोपयेत् । तदाह बौधायनः,—

"यस्य नित्यानि लुप्तानि तथैवागन्तुकानि(१) च ।
सु-पथ-स्थोऽपि न स्वर्गं स गच्छेत् पतितोहि सः ॥
तस्मात् कन्दैः फलैर्मूलैर्मधुनाऽथ रसेन वा ।
नित्यं नित्यानि कुर्वीत नच नित्यानि लोपयेत्" ॥

इति । ननु, सम्पूर्ण-द्रव्य-सम्पत्तावेव सोम-यागः कार्य्यः । तदाह मनुः,—

"यस्य त्रैवार्षिकं वित्तं पर्य्याप्तं भृत्य-वृत्तये ।
अधिकं वाऽपि विद्येत स सोमं पातुमर्हति" ॥

इति । याज्ञवल्क्योऽपि,—

"त्रैवार्षिकाधिकान्नोयः सहि सोमं पिवेद्द्विजः" ।

---

* द्रव्यालाभेपि,—इति स० सो० ग्रा० पुस्तकेषु पाठः ।

---

(१) गृहदाहाद्यनियतनिमित्तमुपजीव्य विहितं यत् नैमित्तिकं, तदेवात्रा गन्तुकतया निर्दिष्टमिति बोध्यम् ।

इति। त्रैवार्षिकान्नालाभे सोम-यागादर्वाचीनादर्शादयएव कार्य्याः। एतदपि सएवाह,—

"प्राक्सौमिकीः क्रियाः कुर्य्याद्यस्यान्नं वार्षिकं भवेत्"।

इति। अल्प-धनस्य यज्ञोमनुना निषिध्यते,—

"पुण्यान्यन्यानि कुर्वीत श्रद्दधानोजितेन्द्रियः।
नत्वल्प-दक्षिणैर्यज्ञैर्यजेताथ कथञ्चन॥
इन्द्रियाणि यशः स्वर्गमायुः कीर्त्तिं प्रजाः पशून्।
हन्त्यल्प-दक्षिणोयज्ञस्तस्मान्नाल्प-धनोयजेत्"॥

इति। मत्स्य-पुराणेपि,—

"अन्नहीनो* दहेद्राष्ट्रं मन्त्र-हीनस्तथर्त्विजः।
आत्मानं दक्षिणा-हीनोनास्ति यज्ञ-समोरिपुः"॥

इति। एवञ्च सत्येतानि वचनानि 'कन्दैर्मूलैः' इत्यादिवचनेन विरुद्ध्येरन्निति चेत्। नैवम्, एतेषां वचनानां काम्य-याग-विषयत्वात्। 'सम्पूर्णानुष्ठान-शक्तौ सत्यामेव काम्यं कर्त्तव्यम्'—इति षष्ठाध्याये(१) मीमांसितम्। तथाहि—"ऐन्द्राग्नमेकादश-कपालं निर्वपेत् प्रजा-कामः"—इत्यत्र, किं यथाशक्ति प्रयोगेणाप्यधिकारः, उत सर्वाङ्गोपसंहारेण?—इति संशयः। नित्येषु यथाशक्ति प्रयोगस्य पूर्वाधिकरणे निर्णीतत्वात् काम्येष्वपि तथा,—इति प्राप्ते ब्रूमः। नित्यानामसमर्थेनाप्यपरित्याज्यत्वात् तत्र यथाशक्ति प्रयोगः। अपरित्याज्यानि हि नित्यानि, जीवनादि-निमित्त-वशेन तत्प्रवृत्तेः। नैमित्तिकं

* अर्थहीनो,—इति ग्रन्थान्तरस्थः पाठः।

(१) मीमांसा-षष्ठाध्याय-तृतीयपाद-द्वितीयाधिकरणे।

प्रत्यप्रवर्त्तकत्वे निमित्तत्वमेव हीयेत । कामना तु न निमित्तं ; येनावश्यमिष्टिं प्रवर्त्तयेत् । अतो न काम्यस्यापरित्याज्यत्वम् । तथा सति, फल-सिद्ध्यर्थमेव काम्यस्यानुष्ठेयत्वात्, फलस्य च कृत्स्नांगोपकृत-प्रधानमन्तरेणानिष्पत्तेः, यदा कृत्स्नांगानुष्ठान-शक्तिस्तदैव काम्यमनुष्ठेयम्,—इति सिद्धान्तः ॥

॥०॥इति यजन-प्रकरणम् ॥०॥

इत्थं यजनं निरूपितं, याजने तु विधिः श्रूयते,—"द्रव्यमर्जयन् ब्राह्मणः प्रतिगृह्णीयाद्वा जयेदध्यापयेद्वा" । नचायं नित्य-विधिः, अकरणे प्रत्यवायादि-नित्य-लक्षणाभावात् । अपि तु काम्य-विधिः, द्रव्यार्जन-कामस्य तत्राधिकारात् । तत्रापि, नापूर्व-विधिः(१) जीवनोपायत्वेन याजनस्य प्राप्तत्वात् । तद्धेतुत्वञ्च मार्कण्डेय-पुराणे दर्शितम्,—

"याजनाध्यापने शुद्धे तथा शुद्धः* प्रतिग्रहः ।
एषा सम्यक् समाख्याता त्रितयी† तस्य जीविका" ॥

इति । नापि परिसंख्या, मिलित-प्राप्तेरभावात् । तस्मात्‡ पक्षे प्राप्तत्वान्नियम-विधिरयम् । सचायं नियमः पुरुषार्थ एव, नतु क्रत्वर्थः,

---

* पुत्र,—इति स० सो० शा० पुस्तकेषु ।
† अत्र, 'त्रितयी'—इति पाठो भवितुं युक्तः ।
‡ तस्मात्,—इति नास्ति स० सो० शा० पुस्तकेषु ।

---

(१) अपूर्व्वस्य पूर्व्वमप्राप्तस्य विधिरपूर्व्वविधिः अत्यन्ताप्राप्तप्रापको विधिरिति यावत् । तत्रेदमुक्तम्,—"विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति । तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते"—इति ।

द्रव्यार्जन-विधानस्य पुरुषार्थत्वेन लिप्सा-सूत्रे[१] विचारितत्वात्। तथाहि,—द्रव्यप्राप्तिः, क्रत्वर्था वा पुरुषार्था वा?—इति संशयः। तत्र पूर्वः पक्षः, क्रत्वर्थेयं, तथा सति* नियमस्यार्थवत्त्वात्। ब्राह्मणस्य याजनादिना, क्षत्रियस्य जयादिना,† वैश्यस्य कृष्यादिना,—इति नियमः। अत्र पुरुषार्थ-पक्षेऽनर्थकः स्यात्, उपायान्तरेणार्जितस्यापि द्रव्यस्य क्षुत्प्रतिघातादि-पुरुषार्थ-सम्पादकत्वात्। क्रतुस्तु नान्यथा सिद्ध्यति। अतस्तत्र नियमोऽर्थवान्,—इति प्राप्ते ब्रूमः। द्रव्यं हि सम्पादितं सत् पुरुषं प्रीणयति। अतस्तस्य पुरुषार्थत्वं प्रत्यक्षं दृष्टम्‡ क्रत्वर्थता तु नियमान्यथाऽनुपपत्त्या कल्प्यते। क्रृप्तञ्च कल्प्याद्बलीयः। सति च पुरुषार्थत्वे, क्रतोरपि भोजनादिवत् पुरुष-कार्य्यतया तदर्थताऽप्यर्थात् सम्पद्यते। नियमस्तु, पुरुषार्थेऽप्यर्जन-विधौ किञ्चिददृष्टं जनयिष्यति[२]। क्रत्वर्थत्व§वादिनोजीवनलोपेन-

* तथापि, इति स० सो० शा० पुस्तकेषु पाठः।
† क्षत्रियस्य जयादिना,—इति नास्ति मु० पुस्तके।
‡ प्रत्यक्षं,—इति मु० पुस्तके पाठः।
§ क्रत्वर्थं,—इति मु० पुस्तके पाठः।

(१) "यस्मिन् प्रीतिः पुरुषस्य तस्य लिप्साऽर्थलक्षणाऽविभक्तत्वात् (मी० ४अ० १पा० २सू०)" इत्येतस्मिन् सूत्रे भाष्यकारस्य द्वितीयवर्णके,—इति बोध्यम्।

(२) तथाच याजनादिनाऽर्ज्जने किञ्चिददृष्टं कल्प्यते, तन्नियमस्यार्थवत्त्वाय। इतरथा खल्वन्येनापि प्रकारेण द्रव्यार्ज्जनसम्भवात् याजनादिनियमोपदेशस्तेनाप्यशक्यः कर्तुमिति बोध्यम्।

क्रतुरपि न सिध्येत्[१]। तस्मात्, पुरुषार्थोयाजनादिः,—इति सिद्धम्। ऋत्विग्भिर्विना याजयिताऽन्योन कोऽप्यस्ति,—इति चेत्। नैवम्,आप स्तम्ब-सूत्रे षोड़शानामृत्विजां वरणमभिधाय याजयितुः सप्त-दशस्य पृथग्वरणाभिधानात्। "सदस्यं सप्त-दशं कौषितकिनः समामनन्ति, स कर्मणामुपद्रष्टा भवति"—इति। अतएव वशिष्ठ*वंशोत्पन्नस्य सत्यहव्य† नामकस्य महर्षेः प्रश्न-वाक्ये देव-भागस्य सृञ्जय-नाम कान् ब्राह्मणान् प्रति याजकत्वं‡ तैत्तिरीयक-ब्राह्मणे श्रूयते,— "वाशिष्ठोह सत्य-हव्यो देवभागं पप्रच्छत् सृञ्जयान् बहु-याजिनोऽयजे§" इति। तथा कौषितकि-ब्राह्मणे, चित्र-नामकं प्रति श्वेत-केतोर्याज कत्वमाम्नातम्,—"चित्रोह वै गार्ग्यायणिर्यक्ष्यमाणआरुणिं वव्रे, स ह पुत्रं श्वेत-केतुं प्रजिघाय याजयति¶" इति। तस्माद्, ऋत्विग्भ्योऽन्यः-सदस्योयाजयिता। ऋत्विजोवा याजयितारः सन्तु, सर्वथाऽप्यस्ति ब्राह्मणानां जीवन-हेतुर्याजनम्। तद्येतिकर्त्तव्यता-रूपेण कृष्णा-जिन-वाससोरन्यतरेणोपवीतित्वं तैत्तिरीयके विधीयते,—"तस्माद्य-ज्ञोपवीत्येवाधीयीत याजयेद्यजेत् वा यज्ञस्य प्रसृत्या अजिनं

---

* वसिष्ठ,—इति दन्त्यमध्यः पाठः मु० पुस्तके प्रायः सर्व्वत्र।
† सात्यहव्य,—इति स० सो० शा० पुस्तकेषु पाठः। एवं परत्र।
‡ याजकत्वं इति नास्ति मु० पुस्तके।
§ बहुयाजिनोयायजा इति,—इति मु० पुस्तके पाठः।
¶ प्रतिगृह्य याजयेति, इति पाठः मु० पुस्तके।

---

(१) क्रत्वर्थमर्ज्जितस्य द्रव्यस्य तदन्यत्र भोजनादौ विनियोगस्य कर्त्तुमश क्यत्वादिति भावः।

२१

वासोवा दक्षिणत उपवीय"—इति। मन्त्रेषु ऋष्यादिषु ज्ञानञ्च* याजनांगत्वेन छन्दोग-ब्राह्मणे समाम्नायते,—"योह वा अविदितार्षेय-छन्दो दैवत-ब्राह्मणेन याजयति वा अध्यापयति वा, स्थाणुं वर्च्छति† गर्त्तं वा पद्यते प्र वामीयते पापीयान् भवति यातयामान्यस्य छन्दांसि भवन्ति, अथ यो मन्त्रे मन्त्रे विद्यात्, सर्वमायुरेति श्रेयान् भवति अयातयामान्यस्य छन्दांसि भवन्ति‡, तस्मादेतानि मन्त्रे मन्त्रे विद्यात्"—इति।

ननु क्वचित् याजनस्य क्वचित् प्रतिग्रहस्य च निन्दितत्वात्§ तदनुष्ठानवतः स्वाध्याय-गायत्रीजपश्चाम्नायते,—"रिच्यतइव वा एषप्रेव रिच्यते योयाजयति प्रति वा गृह्णाति, याजयित्वा प्रतिगृह्य चाऽनश्नन् त्रिः स्वाध्यायं वेदमधीयीत, त्रिरात्रं वा सावित्रीं गायत्रीमन्वातिरेचयति"—इति। तथाऽन्यत्रापि,—"दुहेह वा एष छन्दांसि योयाजयति, स येन यज्ञ-क्रतुना याजयेत्, सोऽरण्यं परेत्य शुचौ देशे स्वाध्यायमेवैनमधीयन्नासीत; तस्यानशनं दीक्षा, स्थानमुपसदः, आसनस्य सुत्या, वाग्जुहूः, मन उपभृत्, धृतिर्ध्रुवा, प्राणोहविः, सामाध्वर्य्युः, सवाएष यज्ञः प्राणदक्षिणोऽनन्त-दक्षिणः समृद्धतरः"‖ इति चेत्। नायं दोषः, अयाज्य-

---

* मन्त्रऋष्यादिज्ञानञ्च,—इति स० से० शा० पुस्तकेषु पाठः।

† स्थाणुं वा गच्छति,—इति शा० स० पुस्तकयोः पाठः।

‡ अथ, इत्यादि, भवन्ति,—इत्यन्तः पाठः स० से० शा० पुस्तकेषु नास्ति।

§ क्वचित् याजनं निन्दितत्वा,—इति पाठः स० शा० पुस्तकयोः।

‖ तस्यानशनम्,—इत्यादि, 'समृद्धतरः'—इत्यन्तः पाठोनास्ति स० से० शा० पुस्तकेषु।

याजन-विषयत्वात्। जीवितात्ययमापन्नस्य प्राण-रक्षार्थमयाज्य-याजनमपि सम्भाव्यते। तथा, वाजसनेय-ब्राह्मणम्,—"प्राणस्य वै सम्राट्कामायायाज्यं याजयति अप्रतिग्राह्यस्य वा प्रतिगृह्णाति*"इति। तत्र, प्रायश्चित्तं छन्दोगाः आमनन्ति,—"अयाज्य-याजने दक्षिणां त्यक्त्वा मासं चतुर्थ-काले भुञ्जानः(१) तन्मन्त्रान् गायेत्"—इति। तथा सुमन्तुरपि स्मरति,—"शूद्र-याजकः शूद्र-द्रव्य-परित्यागात्† पूतो-भवति। अभिशस्त-पतित-पौनर्भव-भ्रूणह-पुंश्चल्य-ऽशुचि-वस्त्र-कार‡ तैलिक-चाक्रिक-ध्वजि-सुवर्ण-कार-वर्म-कार-पङ्कक§ वर्धकि-गण-गणिक-सौनिक-व्याध-निषाद-रजक-चट-चर्म-काराः¶ अभोज्यान्ना-अप्रतिग्राह्याश्चायाज्याश्च"। तथाच वशिष्ठः,—दक्षिणा-त्यागाच्च पूतो-भवतीति विज्ञायते॥"—इति। तथा बौधायनोऽपि,—"अङ्क-प्रतिग्राह्यस्य प्रतिगृह्य अयाज्यं वा याजयित्वा नाद्यात्, तस्य पाप-

* अप्रतिगृह्य प्रतिगृह्णाति,—इति आ० स० पुस्तकयोः पाठः।

† सर्व्वद्रव्यपरित्यागात्,—इति मु० पुस्तके पाठः।

‡ शस्त्रकार,—इति मु० पुस्तके पाठः।

§ सुवर्णलेख्येक वढक,—इति मु० पुस्तके पाठः।

¶ वुराढचर्म्मकारा,—इति मु० पुस्तके पाठः।

‖ दक्षिणात् पापाच्च,—इति स० सो० आ० पुस्तकेषु पाठः।

(१) भोजनस्य कालत्रयमतिवाह्य चतुर्थकाले भुञ्जानः। पूर्व्वदिने उपोष्य परदिने दिवा अभुक्त्वा रात्रौ भुञ्जान इति यावत्। तथाचोक्तम्। "मुनिभिर्द्दिरशनं प्रोक्तं विप्राणां मर्त्यवासिनां नित्यम्। अहनि च तथा तमस्विन्यां सार्द्धप्रहरयामान्तः"—इति।

मश्रित्वा तरत्समन्दीयं जपेत्*"—इति। †अयाज्य-याजक लक्षणं देवलेन दर्शितम्,—

"यः शूद्रान् पतितांश्चापि याजयेदर्थ-कारणात्।
याजितोवा पुनस्ताभ्यां ब्राह्मणोऽयाज्य-याजकः" ॥ इति।

॥०॥ इति याजनप्रकरणम् ॥०॥

तदेवं याजनं निरूपितम्। अथ दान-प्रतिग्रहौ निरूप्येते। तत्र, दान-विषया श्रुतिः,—"दानमिति सर्वाणि भूतानि प्रशंसन्ति, दानान्नातिदुष्करं तस्माद्दाने रमन्ते"—इति। तथा वाक्यान्तरमपि,—"दानं यज्ञानां वरूथं दक्षिणा लोके दातारं सर्व्व-भूतान्युपजीवन्ति, दानेनारातीरपानुदन्त, दानेन द्विषन्तो मित्राभवन्ति, दाने सर्वं प्रतिष्ठितं तस्माद्दानं परमं वदन्ति,"—इति। आदित्य-पुराणेऽपि,—

"न दानादधिकं किञ्चित् दृश्यते भुवन-त्रये।
दानेन प्राप्यते स्वर्गः श्रीर्दानेनैव लभ्यते ॥
दानेन शत्रून् जयति व्याधिर्दानेन नश्यति।
दानेन लभ्यते विद्या दानेन युवती-जनः ॥
धर्म्मार्थ-काम-मोक्षाणां साधनं परमं स्मृतम्" । इति।

एवं श्रुति-स्मृतिभ्यां प्रशंसा-पूर्व्वको दान-विधिरुन्नीतः। याज्ञवल्क्यस्तु‡ साक्षाद्दानं व्यधत्त,—

* नास्यान्नमवाश्नमश्रित्वा पतेत्,—इति मु० पुस्तक पाठः।
† अत्र, 'तथा'—इत्यधिकः पाठः स० सो० शा० पुस्तकेषु।
‡ याज्ञवल्क्योऽपि,—इति स० सो० शा० पुस्तकेषु पाठः।

"दातव्यं प्रत्यहं पात्रे निमित्तेषु*(१) विशेषतः ।
याचितेनापि दातव्यं श्रद्धा-पूर्व्वन्तु शक्तितः ॥
गो-भू-तिल-हिरण्यादि पात्रे दातव्यमर्च्चितम्† ।
नापात्रे विदुषा किञ्चिदात्मनः श्रेयइच्छता" ॥ इति ।

तयोरन्यतरः स्वरूप-विधिरितरस्तु गुण-विधिः । मनुरपि,—

"दानं‡ धर्म्मं निषेवेत नित्य-नैमित्त-संज्ञकम् ।
परितुष्टेन भावेन पात्रमासाद्य शक्तितः" ॥ इति ।

वह्नि-पुराणे च§ वित्त-वैयर्थ्योक्ति-पुरःसरं दानं विहितम्,—

"यस्य वित्तं न दानाय नोपभोगाय देहिनाम् ।
नापि कीर्त्यै न धर्म्माय तस्य वित्तं निरर्थकम् ॥
तस्माद्वित्तं समासाद्य दैवाद्वा पौरुषादथ ।
दद्यात् सम्यग्-द्विजातिभ्यः कीर्त्तनानि न कारयेत्" ॥ इति ।

विष्णुधर्म्मोत्तरे दानाभावे बाधमाह,—

"सीदते द्विज-मुख्याय योऽर्थिने न प्रयच्छति ।
सामर्थ्ये सति दुर्बुद्धिर्नरकायोपपद्यते" ॥ इति ।

---

* निमित्ते तु,—इति मु० पुस्तके पाठः ।
† दातव्यमर्च्चिते,—इति मु० पुस्तके पाठः । "अर्च्चितमर्च्चिताय दद्यात्" —इति वचनान्तरदर्शनादुभयमपि सङ्गच्छते ।
‡ दानधर्म्मं,—इति स० शा० पुस्तकयोः पाठः ।
§ अग्निपुराणेपि,—इति मु० पुस्तके पाठः ।

---

(१) पात्रम्,—"विद्यायुक्तोधर्म्मशीलः प्रशान्तः क्षान्तोदान्तः सत्यवादी-कृतज्ञः । वृत्तिग्लानेगोहितो गोशरण्यो दाता यज्वा ब्राह्मणः पात्र-माहुः"—वद्युक्तलक्षणम् । निमित्तं संक्रान्त्यादि ।

ब्रह्म-पुराणेऽपि,—

"सदाचाराः कुलीनाश्च रूपवन्तः प्रियम्वदाः।
बहु-श्रुताश्च धर्म्मज्ञा याचमानाः परान् गृहान्॥
दृश्यन्ते दुःखिनः सर्व्वे प्राणिनः सर्व्वदा मुने।
अदत्त-दानाः जायन्ते पर-भाग्योपजीविनः"॥ इति।

व्यासोऽपि,—

"अक्षर-द्वयमभ्यस्तं नास्ति नास्तीति यत् पुरा।
तदिदं देहि देहीति विपरीतमुपस्थितम्"॥ इति।

स्कान्देऽपि,—

"देहीत्येवं ब्रुवन्नर्थी जनं बोधयतीव सः।
यदिदं कष्टमर्थित्वं प्रागदान-फलं हि तत्॥
एकेन तिष्ठताऽधस्तादन्येनोपरि तिष्ठता।
दातृ-याचकयोर्भेदः कराभ्यामेव सूचितः॥
दीयमानन्तु योमोहात् गो-विप्राग्नि-सुरेषु च।
निवारयति पापात्मा तिर्य्यग्योनिं व्रजेत् तु सः"॥ इति।

शातातपोऽपि,—

"मा ददस्वेति योब्रूयात् गव्यग्नौ ब्राह्मणेषु च।
तिर्य्यग्-योनि-शतं गत्वा चाण्डालेष्वपि जायते"॥ इति।

दानस्य स्वरूपं तत्रेतिकर्त्तव्यताञ्च* देवलोदर्शयति,—

"अर्थानामुदिते पात्रे श्रद्धया प्रतिपादनम्।

---

* तथेतिकर्त्तव्यताञ्च,—इति स० सो० शा० पुस्तकेषु पाठः।

दानमित्यभिनिर्दिष्टं व्याख्यानं तस्य वच्यते ॥
द्वे हेतुः षड़धिष्ठानं षड़ङ्गं षड्विपाक-युक् ।
चतुः-प्रकारं चि-विधं चि-नाशं दानमुच्यते ॥
नाल्पत्वं वा बहुत्वं वा दानस्याभ्युदयावहम् ।
श्रद्धा भक्तिश्च दानानां वृद्धि-श्रेयस्करे* हि ते ॥
धर्म्ममर्थञ्च कामञ्च ब्रीड़ा-हर्ष-भयानि च ।
अधिष्ठानानि दानानां षड़ेतानि प्रचक्षते ॥
पात्रेभ्योदीयते नित्यमनपेक्ष्य प्रयोजनम् ।
केवलं धर्म्म-बुद्ध्या† यत् धर्म्म-दानं तदुच्यते ॥
प्रयोजनमुपेक्ष्यैव प्रसङ्गात् यत्प्रदीयते ।
तदर्थ-दानमित्याहुरैहिकं फल-हेतुकम् ॥
स्त्री-पान-मृगयाऽचाणां प्रसङ्गाद् यत् प्रदीयते ।
अनर्हेषु च रागेण काम-दानं तदुच्यते ।
संसदि ब्रीड़या श्रुत्वा चार्थिभ्योयत् प्रयाचितम् ॥
प्रदीयते च यद्दानं ब्रीड़ा-दानमिति स्मृतम् ॥
दृष्ट्वा प्रियाणि श्रुत्वा वा हर्षाद् यद्यत् प्रयच्छति ।
हर्ष-दानमिति प्राहुर्दानं धर्म्म-विचिन्तकाः‡ ॥
आक्रोशनार्थं हिंसानां§ प्रतीकाराय यद्भवेत् ।

---

* वृद्धिक्षयकरे,—इति स० सो० पुस्तकयोः पाठः ।
† त्यागबुद्ध्या,—इति स० सो० पुस्तकयोः पाठः ।
‡ तद्धर्म्मचिन्तकाः,—इति स० सो० आ० पुस्तकेषु पाठः ।
§ आक्रोशानर्थहिंसानां—इति स० सो० पुस्तकयोः पाठः ।

दीयते वाऽपकर्त्तृभ्यो* भय-दानं तदुच्यते ॥
दाता प्रतिग्रहीता च श्रद्धा देयञ्च धर्म्म-युक्।
देश-कालौ च दानामङ्गान्येतानि षड्विदुः ॥
अ-पाप-रोगो धर्म्मात्मा दित्सुरव्यसनः†(१) शुचिः।
अनिन्द्य-जीव-कर्म्मा च षड्भिर्दाता प्रशस्यते ॥
त्रि-शुक्लः शुक्ल-वृत्तिश्च‡ घृणालुः संयतेन्द्रियः।
विमुक्तोयोनि-दोषेभ्योब्राह्मणः पात्रमुच्यते" ॥ इति।

त्रिशुक्ल इति, त्रिभिर्मातापित्राचार्य्यैः शिचितत्वेन शुद्धः।

"शौचं शुद्धिर्महाप्रीतिरर्थिनोदर्शने तथा।
सत्-कृतिश्चानसूया च दाने श्रद्धेत्युदाहृता ॥
आचाराबाधमक्लेशं स्व-यत्नेनार्ज्जितं धनम्।
स्वल्पं वा विपुलं वाऽपि देयमित्यभिधीयते ॥
यद्यत्र दुर्लभं द्रव्यं यस्मिन् कालेऽपि वा पुनः।
दानार्हौ देश-कालौ तौ स्यातां श्रेष्ठौ नचान्यथा ॥
अवस्था-देश-कालानां पात्र-दात्रोश्च सम्पदा।

* पाककर्त्तृभ्यो,—इति स० सो० पुस्तकयोः पाठः।
† दित्सुरव्याजतः,—इति मु० पुस्तके पाठः।
‡ क्षामवृत्तिस्स,—इति स० सो० शा० पुस्तकेषु पाठः।

(१) व्यसनं कामजकोपजदोषविशेषः। तदुक्तम्। "मृगयाऽक्षोदिवा-स्वप्नः परीवादः स्त्रियोमदः। तौर्य्यत्रिकं वृथाट्या च कामजोदशको-गणः। पैशून्यं साहसं द्रोह ईर्ष्याऽसूयाऽर्थदूषणम्। वाग्दण्डजञ्च पारुष्यं क्रोधजोऽपि गणोऽष्टकः"—इति।

हीनं वापि भवेच्छ्रेष्ठं श्रेष्ठं वाऽप्यन्यथा भवेत् ॥
दुष्फलं निष्फलं हीनं तुल्यं विपुलमक्षयम्।
षड्विणक-युगुद्दिष्टं षड़ेतानि विपाकतः ॥
नास्तिक-स्तेन-हिंस्रेभ्यः जाराय पतिताय च।
पिशुन-भ्रूण-हन्तृभ्यां* प्रदत्तं दुष्फलं भवेत् ॥
महदप्यफलं दानं श्रद्धया परिवर्ज्जितम्।
पर-बाधा-करं दानं कृतमप्यूनतां† व्रजेत् ॥
यथोक्तमपि यद्दानं‡ चित्तेन कलुषेण तु।
तत्तु संकल्प-दोषेण दानं तुल्य-फलं भवेत्§ ॥
युक्ताङ्गैः सकलैः षड्भिर्दानं स्याद्विपुलोदयम्।
(१)अनुक्रोश-वशाद्दत्तं दानमक्षयतां|| व्रजेत् ॥
ध्रुवमाजस्रिकं¶ काम्यं नैमित्तिकमिति क्रमात्।
वैदिको**दानमार्गोऽयं चतुर्द्धा वर्ण्यते बुधैः ॥
(२)प्रपाऽऽराम-तड़ागादि सर्व्व-काम-फलं ध्रुवम्"††।

* भ्रूणहन्तृभ्यः,—इति स० पुस्तके पाठः।
† स्फीतमप्यूनतां,—इति मु० पुस्तके पाठः।
‡ चेद्दत्तं—इति स० सो० पुस्तकयोः पाठः।
§ लभेत,—इति मु० पुस्तके पाठः।
|| मक्षय्यतां,—इति मु० पुस्तके पाठः।
¶ एवमाजस्रिकं,—इति मु० पुस्तके पाठः।
** दिव्यश्च,—इति मु० पुस्तके पाठः।
†† सर्व्वकामफलप्रदम्,—इति मु० पुस्तके पाठः।

(१) अनुक्रोशोदया।
(२) प्रपा पानीयशाला। आराम उपवनम्। तड़ागोजलाशयविशेषः।

तदाजस्रिकमित्याहुर्दीयते यद्दिनेदिने ।
अपत्यविजयैश्वर्य्य * स्त्री-बालार्थं यदिष्यते ।
इच्छासंस्थन्तु यद्दानं काम्यमित्यभिधीयते ।
कालापेचं क्रियापेचमर्थापेचमिति स्मृतम्(१) ॥
त्रिधा नैमित्तिकं प्रोक्तं स-होमं होम-वर्ज्जितम् ।
नवोत्तमानि † चत्वारि मध्यमानि विधानतः ॥
अधमानि तु शेषाणि त्रिविधत्वमिदं विदुः ।
अन्न-विद्या-वधू-वस्त्र-गो-भू-रुक्माश्व-हस्तिनाम् ॥
दानान्युत्तमदानानि उत्तम-द्रव्य-दानतः ।
विद्यादाच्छादनं वासः परिभोगौषधानि च ॥
दानानि मध्यमानीति मध्यम-द्रव्य-दानतः ।
उपानत्-प्रेष्य-यानानि छत्र-पात्रासनानि च ॥
दीप-काष्ठ-फलादीनि चरमं बहु-वार्षिकम् ।
बहुत्वादर्थ-जातानां सङ्ख्या शेषेषु नेष्यते ॥
अधर्म्मान्यवशिष्टानि सर्व्वदानान्यतो विदुः ‡ ।
इष्टं दत्तमधीतं वा प्रणश्यत्यनुकीर्त्तनात् ॥
श्लाघाऽनुशोचनाभ्यां वा भग्न-तेजो § विपद्यते ।

---

* अपत्यारिजयैश्वर्य्यं,—इति पाठः स० से० शा० पुस्तकेषु ।
† तथोत्तमानि,—इति स० से० पुस्तकयोः पाठः ।
‡ अथ, 'इति'—इत्याधिकः पाठः मु० पुस्तके ।
§ भग्नतेजा,—इति मु० पुस्तके पाठः ।

---

(१) कालापेचं यथा आषाढ्यादिनिमित्तकं दानम् । क्रियापेचं यथा श्राद्धादौ वन्ध्यादिभ्योदानम् । अर्थापेचं यथा पुत्रजन्मादौ दानम्, "एकां गां दशगुर्दद्यात्"—इत्याद्युक्तं वा ।

तस्मादात्म-कृतं पुण्यं न वृथा परिकीर्त्तयेत्" ॥ इति ।

नित्य-नैमित्तिक-काम्य-विमलाख्याश्च चत्वारोदान-भेदाः पुराण-सारे दर्शिताः । सात्त्विकादि-भेदान् भगवानाह,—

"दातव्यमिति यद्दानं दीयतेऽनुपकारिणे ।
देशे च काले पात्रे च तद्दानं सात्त्विकं स्मृतम् ॥
यत्तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः ।
दीयते च परिक्लिष्टं तद्राजसमुदाहृतम् ॥
अ-देश-काले यद्दानमपात्रेभ्यश्च दीयते ।
असत्कृतमवज्ञातं* तत्तामसमुदाहृतम्" ॥ इति ।

तत्र फलविशेषोविष्णुधर्म्मोत्तरे दर्शितः,—

"तामसानां फलं भुङ्क्ते तिर्य्यक्त्वे मानवः सदा ।
वर्ण-सङ्कर-भावेन(१) वाऽर्द्धके यदि वा पुनः ॥
वाल्ये वा दास-भावेन नात्र कार्य्या विचारणा ।
अतोऽन्यथा तु मानुष्ये राजसानां फलं भवेत् ॥
सात्त्विकानां फलं भुङ्क्ते देवत्वे नात्र संशयः" । इति ।

तत्र दान-पात्रमाह याज्ञवल्क्यः,—

"न विद्यया केवलया तपसा वाऽपि पात्रता ।
यत्र वृत्तमिमे चोभे तद्धि पात्रं प्रचक्षते"॥ इति ।

यमोऽपि,—

"विद्या-युक्तोधर्म्म-शीलः प्रशान्तः

---

* असंस्कृतमविज्ञातं,—इति मु० पुस्तके पाठः ।

---

(१) विजातीययोर्व्वर्णयोः संप्रयोगात् योजायते सोयं वर्णसङ्करः ।

क्षान्तो दान्तः सत्य-वादी कृत-ज्ञः।
स्वाध्यायवान् धृतिमान्* गोशरण्यो-
दाता यज्वा ब्राह्मणः पात्रमाहुः" ॥ इति।

वशिष्ठः,—

"किञ्चिद्वेदमयं पात्रं किञ्चित् पात्रं तपोमयम्।
पात्राणामपि तत्पात्रं शूद्रान्नं यस्य नोदरे" ॥ इति।

बृहस्पतिः,—

"आगमिष्यति यत् पात्रं तत् पात्रं तारयिष्यति"। इति।

विष्णुधर्म्मोत्तरे,—

"पतनात् त्रायते यस्मात् तस्मात् पात्रं प्रकीर्त्तितम्"। इति।

स्कन्द-पुराणे पात्र-विशेषोविहितः,—

"प्रथमन्तु गुरोर्द्दानं दद्याच्छ्रेष्ठमनुक्रमात्।
ततोऽन्येषाञ्च विप्राणां दद्यात् पात्रानुसारतः ॥
गुरोरभावे तत्पुत्रं तद्भार्य्यां तत्-सुतां† तथा।
पौत्रं प्रपौत्रं दौहित्रमन्यं वा तत्-कुलोद्भवम् ॥
तद्दानातिक्रमे दानं प्रत्युताधोगतिप्रदम्"। इति।

यमोऽपि,—

"सममब्राह्मणे दानं द्विगुणं ब्राह्मण-ब्रुवे(१)।

---

* 'धृतिमान्,'—इत्यत्र,स्मृतिमान्,—इति मु पुस्तके, 'स्वाध्यायवान्धृति-मान्'—इत्यत्र, स्वग्निर्ग्लानेर्गोप्तितो,—इति जीमूतवाहनधृतः पाठः।
† तत्सुतान्,—इति मु० पुस्तके पाठः।

---

(१) ब्राह्मणमात्मानं ब्रवीति नपुनर्ब्राह्मणलक्षणोयः सोऽयं ब्राह्मणब्रुवः। तथा चोक्तम्। "जन्मकर्म्मपरिभ्रष्टो ब्राह्मीक्रियाविवर्जितः। ब्रवीति ब्राह्मण-

प्राधीते शतशाइस्त्वनन्तं वेद-पार-गे" ॥ इति ।

प्राधीतः प्रारब्धाध्ययनइत्यर्थः । सम्वर्त्तः, *—

"उत्पत्ति-प्रलयौ चैव भूतानामागतिं गतिम्।

वेत्ति विद्यामविद्याञ्च स भवेद्वेद-पारगः"(१) ॥ इति† ॥

"शूद्रे सम-गुणं दानं वैश्ये तद्-द्विगुणं स्मृतम्।

क्षत्रिये त्रिगुणं प्राहुः षड्गुणं ब्राह्मणे स्मृतम्" ॥ इति ।

शूद्रादीनां पात्रत्व-प्रतिपादनमन्नदानादिविषयं‡ "कृतान्नमितरेभ्यः" —इति गौतम-वचनात् ।

व्यासः,—

"मातापित्रोश्च यद्दत्तं भ्रातृ-स्वसृ-सुतासु च।

जायाऽऽत्मजेषु यद्दत्तं सोऽनिन्द्यः स्वर्ग-संक्रमः§ ॥

पितुः शत-गुणं दानं सहस्रं मातुरुच्यते ।

अनन्तं दुहितुर्दानं सोदर्य्ये दत्तमक्षयम्"॥ इति ।

भविष्योत्तरे,—

"न केवलं ब्राह्मणानां दानं सर्व्वत्र शस्यते ।

---

* संवर्त्तः,—इति नास्ति मु० पुस्तके ।

† 'इति' शब्दोऽत्र नास्ति मु० पुस्तके।

‡ अन्नदानविषयं,—इति मु० पुस्तके पाठः।

§ अत्र 'इति' शब्दोऽधिकोऽस्ति मु० पुस्तके ।

---

स्याद्वं सर्व्वेयोब्राह्मणब्रुवः"—इति।"गर्भाधानादिसंस्कारैर्युक्तस्च नियतमतः। नाध्यापयति नाधीते सर्व्वेयोब्राह्मणब्रुवः"—इत्युक्तलक्षणो वा।

(१) विद्या तत्त्वज्ञानम्। अविद्या मिथ्याज्ञानं कर्म्मकलापो वा, तयाश्चोपासनाया विद्यापदेन संग्रहोमन्तव्यः।

भगिनी-भागिनेयानां मातुलानां पितुःस्वसुः* ।
दरिद्राणाञ्च बन्धूनां दानं कोटि-गुणं भवेत्" ॥ इति ।

शातातपोऽपि,—

"सन्निकृष्टमधीयानमतिक्रामति योद्विजम् ।
भोजने चैव दाने च दहत्यासप्तमं कुलम्" ॥ इति ।

महाभारते,—

"स्वतस्वा स्वत-दाराश्च† ये विप्राः देश-विप्लवे ।
अर्थार्थमभिगच्छन्ति तेभ्योदानं महाफलम्" ॥ इति।

अपात्रमाह मनुः,—

"न वार्य्यपि‡ प्रयच्छेत्तु वैड़ाल-व्रतिके द्विजे।
न वक-व्रतिके पापे नावेद-विदि धर्म्म-वित् ॥
त्रिष्वप्येतेषु दत्तं हि विधिनाऽप्यर्जितं धनम् ।
दातुर्भवत्यनर्थाय परत्रादातुरेवच ॥
यः कारणं पुरस्कृत्य व्रत-चर्य्यां निषेवते ।
पापं व्रतेन संछाद्य वैड़ालं नाम तद्व्रतम् ॥
अधोदृष्टिर्नैष्कृतिकः स्वार्थ-संधान-तत्परः ।
शठोमिथ्याविनीतश्च वक-व्रत-चरोद्विजः"§ ॥ इति ।

शातातपोऽपि,||—

* पितृस्वसुः,—इति मु० पुस्तके पाठः ।
† पितृभ्रातृदाराश्च,—इति स० सो० शा० पुस्तकेषु पाठः ।
‡ नचाप्यपि,—इति स० सो० पुस्तकयोः पाठः । नचाप्येपि, - इति मु० पुस्तके पाठः ।
§ वकवृत्तिकरोद्विजः,—इति मु० पुस्तके पाठः ।
|| नास्तीदं स० सो० शा० पुस्तकेषु ।

"नष्टं देवलके दत्तमप्रतिष्ठञ्च वार्द्धुषौ[१] ।
यच्च वाणिज्यके दत्तं न च तत् प्रेत्य नो इह" ॥ इति ।

देवलकश्च स्कान्दे दर्शितः,—

"देवार्चन-रतोविप्रोवित्तार्थी वत्सर-त्रयम् ।
स वै देवलकोनाम हव्य-कव्येषु गर्हितः" ॥ इति ।

वृद्धमनुः,—

"पात्र-भूतोऽपि योविप्रः प्रतिगृह्य प्रतिग्रहम् ।
असत्सु विनियुंजीत तस्मै देयं न किञ्चन ॥
सञ्चयं कुरुते यश्च प्रतिगृह्य समन्ततः ।
धर्म्मार्थं नोपयुङ्क्ते च* न तं तस्करमर्चयेत्" ॥ इति ।

विष्णुधर्म्मोत्तरे,—

"पर-स्थाने वृथा दानमशेषं परिकीर्त्तितम् ।
आरूढ़े पतिते † चैव अन्यथाप्तैर्धनैश्च ‡ यत्[२] ॥

* नोपयुञ्जीत,—इति मु० पुस्तके पाठः ।
† आरूढ़पतिते,—इति मु० पुस्तके पाठः ।
‡ अन्यथासेधनैश्च,—इति स० सो० पुस्तकयोः पाठः ।

(१) वार्द्धुषौ वृद्धिग्राहिणि ।
(२) परस्थाने परभूमौ । भूस्वामिनोऽननुज्ञयातु म दोषः । "नाननुज्ञात-भूमिर्हि यज्ञस्य फलमश्नुते"—इत्युक्तेः । आरूढ़ पतिते इति अवकीर्णिनैष्ठिकब्रह्मचारिविषयम् । "आरूढ़ोनैष्ठिकं धर्म्मं यस्तु प्रच्यवते पुनः । प्रायश्चित्तं न पश्यामि येन शुद्ध्येत् स आत्महा"—इति, "आरूढ़पतितं विप्रं मण्डलाच्च विनिःसृतम् । उद्बद्धं कृमिदष्टञ्च स्पृष्ट्वा चान्द्रायणं चरेत्"--इति चैवमादिवचनैस्तस्यात्यन्तं निन्दितत्वात् । "बहिस्तूभयथापि स्मृतेराचाराच्च" ( ३अ०४पा०४३सू० ) इति शारीरकसूत्रमप्यत्र स्मर्त्तव्यम् । अन्यथाप्तैरिति, अन्यथा शास्त्रीयोपायं विना आप्तैरर्ज्जितैरित्यर्थः । अन्यायाप्तैरिति तु युक्तः पाठः ।

व्यर्थमब्राह्मणे दानं पतिते तस्करे तथा।
गुरोश्चाप्रीति-जनके कृतघ्ने ग्राम-याजके॥
वेद-विक्रयके चैव यस्य चोपपतिर्गृहे।
स्त्रीभिर्जितेषु यद्दत्तं व्याल-ग्राहे तथैव च॥
ब्रह्म-बन्धौ च यद्दत्तं यद्दत्तं वृषलीपतौ।
परिचारेषु यद्दत्तं वृथादानानि षोड़श"॥ इति।

महाभारते,—

"पङ्गन्धवधिरामूकाव्याधिनोपहताश्च ये।
भर्त्तव्यास्ते महाराज, न तु देयः प्रतिग्रहः"॥ इति।

पात्रापेक्षणमपात्र-दानञ्च मनुर्निषेधति,—

"अनर्हते यद्ददाति न ददाति यदर्हते*।
अर्हानर्हापरिज्ञानाद्दानाद् धर्माच्च हीयते"॥ इति।

भविष्योत्तरे देय-स्वरूपं निरूपितम्,—

"यद्यदिष्टं विशिष्टञ्च न्याय-प्राप्तञ्च यद्भवेत्।
तत्तद् गुणवते देयमित्येतद्दान-लक्षणम्"॥ इति।

अशेषस्य देयत्व-प्राप्तौ विशेषमाह याज्ञवल्क्यः,—

"स्व-कुटुम्बाविरोधेन देयं दार-सुतादृते।
नान्वये(१) सति सर्व्वस्वं यच्चान्यस्मै प्रतिश्रुतम्"॥ इति।

बृहस्पतिरपि,—

* अनर्हाय यद्ददाति नददाति यदर्हाय,—इति स०शो० पुस्तकयोः पाठः।

(१) अन्वयः सन्ततिः।

"[१]कुटुम्ब-भक्त-वसनाद् देयं यदतिरिच्यते" । इति ।

शिव-धर्म्मे,—

"तस्मात्त्रिभागं वित्तस्य जीवनाय प्रकल्पयेत् ।
भाग-द्वयन्तु धर्मार्थमनित्यं जीवनं यतः" ॥ इति ।

कुटुम्बाविरोधेन देयमित्युक्तं, तस्यापवादमाह व्यासः,—

"कुटुम्बं पीड़यित्वाऽपि ब्राह्मणाय महात्मने ।
दातव्यं भिक्षवे चान्नमात्मनोभूतिमिच्छता" ॥ इति ।

देय-विशेषेण फल-विशेषमाह मनुः,—

"वारि-दस्तृप्तिमाप्नोति सुखमक्षयमन्न-दः ।
तिल-प्रदः प्रजामिष्टां दीप-दश्चक्षुरुत्तमम् ॥
भूमि-दोभूमिमाप्नोति दीर्घमायुर्हिरण्य-दः ।
गृह-दोऽग्र्याणि वेश्मानि रूप्य-दोरूप* मुत्तमम् ॥
वासोदश्चन्द्र-सालोक्यमश्व-सालोक्यमश्व-दः ।
अनडुद्-दः श्रियं तुष्टां† गो-दो ब्रध्नस्य पिष्टपम्‡ ॥
यान-शय्या-प्रदोभार्य्यामैश्वर्य्यमभय-प्रदः ।
धान्य-दः शाश्वतं सौख्यं ब्रह्म-दो ब्रह्म शाश्वतम् ॥
सर्व्वेषामेव दानानां ब्रह्म-दानं विशिष्यते" । इति ।

* रूप्य,—इति मु० पुस्तके पाठः ।
† पुष्टां,—इति मु० पुस्तके पाठः ।
‡ पिष्टपम्,—इति पाठान्तरम् ।

(१) कुटुम्बशब्देनावश्यभरणीया भण्यन्ते । ते च, "माता पिता गुरुर्भ्राता प्रजादीनाः समाश्रिताः । अभ्यागतोऽतिथिश्चैव ।पोष्यवर्ग उदाहृतः" —इति मनूक्ताः ।

भविष्योत्तरे पात्र-विशेष देय-विशेषोदर्शितः,—

"तथा द्रव्य-विशेषांश्च दद्यात् पात्र-विशेषतः।
आर्त्तानामन्न-दानञ्च गो-दानञ्च कुटुम्बिने* ॥
तथा(१)प्रतिष्ठा-हीनानां क्षेत्र-दानं विशिष्यते।
सुवर्णं याजकानाञ्च† विद्यां चैवोर्द्ध-रेतसाम् ॥
कन्यां चैवानपत्यानां ददतां गतिरुत्तमा"। इति।

स्कान्देऽपि,—

"श्रान्तस्य यानं तृषितस्य पान-
मन्नं क्षुधार्त्तस्य नरोत्तमेन्द्र।
दत्वाद्विमानेन सुराङ्गनाभिः
संस्तूयमानं त्रिदिवं नयन्ति" ॥

अङ्गिराः,—

"देवतानां गुरूणाञ्च मातापित्रोस्तथैव च।
पुण्यं(२) देयं प्रयत्नेन नापुण्यं चोदितं‡ क्वचित्"॥ इति।

विष्णु-धर्मोत्तरे,—

"यत्रोपयोगि यद्द्रव्यं देयं तत्रैव तद्भवेत्"। इति।

दान-निमित्तान्याह शातातपः,—

---

* गोदानं यज्वने तथा,—इति मु० पुस्तके पाठः।
† याचकानाञ्च,—इति मु० पुस्तके पाठः।
‡ चार्जितं,—इति मु० पुस्तके पाठः।

---

(१) प्रतिष्ठा आस्पदम्।
(२) पुण्यं न्यायार्जितम्।

"अयनादौ सदा देयं द्रव्यमिष्टं गृहे तु यत्।
षड़शीति-मुखे चैव विमोचे चन्द्र-सूर्य्ययोः॥
संक्रान्तौ यानि दत्तानि हव्य-कव्यानि दातृभिः।
तानि नित्यं ददात्यर्कः पुनर्ज्जन्मनिजन्मनि"॥ इति।

वृद्ध-वशिष्ठोऽयनादीन्दर्शयति,—

"मृग-कर्कट-संक्रान्ती द्वे तूदग्-दक्षिणायने।
विषुवे च तुला-मेषौ तयोर्मध्ये ततोऽपराः[१]॥
वृष-वृश्चिक-कुम्भेषु सिंहे चैव यदा रविः।
एतद्विष्णु-पदं नाम विषुवादधिकं फलम्॥
कन्यायां मिथुने मीने धनुष्यपि रवेर्गतिः।
षड़शीति-मुखाः प्रोक्ताः षड़शीति-गुणाः फलैः"॥ इति।

विष्णु-धर्म्मोत्तरे,—

"वैशाखी कार्त्तिकी माघी पूर्णिमा तु महाफला।
पौर्णमासीषु सर्व्वासु मासर्क्ष-सहितासु च।
दत्तानामिह दानानां फलं दश-गुणं भवेत्" इति।

मनुः,—

"सहस्र-गुणितं दानं भवेद्दत्तं युगादिषु।
कर्म्म श्राद्धादिकञ्चैव तथा मन्वन्तरादिषु"॥ इति।

याज्ञवल्क्यः,—

---

(१) विषुवे,—इति प्रथमाद्विवचनान्तं पदम्। तयोरयन-विषुवयोर्मध्ये, ततोऽयनविषुवतो, ऽपराः अन्याः संक्रान्तय इत्यर्थः। उत्तरश्लोकयोः स्पष्टमेतत्।

"शतमिन्दु-क्षये दानं सहस्रन्तु दिन-क्षये।
विषुवे शत-साहस्रं व्यतिपातेष्वनन्तकम्" ॥ इति।

भारद्वाजः*,—

"व्यतिपाते वैधृतौ† च(१) दत्तमक्षय-मुद्भवेत्" इति।

विष्णुः,—

"दिन-क्षयो दिन-च्छिद्रं पुत्र-जन्मादि चापरम्।
आदित्यादि-ग्रहाणाञ्च नक्षत्रैः सह सङ्गमः‡॥
विज्ञेयः पुण्य-कालोऽयं ज्योतिर्विद्भिर्विचार्य्य च।
तत्र दानादिकं कुर्य्यादात्मनः पुण्य-वृद्धये" ॥ इति।

दिन-क्षय-लक्षणमुक्तं वशिष्ठेन,—

"एकस्मिन् सावने त्वह्नि तिथीनां त्रितयं यदा।
तदा दिन-क्षयः प्रोक्तः शत-साहस्रिकं फलम्"॥

दिन-च्छिद्रस्य लक्षणं ज्योतिःशास्त्रेऽभिहितम्,—

"तिथ्यृक्ष-तिथि-योगर्क्ष-च्छेदादिः शशिपर्वणः§।

---

* भरद्वाजः,—इति मु॰ पुस्तके पाठः।
† वैधृते,—इति मु॰ पुस्तके पाठः।
‡ दिनक्षये दिनच्छिद्रे पुत्रजन्मादिकेषु च। आदित्यादिग्रहाणाञ्च नक्षत्रैः सह सङ्गमे,—इति मु॰ पुस्तके पाठः।
§ तिथ्यर्द्धतिथियोगर्क्षच्छेदादीराशिपर्व्वणः,—इति स॰ सो॰ शा॰ पुस्तकेषु पाठः।

---

(१) व्यतिपातवैधृतौ सप्तविंशतियोगान्तर्गत योगविशेषौ। "श्रवणाश्विध-निष्ठार्द्रानागदैवतमस्तके। यद्यमा रविवारेण व्यतिपातः स उच्यते"—इत्युक्तो वा व्यतिपातोयाह्यः।

सदृशौ द्विवेध-च्छिद्र-समाख्याः प्राह भार्गवः ॥
छेदादि-कालः कथितस्तिथि-क्षये घटी-द्वयम्* ।
नाग-वह्नि-समोपेता† तच्छेदन-फलैर्युतम् ॥
पलैः षोड़शभिः युक्तं नाड़िका-द्वितयं युतौ‡ ।
छेदादि-समयः प्रोक्तो दानेऽनन्त-फल-प्रदः" ॥

दानस्य निषिद्ध-कालमाहतुः शङ्ख-लिखितौ,—

"आहारं मैथुनं निद्रां सन्ध्या-कालेषु वर्ज्जयेत् ।
कर्म्म चाध्यापनञ्चैव तथा दान-प्रतिग्रहौ" ॥ इति§ ।

स्कन्द-पुराणे,—

"रात्रौ दानं न कर्त्तव्यं कदाचिदपि केनचित् ।
हरन्ति राक्षसा यस्मात्तस्माद्दातुर्भयावहम् ।
विशेषतोनिशीथे तु न शुभं कर्म्म शर्म्मणे ॥
अतोविवर्जयेत् प्राज्ञोदानादिषु महानिशाम्" । इति ।

तत्र प्रतिप्रसवमाह देवलः,—

"राहु-दर्शन-संक्रान्ति-यात्राऽऽदौ प्रसवेषु च¶ ।
दानं नैमित्तिकं ज्ञेयं रात्रावपि तदिष्यते" ॥ इति ।

अत्र संक्रान्ति-शब्दोमकर-कर्कट-विषयः, स्मृत्यन्तरे संक्रान्तिषु

---

* तिथिक्षये घटीद्वयम्,—इति नास्ति मु० पुस्तके ।
† अष्टादिसङ्गमोपेतं,—इति मु० पुस्तके पाठः ।
‡ युगे,—इति मु० पुस्तके पाठः ।
§ 'इति' शब्दो नास्ति स० सो० पुस्तकयोः ।
¶ विवाहात्ययवृद्धिषु,—इत्यन्यत्र पाठः । अत्ययोमरणं, वृद्धिः पुत्रजन्मादिः,—इति तदर्थः ।

रात्रि-दानादि-निषेधं प्रक्रम्य "मुक्ता मकर-कर्कटौ"—इति पर्य्युदासात्।
मत्स्य-पुराणे दानस्य प्रशस्ता देशविशेषा निर्द्दिष्टाः,—

"प्रयागादिषु तीर्थेषु पुण्येष्वायतनेषु च।
दत्वा चाक्षयमाप्नोति* नदी† पुण्य-वनेषु च"॥ इति।

तथा व्यासेनापि,—

"गङ्गा-द्वारे प्रयागे च अविमुक्ते च पुष्करे।
मकरे चाट्टहासे च गङ्गा-सागर-सङ्गमे॥
कुरु-क्षेत्रे गया-तीर्थे तथाचामर-कण्टके।
एवमादिषु तीर्थेषु दत्तमक्षयतामियात्"॥

॥०॥ इति दानप्रकरणम् ॥०॥

तदेवं सेतिकर्त्तव्यं दान-प्रकरणं निरूपितम्, अथ प्रतिग्रहो निरूप्यते। तत्र श्रौतो विधिः पूर्व्वमुदाहृतः,—"द्रव्यमर्जयन् ब्राह्मणः प्रतिगृह्णीयात्",—इति। तत्र, याजने येयं चर्चा पूर्व्वमनुक्रान्ता, सेयं‡ प्रतिग्रहेऽपि यथासम्भवमनुसन्धातव्या§।

ननु प्रतिग्रहो मनुना निन्दितः,—

"प्रतिग्रहः प्रत्यवरः स तु विप्रस्य गर्हितः"॥ इति।

नैवम्, अस्या निन्दाया असत्-प्रतिग्रह¶ विषयत्वात्। तच्चोपरितने वचने स्पष्टीकृतम्,—

* दत्त्वा चाक्षय्यमाप्नोति,—इति मु॰ पुस्तके पाठः।
† नदी,—इत्यत्र, तदा,—इति स॰ से॰ पुस्तकयोः पाठः।
‡ तत्र याजने पूर्व्वमनुक्रान्तोयं,—इति मु॰ पुस्तके पाठः।
§ सन्धातव्यः,—इति मु॰ पुस्तके पाठः।
¶ असाधुप्रतिग्रह,—इति मु॰ पुस्तके पाठः।

"प्रतिग्रहो गर्हितः स्यात् शूद्रादप्यग्रजन्मनः"*। इति।

यः प्रतिग्रहो नीचात् क्रियते, स गर्हित इत्यर्थः। सत्प्रतिग्रहस्तु तेनैवाभ्यनुज्ञातः,

"नाध्यापनात् याजनाद्वाऽगर्हिताद्वा प्रतिग्रहात्।
दोषो भवति विप्राणां ज्वलनार्क-समा हि ते†"॥ इति।

अगर्हितादिति छेदः‡। अगर्हित-प्रतिग्रहादप्यप्रतिग्रहः श्रेयान्§ तथाच याज्ञवल्क्यः,—

"प्रतिग्रह-समर्थोऽपि नादत्ते यः प्रतिग्रहम्।
ये लोका दान-शीलानां स तानाप्नोति पुष्कलान्"॥ इति॥।

ननु यमः प्रतिग्रहं प्रशंसति,—

"प्रतिग्रहाध्यापन-याजनानां
प्रतिग्रहं श्रेष्ठतमं वदन्ति।
प्रतिग्रहात्¶ शुद्ध्यति जप्य-होमै-
र्याज्यन्तु पापं न पुनन्ति** वेदाः" ॥इति।

मनुस्तु तद्विपर्य्ययमाह,—

"जप-होमैरपैत्येनो याजनाध्यापनैः कृतम्।

---

* प्रतिग्रहस्तु क्रियते शूद्रादप्यग्रजन्मनः,—इति स० पुस्तके पाठः।
† ज्वलनार्कसमोहिसः,—इति स० पुस्तके पाठः।
‡ सत्प्रतिग्रहस्तु तेनैवाभ्यनुज्ञातः,—विशुद्धाच्च प्रतिग्रह इति,—इत्येतावन् पाठो मु० पुस्तके।
§ अगर्हितादपि प्रतिग्रहादप्रतिग्रहएव श्रेयान,—इति मु० पुस्तके पाठः।
|| 'इति' शब्दोनास्ति स० पुस्तके।
¶ प्रतिग्रहः,—इति स० सो० पुस्तकयोः पाठः।
** पुनन्तु,—इति मु० पुस्तके पाठः।

प्रतिग्रह-निमित्तं तु त्यागेन तपसैव च" ॥ इति ।

नायं दोषः, द्विजातिभ्यः प्रतिग्रहः प्रशस्तः शूद्रात् प्रतिग्रहो निन्दितः*—इतिव्यवस्थायाः सुवचत्वात्। ननु सत्प्रतिग्रहेऽपि कियानपि प्रत्यवायः प्रतीयते, "प्रतिग्रहात् शुद्ध्यति"—इत्युक्तेः। वाढ़ं, अस्त्येव वेद-पारगत्वादि-सामर्थ्य-रहितस्य प्रतिग्रहे प्रत्यवायः† ! एतदेवाभिप्रेत्य‡ स्कान्दे वेद-पारगस्य प्रत्यवायो निवारितः,—

"षड़ङ्ग-वेद-विद्विप्रो§ यदि कुर्य्यात् प्रतिग्रहम् ॥
न स पापेन लिप्येत पद्म-पत्रमिवाम्भसा" ॥ इति ।

एषएव न्यायो याजनाध्यापनयोर्योजनीयः। अयाज्य-याजन-भृतकाध्यापन-दुष्टप्रतिग्रहेष्वेनोबाहुल्यं, स्वस्मिन्नीषदधिकार-वैकल्येन‖ प्रवर्त्तमानस्य स्वल्पः प्रत्यवायः, मुख्याधिकारिणो विहित-याजनादि-प्रवृत्तौ न किञ्चिदप्येनः,—इति विवेकः। सदसत्-प्रतिग्रहौ विवेचयति व्यासः,—

"द्विजातिभ्योधनं लिप्सेत् प्रशस्तेभ्यो द्विजोत्तमः।
अपिवा जाति-मात्रेभ्यो नतु शूद्रात् कथञ्चन" ॥ इति ।

सतामसम्भवे सत्यसतोपि प्रतिग्रह स्तुर्व्विंशतिमतेऽभ्यनुज्ञातः,—

"सीदंश्चेत्¶ प्रतिगृह्णीयाद् ब्राह्मणेभ्यस्ततो नृपात् ।

---

* प्रतिग्रहे दोषः,—इति मु॰ पुस्तके पाठः।
† दोषः,—इति मु॰ पुस्तके पाठः।
‡ इत्यभिप्रेत्य,—इति मु॰ पुस्तके पाठः।
§ वेदाङ्ग पारगोविप्रो,—इति स॰ सो॰ पुस्तकयोः पाठः।
‖ वैकल्यमति,—इति स॰ सो॰ पुस्तकयोः पाठः।
¶ सदा च,—इति मु॰ पुस्तके पाठः।

ततस्तु वैश्य-शूद्रेभ्यः शङ्खस्य वचनं यथा" ॥ इति ।

शूद्र-प्रतिग्रहे विशेषमाहाङ्गिराः,—

"यत्तु राशीकृतं धान्यं खले क्षेत्रे तथा भवेत्* ।

शूद्रादपि ग्रहीतव्यमित्याङ्गिरस-भाषणम्" ॥ इति ।

तत्रैव विशेषान्तरमाह व्यासः,—

"कुटुम्बार्थे तु सत्-शूद्रात् प्रतिग्राह्यमयाचितम् ।

क्रत्वर्थमात्मने चैव न हि याचेत कर्हिचित्" ॥ इति ।

मनुरपि,—

"न यज्ञार्थं† धनं शूद्रात् विप्रो‡ भिक्षेत धर्म्मवित् ।

यजमानोऽपि भिक्षित्वा चाण्डालः§ प्रेत्य जायते" ॥ इति ।

असत्-प्रतिग्रहोचितोऽवस्था-विशेषः स्कन्द-पुराणे दर्शितः,—

"दुर्भिक्षे दारुणे प्राप्ते कुटुम्बे सीदति क्षुधा ।

असतः प्रतिगृह्णीयात् प्रतिग्रहमतन्द्रितः" ॥ इति ।

याज्ञवल्क्योऽपि,—

"आपद्गतः संप्रगृह्णन् भुञ्जानोवा¶ यतस्ततः ।

न लिप्येतैनसा विप्रो ज्वलनार्क-सम-प्रभः" ॥ इति ।

मनुरपि,—

---

* इति क्षेत्रेथवा भवेत्,—इति मु० पुस्तके पाठः ।

† यागार्थं,—इति मु० पुस्तके पाठः ।

‡ द्विजो,—इति मु० पुस्तके पाठः ।

§ चण्डालः,—इति मु० पुस्तके पाठः ।

¶ भुञ्जानोपि,—इति स० सो० पुस्तकयोः पाठः ।

"वृद्धौ च मातापितरौ साध्वी भार्य्या सुतः शिशुः।
अप्यकार्य्य-शतं कृत्वा भर्त्तव्या मनुरब्रवीत्॥
जीवितात्ययमापन्नो योऽन्नमत्ति यतस्ततः।
आकाशमिव पङ्केन न स पापेन लिप्यते"॥ इति।

गारुड़-पुराणे प्रतिग्राह्यस्य द्रव्यस्येयत्ता दर्शिता,—

"यावता पञ्च-यज्ञानां कर्त्तुर्निर्वहणं भवेत्*।
तावदेव हि गृह्णीयात्† कुटुम्बस्यात्मनस्तथा"॥ इति।

व्यासोऽपि,—

"प्रतिग्रह-रुचिर्नस्यात्‡ यात्रार्थन्तु§(१) समाचरेत्।
स्थित्यर्थादधिकं गृह्णन् ब्राह्मणोयात्यधोगतिम्॥
(२)वृत्ति-सङ्कोचमन्विच्छेन्नेहेत धन-विस्तरम्।
धन-लाभे प्रवृत्तस्तु ब्राह्मण्यादेव हीयते"॥ इति।

अनापदि राज-प्रतिग्रहं निन्दति याज्ञवल्क्यः,—

"न राज्ञः प्रतिगृह्णीयात् लुब्धस्योच्छास्त्र-वर्त्तिनः।
प्रतिग्रहे सूनि-चक्रि-ध्वजि-वेश्या-नराधिपाः(३)।

---

* करणं नियतं भवेत्,—इति मु० पुस्तके पाठः।
† तावद्ग्राह्यं सदैव स्यात्,—इति मु० पुस्तके पाठः।
‡ प्रतिग्रहाद्यारुचिः स्यात्,—इति मु० पुस्तके पाठः।
§ यज्ञार्थन्तु,—इति स० सो० पुस्तकयोः पाठः।

---

(१) यात्रा जीवनोपायः।
(२) वृत्तिर्जीवनं।
(३) सूनी प्राणिघातकः। चक्री तैलिकः। ध्वजी मद्यविक्रेता।

दृष्टा दशगुणं* पूर्व्वात् पूर्व्वादेते यथोत्तरम्" । इति ।

संवर्त्तः,—

"राज-प्रतिग्रहोघोरोमध्वास्वादो विषोपमः ।
पुत्र-मांसं वरं भोक्तुं नतु राज-प्रतिग्रहम्" ॥ इति ।

स्कान्दे,—

"मरु-देशे निरुदके ब्रह्म-रक्षस्त्वमागतः ।
राज-प्रतिग्रहात्पुष्टः पुनर्जन्म न विन्दति ॥
ब्राह्मण्यं यः परित्यज्य द्रव्य-लोभेन मोहितः ।
विषयामिष-लुब्धस्तु(१) कुर्य्याद्राज-प्रतिग्रहम् ॥
रौरवे नरके घोरे† तस्यैव पतनं ध्रुवम् ।
तृणा दवाग्निना दग्धाः प्ररोहन्ति घनागमे ॥
राज-प्रतिग्रहाद्दग्धा न प्ररोहन्ति कर्हिचित्" । इति ।

विष्णु-धर्म्मोत्तरे,—

"दश-सूनि-समश्चक्री दश-चक्रि-समोध्वजी ।
दश-ध्वजि-समा वेश्या दश-वेश्या-समोनृपः ॥
दश सूना-सहस्राणि योवाहयति सौनिकः(२) ।
तेन तुल्यः स्मृतोराजा घोरस्तस्मात् प्रतिग्रहः" ॥ इति ।

अधार्म्मिक-राज-विषयेयं निन्दा । तथा च तत्रैव विशेषितम्,—

* अष्टादशगुणं,—इति मु० पुस्तके पाठः ।
† नरकेरौरवेघोरे,—इति मु० पुस्तके पाठः ।

(१) विषयरूपं यदामिषं भोग्यवस्तु, तत्र लुब्धः ।
(२) सूना प्राणिवधस्थानं । तत्र नियुक्तः पुरुषः सौनिकः ।

"येषां न विषये विप्राः यज्ञैर्यज्ञ-पतिं हरिम्।
यजन्ते भूभुजां* तेषामेतत् सूनोदितं फलम्।
येषां पाषण्ड-सङ्कीर्णं राष्ट्रं न ब्राह्मणोत्कटम्† ॥
एते सूना-सहस्राणां दशानां भागिनो नृपाः।
येषां न यज्ञ-पुरुषः कारणं पुरुषोत्तमः ॥
ते तु पाप-समाचाराः सूना-पापोपभागिनः"‡।

अदुष्टात्तु राज्ञः प्रतिग्रहो न निन्दितः। अतएव छन्दोग-शाखायां प्राचीन-शालादीन्महामुनीन् राज-प्रतिग्रहे प्रवर्त्तयितुमश्वपति-नामकेन राज्ञा दोषाभाव उपन्यस्तः,—

"न मे स्तेनो जन-पदे न कदर्य्यो न मद्यपः।
नानाहिताग्निर्नाविद्वान्न स्वैरी स्वैरिणी(१) तथा"§ ॥ इति।

याज्ञवल्क्य-वचनेपि राज-प्रतिग्रह-निन्दायां¶ "लुब्धस्योच्छास्त्र-वर्त्तिनः"—इति विशेषणाददुष्ट-राज-प्रतिग्रहो न निन्दितः,—इति गम्यते। तथा नारदोऽपि,—

---

* भूभृतां,—इति मु० पुस्तके पाठः।
† ब्राह्मणास्पदम्,—इति मु० पुस्तके पाठः।
‡ सूनापापाश्रितेस्मृताः,—इति मु० पुस्तके पाठः।
§ कुतः,—इति स० सो० पुस्तकयोः पाठः।
¶ राजप्रतिग्रहनिन्दाविशेषिता,—इति मु० पुस्तके पाठः।

---

(१) कदर्य्यः,—"आत्मानं धर्म्मकृत्यञ्च पुत्रदारांश्च पीडयन्। यो लोभात् सञ्चिनोत्यर्थान् स कदर्य्य इति स्मृतः"इत्युक्तलक्षणः। स्वैरी स्वच्छन्द-व्यवहारी। स्वैरिणी,—"स्वैरिणी या पतिं हित्वा कामतोऽन्यं समाश्रयेत्"—इत्युक्तलक्षणा।

"श्रेयान् प्रतिग्रहो राज्ञां नान्येषां ब्राह्मणादृते ।
ब्राह्मणश्चैव राजा च द्वावप्येतौ धृत-व्रतौ ॥
नैतयोरन्तरं किञ्चित् प्रजा-धर्म्माभिरक्षणे* ।
शुचीनामशुचीनाञ्च सन्निवेशो† यथाम्भसाम् ॥
समुद्रे समतां यान्ति तद्वद्राज्ञां(१) धनागमः ।
यथाऽग्नौ संस्थितञ्चैव शुद्धिमायाति काञ्चनम् ॥
एवं धनागमाः सर्व्वे शुद्धिमायान्ति राजनि" । इति ।

दुष्ट-प्रतिग्रहवत्‡ सत्प्रतिग्रहस्यापि§ आपद्विषयता कुतो न कल्प्यते,—इति चेत् । न,¶ ब्रह्माण्ड-पुराणे सत्प्रतिग्रहस्यानापद्यपि विहितत्वात् ।

"अनापद्यपि धर्म्मेण याच्यतः श्रियतस्तथा ।
गृह्णन् प्रतिग्रहं विप्रो न धर्म्मात् परिहीयते ॥
गृह्णीयाद् ब्राह्मणादेव नित्यमाचार-वर्त्तिनः ।
श्रद्धया विमलं दत्तं तथा धर्म्मान्न हीयते"—इति ।

केषु चिद्वस्तु-विशेषेषु अयाचितेषु न प्रतिग्रह-दोषः,—इत्याह भरद्वाजः,—

* प्रजाधर्म्माभिरक्षणम्,—इति मु० पुस्तके पाठः ।
† सन्निपातो,—इति मु० पुस्तके पाठः ।
‡ दुष्प्रतिग्रहवत्,—इति स० से० शा० पुस्तकेषु पाठः ।
§ अपि शब्दोनास्ति मु० पुस्तके ।
¶ तन्न,—इति स० से० पुस्तकयोः पाठः ।

(१) राज्ञामिति शेषिकी युक्ती ।

"अयाचितोपपन्नेषु नास्ति दोषः प्रतिग्रहे।
अमृतं तद्विदु* र्देवास्तस्मात्तन्नैव निर्णुदेत्"॥ इति।

तत्र भजद्दाराभिप्रेतान् वस्तु-विशेषान्निर्दिशति याज्ञवल्क्यः,—

"कुशाः शाकं पयो मत्स्या गन्धाः पुष्पं दधि क्षितिः।
मांसं शय्याऽऽसनं धानाः† प्रत्याख्येयं न वारि च॥
अयाचिताहृतं ग्राह्यमपि दुष्कृत-कर्म्मणः।
अन्यत्र कुलटा-षण्ड-पतितेभ्यस्तथा द्विषः"॥ इति।

मनुरपि,—

"शय्यां कुशान् गृहान् गन्धानपः पुष्पं मणिं दधि।
मत्स्यान् धानाः पयोमांसं शाकं चैव न निर्णुदेत्॥
एधोदकं मूल-फलं अन्नमभ्युद्यतञ्च यत्।
अयतः प्रतिगृह्णीयान्मधु चाभय-दक्षिणाम्"—इति।

प्रतिग्रहानधिकारिणं सएवाह,—

"हिरण्यं भूमिमश्वं गामन्नं वासस्तिलान् घृतम्।
अविद्वान् प्रतिगृह्णानो भस्मीभवति काष्ठवत्"—इति।

याज्ञवल्क्योऽपि,—

"विद्या-तपोभ्यां हीनेन नतु ग्राह्यः प्रतिग्रहः।
गृह्णन् प्रदातारमधो नयत्यात्मानमेव च"॥ इति।

विदुषस्तु न कोऽपि प्रतिग्रहोदोषावह इति वाजसनेयि-ब्राह्मणे

---

* तं विदु,—इति मु० पुस्तके पाठः।
† धान्यं,—इति मु० पुस्तके पाठः।

गायत्री-विद्यायां श्रूयते,—"यदि ह्वा अप्येवं विद्वान् द्विजः* प्रतिगृह्णाति सर्व्वं† तद्गायत्र्या एकं पदं प्रतिसन्धाय इमां स्त्रीन् लोकान् पूर्णान् प्रतिगृह्णीयात् योऽस्या एतत्प्रथमं पदमाप्नुयादथ यावतीयन्त्रयीविद्याथ तावत् प्रतिगृह्णीयात् योऽस्या एतद्द्वितीयं पदमाप्नुयादथ यावदिदं प्राणियुस्तावत् प्रतिगृह्णीयात् योऽस्या एतत् तृतीयं पदमाप्नुयादथास्या एतदेव तुरीयं दर्शितं पदं परोरजोयएष तपति नैव केन चाप्यं कुत एतावत् प्रगृह्णीयात्‡—इति ।

॥०॥ इति प्रतिग्रहप्रकरणम् ॥०॥

एवं निरूपितानामध्यापनादीनां प्रतिग्रहान्तानां शब्दान्तराधिकरण-न्यायेन (मी० २अ० २पा० १अ०) कर्म्म-भेदमभिप्रेत्य 'षट्कर्म्माभिरतः'—इत्युक्तम् । स च न्याय इत्थं प्रवर्त्तते । यजति ददाति जुहोतीत्युदाहरणम् । तत्र संशयः, किं सर्व्व-धात्वर्थानुरक्तैका भावना(१) उत प्रतिधात्वर्थं नाना§ । तत्र, भावना-वाचकस्याख्यातस्यैकत्वाद्भिन्नानामपि धात्वर्थानामुपसर्जनत्वेन प्रधान-भेदकत्वासम्भवाच्चैकैव भावनेति पूर्व्वपक्षः । धात्वर्थानुरञ्जनमन्तरेण केवलाख्यातेन भावनाया अप्रतीतेः उत्पत्ति-शिष्ट-धात्वर्थेनैकेनानुरक्ते आख्यातार्थे

* अपि विप्र,—इति स० से० पुस्तकयोः पाठः ।
† सर्व्वैव,—इति स० से० शा० पुस्तकेषु पाठः ।
‡ अथास्या इत्यारभ्य प्रगृह्णीयात्,—इत्यतः पाठोनास्ति • स० से० शा० पुस्तकेषु ।
§ भिन्ना,—इति मु० पुस्तके पाठः ।

(१) भावना आख्यातार्थः । स च प्रयत्नो व्यापारो वा ।

धात्वर्थान्तराणामननुप्रवेशात् प्रतिधात्वर्थं भावना-भेदः,—इति सिद्धान्तः। एवं चाध्यापनादिभिः षड्भिर्धात्वर्थैः षोढ़ा भावना भिद्यते,—इति भवन्त्येतानि षट् कर्म्माणि। तेषु 'अभिरतिः' श्रद्धा-पूर्व्वकमनुष्ठानम्। अश्रद्धालुनाऽनुष्ठितमप्यफलं स्यात्। तदाह भगवान्,—

"अश्रद्धया हुतं दत्तं तपस्तप्तं कृतञ्च यत्।

असदित्युच्यते पार्थ, न च तत् प्रेत्य नो इह"॥ इति।

'नित्यम्'—इत्युत्तरत्रान्वेति न पूर्व्वत्र, अध्यापनादीनां त्रयाणामनित्यत्वात्। देवता च अतिथिश्च देवतातिथी, तयोः प्रतिदिनं पूजकोभवेत्। देवता-स्वरूपञ्च वाजसनेयि-ब्राह्मणे, शाकल्य-याज्ञवल्क्य-संवादे विचार्य्य निर्णीतम्। तत्र, शाकल्यः प्रष्टा, याज्ञवल्क्योवक्ता, देवता-विस्तार-सङ्क्षेपौ स्वरूपञ्च* प्रष्टव्योऽर्थः। तत्र चैषा श्रुतिः। "अथ हैनं विदग्धः शाकल्यः पप्रच्छ; कति देवता याज्ञवल्क्येति। स हैतयैव निविदा प्रतिपेदे; यावन्तो वैश्वदेवस्य निविद्युच्यन्ते, त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेति। ओमिति होवाच; कत्येव देवा याज्ञवल्क्येति, त्रयस्त्रिंशदिति। ओमिति होवाच; कत्येव देवा याज्ञवल्क्येति, षड़िति। ओमिति होवाच; कत्येव देवा याज्ञवल्क्येति, त्रय इति। ओमिति होवाच; कत्येव तु देवा याज्ञवल्क्येति, द्वाविति। ओमिति होवाच; कत्येव देवा याज्ञवल्क्येत्यध्यर्द्ध इति। ओमिति होवाच; कत्येव देवा याज्ञवल्क्येत्येक इति। ओमिति होवाच; कतमे ते त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेति। स

---

* विस्तारसंक्षेपौ च,—इति मु० पुस्तके पाठः।

होवाच; महिमानएवैषामेते त्रयस्त्रिंशत्येव* देवा इति। कतमे ते त्रयस्त्रिंशदित्यष्टौवसव एकादशरुद्रा द्वादशादित्या स्तएक-त्रिंशदिन्द्रश्चैव प्रजापतिश्च त्रयस्त्रिंशा इति। कतमे ते वसव इति, अग्निश्च पृथिवीच वायुश्चान्तरीक्षं चादित्यश्च द्यौश्च चन्द्रमाश्च नक्षत्राणि चैते वसव एतेषु हीदं सर्व्वं वसु निहितमेते हीदं सर्व्वं वासयन्त तस्माद्वसव इति। कतमे ते रुद्रा इति, दश वै पुरुषे प्राणा आत्मैकादशस्ते यदाऽस्मा-च्छरीरादुत्क्रामन्त्यथरोदयन्ति† यस्माद्रोदयन्ति‡ तस्माद्रुद्रा इति। कतमआदित्या इति,द्वादश एव मासाः§ संवत्सरस्यैतआदित्याएते हीदं सर्व्वमाददानायन्ति तद्यदिदं सर्व्वमाददानायान्ति‖ तस्मादादित्या इति। कतम इन्द्रः कतमः प्रजापतिरिति, स्तनयित्नु¶रेवेन्द्रोयज्ञः प्रजापतिरिति। कतमस्तनयित्नुरित्यशनिरिति। कतमोयज्ञइति,पशव इति। कतमे षड़ित्यग्निश्च पृथिवी च वायुश्चान्तरीक्षं चादित्यश्च द्यौश्चैते षड़ेते** हीदं सर्व्वं षड़िति। कतमे ते†† त्रयो देवा इति इमे एव त्रयोलोका एषु हीमे सर्व्वे देवा इति। कतमौ तौ द्वौ देवा-वित्यन्नं चैव प्राणश्चेति। कतमोऽध्यर्द्ध इति योऽयं पवत इति

---

* त्रयस्त्रिंशत्येव,—इति स० सो० पुस्तकयोः पाठः।
† ते यदस्माच्छरीरान्मर्त्त्या उत्क्रामन्ति,—इत्यादि पाठः मु० पुस्तके।
‡ यद्रोदयन्ति,—इति मु० पुस्तके पाठः।
§ द्वादशमासाः,—इति स० सो० पुस्तकयोः पाठः।
‖ तद्यदिदं सर्व्वमाददानायान्ति,—इति नास्ति मु० पुस्तके।
¶ स्तनयत्नु,—इति मु० पुस्तके पाठः। एवं परत्र।
** षड़ित्येते,—इति स० सो० पुस्तकयोः पाठः।
†† ते इति नास्ति मु० पुस्तके।

यदाह यं ह्ययमेक एव* पवते स कथमध्यर्द्ध इति। यदस्मिन्निदं सर्व्वमध्यार्ध्नेनाध्यर्द्ध इति। कतम एको देव इति, प्राण इति स ब्रह्म त्यादित्याचक्षते"—इति। अस्याः श्रुतेरयमर्थः। उपासनार्हाणां देवानां सङ्ख्यादि-विस्तारे पृष्टः† शाकल्येन याज्ञवल्क्योविजीगीषु-कथायां(१) प्रवृत्तत्वात् पर-बुद्धि-व्यामोहाय निविदा प्रत्युत्तरं प्रतिपेदे। निविच्छब्दो वैश्वदेव-नामके(२) शस्त्र-विशेषेऽवस्थितानां‡ सङ्ख्या-वाचिनां पदानां समुदायमाचष्टे,—इति वैदिक-प्रसिद्धिः। ततो यावन्तो देवा वैश्वदेवस्य निविद्युच्यन्ते, तावन्त उपास्याः,—इत्युक्तं भवति। तानि च पदानि, त्रयश्च त्रीचेत्यादीनि§। शत-त्रयं सहस्र-त्रयं षट्कञ्च देव-विस्तारः। कत्येवेत्येवकारेण तत्र तत्र देवान्तर-शङ्का व्युदस्यते। यएव देवाः पूर्व्वं विस्तृताः, तएव संक्षेपेण कियन्त इति तत्र तत्र|| प्रश्नार्थः। कतीति सङ्ख्या-प्रश्नः, कतमे त इति स्वरूप-विशेष-प्रश्नः। तत्र शत-सहस्रसङ्ख्या¶ ये देवा उक्ता स्ते सर्व्वे प्रधानभूता न भवन्ति, किन्तर्हि, प्राधान्येन हविर्भुजां त्रयस्त्रिंशद्देवानां योग-महिम्ना स्वीकृतैच्छिक** विग्रहाएव, ततो न तेषां स्वरूप-विशेषः पृथक् निरूपणीयः इति†† ।

* यदयमेकइव,—इति मु० पुस्तके पाठः।
† संख्याविस्तारेण कतीतिपृष्टो,—इति स० सो० पुस्तकयोः पाठः।
‡ स्थितानां,—इति मु० पुस्तके पाठः।
§ त्रयश्च त्रिंशदित्येवमादीनि,—इति मु० पुस्तके पाठः।
|| तत्रतत्र,—इति मु० पुस्तके पाठः।
¶ शतंसहस्रसंख्या,—इति स० सो० पुस्तकयोः पाठः।
** स्वीकृत भौतिक, इति स० सो० शा० पुस्तकेषु पाठः।
†† 'इति' शब्दो नास्ति स० सो० पुस्तकयोः।

(१) विजिगीषु कथा जल्पः वितण्डा तु। तिस्रः किल कथा भवन्ति वादो जल्पो वितण्डा च। सर्व्वमिदं न्याये प्रथमद्वितीये स्पष्टम्।
(२) अप्रगीतमन्त्रसाध्या स्तुतिः शस्त्रम्।

अथस्त्रिंशद्देवेषु श्रुतावस्वादयः पुराण-प्रसिद्धेभ्यो वस्वादिभ्योऽन्ये[१], तेषु शब्द-प्रवृत्तिर्यौगिकी[२]। प्राणा वाह्येन्द्रियाणि, आत्माऽन्तःकरणम्। इन्द्रप्रजापति-शब्दौ लक्षणया स्तनयित्नु-यज्ञयोर्वर्त्तेते, लक्षितलक्षणया त्वशनि-पश्वोः[३]। अन्न-प्राणौ* भोग्य-भोक्त्रभिमानिनौ†[४]। अध्यर्द्ध-शब्दो रूढ्या सङ्ख्यावाची,योगेन तु समृद्धं वायुं वक्ति। वायुः सूत्रात्मा[५], "वायुर्वै गौतम, सूत्रम्"—इति श्रुतेः। अन्ते प्राणशब्दः परमात्मवाचकः। तदेव स्पष्टयितुं स ब्रह्मेत्युक्तम्। तत्-शब्दः परोक्ष-

---

* अन्नं प्राणो,—इति मु० पुस्तके पाठः।
† भोक्त्रभिमानिनो, - इति स० सो० श्रा० पुस्तकेषु पाठः।

---

(१) वस्वादीत्यादिशब्दात् रुद्रादित्यपरिग्रहः। अन्यत्वञ्चात्रत्यवस्वादीनां, अग्न्यादीनां तथात्वाभिधानात् स्पष्टम्। पुराणप्रसिद्धास्तु वस्वादयो भा-माग्न्यादिरूपाः। तेषां स्वरूपमादित्यपुराणे प्रोक्तम्,—"प्रसन्नवदनाः सौम्या वरदाः शक्तिपाणयः। पद्मासनस्था द्विभुजा वसवोऽष्टौ प्रकीर्त्तिताः॥ करे त्रिशूलिनो वामे दक्षिणे चाक्षमालिनः। एकादश प्रवर्त्तव्या रुद्रा-स्त्र्यक्षेन्दुमौलयः। पद्मासनस्था द्विभुजाः पद्मगर्भाङ्गकान्तयः। करादि-स्कन्धपर्य्यन्तं नालपङ्कजधारिणः॥ इन्द्राद्या द्वादशादित्यास्तेजोमण्डलम-ध्यगाः"—इति।

(२) एतेषु श्रीदंसणां वसुनिश्चितं—इत्यादि श्रुत्युक्तयोगप्रयोज्येत्यर्थः।

(३) प्रथममिन्द्रशब्दस्य तत्संबन्धिनि स्तनयित्नौ—मेघे लक्षणा, ततो मेघे-लक्षितस्येन्द्रशब्दस्य मेघसंबन्धिन्यशनौ लक्षणा इति लक्षितलक्षणेयम्। वस्तुतस्तु यत्र शक्यार्थस्य परम्परासंबन्धेन लक्षणा, तत्रैव लक्षितलक्ष-णोच्यते। प्रकृते चेन्द्रशब्दस्य तत्संबन्धिसंबन्धिनि अशनौ लक्षणेति लक्षितलक्षणा। एवं प्रजापतिशब्देऽपि द्रष्टव्यम्।

(४) अन्नशब्दो भोग्याभिमानिनीं देवतामाचष्टे, प्राणशब्दश्च भोक्त्रभिमानि-नीमिति विवेकः।

(५) सूत्रात्मा हिरण्यगर्भः।

वाची, अकृत-ब्रह्म-विचारं पुरुषं प्रति ब्रह्मणः शास्त्रैक-समधिगम्यत्वात् परोक्षम्,—इति। तत्र, प्राण-शब्द-वाच्यः परमात्मैवैकोमुख्योदेवः। तत्-स्वरूपञ्च श्वेताश्वतरा विस्पष्टमामनन्ति,—

"एकोदेवः सर्व्व-भूतेषु गूढ़ः
सर्व्वव्यापी सर्व्वभूतान्तरात्मा।
कर्म्माध्यक्षः सर्व्वभूताधिवासः
साक्षीचेता‡ केवलोनिर्गुणश्च" ॥ इति।

एतमेव देवं शास्त्र-कुशलास्तैःस्तैः शब्द-विशेषैर्बहुधा व्यवहरन्ति। तथा च मन्त्र-वर्णः*—

"सुवर्णं विप्राः कवयोवचोभि—
रेकं सन्तं बहुधा कल्पयन्ति"—इति।

तेच शब्द-विशेषा विस्पष्टमन्यस्मिन्मन्त्रे श्रूयन्ते,—

'इन्द्रमित्रं वरुणमग्निमाहु
रथोदिव्यः स सुपर्णोगरुत्मान्।
एकं सद्विप्रावहुधावद—
न्त्यग्निं यमं मातरिश्वानमाहुः"—इति।

ननु, इन्द्र-मित्र-वरुणादयः शब्दा भिन्नदेव-वाचिनो नत्वेकं देवमभिदधति, अन्यथा वारुणयागे† ऐन्द्रोमन्त्रः प्रयुज्येत। नायं दोषः, एकत्वेऽपि देवस्य मूर्त्ति-भेदेन मन्त्र-व्यवस्थोपपत्तेः।

---

* वेत्ता,—इति स० सो० पुस्तकयोः पाठः।
† मन्त्रः—इति मु० पुस्तके पाठः।
‡ वरुणयागेषु,—इति मु० पुस्तके पाठः।

यथा, शैवागमेषु शिवस्यैकत्वेऽपि प्रतिमा-भेदेन* दक्षिणामूर्त्ति-चिन्तामणि-मृत्युञ्जयाद्योमन्त्रामूर्त्ति-विशेषेषु व्यवस्थिताः; यथा वा, वैष्णवागमेषु गोपाल-वामनाद्योमन्त्राः, तथा वेदेऽपि† किं न स्यात्। ननु, द्रव्य-देवते यागस्य स्वरूपं, स्वरूप-भेदाच्च कर्म्म-भेदः प्रतिपादितः,—"तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा, वाजिभ्यो वाजिनम्"—इत्यत्र; यथाऽऽमिक्षा-वाजिनयोर्द्रव्ययोर्भेदस्तथा विश्वेषां देवानां वाजिभ्योदेवेभ्यो भेदोऽभ्युपगन्तव्यः,—इति‡। वाढं, अभ्युपगम्यते ह्येकस्यैव वासवस्य देवस्य कर्म्मानुष्ठान-दशायामौपाधिकोभेदः। अतएव, वाजसनेयि-ब्राह्मणे दृष्टि-प्रकरणे कर्म्मानुष्ठाव§ प्रसिद्धं देव-भेदमनूद्य तदपवादेन|| वास्तवं देवैकत्वमवधारितम्,—"तद्यदिदमाहुरमुं यजेतामुं यजेतेत्येकं देवमेतस्यैव सा विसृष्टिरेष उ ह्येव¶ सर्व्वे देवाः,—इति। नचैकस्माद्देवात् फल-भेदोदुःसम्पादः,—इति शङ्कनीयम्, उपास्ति-प्रकार-भेदेन तदुपपत्तेः। "तं यथा यथोपासते, तदेव भवति"—इति श्रुतेः। यथैकोऽपि राजा च्छत्र-चामरादि-सेवा-प्रकार-भेदेन फल-भेदे हेतुस्तद्वत्। ननु, देवः फलं ददातीत्येतन्मीमांसका न सहते। तथाहि नवमाध्याये विचारितम्,—किं यागेनाराधिताया देवतायाः फलं, उतापूर्व्व-द्वारकं यागस्य

---

* प्रतिमाप्रासादभेदेन—इति मु० पुस्तके पाठः।

† देवेपि,—इति स० सो० पुस्तकयोः पाठः।

‡ 'इति' शब्दो नास्ति मु० पुस्तके।

§ कर्म्मानुष्ठान,—इति मु० पुस्तके पाठः।

|| तदनुवादेन,—इति स० सो० पुस्तकयोः पाठः।

¶ एषह्येव,—इति मु० पुस्तके पाठः।

फल-साधनत्वमिति संशयः । तत्र * भङ्गुरस्य यागस्य कालान्तर-भावि-फलं प्रति साधनत्वायोगादवश्यं द्वारं(१) किञ्चित् कल्पनीयम् । देवता-प्रसादस्य श्रुति-युक्तिभ्यस्तद्वारं स्यात्† । "तृप्तएवैनमिन्द्रः प्रजया पशुभिस्तर्पयति"—इति श्रुतिः । युक्तिरप्युच्यते,—क्रियया प्राप्तुमिष्ट-तमत्वात्‡ कर्म्म कारकं प्रधानं, तेन कर्म्मणा व्याप्तत्वात् सम्प्रदानं ततोऽपि प्रधानं, इन्द्रादि-देवताः § च सम्प्रदानत्वेन प्रधान्यात् पूजामर्हन्ति, यागस्य पूजारूपत्वादतिथेर्भोजनमिव ‖ देवताया अङ्गं स्यात् । तस्माद्राजादिवद्देवः फलं ददातीति पूर्व्वः पक्षः । अत्रोच्यते । यागदेवतयोर्योऽयमङ्गाङ्गिभाव उपन्यस्तः, स तु शब्दाकाङ्क्षानुसारेण विपर्य्येति । तथा हि, यजेतेत्याख्यातेन(२) भावनाऽभिधीयते । सा च, किं केन कथमिति भाव्य-करणेतिकर्त्तव्यता-लक्षणमंश-त्रयं क्रमेणाकाङ्क्षति । तत्र, यागस्य समान-पदोपनीतत्वेऽप्ययोग्यत्वान्न भाव्यता । स्वर्गस्य तु वाक्यादुपनीतस्यापि¶ पुरुषार्थत्वेन योग्यत्वात् भाव्यता स्यात् । तस्य च स्वर्गस्य साधनाकाङ्क्षायां यागः करण-

---

* अत्र,—इति स० सो० शा० पुस्तकेषु पाठः ।

† द्वारं स्यात्,—इति मु० पुस्तके पाठः ।

‡ कर्त्तुः क्रियया व्याप्तुमिष्टतमत्वात्,—इति मु० पुस्तके पाठ. ।

§ स० सो० शा० पुस्तकेषु एकवचनान्तःपाठः । एवं परत्र ।

‖ यागस्य पूजारूपत्वादतिथिभ्योभोजनमिव,—इति मु० पुस्तके पाठः ।

¶ वाक्याद्युपनीतस्यापि,—इति मु० पुस्तके पाठः ।

---

(१) द्वारं फलकालस्थायी व्यापारः ।

(२) भावना च भावयितुर्व्यापारः प्रयत्नो वा ।

त्वेनान्वेति । तत्र करणं साध्य-स्वरूपत्वात्* स्व-निष्पादकं सिद्धं† द्रव्यदेवतमितिकर्त्तव्यत्वेन‡ स्वीकरोति,—इति§ । ततो यागोऽङ्गी, देवता च तदङ्गम् । एवञ्च सति, नातिथिवद्देवता यागेनाराध्यते । यातु श्रुतिः,—"तृप्तएवैनम्"—इति, नासौ स्वार्थे तात्पर्य्यवती, प्रत्यक्षादि-विरोधात्(१) । न हि, काचिद्विग्रह-वती देवता हविर्भुक्त्वा तृप्ता फलं प्रयच्छतीति प्रत्यक्षेणोपलभ्यते, प्रत्युत तदभावः प्रत्यक्षेण योग्यानुपलब्ध्या वा(२) प्रमीयते । किं च, अश्वमेधे "गां दंष्ट्राभ्यां मण्डूकान् दन्तैः ||" इत्याद्यवयवानां दंष्ट्रादि-द्रव्याणां हविषां भोक्तृत्वेन गो¶ मण्डूकादय-स्तिर्य्यञ्चोऽपि** देवता-विशेषाः श्रूयन्ते । न च तेषां फल-प्रदातृत्वं†† सम्भाव्यते । "ओषधीभ्यः स्वाहा, वनस्पतिभ्यः स्वाहा, मूलेभ्यः स्वाहा"—इत्यादावचेतनानामोषधि-वनस्पति-तदवयवानां देवतात्वं श्रूयते । तत्र, कुतोहविर्भोक्तृत्वं, कुत

---

* साध्यरूपत्वात्,—इति स० सो० पुस्तकयोः पाठः ।

† सिद्धं,—इति नास्ति मु० पुस्तके ।

‡ द्रव्यं देवतामितिकर्त्तव्यत्वेन,—इति मु० पुस्तके पाठः ।

§ 'इति' शब्दो नास्ति मु० पुस्तके ।

|| सैगां दंष्ट्राभ्यां मण्डूकान् जंभ्येभिः,—इति मु० पुस्तके पाठः ।

¶ सैगामण्डूकादय,—इति मु० पुस्तके पाठः ।

** 'अपि' शब्दो नास्ति स० सो० शा० पुस्तकेषु ।

†† फलदातृत्वं,—इति स० सो० पुस्तकयोः पाठः ।

---

(१) प्रत्यक्षानुलम्भबाधितेऽर्थे श्रुतेः प्रामाण्याभावादितिभावः । स्पष्टमिदं आत्मतत्त्वविवेके ।

(२) प्रत्यक्षेणेति न्यायमते । प्रत्यक्षेणैवाभावोऽपलभ्यते योग्यानुपलब्धिस्तु तत्र सहकारिमात्रमिति तत्सिद्धान्तात् । योग्यानुपलब्धेरिति मीमांसकमते । तन्मतेऽभावग्राहिकाया अनुपलब्धेः प्रमाणान्तरत्वात् ।

स्तरां तृप्तिः, ततस्तमां फल-दानम्। तस्माद्विग्रहादिमतां देवाना*म-भावान्न देवता-प्रसादो यागस्य फल-द्वारम्। किन्तु, श्रूयमाण-फलसाधनत्वान्यथानुपपत्ति-कल्प्यमपूर्व्वं तद्वारम्। अभ्युपगतेष्वपि देवेष्वपूर्व्वस्यैव फल-द्वारत्वमवश्यं वक्तव्यं, मन्त्रार्थवादेतिहास-पुराणेषु देवानामपि तपश्चरण-क्रत्वनुष्ठान-ब्रह्मास्त्रादि-मन्त्र-प्रयोगेभ्यः समीहित-सिद्ध्यनुकीर्त्तनात्। तस्मान्न देवः फल-प्रदः,—इति सिद्धम्। (१)औपनिषदास्त्वीश्वरस्य फल-दातृत्वं मन्यन्ते। तथाहि, तदीये शास्त्रे(२) तृतीयाध्याये विचारितम्। किं धर्म्मः फलं ददाति, आहोस्विदीश्वरः,—इति संशयः। तत्र, मीमांसकोक्त-न्यायेन धर्म्मः फल-प्रदः,—इति पूर्व्वः पक्षः। सिद्धान्तस्तु, किं धर्म्मोऽन्यानधिष्ठितएव फल-प्रदः, किं वा, केनचिच्चेतनेनाधिष्ठितः? नाद्यः, अचेतनस्य तारतम्यानभिज्ञस्य यथोचित-फल-दातृत्वायोगात्। द्वितीये तु, येनाधिष्ठितः, सएव फल-दाताऽस्तु†। न चैवं धर्म्मस्य वैयर्थ्यमिति शङ्कनीयं, वैषम्य-नैर्घृण्य-परिहाराय धर्म्मापेक्षणात्। असति तु धर्म्मे, कांश्चिदुत्तमं सुखं, कांश्चिन्मध्यमं, कांश्चिदधमं, प्रापयन्नीश्वरः, कथं विषमो न भवेत्। कथं वा त्रिविधं‡ दुःखं प्रापयन्निर्घृणोन भवेत्। धर्म्माधर्म्मानुसारेण तत्-प्रापणे गुरु-पितृ-राजादीनामिव न वैषम्य-नैर्घृण्ये प्राप्नुतः।

* देवादीना,...इति मु० पुस्तके पाठः।

† फलं ददातु,—इति मु० पुस्तके पाठः।

‡ चित्रं,—इति मु० पुस्तके पाठः।

(१) औपनिषदावेदान्तिनः।

(२) शारीरके।

न हि दुष्ट-शिक्षां शिष्ट-परिपालनञ्च कुर्व्वतां गुर्व्वादीनां वैषम्य-नैर्घृण्ये विद्येते(१)। यदुक्तं,—गो*मण्डुकादीनां तिरश्चामोषधि-वनस्पत्यादीनाञ्च स्थावराणां फल-प्रदत्वमयुक्तम्,—इति। तत् तथैवास्तु, ईश्वरस्य फल-दातृत्वे कः प्रत्यूहः। यदपि "हन्तएवैनमिन्द्रः प्रजया पशुभिस्तर्पयति"—इति, तत्रापीन्द्र-देवतायामवस्थितोऽन्तर्यामी फल-प्रदत्वेन विवक्षितः। "अन्तः-प्रविष्टः शास्ता जनानाम्"—इति श्रुतेः। तस्मादीश्वरस्य प्रसादएव† फल-दातृम्। न च जैमिनेय-वैयासिकयोर्मतयोः परस्परं विरोधः, विवक्षा-विशेषेण तत्समाधानात्। यथा, देवदत्तस्यैव पक्तृत्वेऽपि सम्यगभिज्वलनं विवक्षित्वा 'काष्ठानि पचन्ति'—इति व्यवहारः, तथा परमेश्वरस्यैव फल-प्रदत्वेऽपि तारतम्यापाद-निमित्ततया प्राधान्यं विवक्षित्वा धर्म्मः फल-प्रदः,—इति व्यवहारः किं न स्यात्। तस्मादविरोधात् फल-प्रदोजगदीश्वरएकएव सर्व्वैः पूजनीयो देवः,—इत्यलमतिप्रसङ्गेन।

॥ ० ॥ इति देवता-स्वरूप-निरूपण-प्रकरणम् ॥ ० ॥

अतिथेर्लक्षणं स्वयमेव वक्ष्यति। उभयोः पूजन-प्रकारमुपरितनश्लोके निरूपयामः। 'देवताऽतिथि-पूजकोनावसीदति'—इत्युक्तेरपूजायामवसीदति,—इत्यवगम्यते। तथाच कूर्म्मपुराणे,—

---

* सैगामण्डूकादीनां,—इति मु० पुस्तके पाठः।
† ईश्वरप्रसाद एव,—इति मु० पुस्तके पाठः।

---

(१) तथाचोक्तम्। "लालने ताड़ने मातुर्नाकारुण्यं यथाऽर्भके। तद्वदेव महेशस्य नियन्तुर्गुणदोषयोः"—इति।

"लोभोहादथवाऽऽलस्यादकृत्वा देवताऽर्च्चनम्।
भुङ्क्ते, स याति नरकं सूकरेष्विह जायते॥
अकृत्वा देव-पूजाञ्च महायज्ञान् द्विजोत्तमः।
भुञ्जीत चेत्समूढात्मा तिर्य्यग्योनिं स गच्छति(१)"—इति।

मार्कण्डेयः,—

"अतिथिर्यस्य भग्नाशो गृहात् प्रतिनिवर्त्तते।
स तस्य दुष्कृतं दत्वा पुण्यमादाय गच्छति"॥

देवलोऽपि,—

"अतिथिर्गृहमभ्येत्य यस्य प्रतिनिवर्त्तते।
असत्कृतो निराशस्तु स सद्योहन्ति तत्कुलम्"—इति।

पूजायान्तु न केवलमवसादाभावः* किन्त्वभ्युदयोऽप्यस्ति। तथा च विष्णुधर्म्मोत्तरे,—

"येऽर्चयन्ति सदा विष्णुं शङ्ख-चक्र-गदा-धरम्।
सर्व्व-पाप-विनिर्मुक्ता ब्रह्माणं प्रविशन्ति ते"—इति।

कूर्म्मपुराणे—

"वेदाभ्यासोऽन्वहं शक्त्या महायज्ञ-क्रियास्तथा(२)।

---

* न केवलं पापाभावः,—इति स० सो० पुस्तकयोः पाठः।

---

(१) 'स' शब्दस्य द्विरुपादानात् 'स मूढात्मा'—इति, 'स तिर्य्यग्योनिं गच्छति'—इति च वाक्यद्वयमत्र मन्तव्यम्।

(२) 'अध्यापनं ब्रह्मयज्ञ'—इत्युक्तेरध्यापनमेव महायज्ञान्तर्गतं वेदाभ्यासस्तु ततः पृथक्। अथवा, वेदाभ्यासस्य महायज्ञान्तर्गतत्वेपि पृथगुपन्यासो गोवृषन्यायात्। ततश्च महायज्ञपदं वेदाभ्यासेतर-महायज्ञपरमिति श्लिष्यते।

नाशयन्त्याशु पापानि देवानामर्चनं तथा"—इति ।

मनुरपि—

"अतिथिं पूजयेद्यस्तु श्रान्तं चादृष्टमागतम्* ।

षडूषं गो-शतं तेन दत्तं स्यादिति मे मतिः"—इति ॥

विष्णुरपि—

"स्वाध्यायेनाग्निहोत्रेण यज्ञेन तपसा तथा ।

नावाप्नोति गृही लोकान् यथा त्वतिथि-पूजनात्"—इति ।

वैश्वदेवाद्यर्थमोदनं पाचयित्वा तेन होमे कृते सति योऽवशिष्ट-ओदनः स 'हुत-शेषः' । तमेव भुञ्जीत, न तु स्व-भोजनार्थं पाचयेत् । यदाह भगवान्,—

"यज्ञ-शिष्टाशिनः सन्तो मुच्यन्ते सर्व्व-किल्बिषैः ।

भुञ्जते ते त्वघं पापा ये पचन्त्यात्म-कारणात्"—इति ।

'हुत-शेषम्'—इत्यत्र हुत-शब्दो महाभारते व्याख्यातः,—

"वैश्वदेवादयो होमाहुतमित्युच्यते बुधैः"—इति ।

तस्य शेषो हुत-शेषः । स च हुत-शेष-शब्दो देवर्षि-मनुष्यादि-पूजोपयुक्तावशिष्टमुपलक्षयति । तदाह मनुः,—

"देवानृषीन् मनुष्यांश्च पितृन् गृह्याश्च देवताः ।

पूजयित्वा ततः पश्चाद्गृहस्थः शेषभुग्भवेत् ।

अघं स केवलं भुङ्क्ते यः पचत्यात्म-कारणात् ।

यज्ञशिष्टाशनं ह्येतत् सतामन्नं विधीयते"—इति ।

---

* श्रान्तं वा दुष्टमानसम्,—इति स० से० शा० पुस्तकेषु पाठः ।

'ब्राह्मणेनावसीदति'—इत्यत्र विवक्षितस्य ब्राह्मणस्य लक्षणं महाभारते दर्शितम्,—

"सत्यं दानं तपः शौचमानृशंस्यं दमोघृणा।
दृश्यन्ते यत्र विप्रेन्द्र, स ब्राह्मण इति स्मृतः॥
जितेन्द्रियो धर्म्म-परः स्वाध्याय-निरतः शुचिः।
काम-क्रोधौ वशौ यस्य तं देवा ब्राह्मणं विदुः॥
यस्य चात्म-समोलोको धर्म्मज्ञस्य मनस्विनः।
स्वयं धर्म्मेण चरति* तं देवा ब्राह्मणं विदुः॥
योऽध्यापयेदधीते वा याजयेद्वा यजेत वा।
दद्याद्वाऽपि यथाशक्ति तं देवा ब्राह्मणं विदुः॥
क्षमा दया च विज्ञानं सत्यं चैव दमः शमः।
अध्यात्मनिरतिर्ज्ञान† मेतद्ब्राह्मण-लक्षणम्"—इति॥

तथाच, अनाहिताग्नितायामपि उक्तलक्षण-लक्षितोब्राह्मणोनावसीदतीति वाक्यार्थः पर्य्यवसितो भवति‡।

'चतुर्णामपि वर्णानाम्,—इति, 'षट्कर्म्माभिरतः'—इति वचनद्वयेन साधारणासाधारण-धर्म्मौ संक्षिप्योपदर्शितौ। यद्यप्यध्यापनादित्रयमेव विप्रस्यासाधारणं नाध्ययनादि-त्रयं तस्य वर्ण-त्रय-साधारणत्वात्, तथापि षट्कर्म्माभिरतत्वं विप्रस्यैवेति न कोऽपि विरोधः॥

---

* सर्व्वधर्म्मेण चरितं,—इति स० सो० पुस्तकयोः पाठः।
† अध्यात्मनिरतं ज्ञान,—इति स० सो० पुस्तकयोः पाठः।
‡ 'तथाच'—इत्यादिः, 'भवति'—इत्यन्तः पाठो नास्ति स० सो० पुस्तकयोः।

अथात्र* साधारणाध्ययनादिप्रसङ्गेन बुद्धिस्थं साधारणमाह्निकं सङ्क्षिप्याह,—

सन्ध्या स्नानं जपो होमो देवतानाञ्च पूजनम् ॥३८॥
आतिथ्यं वैश्वदेवञ्च† षट् कर्म्माणि दिने दिने ॥

इति । 'सन्ध्यास्नानम्'—इत्यत्र यवागू-पाक-न्यायेन स्नानस्य प्राथम्यं व्याख्येयम्‡ । स च न्यायः पञ्चमाध्याये प्रथमपादे प्रतिपादितः । 'यवाग्वाऽग्निहोत्रं जुहोति§ यवागूं पचति'-इति श्रूयते । तत्र|| संशयः; किमग्निहोत्र-यवागूपाकयोरनियतः क्रमः, उत नियतः, यदा नियतः, तदा¶ पाठेन नियम्यते उतार्थेन । तत्र विध्योरनुष्ठानमात्र-पर्य्यवसानात् क्रमस्य नियामकाभावात्** अनियतः,—इत्येकः पूर्व्वः पक्षः । पूर्व्वाधिकरणेषु "अध्वर्य्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति"—इत्यत्र†† पाठस्य‡‡ नियामकत्वाभ्युपगमादत्रापि तत्सम्भवाद्यथापाठक्र-

---

* तत्र,—इति स० सो० पुस्तकयो, पाठः ।

† सन्ध्यास्नानं जपोहोमः स्वाध्यायोदेवतार्च्चनम् । वैश्वदेवातिथेयञ्च इति पादत्रये पाठः मु० मू० पुस्तके ।

‡ प्राथम्यमाख्येयम्,—इति मु० पुस्तके पाठः ।

§ अग्निहोत्रं जुहोति,—इति मु० पुस्तके पाठः ।

|| तत्र,—इति नास्ति मु० पुस्तके ।

¶ तथापि,—इति स० सो० पुस्तकयोः पाठः ।

** नियामकत्वाभावात्,—इति मु० पुस्तके पाठः ।

†† तत्र,—इति मु० पुस्तके पाठः ।

‡‡ पाठक्रमस्य,—इति मु० पुस्तके पाठः ।

मनियमः*,—इत्यपरः पूर्व्वपक्षः† । 'यवाग्वा'—इति तृतीयाश्रुत्या[१] होम-साधनत्वावगमाद्दसति च द्रव्ये होमानिष्पत्तेरर्थाद् यवागू-पाकः पूर्व्वभावी,—इति सिद्धान्तः। एवमत्रापि‡ स्नानस्य शुद्धि-हेतुत्वाच्छुद्धस्यैव सन्ध्या-वन्दनाधिकारित्वात् स्नानं पूर्व्वभावि,—इति द्रष्टव्यम्[२]। तत्र§, स्नानं तत्पूर्व्व-भाविनां ब्रह्ममुहूर्त्तोत्थान-हित-चिन्तनादीनां सर्व्वेषामुपलक्षणम्। तत्र याज्ञवल्क्यः,—

"ब्राह्मे मुहूर्त्ते उत्थाय चिन्तयेदात्मनोहितम्।
धर्म्मार्थकामान् स्वे काले यथाशक्ति न हापयेत्"—इति।

मनुरपि,—

"ब्राह्मे मुहूर्त्ते बुध्येत धर्म्मार्थावनुचिन्तयेत्।
काय-क्लेशांश्च तन्मूलान् वेद-तत्त्वार्थमेव च"—इति।

---

* यथापाठं क्रमनियमः,—इति पाठो भवितुं युक्तः।
† पूर्व्वः पक्षः,—इति मु० पुस्तके पाठः।
‡ अतएवमत्रापि,—इति मु० पुस्तके पाठः।
§ तच्च,—इति मु० पुस्तके पाठः।

---

(१) तथा चोक्तम्। "श्रुति द्वितीया क्षमता च लिङ्गं वाक्यं पदान्येव तु संहतानि। सा प्रक्रिया या कथमित्यपेक्षा स्थानं क्रमोयोगबलं समाख्या"—इति। द्वितीयापदं कारकविभक्त्युपलक्षणं सर्व्वासामेव कारकविभक्तीनां प्रकृत्यर्थान्वितस्वार्थबोधनेऽन्यानपेक्षत्वस्य तुल्यत्वात्—इति वाचस्पतिमिश्राः। उदाहरणान्येषां मीमांसा-तृतीये द्रष्टव्यानि।

(२) तथा चार्थक्रमादनुष्ठानमितिभावः। क्रमस्च षड्विधः, "श्रुत्यर्थपठनस्थानमुख्यप्रावर्त्तिकाः क्रमाः"—इत्युक्तेः। उदाहरणानि चैषां मीमांसापञ्चमाध्याये द्रष्टव्यानि।

वेदतत्त्वार्थः परमात्मा । तथा च कूर्म्मपुराणे*,—

"ब्राह्म्ये मुहूर्त्ते उत्थाय धर्म्ममर्थञ्च चिन्तयेत् ।
काय-क्लेशं तदुद्भूतं ध्यायीत मनसेश्वरम्"—इति ।

विष्णुपुराणेऽपि,—

"ब्राह्म्ये मुहूर्त्ते उत्थाय मानसे मतिमान्नृप ।
विबुद्ध्य चिन्तयेद्धर्म्ममर्थं चास्याविरोधिनम्†(१) ॥
अपीड़या तयोः काममुभयोरपि चिन्तयेत् ।
परित्यजेदर्थ-कामौ धर्म्म-पीड़ा-करौ नृप ॥
धर्म्ममप्यसुखोदर्कं लोक-विद्विष्टमेव च"—इति ।

सूर्य्योदयात् प्रागर्द्धप्रहरे द्वौ मुहूर्त्तौ, तत्राद्यो ब्राह्म्योद्वितीयो रौद्रः । तत्र ब्राह्म्ये चिन्तनीयार्थविशेषं दर्शयति विष्णुः,—

"उत्थायोत्थाय बोद्धव्यं किमद्य सुकृतं कृतम् ।
दत्तं वा दापितं वाऽपि‡ वाक् सत्या चापि भाषिता ॥
उत्थायोत्थाय बोद्धव्यं महद्भयमुपस्थितम् ।
मरण-व्याधि-शोकानां किमद्य निपतिष्यति"—इति ।

'ध्यायीत मनसेश्वरम्' इति यदुक्तं, तत्र प्रकार-विशेषो वामनपुराणे,

---

* मनुरपि,—इत्यारभ्य कूर्म्मपुराणे इत्यन्तोग्रन्थः स० सो० पुस्तकयोर्भ्रष्टः ।

† मर्थंचास्य विरोधिनं,—इति मु० पुस्तके पाठः । मर्थमप्यविरोधिनम्,—इति स० पुस्तके ।

‡ दत्तं वापि कृतं वापि,—इति मु० पुस्तके पाठः ।

---

(१) ब्राह्मे मुहूर्त्ते विबुध्य उत्थाय धर्म्मं यथोक्तलक्षणमर्थञ्च मानसे चिन्तयेदिति संबन्धः ।

"ब्रह्मा मुरारिस्त्रिपुरान्त-कारी*
भानुः शशी भूमि-सुतोबुधश्च।
गुरुश्च शुक्रः सहजानुजेन
कुर्व्वन्तु सर्व्वे मम सुप्रभातम्"—इत्यादि।

॥०॥ इति ब्राह्मे मुहूर्त्ते आत्म-हित-चिन्तन-प्रकरणम् ॥०॥

हित-चिन्तनानन्तरं श्रोत्रियादिकमवलोकयेत् न तु पापिष्ठादिकम्†। तदाह‡ कात्यायनः,—

"श्रोत्रियं शुभगाङ्गां च अग्निमग्निचितं तथा।
प्रातरुत्थाय यः पश्येदापद्भ्यः स प्रमुच्यते॥
पापिष्ठं दुर्भगं मद्यं§ नग्नमुत्कृत्त-नासिकम्।
प्रातरुत्थाय यः पश्येत्तत्कलेरुपलक्षणम्"—इति।

ततोमूत्र-पुरीषे कुर्य्यात्। तदाहाङ्गिराः,—

"उत्थाय पश्चिमे रात्रे तत आचम्य चोदकम्।
अन्तर्द्धाय तृणैर्भूमिं शिरः प्रावृत्य वाससा॥
वाचं नियम्य यत्नेन निष्ठीवोच्छ्वास-वर्ज्जितः॥।
कुर्य्यान्मूत्र-पुरीषे तु शुचौ देशे समाहितः"—इति।

तत्र, तृण-नियमान् विशिनष्टि,—

---

* त्रिपुरान्तकोऽग्निः—इति मु० पुस्तके पाठः।

† पापिष्ठम्,—इति स० सो० पुस्तकयोः पाठः।

‡ नास्तीदं मु० पुस्तके

§ वार्द्धं,—इति स० सो० पुस्तकयोः पाठः।

|| ष्ठीवनोच्छ्वासवर्जितः,—इति मु० पुस्तके पाठः।

"शिरः प्रावृत्य कुर्वीत शकृन्मूत्र-विसर्ज्जनम्।
अयज्ञियैरनार्द्रैश्च तृणैः सञ्छाद्य मेदिनीम्"—इति।

तत्र, कालभेदेन दिङ्नियममाह याज्ञवल्क्यः,—

"दिवा-सन्ध्यासु कर्णस्थ-ब्रह्मसूत्र उदङ्मुखः।
कुर्य्यान्मूत्र-पुरीषे तु रात्रौ चेद्दक्षिणामुखः"—इति।

कर्णश्च दक्षिणः,—

"पवित्रं दक्षिणे कर्णे कृत्वा विण्मूत्रमुत्सृजेत्"—

इति स्मृत्यन्तरे पवित्रस्य दक्षिण-कर्ण-स्थलाभिधानात्* यज्ञोपवीतस्यापि तदेव स्थानं न्याय्यम्। अङ्गिरास्तु विकल्पेन स्थानान्तरमाह,—

"कृत्वा यज्ञोपवीतं तु पृष्ठतः कण्ठ-लम्बितम्।
विण्मूत्रन्तु गृही कुर्य्यात् यद्वा कर्णे समाहितः"—इति।

तत्र, कर्णे निधानमेकवस्त्र-विषयम्। तथा च शाङ्खायनः,—"यद्येकवस्त्रो यज्ञोपवीतं कर्णे कृत्वा मूत्र-पुरीषोत्सर्गं कुर्य्यात्"—इति। ननु, उक्तो दिङ्नियमो न व्यवतिष्ठते, अन्यैरन्यथा† स्मरणात्। तत्र यमः,—

"प्रत्यङ्मुखस्तु पूर्व्वाह्णेऽपराह्णे प्राङ्मुखस्तथा‡।
उदङ्मुखस्तु मध्याह्ने निशायां दक्षिणामुखः"—इति।

अत्र केचिद्विकल्पमाश्रित्य व्यवस्थापयन्ति। तद्युक्तं, सामान्य-

---

* दक्षिणकर्णस्थानाभिधानात्,—इति स० सो० पुस्तकयोः पाठः।
† अन्यैरन्यथास्य,—इति स० सो० पुस्तकयोः पाठः।
‡ प्राङ्मुखस्थितः,—इति मु० पुस्तके पाठः।

विशेष-शास्त्रयोर्विकल्पायोगात्। सामान्यशास्त्रं हि याज्ञवल्क्य-वचनं दिवसे सन्ध्ययोरुदङ्मुखत्व-विधानात्* यम-वचनन्तु विशेषशास्त्रम्, उदङ्मुखत्वस्य मध्याह्न-विषयत्वेनाच सङ्कोच-प्रतीतेः। माऽस्तु तर्हि विकल्पः, यम-वचनोक्ता तु† व्यवस्था भविष्यतीति चेत्। तदपि‡ न युक्तं, प्राक्प्रत्यङ्मुखत्व-निराकरणायैव§ देवलेन सदैवेति विशेषितत्वात्‖।

"सदैवोदङ्मुखः प्रातः सायाह्ने दक्षिणामुखः"—इति।

अत्र, प्रातः-सायाह्न-शब्दौ दिवा-रात्रि-विषयौ। तथा च मनुः,—

"मूत्रोच्चार-समुत्सर्गं दिवा कुर्य्यादुदङ्मुखः।

दक्षिणाभिमुखो रात्रौ सन्ध्ययोस्तु यथा दिवा"—इति।

एवन्तर्हि यमोक्तयोः प्राक्प्रत्यङ्मुखत्वयोः का गतिः? सूर्य्याभिमुख्य-निषेध-परा यमोक्तिरिति ब्रूमः। तदुक्तं महाभारते,—

"प्रत्यादित्यं प्रत्यनलं प्रतिगां च प्रतिद्विजम्।

मेहन्ति ये च पथिषु ते भवन्ति गतायुषः"—इति।

यदपि देवलेनोक्तम्,—

"विण्मूत्रमाचरेन्नित्यं सन्ध्यासु परिवर्ज्जयेत्"—इति।

तन्निरुद्धेतर-विषयम्। "न वेगं धारयेत् नोपरुद्धः क्रियां कुर्य्यात्"—इति स्मरणात्। यदपि मनुनोक्तम्,—

---

* दिवसे सन्ध्ययोरुदङ्मुख इति वचनात्,—इति स॰ सो॰ पुस्तकयोः पाठः।

† यमवचनोक्त,—इति स॰ सो॰ पुस्तकयोः पाठः।

‡ एतदपि,—इति मु॰ पुस्तके पाठः।

§ निवारणायैव,—इति स॰ सो॰ पुस्तकयोः पाठः।

‖ 'इति' शब्दोऽप्याधिक्यः मु॰ पुस्तके।

"छायायामन्धकारे वा रात्रावहनि वा द्विजः ।
यथासुख-मुखः कुर्यात् प्राण-बाधा*भयेषु च"—इति ।

तदपि नीहारान्धकारादि-जनित-दिङ्मोहन-विषयम् । देश-नियमो विष्णुपुराणेऽभिहितः,—

"नैर्ऋत्यामिषु-विक्षेपमतीत्याभ्यधिकं भुवः ।
दूरादावसथान्मूत्रं पुरीषञ्च समाचरेत्"—इति ॥

आपस्तम्बोऽपि,—"दूरादावसथान्मूत्र-पुरीषे कुर्याद्दक्षिणान्दिशमपरां वा†" इति । मनुरपि,—

"दूरादावसथान्मूत्रं दूरात् पादावसेचनम्‡ ।
उच्छिष्टान्ननिषेकञ्च दूरादेव समाचरेत्"—इति ॥

अथ वर्ज्य-देशानाह,—

"न मूत्रं पथि कुर्व्वीत न भस्मनि न गो-व्रजे ।
न फाल-कृष्टे न जले§ न चित्यां न च पर्व्वते ॥
न जीर्ण-देवायतने न वल्मीके कदाचन ।
न ससत्त्वेषु गर्त्तेषु|| न गच्छन्नाप्यवस्थितः¶ ॥
न नदी-तीरमासाद्य न च पर्व्वत-मस्तके ।

---

* बाध,—इति मु॰ पुस्तके पाठः ।
† च,—इति स॰ सो॰ पुस्तकयोः पाठः ।
‡ पादावनेजनम्,—इति मु॰ पुस्तके पाठः ।
§ फलकृष्टे न न जले,—इति मु॰ पुस्तके पाठः ।
|| न चैत्येषु न गर्त्तेषु,—इति-मु॰ पुस्तके पाठः ।
¶ न गच्छन्नाधिरोपितः,—इति मु॰ पुस्तके पाठः ।

वाय्वग्नि-विप्रानादित्यमपः पश्यन् तथैव च* ॥
न कदाचन कुर्व्वीत विण्मूत्रस्य विसर्ज्जनम्”—इति ॥

यमोऽपि,—

तुषाङ्गार-कपालानि देवताऽऽयतनानि च ।
राजमार्ग-श्मशानानि क्षेत्राणि च खलानि च ॥
उपरुद्धो न सेवेत छाया-वृक्षं चतुष्पथम्† ।
उदकं चोदकान्तञ्च पन्थानञ्च विसर्ज्जयेत् ॥
वर्जयेत् वृक्ष-मूलानि चैत्य-श्वभ्र-बिलानि च”—इति ॥

हारीतः,—

“आहारन्तु रहः कुर्य्यात् विहारञ्चैव सर्व्वदा‡ ।
गुप्ताभ्यां लक्ष्म्युपेतः स्यात्§ प्रकाशे हीयते श्रिया”—इति॥

आपस्तम्बोऽपि,—“न च सोपानत्को‖ मूत्र-पुरीषे कुर्य्यात्”—इति।

यमोऽपि,—

“प्रत्यादित्यं न मेहेत न पश्येदात्मनः शकृत् ।
दृष्ट्वा सूर्य्यं निरीक्षेत गामग्निं ब्राह्मणं तथा”—इति॥

ततो लोष्टादिना परिमृष्ट-गुद-मेढ्रो¶ऽगृहीतशिश्नश्चोत्तिष्ठेत्।
तथा च भरद्वाजः,**—

* तथैवगाः,—इति मु० पुस्तके पाठः।
† चतुष्पथे,—इति मु० पुस्तके पाठः।
‡ सर्व्वथा,—इति स० सो० पुस्तकयोः पाठः।
§ लक्ष्मीयुक्तः स्यात्,—इति मु० पुस्तके पाठः।
‖ सोपानत्,—इति मु० पुस्तके पाठः।
¶ परिमृष्टमेढ्रो,—इति मु० पुस्तके पाठः।
** भारद्वाजः,—इति मु० पुस्तके पाठः।

"अथावकृष्य* विण्मूत्रं लोष्ठ-काष्ठ-तृणादिना।
उदस्तवासा(१) उत्तिष्ठेत् दृढ़ं विधृत-मेहनः"—इति।

॥०॥ इति विण्मूत्रोत्सर्जन†प्रकरणम् ॥०॥

अथ शौच-प्रकरणम्‡।

तत्र§ याज्ञवल्क्यः,—

"गृहीत-शिश्नश्चोत्थाय मृद्भिरभ्युद्धृतैर्जलैः।
गन्ध-लेप-क्षय-करं शौचं कुर्य्यादतन्द्रितः"—इति॥

देवलोऽपि,—

"आ शौचान्नोत्सृजेच्छिश्नं प्रस्रावोच्चारयोरपि।
गुदं हस्तं च निर्मृज्यान्मृदम्भोभि र्मुहुर्मुहुः"—इति॥

दक्षोऽपि,—

"तीर्थे शौचं न कुर्व्वीत कुर्व्वीतोद्धृत-वारिणा"—इति।

अभ्युद्धरणासम्भवे विशेषमाह विश्वामित्रः॥—

"रत्नि(२)मात्राज्जलात्तीर्थे¶ कुर्य्याच्छौचमनुद्धृते।
पश्चात्तच्छोधयेत्तीर्थमन्यथा ह्यशुचिर्भवेत्"—इति॥

---

* यथाप्रकृष्य,— इति मु० पुस्तके, अथापकृष्य,—इति स० पुस्तके पाठः।

† विण्मूत्र विसर्जन,—इति मु० पुस्तके पाठः।

‡ अथ शौचविधिः,—इति स० सो० पुस्तकयोः पाठः।

§ आह,—इति मु० पुस्तके पाठः।

|| विश्वामित्र इति नास्ति मु० पुस्तके।

¶ रत्निमात्राज्जलं त्यक्त्वा,—इति स० पुस्तके, रत्निमात्रं जलं त्यक्त्वा,—इत्यन्यत्र पाठः।

---

(१) उदस्तवासाः कटिदेशादुत्क्षिप्तवस्त्रः।

(२) प्रकोष्ठे विस्तृतकरे हस्तो, मुष्ट्या तु बद्धया। स रत्निः स्यात्,—इत्यमरः।

शौच-योग्यां मृत्तिकामाह यमः,—

"आहरेन्मृत्तिकां विप्रः कूलात् ससिकतां तथा"—इति।

तत्रैव विशेषमाह मरीचिः,—

"विप्रे शुक्ला तु मृच्छौचे रक्ता क्षत्रे विधीयते।

हारिद्र-वर्णा वैश्ये तु शूद्रे कृष्णां विनिर्दिशेत्" ॥

उक्त-विशेषासम्भवे या काचिद्ग्राह्या। तदाह मनुः,—

"यस्मिन्देशे तु यत्तोयं याच यत्रैव मृत्तिका।

सैव तत्र प्रशस्ता स्यात्तया* शौचं विधीयते"—इति॥

विष्णुपुराणे वर्ज्यामृद्विशेषादर्शिताः,—

"वल्मीक-मूषिकोत्खातां मृदमन्तर्जलां तथा।

शौचावशिष्टां गेहाच्च नादद्याल्लेप-सम्भवाम्॥

अन्तः प्राण्यवपन्नाश्च हलोत्खातां न कर्दमात्†"—इति।

अन्तर्जला-मृत्तिका-प्रतिषेधस्तु वापी-कूपादि-व्यतिरिक्त-विषयः।

अतएव यमः,—

"वापी-कूप-तड़ागेषु नाहरेद्बाह्यतोमृदम्।

आहरेज्जलमध्यात् तु परतोमणि-बन्धनात्"—इति॥

देवलोऽपि काश्चिन्निषिद्धामृदोदर्शयति,—

"अङ्गार-तुष-कीटास्थि-शर्करा-वालुकान्विताम्।

वल्मीकोपरि तोयान्तः कुड्या-फाल-श्मशानजाम्॥

ग्रामवाह्यान्तरालस्थां वालुकां पांशुरूपिणीम्।

---

* यथा,—इति मु॰ पुस्तके पाठः।

† सोत्खातां न कर्दमां—इति मु॰ पुस्तके पाठः।

आहृतामन्यशौचार्थमाददीत न मृत्तिकाम्"—इति ॥

हस्त-नियममाह देवलः,—

"धर्मविद्दक्षिणं हस्तमधःशौचे न योजयेत् ।

तथा च वामहस्तेन नाभेरूर्द्धं न शोधयेत्"—इति ॥

ब्रह्माण्डपुराणे दिङ्नियमोऽभिहितः,—

"उद्धृत्योदकमादाय मृत्तिकां चैव वाग्यतः ।

उदङ्मुखो दिवा कुर्य्याद्रात्रौ दक्षिणामुखः"—इति ॥

मृत्सङ्ख्यामाह शातातपः,—

"एका लिङ्गे करे सव्ये तिस्रो द्वे हस्तयोर्द्वयोः ।

मूत्र-शौचं समाख्यातं शकृति त्रिगुणं भवेत्*"—इति ॥

मनुरपि,—

"एका लिङ्गे गुदे तिस्रस्तथैकत्र करे दश ।

उभयोः सप्त दातव्यामृदः शुद्धिमभीप्सता† ॥

एतच्छौचं गृहस्थस्य द्विगुणं ब्रह्मचारिणः ।

वानप्रस्थस्य त्रिगुणं यतीनां तु चतुर्गुणम्"—इति ।

बौधायनोऽपि,—

"पाय्वापाने मृदो योज्या वाम-पादे तथा करे ।

तिस्रस्तिस्रः क्रमाद्योज्याः सम्यक् शौचं चिकीर्षता‡"—इति

वशिष्ठोऽपि,—

---

* पुरीषे द्विगुणं भवेत्,—इति मु० पुस्तके पाठः ।

† शुद्धिमवाप्नुयात्,—इति स० सो० पुस्तकयोः पाठः ।

‡ चिकीर्षतः,—इति मु० पुस्तके पाठः ।

"पञ्चापाने दशैकस्मिन्नुभयोः सप्त मृत्तिकाः।
उभयोः पादयोः सप्त लिङ्गे द्वे परिकीर्त्तिते॥

आदित्यपुराणे,*—

"एकस्मिन् विंशतिर्हस्ते द्वयोर्ज्ञेयाश्चतुर्दश"†—इति।

विंशत्यादिकं‡ ब्रह्मचारि-विषयं, "द्विगुणं ब्रह्मचारिणः"—इत्युक्तत्वात्। आदित्यपुराणे,—

"स्त्रीशूद्रयोरर्द्धमानं प्रोक्तं शौचं मनीषिभिः।
दिवाशौचस्य निश्यर्द्धं पथि पादं विधीयते॥
आर्त्तः कुर्य्याद् यथाशक्ति शक्तः कुर्य्याद्यथोदितम्"—इति॥

बौधायनोऽपि,—

"देशं कालं तथाऽऽत्मानं द्रव्यं द्रव्य-प्रयोजनम्।
उपपत्तिमवस्थाञ्च ज्ञात्वा शौचं प्रकल्पयेत्§"—इति॥

वृद्धपराशरः,—

"उपविष्टस्तु विण्मूत्रं कर्त्तुं यस्तु न विन्दति।
स|| कुर्य्यादर्द्धशौचन्तु स्वस्य शौचस्य सर्व्वदा"—इति॥

आनुशासनिके शौचेतिकर्त्तव्यता दर्शिता,—

"शौचं कुर्य्याच्छनैर्धीरो बुद्धिपूर्व्वमसङ्करम्।

---

* नास्त्येतत् मु० पुस्तके।

† द्वयोर्द्वयो,—इति मु० पुस्तके पाठः।

‡ विंशत्यधिकं,—इति मु० पुस्तके पाठः।

§ समाचरेत्,—इति मु० पुस्तके पाठः।

|| न,—इति मु० पुस्तके पाठः।

विप्रुषश्च यथा न स्युर्यथाचोर्ह्वं न संस्पृशेत* ॥
बुद्धिपूर्व्वं प्रयत्नेन यथा नैनः स्पृशेत् द्विजाः"—इति ।

दक्षोऽपि,—

"षड़न्या नख-शुद्धौ तु देयाः शौचेप्सुना मृदः ।
न शौचं वर्ष-धाराभिराचरेत्तु कदाचन"—इति ॥

मरीचिरपि,—

"तिसृभिः शोधयेत् पादौ शोध्यौ गुल्फौ तथैव च ।
हस्तौ त्वामणिबन्धाच्च† लेप-गन्धापकर्षणे‡"—इति ।

यथा-विधि कृते-शौचे गन्धश्चेन्नापगच्छति, तदाह§ मनुः,—

"यावन्नापैत्यमेध्याक्तो गन्धोलेपश्च तत्-कृतः ।
तावन्मृद्वारि देयं स्यात् सर्व्वासु द्रव्य-शुद्धिषु"—इति ।

गन्धस्याभावे तु देवल आह,—

"यावत्तु शुद्धिं मन्येत तावच्छौचं विधीयते ।
प्रमाणं शौच-सङ्ख्यायां|| न विप्रैरुपदिश्यते"—इति ।

पितामहोऽपि,—

"न यावदुपनीयन्ते¶ द्विजाः शूद्रास्तथाऽङ्गनाः ।

---

* न च स्पृशेत्,—इति मु० पुस्तके पाठः ।
† हस्तौ द्वौ मणिबन्धाच्च,—इति मु० पुस्तके पाठः ।
‡ लेपगन्धापकर्षणम्,—इति स० सो० पुस्तकयोः पाठः ।
§ तत्र,—इति मु० पुस्तके पाठः ।
|| शौचसंख्याया,—इति मु० पुस्तके पाठः ।
¶ न तावमुपनीयन्ते,—इति स० सो० आ० पुस्तकेषु पाठः ।

गन्ध-लेप-क्षय-करं शौचमेषां* विधीयते"—इति।

अत्र स्त्री-शूद्र-ग्रहणम् अकृतोद्वाहाभिप्रायं, अनुपनीत-द्विज-साहचर्य्यात्(१)। मृत्परिमाणमाह शातातपः,—

"आर्द्रामलकमात्रास्तु ग्रासा इन्दु-व्रते स्थिताः।
तथैवाहुतयः सर्व्वाः शौचे देयाश्च मृत्तिकाः"—इति।

यत्तु दक्षाङ्गिरोभ्यां परिमाणान्तरमुक्तम्,—

"अर्द्ध-प्रसृतिमात्रा तु प्रथमा मृत्तिका स्मृता।
द्वितीया च तृतीया च तदर्द्धेन प्रकीर्त्तिता॥
प्रथमा प्रसृतिर्ज्ञेया द्वितीया तु तदर्द्धिका।
तृतीया मृत्तिका ज्ञेया त्रिभाग-कर-पूरणी†"—इति।

तत्र, सर्व्वत्र न्यूनपरिमाणेन गन्धाद्यक्षये सत्यधिकपरिमाणं द्रष्टव्यम्। सत्यपि गन्ध-क्षये शास्त्रोक्तसङ्ख्या पूरणीया यथाह दक्षः,—

"न्यूनाधिकं न कर्त्तव्यं शौचं‡ शुद्धि§मभीप्सता।
प्रायश्चित्तेन युज्येत विहितातिक्रमे कृते"—इति।

एवमुक्तशौच-करणेऽपि यस्य भाव-शुद्धिर्नास्ति, न तस्य शुद्धिरित्याह व्याघ्रपादः,—

* शौचमेवं—इति मु० पुस्तके पाठः।
† त्रिभागकरपूरणा,—इति मु० पुस्तके, त्रिभागकरपूरणम्,—इति स० पुस्तके पाठः।
‡ शौचे,—इति मु० पुस्तके पाठः।
§ सिद्धि,—इति स० शा० पुस्तकयोः पाठः।

(१) द्विजानामुपनयनवत् विवाहस्य स्त्रीशूद्रयोः प्रधानसंस्कारत्वादित्याशयः।

"शौचन्तु द्विविधं प्रोक्तं वाह्यमाभ्यन्तरन्तथा ।
मृज्जलाभ्यां स्मृतं वाह्यं भावशुद्धिस्तथाऽऽन्तरम् ॥
गङ्गा-तोयेन कृत्स्नेन मृद्भारैश्च नगोपमैः§ ।
आ मृत्योश्चाचरन् शौचं भावदुष्टो न शुद्ध्यति"—इति ।

शौचस्य द्विविधस्यापि सर्व्वकर्म्माधिकार-हेतुत्वमन्वय-व्यतिरेकाभ्यां दक्षो दर्शयति,—

"शौचे यत्नः सदा कार्य्यः शौच-मूलो द्विजः स्मृतः ।
शौचाचार-विहीनस्य समस्ता निष्फला क्रिया*"—इति ।

॥०॥ इति शौचप्रकरणम् ॥०॥

अथ गण्डूष-विधिः ॥

तत्रापस्तम्बः,—

"एवं शौच-विधिं कृत्वा पश्चाद्गण्डूषमाचरेत् ।
मूत्रे रेतसि विट्-सर्गे दन्त-धावन-कर्म्मणि ॥
भक्ष्याणां भक्षणे चैव क्रमाद्गण्डूषमाचरेत् ।
चतुरष्टद्विषट्द्वादशगण्डूषैः षोड़शैस्तथा ॥
मुख-शुद्धिं ऽ कुर्व्वीत ह्यन्यथा दोषमाप्नुयात् ।
पुरस्ताद्देवताः सर्व्वा दक्षिणे पितरस्तथा ॥
पश्चिमे मुनि-गन्धर्व्वा वामे गण्डूषमाचरेत् ।
गण्डूष-समये विप्र स्तर्जन्या वक्त्र-ताड़नम् ॥

---

§ न गोमयैः,—इति मु० पुस्तके पाठः ।
* निष्फलाः क्रियाः,—इति बहुवचनान्तः पाठः मु० पुस्तके ।

कुर्व्वीत यदि मूढ़ात्मा रौरवं नरकं व्रजेत्"—इति।*

अथाचमन विधिः।

तत्र वृद्धपराशरः,—

"कृत्वाऽथ शौचं प्रक्षाल्य पादौ हस्तौ च मृज्जलैः।
निवद्ध†शिख-कच्छस्तु‡ द्विज आचमनं चरेत्॥
कृत्वोपवीतं सव्यांसे वाङ्मनः-काय-संयतः;"—इति।

याज्ञवल्क्योऽपि,—

"अन्तर्जानु शुचौ देशे उपविष्ट उदङ्मुखः।
प्राग्वा ब्राह्मेन तीर्थेन द्विजो नित्यमुपस्पृशेत्"—इति।

गौतमोऽपि,—"शुचौ देश आसीनो दक्षिणवाहुं जान्वन्तरा§ कृत्वा यज्ञोपवीत्यामणिबन्धनात् पाणी प्रक्षाल्य वाग्यतो हृदयस्पृशः|| त्रिश्चतुर्वाऽप आचामेत्¶ पादौ चाभ्युक्षेत्** खानिचोपस्पृशेत् शीर्षण्यानि मूर्द्धनि च दद्यात्[१]"—इति। तत्र त्रिश्चतुर्व्वेत्यैच्छिको विकल्पः। ब्रह्मतीर्थं तीर्थान्तरेभ्यो विविनक्ति याज्ञवल्क्यः,—

* अथ गण्डूषविधिः,—इत्यारभ्य एतदन्तोग्रन्थः नास्ति मुद्रितातिरिक्त-पुस्तकेषु।
† प्रबद्ध,—इति मु० पुस्तके पाठः।
‡ कच्छस्तु—इति स० सो० शा० पुस्तकेषु पाठः।
§ जान्वन्तरं,—इति मु० पुस्तके पाठः।
|| हृदये स्पृशन्,—इति मु० पुस्तके पाठः।
¶ आचमेत्,—इति स० सो० शा० पुस्तकेषु पाठः।
** चाभ्युक्षयेत्,—इति मु० पुस्तके पाठः।

(१) शीर्षण्यानि शीर्षभवानि खानि इन्द्रियाणि नासिका चक्षुः श्रोत्राणि उपस्पृशेत्, मूर्द्धनि च दद्यादप इति संबन्धः।

"कनिष्ठादेशिन्यङ्गुष्ठ-मूलान्यग्रं करस्य च ।
प्रजापति-पितृ-ब्रह्म-देव-तीर्थान्यनुक्रमात्[१]"—इति ।

एतदेव शङ्ख-लिखिताभ्यां स्पष्टीकृतम्,—"अङ्गुष्ठमूलस्योत्तरतः प्रागग्रायां रेखायां ब्राह्मं तीर्थं, प्रदेशिन्यङ्गुष्ठयोरन्तरा पित्र्यं, कनिष्ठिका-करतलयोरन्तरा प्राजापत्यं, पूर्व्वाङ्गुलि-पर्व्वणि दैवम्"—इति ।

आचमनीयमुदकं विशिनष्टि शङ्खः,—

"अद्भिः समुद्धृताभिस्तु हीनाभिः फेन-बुद्बुदैः ।
वह्निना न च तप्ताभि रक्षाराभिरुपस्पृशेत्"—इति ।

याज्ञवल्क्यः,—

"अद्भिस्तु प्रकृतिस्थाभिर्हीनाभिः फेन-बुद्बुदैः ।
हृत्-कण्ठ-तालुगाभिस्तु यथासङ्ख्यं द्विजातयः ॥
शुध्येरन् स्त्रीच शूद्रास्च सकृत् स्पृष्टाभिरन्ततः[२]"—इति ।

मनुरपि,—

"हृद्गाभिः पूयते विप्रः कण्ठगाभिस्तु भूपतिः* ।
वैश्योऽद्भिः प्राशिताभिस्तु शूद्रः स्पृष्टाभिरन्ततः"—इति ।

प्रचेता अपि,—

"अनुष्णाभिरफेनाभिः पूताभिर्व्वस्त्र-चक्षुषा ।
हृद्गताभिरशब्दाभिः त्रिस्त्रिरद्भि राचमेत्"—इति ।

---

* भूमिपः,—इति मु० पुस्तके पाठः ।

---

(१) आदेशिनी तर्ज्जनी । तथाच, कनिष्ठामूले प्राजापत्यं तीर्थं, तर्ज्जनीमूले पित्र्यं, अङ्गुष्ठमूले ब्राह्मं, करस्याग्रे दैवमितिविवेकः ।

(२) अन्ततः ओष्ठप्रान्ते ।

तत्रापवादमाह यमः*,—

"रात्राववीचितेनापि शुद्धिरुक्ता मनीषिणाम्।
उदकेनातुराणाञ्च तथोष्णेनोष्णपायिनाम्"—इति।

उदकस्य ग्रहण-प्रकारं परिमाणं चाह भरद्वाजः,—

"आयतं सर्व्वतः कृत्वा गोकर्णाकृतिमत्करम्।
संहतांगुलिना† तोयं गृहीत्वा पाणिना द्विजः॥
मुक्ताङ्गुष्ठकनिष्ठेन शेषेणाचमनं चरेत्।
माष-मज्जनमात्रास्तु संगृह्य त्रिः पिवेदपः"—इति।

स च पाणिर्द्दक्षिणो द्रष्टव्यः, "त्रिः पिवेद्दक्षिणेनापः"—इति पुराणवचनात्। उदकपानानन्तर-भाविनीमितिकर्त्तव्यतामाह दक्षः,—

"संवृत्याङ्गुष्ठ-मूलेन‡ द्विः प्रमृज्यात्ततोमुखम्।
संहताभि स्त्रिभिः पूर्व्वमास्यमेवमुपस्पृशेत्§॥
अङ्गुष्ठेन प्रदेशिन्या घ्राणं स्पृष्ट्वा त्वनन्तरम्।
अङ्गुष्ठानामिकाभ्यान्तु चक्षुः-श्रोत्रे ततः परम्॥
कनिष्ठाङ्गुष्ठयोर्नाभिं हृदयन्तु तलेन वै।
सर्व्वाभिस्तु शिरः पश्चात् बाहू चाग्रेण संस्पृशेत्"—इति।

चक्षुःश्रोत्रस्यान्यथा स्पर्शनमाह,—

"तर्जन्यङ्गुष्ठ-योगेन स्पृशेन्नासापुट-द्वयम्।

---

* याज्ञवल्क्यः,—इति मु० पुस्तके पाठः।
† संहताङ्गुलिना,—इति मु० पुस्तके पाठः।
‡ संपत्याङ्गुष्ठमूलेन,—इति मु० पुस्तके, संभूत्येति स० पुस्तके पाठः।
§ संहताभिस्त्रिभिः पूर्व्वमास्यमुपस्पृशेत्,—इति मु० पुस्तके पाठः।

मध्यमाङ्गुष्ठ-योगेन स्पृशेन्नेत्र-द्वयं ततः ॥
अङ्गुष्ठस्यानामिकया योगेन श्रवणं स्पृशेत् ।
कनिष्ठाङ्गुष्ठ-योगेन स्पृशेत् स्कन्ध-द्वयं ततः ॥
नाभिं च हृदयं तद्वत् स्पृशेत् पाणि-तलेन तु ।
संस्पृशेच्च ततः शीर्षमयमाचमने विधिः"—इति ।

एवमन्येऽप्यन्यथा वर्णयन्ति । तत्र, यथाशाखं व्यवस्था द्रष्टव्या ।

आचमन-निमित्तान्याह मनुः,—

"कृत्वा मूत्रं पुरीषं वा खान्याचान्त उपस्पृशेत् ।
पीत्वाऽपोऽध्येष्यमाणश्च वेदमग्निं च* सर्व्वदा"—इति ।

कूर्म्मपुराणे,—

"चण्डाल-म्लेच्छ-सम्भाषे स्त्री-शूद्रोच्छिष्ट-भाषणे ।
उच्छिष्टं पुरुषं स्पृष्ट्वा† भोज्यं वाऽपि तथाविधम् ॥
आचामेदश्रुपाते वा लोहितस्य तथैव च ।
अग्नेर्गवामथालम्भे स्पृष्ट्वाऽप्रयतमेव च ॥
स्त्रीणां यथाऽऽत्मनः स्पर्शे‡ नीवीं वा परिधाय च"—इति ।

स्त्रीशूद्रोच्छिष्टभाषणे,—इत्येतज्जपादिविषयम् । तथा च पद्मपुराणे,—

"चाण्डालादीन् जपे होमे दृष्ट्वाऽऽचामेद्द्विजोत्तमः"—इति ।

मनुरपि,—

---

* वेदमन्त्रस्य,—इति स० सो० पुस्तकयोः पाठः ।
† दृष्ट्वा,—इति स० पुस्तके पाठः ।
‡ तथात्मसंस्पर्शे,—इति मु० पुस्तके पाठः ।

"सुप्त्वा क्षुत्वा च भुक्त्वा च निष्ठीव्योक्त्वाऽनृतं वचः।
रथ्यां श्मशानं चाक्रम्य आचामेत् प्रयतोऽपि सन्"—इति।

बृहस्पतिः*,—

"अधोवायु-समुत्सर्गे आक्रन्दे क्रोध-सम्भवे।
मार्ज्जार-मूषिका† स्पर्शे प्रहासेऽनृत-भाषणे॥
निमित्तेष्वेषु सर्व्वेषु कर्म्म कुर्व्वन्नुपस्पृशेत्"—इति।

यमोऽपि,—

"उत्तीर्य्योदकमाचामेदवतीर्य्य तथैव च।
एवं स्यात्तेजसा युक्तो वरुणेन सुपूजितः"—इति।

छागीतोऽपि,—"नोत्तरेदनुपस्पृश्य जलम्"—इति।

वशिष्ठोऽपि,—

"क्षुते निष्ठीवने सुप्ते परिधानेऽश्रुपातने।
पञ्चस्वेतेषु चाचामेत्‡ श्रोत्रं वा दक्षिणं स्पृशेत्"—इति।

दक्षिणकर्ण-स्पर्शनमाचमनासम्भवे वेदितव्यम्। तथा च,

मार्कण्डेयपुराणम्,—

"सम्यगाचम्य तोयेन क्रियां कुर्व्वीत वै शुचिः।
देवतानामृषीणाञ्च पितॄणाञ्चैव यत्नतः॥
कुर्व्वीतालम्भनं चापि§ दक्षिणश्रवणस्य वा।

---

* मात्स्यतत् मु० पुस्तके।
† मूषक,—इति मु० पुस्तके पाठः।
‡ वाचामे,—इति स० से० पुस्तकयोः पाठः।
§ वापि,—इति मु० पुस्तके पाठः।

यथाविभवतो ह्येतत् पूर्व्वाभावे ततः परम् ॥
न विद्यमाने पूर्व्वोक्ते उत्तर-प्राप्तिरिष्यते"—इति ।

दक्षिणकर्ण-प्रशंसा च, 'प्रभासादीनि तीर्थानि'—इत्यादिना-वक्ष्यते । अथ वा, बौधायनोक्तं द्रष्टव्यम्,—"नीवीं विसृज्य परिधा-योपस्पृशेदार्द्र-तृणं भूमिं गोमयं वा संस्पृशेत्"—इति । षट्त्रिंशन्मते द्विराचमन-निमित्तं दर्शितम्,—

"होमे भोजन-काले च सन्ध्ययोरुभयोरपि ।
आचान्तः पुनराचामेज्जप-होमार्च्चनादिषु"—इति ।

याज्ञवल्क्योऽपि,—

"स्नात्वा पीत्वा क्षुते सुप्ते भुक्त्वा रथ्योपसर्पणे* ।
आचान्तः पुनराचामेद्वासोविपरिधाय च"—इति ।

बौधायनोऽपि,—

"भोजने हवने दाने उपहारे प्रतिग्रहे† ।
हविर्भक्षण-काले च तत् द्विराचमनं स्मृतम्"—इति ।

कूर्म्मपुराणेऽपि,—

"प्रक्षाल्य पाणी पादौ च भुञ्जानो द्विरुपस्पृशेत् ।
शुचौ देशे समासीनो भुक्त्वा च द्विरुपस्पृशेत् ॥
ओष्ठौ विलोमकौ स्पृष्ट्वा वासोविपरिधाय च ।
रेतोमूत्र-पुरीषाणामुत्सर्गेऽयुक्त-भाषणे‡ ॥

---

* रथ्याप्रसर्पणे,—इति मु० पुस्तके पाठः ।
† उपहारप्रतिग्रहे,—इति मु० पुस्तके पाठः ।
‡ शुष्कभाषणे,—इति मु० पुस्तके पाठः ।

क्षुत्त्वाऽध्ययनारम्भे* कास† श्वासागमे तथा।
चत्वरं वा श्मशानं वा समागम्य द्विजोत्तमः॥
सन्ध्ययोरुभयोस्तद्वदाचान्तोऽप्याचमेत्ततः"—इति।

अयुक्तभाषणं‡ निष्ठुरभाषणम्। आचमनापवादमाह बौधायनः,—

"दन्तवद्दन्त-लग्नेषु दन्त-सक्तेषु धारणा।
अस्थितेषु च§ नाचामेत्तेषां संस्थानवच्छुचिः||"—इति।

दन्तलग्न-दन्तसक्तयोर्निर्हार्य्यानिर्हार्य्यरूपेण भेदः। अतएव देवलः,—

"भोजने दन्त-लग्नानि निर्हृत्याचमनं चरेत्।
दन्त-लग्नमसंहार्य्यं लेपं मन्येत दन्तवत्॥
न तत्र बहुशः¶ कुर्य्याद्यत्नमुद्धरणे पुनः।
भवेच्चाशौचमत्यर्थं तृण-वेधाद्व्रणे कृते"—इति।

अस्थितेषु** तेषु स्थानच्युतेषु च निर्गीर्णेष्वित्यर्थः। तत्र मनुः,—

"दन्तवद्दन्तलग्नेषु जिह्वास्पर्श-कृते†† न तु।
परिच्युतेषु च स्थानान्निगिरन्नेव तच्छुचिः"—इति।

एतच्च रसानुपलब्धौ वेदितव्यम्। यथाऽऽह शङ्खः,—"दन्तवद्दन्त-

---

* क्षीवित्वाऽध्ययनारम्भे,—इति मु० पुस्तके पाठः।
† काश,—इति स० सो० शा० पुस्तकेषु पाठः।
‡ शुष्कभाषणं,—इति मु० पुस्तके पाठः।
§ ग्रस्तेषु तेषु,—इति शा० पुस्तके पाठः।
|| सस्थानवच्छुचिः,—इति शा० पुस्तके पाठः।
¶ बहुलं,—इति मु० पुस्तके पाठः।
** ग्रस्तेषु,—इति शा० पुस्तके पाठः।
†† जिह्वास्पर्शे कृते,—इति स० सो० शा० पुस्तकेषु पाठः।

लग्नेषु रसवर्जनमन्यतो जिह्वाभिस्पर्शनात्”—इति* । फल-मूलादिषु विशेषमाह शातातपः,—

“दन्तलग्ने फले मूले भुक्त-स्नेहावशिष्टके ।
ताम्बूले चेक्षुदण्डे च नोच्छिष्टो भवति द्विजः”—इति ।

षट्त्रिंशन्मतेऽपि,†—

“ताम्बूले चैव सोमे च भुक्त-स्नेहावशिष्टके ।
दन्त-लग्नस्य संस्पर्शे नोच्छिष्टस्तु भवेन्नरः‡ ॥
त्वग्भिः पत्रै मूल-पुष्पै स्तृण-काष्ठमयै स्तथा ।
सुगन्धिभिस्तथा द्रव्यै र्नोच्छिष्टो भवति द्विजः”—इति ।

एतच्च मुख-सौरभ्याद्यर्थोपभुक्तावशिष्ट-विषयं§ ताम्बूल-साहचर्य्यात् । ‘दन्तलग्नस्य संस्पर्शे’ इति अनिर्हार्य्यस्य|| दन्तलग्नस्य जिह्वया संस्पर्शे,—इत्यर्थः । याज्ञवल्क्योऽपि,—

“मुखजा विप्रुषोमेध्या स्तथाऽऽचमन-विन्दवः ।
श्मश्रु चास्य-गतं दन्त-सक्तं त्यक्त्वा ततः शुचि”—इति ।

मुख-निःसृता विन्दवो यद्यङ्गे पतन्ति¶ तदाऽऽचमनापादकाः** । तथा च गौतमः,—“मुख्या विप्रुष उच्छिष्टं न कुर्व्वन्ति†† न चेदङ्गे

---

* ‘एतच्च’—इत्यारभ्य, एतदन्तोग्रन्थः मुद्रितातिरिक्त पुस्तकेषु नास्ति ।
† षड्विंशतिमतेपि,—इति शा० पुस्तके पाठः ।
‡ ‘इति’ शब्दोऽत्राधिकः मु० पुस्तके ।
§ मुखसौरभाद्यर्थोपभुक्तविषयं,—इति स० सो० शा० पुस्तकेषु पाठः ।
|| हार्य्यस्य,—इति शा० पुस्तके पाठः ।
¶ नियतं पतन्ति,—इति सो० शा० पुस्तकयोः पाठः ।
** तदाचमनापवादकाः,—इति मु० पुस्तके पाठः ।
†† नोच्छिष्टं कुर्व्वन्ति,—इति शा० पुस्तके पाठः ।

निपतन्ति"—इति। आचमन-विन्दव स्त्वङ्गं स्पृष्टा अपि मेध्याः। तथा च मनुः,—

"स्पृशन्ति विन्दवः पादौ य आचामयतः* परान्।
भौमिकैस्ते समा ज्ञेया न तैरप्रयतो भवेत्"—इति।

अत्र पाद-ग्रहणम् अवयवान्तरस्याप्युपलक्षणार्थम्। तथा च यमः,—

"प्रयान्त्याचमतोयाश्च† शरीरे विप्रुषो नृणाम्।
उच्छिष्ट-दोषोनास्त्यत्र भूमि-तुल्यास्तु ताः स्मृताः"—इति।

श्मश्रु-विषये विशेषमाहापस्तम्बः,—"न श्मश्रुभिरुच्छिष्टो भवत्यन्तरास्ये सद्भिर्य्यावन्न हस्तेनोपस्पृशति"—इति। आचमने वर्ज्ज्यानाह भृगुः,—

"विना यज्ञोपवीतेन तथा धौतेन वाससा।
मुक्त्वा शिखां चाप्याचामेत्‡ कृतस्यैव पुनः क्रिया॥
सोष्णीषी बद्ध-पर्य्यङ्कः प्रौढ़पादश्च(१) यानगः।
दुर्द्दश-प्रगतस्यैव§ नाचामञ्छुद्धिमाप्नुयात्"—इति।

बौधायनोऽपि,—"पादप्रक्षालनाच्छेषेण नाचामेत्, भूमौ स्रावयित्वा-

---

* यस्याचामयतः,—इति शा॰ पुस्तके पाठः।
† प्रयान्त्याचमतोयस्य,—इति मु॰ पुस्तके पाठः।
‡ वाप्याचामेत्,—इति मु॰ पुस्तके पाठः।
§ दुर्द्दशः प्रपदस्यैव,—इति शा॰ स॰ पुस्तकयोः पाठः।

---

(१) प्रौढ़पादः,—"आसनारूढ़पादस्तु जानुनोर्जङ्घयोस्तथा। कृतावसक्थिकोयस्तु प्रौढ़पादः स उच्यते"—इत्युक्तलक्षणः। जानुनोर्जङ्घयोः कृतावसक्थिकोवस्त्रादिनाकृतपृष्ठजानुजङ्घाबन्धः।

ऽऽचामेत्, न सबुद्बुदाभिर्न सफेनाभि र्नोच्छिष्टाभिर्न क्षाराभि *
र्न विवर्णाभि र्नोष्णाभि† र्न कलुषाभि र्न हसन् जल्पन् तिष्ठन्‡ न
प्रह्वो न प्रणतो न मुक्त-शिखो नाबद्धकच्छो§ न वहिर्जानु र्नवेष्टित-
शिराः न वद्धकचो न त्वरमाणो नायज्ञोपवीती न प्रसारितपादः, शब्द-
मकुर्व्वंस्त्रिरपो हृदयङ्गमाः पिवेत्"—इति । देवलोऽपि,—

"सोपानक्को जलस्थोवा मुक्तकेशोऽपि वा|| नरः ।
उष्णीषी वाऽपि नाचामेद्वस्त्रेनावध्य वा शिरः"—इति ।

आपस्तम्बोऽपि,—"न वर्ष-धाराभिराचामेत्"¶इति । यमोऽपि,—

"अपः कर-नखैः स्पृष्टा य आचामति वै द्विजः ।
सुरां पिवति स व्यक्तं यमस्य वचनं यथा"—इति ।

ब्रह्माण्ड-पुराणेऽपि—

"कण्ठं शिरोवा प्रावृत्य रथ्याऽऽपण-गतोऽपि वा ।
अकृत्वा पादयोः शौचमाचान्तोऽप्यशुचिर्भवेत्"—इति ।

गौतमोऽपि,—"नाञ्जलिना पिवेन्नतिष्ठन् नोद्धृतोदकेनाचामेत्"—
इति । नतिष्ठन्निति स्थलविषयं, जले च तिष्ठन्नप्याचामेत् । तथा च
विष्णुः,—

---

* नोच्छिष्टाभिर्नक्षाराभिः,—इति नास्ति मुद्रितातिरिक्त पुस्तकेषु ।
† नोष्णाभिः,—इति मुद्रितातिरिक्तपुस्तकेषु न दृश्यते ।
‡ न जल्पन् न तिष्ठन्,—इति नास्ति मु० पुस्तके ।
§ नाबद्धकेशो,—इति शा० पुस्तके पाठः ।
|| यवा,—इति मु० पुस्तके पाठः ।
¶ न वर्षधाराभ्याचामेत्,—इति शा० पुस्तके पाठः ।

"जान्वोरूर्द्धं जले तिष्ठन्नाचान्तः शुचितामियात्।
अधस्ताच्छतकृत्वोऽपि समाचान्तो न शुद्ध्यति"—इति।

कौशिकोऽपि,—

"अपवित्र-करः कश्चित् ब्राह्मणोऽप उपस्पृशेत्*।
अकृतं तस्य तत् सर्व्वं† भवत्याचमनं तथा॥
वामहस्ते स्थिते दर्भे दक्षिणेनाचमेद्यदि।
रक्तं तु तद्भवेत्तोयं पीत्वा चान्द्रायणञ्चरेत्"—इति।

मार्कण्डेयस्तु दक्षिण-हस्तस्य स-पवित्रतां विधत्ते,—

"सपवित्रेण हस्तेन कुर्य्यादाचमनक्रियाम्।
नोच्छिष्टं तत् पवित्रन्तु भुक्तोच्छिष्टन्तु वर्ज्जयेत्"—इति।

गोभिलस्तु हस्तद्वये स-पवित्रत्वं‡ प्रशंसति,—

"उभयत्र§ स्थितैर्दर्भैः समाचामति यो द्विजः।
सोमपान-फलं तस्य भुक्त्वा यज्ञफलं भवेत्"—इति।

स्नानानन्तर-भाविन्याचमने दक्षो विशेषमाह,—

"स्नात्वाऽऽचामेत्तदा विप्रः पादौ कृत्वा जले स्थले।
उभयोरप्यसौ शुद्धस्ततः क्षेमोभवेदिति"।

हारीतः—

---

* ब्राह्मणोयदुपस्पृशेत्,—इति मु० पुस्तके, ब्राह्मणोय उपस्पशेत्,—इति चान्यत्र पाठः।
† अपेयं तस्य तत्सर्व्वं,—इति मु० पुस्तके पाठः।
‡ पवित्रं,—इति स० सो० शा० पुस्तकेषु पाठः।
§ हस्तद्वय,—इति मु० पुस्तके पाठः।

"आर्द्र-वासा जले कुर्य्यात्तर्पणाचमनं जपम् ।
शुष्कवासा स्थले कुर्य्यात्तर्पणाचमनं जपम्"—इति ।

स्थलविषये विशेषोदर्शितः स्मृत्यन्तरे,—

"अलाभे ताम्र-पात्रस्य करकञ्च कमण्डलुम् ।
गृहीत्वा स्वयमाचामेत् नरोनाप्रयतो भवेत् ॥
करकालावुकाद्यैश्च ताम्र-पर्णपुटेन* च ।
स्वहस्ताचमनं कार्य्यं स्वेदलेपांश्च वर्ज्जयेत् ॥
करपात्रे च† यत्तोयं यत्तोयं ताम्रभाजने ।
सौवर्णे राजतेचैव नैवाशुद्धन्तु तत् स्मृतम्"—इति ।

एवमुक्त-लक्षणस्याचमनस्य प्रशंसामाह व्यासपात्,—

"एवं यो ब्राह्मणोनित्यमुपस्पर्शनमाचरेत् ।
ब्रह्मादि-स्तम्बपर्य्यन्तं जगत् स परितर्पयेत्"—इति ।

वृद्धशङ्खोऽपि,—

"त्रिः प्राश्नीयाद्यदम्भस्तु प्रीतास्तेनास्य देवताः ।
ब्रह्मा विष्णुश्च रुद्रश्च भवन्तीत्यनुशुश्रुमः ।
गङ्गा च यमुना चैव प्रीयेतां‡ परिमार्ज्जनात् ।
पादाभ्यां प्रीयते विष्णु र्ब्रह्मा शिरसि कीर्त्तितः ।
नासत्यदस्रौ प्रीयेते स्पृष्टे नासा-पुट-द्वये ।
स्पृष्टे लोचन-युग्मे तु प्रीयेते शशि-भास्करौ ।

---

* चर्म्मपुटेन,—इति स० सो० शा० पुस्तकेषु पाठः ।
† करकपात्रे च, इति मु० पुस्तके पाठः ।
‡ प्रीयते,—इति शा० पुस्तके पाठः ।

कर्ण-युग्मे तथा स्पृष्टे प्रीयेते त्वनिलानलौ।
स्कन्धयोः स्पर्शनादेव प्रीयन्ते सर्व्वदेवताः।
नाभि-संस्पर्शनान्नागाः प्रीयन्ते चास्य नित्यशः।
संस्पृष्टे हृदये चास्य प्रीयन्ते सर्व्वदेवताः।
मूर्द्ध-संस्पर्शनादस्य प्रीतस्तु पुरुषोभवेत्"—इति।

आचमनाकरणे प्रत्यवायो दर्शितः पुराणसारे, *—

"यः क्रियाः कुरुते मोहादनाचम्यैव नास्तिकः।
भवन्ति हि वृथा तस्य क्रियाः सर्व्वा न संशयः"—इति।

॥०॥ इति आचमन-प्रकरणम्॥०॥

## अथ दन्तधावन-विधिः॥

अत्रिः,—

"मुखे पर्य्युषिते नित्यं भवत्यप्रयतोनरः।
तदार्द्र-काष्ठं शुष्कं वा भक्षयेद्दन्तधावनम्"—इति।

व्यासोऽपि,—

"प्रक्षाल्य हस्तौ पादौ च मुखञ्च सुसमाहितः।
दक्षिणं बाहुमुद्धृत्य कृत्वा जान्वन्तरा ततः॥
तिक्तं कषायं कटुकं सुगन्धं† कण्टकान्वितम्।
क्षीरिणोवृक्ष-गुल्मादीन् भक्षयेद्दन्तधावनम्"—इति।

विष्णुः,—

* पुराणसारे,—इति नास्ति मु० पुस्तके।

† सुगन्धं,—इति मु० पुस्तके पाठः।

"कण्टकि-क्षीर-वृक्षोत्थं द्वादशाङ्गुल-सम्मितम्।
कनिष्ठाङ्गुलिवत् स्थूलं पर्व्वार्द्ध-कृत-कूर्च्चकम्॥
दन्त-धावनमुद्दिष्टं जिह्वोल्लेखनिका* तथा।
सुसूक्ष्मं सूक्ष्म-दन्तस्य सम-दन्तस्य मध्यमम्॥
स्थूलं विषम-दन्तस्य त्रिविधं दन्त-धावनम्।
द्वादशाङ्गुलिकं विप्रे काष्ठमाहुर्मनीषिणः॥
क्षत्र-विट्-शूद्र-जातीनां नव-षट्-चतुरङ्गुलम्"—इति।

अङ्गिराः,—

"आम्र-पुन्नाग-विल्वानामपामार्ग-शिरीषयोः।
भक्षयेत् प्रातरुत्थाय वाग्यतो दन्त-धावनम्† ॥
वटाश्वत्थार्क-खदिर-करवीरांश्च वर्ज्जयेत्।
जात्यश्च विल्व-खदिर-मूलन्तु ककुभस्य च॥
अरिमेदं प्रियङ्गुश्च कण्टकिन्यस्तथैव च।
प्रक्षाल्य भक्षयेत् पूर्व्वं प्रक्षाल्यैव च सन्त्यजेत्॥
उदङ्मुखः प्राङ्मुखो वा कषायं तिक्तकं तथा।
प्रातर्भुक्त्वा च यतवाग्भक्षयेद्दन्त-धावनम्"—इति।

कात्यायनो दन्त-धावनस्य काष्ठाभिमन्त्रण-मन्त्रं दर्शयति,—

"आयुर्वलं यशोवर्च्चः प्रजाः पशु-वसूनि च।
ब्रह्म प्रज्ञाञ्च मेधाञ्च त्वं नोधेहि वनस्पते"—इति।

---

* जिह्वोल्लेखनिकां—इति मु० पुस्तके पाठः।

† इति, शब्दोऽत्राधिको मु० पुस्तके।

वर्ज्जनीयानाहोशनाः,—"नाङ्गुलिभिर्दन्तान् प्रक्षालयेत्* ।

दक्षिणाभिमुखो नद्यां नीलं धव-कदम्बकम् ।

तिन्दुकेङ्गुद-वन्धूक-मोचामरज-बल्वजम् ॥

कार्पासं दन्त-काष्ठञ्च विष्णोरपि हरेच्छ्रियम् ।

न भक्षयेत पालाशं कार्पासं शाकमेवच ।

एतानि भक्षयेद्यस्तु क्षीण-पुण्यः स जायते"—इति ।

वर्ज्ज्य-तिथीनाह विष्णुः,—

"प्रतिपद्दर्शषष्ठीषु चतुर्द्दश्यष्टमीषु च ।

नवम्यां भानुवारे च दन्त-काष्ठं विवर्ज्जयेत्"—इति ।

यमोऽपि,—

"चतुर्द्दश्यष्टमी दर्शः पूर्णिमा संक्रमो रवेः ।

एषु स्त्री-तैल-मांसानि दन्त-काष्ठञ्च वर्ज्जयेत् ।

श्राद्धे जन्मदिने चैव विवाहेऽजीर्ण-दोषतः ।

व्रते चैवोपवासे च वर्ज्जयेद्दन्त-धावनम्"—इति ॥

व्यासोऽपि,—

"श्राद्धे यज्ञे च नियमान्नाद्यात्† प्रोषितभर्तृका ।

श्राद्धे कर्त्तु‡ र्निषेधोऽयं न तु भोक्तुः कदाचन ।

---

* वचमामामनुष्टुप्छन्दसोपनिवद्धत्वात् अत्र च तल्लक्षणाभावात् कियन्त्यक्षराणि पतितान्यनुमीयन्ते। परमादर्शपुस्तकेषु सर्व्वेष्वेवमेव दर्शनादित्थमेव रक्षितम् ।

† नियमाद्मतत्,—मु० पुस्तके पाठः ।

‡ श्राद्धकर्त्तु,—इति मु० पुस्तके पाठः

अलाभे दन्त-काष्ठानां निषिद्धायां* तथा तिथौ।
अपां द्वादश-गण्डूषै र्विदध्याद्दन्त-धावनम्"—इति।

वृद्धयाज्ञवल्क्यः†—

"इष्टका-लोष्ट-पाषाणै रितराङ्गुलिभिस्तथा।
मुक्ता चानामिकाऽङ्गुष्ठौ वर्ज्जयेद्दन्त-धावनम्"—इति।

इति दन्त-धावन-प्रकरणम्॥

---

अथ स्नान-जप‡ होमादे र्दर्भ-पाणिना कर्त्तव्यत्वादादौ दर्भ-विधिरुच्यते॥

तत्र हारीतः—

"अच्छिन्नाग्रान् सपत्रांश्च§ समूलान् कोमलान् शुभान्।
पितृ-देवर्षि-पूजार्थं|| समादध्यात् कुशान् द्विजः।
कुश-हस्तेन यज्जप्तं पानञ्चैव कुशैः सह।
कुश-हस्तस्तु यो भुङ्क्ते तस्य संख्या न विद्यते"—इति।

पुराणान्तरेऽपि,—

"कुश-पूतं भवेत् स्नानं कुशेनोपस्पृशेत् द्विजः¶।
कुशेन चोद्धृतं तोयं सोमपानेन सम्मितम्"—इति।

गोभिलोऽपि,—

---

* निषिद्धे च—इति मु० पुस्तके पाठः।
† याज्ञवल्क्यः—इति मु० पुस्तके पाठः।
‡ जप,—इति मु० पुस्तके नास्ति।
§ पवित्रांश्च,—इति मु० पुस्तके पाठः।
|| पितृदेव जपार्थन्तु,—इति स० सो० शा० पुस्तकेषु पाठः।
¶ कुशहस्तेन,—इत्यारभ्य कुशेनोपस्पृशेत् द्विजः,—इत्येतदन्तोग्रन्थः मुद्रितातिरिक्त पुस्तकेषु न दृश्यते।

"कुश-मूले स्थितो ब्रह्मा कुश-मध्ये जनार्द्दनः।
कुशाग्रे शङ्करं विद्यात्* त्रयो देवाव्यवस्थिताः"—इति।

कौशिकः,—

"शुचौ देशे शुचिर्भूत्वा स्थित्वा पूर्व्वोत्तरामुखः।
ॐकारेणैव मन्त्रेण कुशाः स्पृश्या द्विजोत्तमैः"—इति।

उत्पाटन-मन्त्रस्तु,—

"विरिञ्चिना सहोत्पन्न, परमेष्ठि-निसर्गज:†।
नुद पापानि सर्व्वाणि दर्भ, स्वस्तिकरो मम"—इति।

वर्ण-भेदेन विनियोग-भेदमाह‡ कात्यायनः,—

"हरिता यज्ञिया दर्भाः पीतकाः पाकयज्ञियाः(१)।
समूलाः पितृदैवत्याः कल्माषा वैश्वदेविकाः"—इति।

कुशाभावे शङ्खः,—

"कुशाभावे द्विजश्रेष्ठः काशैः कुर्व्वीत यत्नतः§।
तर्पणादीनि कर्म्माणि काशाः कुश-समाः स्मृताः"—इति।

यमोऽपि,—

* विन्द्यात्,—इति मु॰ पुस्तके पाठः।
† निसर्गतः,—इति शा॰ पुस्तके पाठः।
‡ विनियोगमाह,—इति शा॰ पुस्तके पाठः।
§ तत्त्वतः,—इति शा॰ स॰ पुस्तकयोः पाठः।

(१) पाकयज्ञियाः पाकयज्ञे विनियोगार्हाः। पाकयज्ञश्च,—"पाकयज्ञा इत्याचक्षत एकाग्नौ यज्ञान् (४.६.२)"—इति लाट्यायनीये श्रौतसूत्रे परिभाषितः। "त्रयः पाकयज्ञाः, हुता अग्नौ हूयमाना अनग्नौ प्रहुता ब्राह्मणभोजने ब्रह्मणि हुताः, (१.१.२—३)"—इति आश्वलायनीये गृह्यसूत्रे उक्तम्। "पाकयज्ञाः अल्पयज्ञाः प्रशस्तयज्ञा वा"—इति तद्वृत्तौ गार्ग्यनारायणः। पाकयज्ञः पाकाङ्गकयज्ञो वृषोत्सर्गगृहप्रतिष्ठाहोमादिः,—इति रघुनन्दनः।

"कुशाः काशा यवा दूर्व्वास्तथा व्रीहयएवच।
वल्वजाः पुण्डरीकाश्च* सप्तधा वर्हिरुच्यते"—इति।

वर्ज्ज्यानाह हारीतः—

"चितौ दर्भाः पथि दर्भाः ये दर्भा यज्ञ-भूमिषु।
स्तरणासन-पिण्डेषु† षट् कुशान् परिवर्ज्जयेत्॥
ब्रह्मयज्ञेषु‡ ये दर्भा ये दर्भाः पितृतर्पणे।
हता मूत्र-पुरीषाभ्यां तेषां त्यागोविधीयते॥
अपूतागर्हिता दर्भा ये संच्छिन्नाः§ नखैस्तथा‖।
क्वथितानग्निदग्धांश्च कुशान् यत्नेन वर्ज्जयेत्"—इति।

कुशोत्पाटने काल-नियममाह हारीतः,—

"मासे नभस्यमावास्या तस्यां दर्भ-चयोमतः¶।
अयातयामास्ते दर्भा नियोज्याः स्युः पुनः पुनः"(१)—इति॥

शङ्खः**—

दर्भाः कृष्णाजिनं मन्त्राब्राह्मणाश्च विशेषतः††।

---

* पुण्डरीकानि,—इति शा० पुस्तके पाठः।
† गर्त्तेषु,—इति मु० पुस्तके पाठः।
‡ ब्रह्मयज्ञे च,—इति मु० पुस्तके पाठः।
§ येचच्छिन्नाः,—इति शा० पुस्तके पाठः।
‖ नखैः सृताः,—इति स० सो० शा० पुस्तकेषु पाठः।
¶ दर्भोच्चयोमतः,—इति मु० पुस्तके पाठः।
** नास्तीदं मुद्रितातिरिक्तपुस्तकेषु।
†† ब्राह्मणा हविरग्नयः,—इति अन्यत्र पाठः।

---

(१) यातयामत्वञ्च,—"जीर्णञ्च परिभुक्तञ्च यातयाममिदं द्वयम्"—इत्युक्त-लक्षणं, तद्वैपरीत्यमयातयामत्वम्।

अयातयाम्येतानि नियोज्यानि* पुनः पुनः"—इति।

पवित्र-धारणे फलमाह मार्कण्डेयः,—

"कुश-पाणिः सदा तिष्ठेत् ब्राह्मणो दंभ-वर्जितः।

स नित्यं हन्ति पापानि तूल-राशिमिवानलः"—इति।

शातातपः,—

"जपे होमे च दाने च स्वाध्याये पितृ-तर्पणे।

अशून्यं तु† करं कुर्य्यात् सुवर्ण-रजतैः कुशैः"—इति।

पवित्र-प्रकारमाह कात्यायनः,—

"अनन्तर्गर्भिणं साग्रं कुशं द्विदलमेवच।

प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित्"—इति।

मार्कण्डेयः,‡—

"चतुर्भिः दर्भ-पूञ्जीलै ब्राह्मणस्य पवित्रकम्।

एकैक-न्यूनमुद्दिष्टं वर्णे वर्णे यथाक्रमम्॥

त्रिभिः दर्भैः शान्ति-कर्म्म पञ्चभिः पौष्टिकन्तथा।

चतुर्भिश्चाभिचारांश्च§ कुर्व्वन् कुर्य्यात् पवित्रकम्"(१)—इति।

अत्रिः,—

---

* नियोज्याः स्युः—इति शा० पुस्तके पाठः।

† अन्यूनं तु,—इति मु० पुस्तके पाठः।

‡ मार्कण्डेयोऽपि,—इति मु० पुस्तके पाठः।

§ चतुर्भिश्चाभिचाराख्यं,—इति मु० पुस्तके पाठः।

---

(१) शान्तिर्धर्म्मद्वारा ऐहिकानिष्टहेतुदुरितनिवृत्तिः, तदर्थं यत् कर्म्म विहितं तत् शान्तिकर्म्मेत्युच्यते। पुष्टिर्धनाद्युपचयः, तत्फलकं कर्म्म पौष्टिकम्। अभिचारः शत्रुमारणादिः। स चाभिचारः प्रकृते श्येनादिरूपतया पर्य्यवसितः।

"ब्रह्म-यज्ञे जपे चैव ब्रह्मग्रन्थि विधीयते ।
भोजने वर्त्तुलं प्रोक्तं* एवं धर्म्मो न हीयते"†—इति ।

इति दर्भ-प्रकरणम् ॥

तदेवं 'सन्ध्या स्नानम्'—इत्यस्मिन् वचने स्नान-शब्दोपलक्षितानि ब्राह्म-मुहूर्त्तोत्थानादीनि कुश-विध्यन्तानि कर्म्माणि निरूपितानि; अथेदानीं मूल-वचनोक्तं स्नानं प्रपञ्चयते‡। तत्र कूर्म्मपुराणम्,—

"प्रक्षाल्य दन्त-काष्ठं वै भक्षयित्वा यथाविधि ।
आचम्य प्रयतो नित्यं प्रातःस्नानं समाचरेत्"—इति ।

व्यासः,—

"उषःकालेतु संप्राप्ते कृत्वा चावश्यकं बुधः ।
स्नायान्नदीषु शुद्धासु शौचं कृत्वा यथाविधि"—इति ।

दक्षोऽपि§,—

"अस्नात्वा नाचरेत् कर्म्म जप-होमादि किञ्चन‖ ।
लाला-स्वेद-समाकीर्णः शयनादुत्थितः पुमान् ॥
अत्यन्त-मलिनः कायो नव-च्छिद्र-समन्वितः ।
स्रवत्येव दिवा रात्रौ¶ प्रातःस्नानं विशोधनम् ॥
प्रातःस्नानं प्रशंसन्ति दृष्टादृष्ट-फलं हि तत् ।
सर्व्वमर्हति शुद्धात्मा प्रातःस्नायी जपादिकम्"—इति ।

---

* वर्त्तुलः प्रोक्तः,—इति श्रा० पुस्तके पाठः ।
† विधीयते,—इति मु० पुस्तके पाठः ।
‡ प्रकाश्यते,—इति मु० पुस्तके पाठः ।
§ नास्त्येतत्,—मु० पुस्तके ।
‖ किञ्च यत्,—इति मु० पुस्तके पाठः ।
¶ दिवारात्रं,—इति मु० पुस्तके पाठः ।

व्यासः,— "ऋषीणामृषिता नित्यं प्रातःस्नानान्न संशयः।
अलक्ष्मीः काल-कर्णी च[१] दुःस्वप्नं दुर्विचिन्तनम्*।
प्रातःस्नानेन पापानि पूयन्ते नात्र संशयः"—इति।

दक्षोऽपि,—
"अज्ञानाद्यदि वा मोहा द्रात्रौ दुश्चरितं कृतम्।
प्रातःस्नानेन तत् सर्व्वं शोधयन्ति द्विजातयः"—इति।

स्नान-प्रकारः चतुर्व्विंशत-मते विहितः,—
"स्नानमब्दैवतैर्मन्त्रै र्वारुणैश्च मृदा सह।
कुर्य्याद्व्याहृतिभिर्वाऽथ यत् किञ्चेदमृचाऽपिवा†"[२]-इति।

* दुर्विचिन्तितम्, इति मु० पुस्तके पाठः।
† यत्किञ्चेदमृचापि च,—इनि मु० पुस्तके पाठः।

(१) अलक्ष्मीर्लक्ष्म्या अग्रजा। कालकर्णी चतुःषष्टियोगिन्यन्तर्गताऽष्टत्रिंशत्संख्यका योगिनी।

(२) अब्दैवतमन्त्राः ऋग्वेदे दशममण्डले नवमसूक्ते नव पठिताः, तत्र प्रथमे त्रयोमन्त्रा आर्च्चिमारुते अपांस्पर्शे विनियुक्ततया प्रसिद्धाः। तत्र, 'आपोहिष्ठा'—इत्यादिः प्रथमोमन्त्रः, 'योवः शिवतमोरसः'—इत्यादिर्द्वितीयः, 'तस्मा अरं'—इत्यादिस्तृतीयः। एतएव वाजसनेयसंहितायां एकादशाध्याये पठिताः। एवं सामवेदसंहितायामुत्तराग्रन्थे नवमप्रपाठकस्य द्वितीयार्द्धे तदृक्त्रयात्मकमेव दशमं सूक्तं पठितम्। वारुणमन्त्राश्च, 'तत्त्वायामि ब्रह्मणा वन्द्यमानः'—इति पञ्च, 'त्वं नोऽग्ने वरुणस्य विद्वान्'—इति द्वे, 'इमं मे वरुणश्रुधि'—इति चेत्यष्टौ ऋचः हेमाद्रिणा लिखिताः। तत्र तत्त्वायामीत्याद्याः पञ्च ऋचः, ऋग्वेदे प्रथममण्डले पञ्चदशर्चात्मके चतुर्व्विंशतिसूक्ते एकादशाद्याः। 'त्वं नोऽग्ने वरुणस्य विद्वान्'—इति द्वे ऋचौ ऋग्वेदे चतुर्थमण्डले विंशतिऋगात्मकप्रथमसूक्ते चतुर्थीपञ्चम्यौ। 'इमं मे वरुणश्रुधि'—इति च ऋग्वेदे प्रथममण्डले पञ्चविंशतिसूक्तस्योनविंशतितमी ऋक्। व्याहृतयोभूराद्याः प्रसिद्धाः। 'यत्किञ्चेदं'—इति च ऋग्वेदे सप्तममण्डले एकोननवतितमे सूक्ते पञ्चमी ऋक्।

कात्यायनोऽपि,—

"यथाऽहनि तथा प्रातः नित्यं स्नायादनातुरः* ।

दन्तान् प्रक्षाल्य नद्यादौ गृहे चेत् तदमन्त्रवत्"—इति ।

अमन्त्रवदिति मन्त्र-संक्षेपोऽभिप्रेतः; यतः सएव आह,—

"अल्पत्वाद्धोम-कालस्य बहुत्वात् स्नान-कर्म्मणः ।

प्रातः संक्षेपतः स्नानं† होम-लोपो विगर्हितः"—इति ।

काल-नियममाह जावालिः,—

"सततं प्रातरुत्थाय दन्त-धावन-पूर्व्वकम् ।

आचरेदुषसि स्नानं तर्पयेद्देव-मानुषान्"—इति ।

चतुर्व्विंशति-मतेऽपि,—

"उषस्युषसि यत् स्नानं सन्ध्यायामुदितेऽपि वा ।

प्राजापत्येन तत्तुल्यं सर्व्व-पाप-प्रणाशनम्"—इति ।

उदिते इत्युदयाभिमुखे,—इत्यर्थः । उदयस्याप्युपरि स्नानं चेत् सन्ध्याऽप्युत्कृष्येत,[१] स्नान-पूर्व्वकत्वात् सन्ध्यायाः ; सन्ध्योत्कर्षश्च योगि-याज्ञवल्क्येन‡ निषिद्धः,—

"सन्ध्यौ सन्ध्यामुपासीत, नास्तगे नोद्गते रवौ"—इति ।

यथोक्तं स्नानं कुर्व्वन्नघमर्षणं[२] कुर्य्यात् । तदाह शौनकः,—

---

* स्नायादतन्द्रितः,—इति मु० पुस्तके पाठः ।
† प्रातर्न तनुयात् स्नानं,—इति अन्यत्र पाठः ।
‡ याज्ञवल्क्येन,—इति मु० पुस्तके पाठः ।

---

(१) विहितकालादुत्तरकाले करणमुत्कर्षः ।

(२) "ऋतञ्च"—इत्यादि ऋक्त्रयं अघमर्षणतया प्रसिद्धम् । तच्च ऋग्वेदे दशममण्डले त्र्यृचात्मकं नवत्यधिकशततमं सूक्तम् । एतदेव सूक्तं तैत्तिरीयारण्यके दशमप्रपाठके प्रथमानुवाके पठितम् ।

"स्नात्वाऽऽचाम्योवारि-मध्ये त्रिः पठेदघ-मर्षणम्"—इति।

ब्रह्माण्डपुराणे स्नानाङ्ग-तर्पणं विहितम्,—

"नित्यं नैमित्तिकं काम्यं त्रिविधं स्नानमुच्यते।

तर्पणन्तु भवेत्तस्य अङ्गत्वेन प्रकीर्त्तितम्*"—इति।

यमोऽपि,—

"द्वौ हस्तौ युग्मतः कृत्वा पूरयेदुदकाञ्जलिम्।

गोशृङ्गमात्रमुद्धृत्य जल-मध्ये जलं क्षिपेत्"—इति।

काष्णाजिनिः,—

"नाभिमात्रे जले स्थित्वा चिन्तयन्नूर्द्धमानसः"—इति।

तर्पयेदिति शेषः। नृसिंहपुराणे,—

"पितॄन् पितृ-गणान् † देवानद्भिः सन्तर्पयेत्ततः।

देवान् देव-गणांश्चापि मुनीन्मुनि-गणानपि" ‡॥

चतुर्विंशतिमते,—

"स्नानादनन्तरं तावत् तर्पयेत् पितृ-देवताः।

उत्तीर्य पीड़येद्वस्त्रं सन्ध्या-कर्म्म ततःपरम्"(१)—इति।

भरद्वाजोऽपि,—

"वस्त्रोदकमपेक्षन्ते ये मृतादासकर्म्मिणः §।

---

* व्यवस्थितम्,—इति अन्यत्र पाठः।

† ऋषिगणान,—इति मु॰ पुस्तके पाठः।

‡ पितॄन् पितृगणांश्चापि नित्यं सन्तर्पयेत्ततः—इत्यर्द्धमधिकं स॰ सो॰ शा॰ पुस्तकेषु।

§ दासकर्म्मणः,—इति मु॰ पुस्तके पाठः।

---

(१) अनेन स्नानाङ्गतर्पणं स्नानप्रयोगस्यान्तर्भूतम्,—इत्युक्तं भवति।

तस्मात् सर्व्व-प्रयत्नेन जलं भूमौ निपातयेत्”—इति ।

वस्त्र-निष्पीड़न-मन्त्रस्तु,—

“ये के चास्मत्-कुले जाता अपुत्रागोत्रिणोमृताः ।

ते गृह्णन्तु * मया दत्तं वस्त्र-निष्पीड़नोदकम्”—इति ।

॥ ० ॥ इति स्नानप्रकरणम् ॥ ० ॥

---

स्नानानन्तरं वासः परिदध्यात् । तथा च मत्स्यपुराणे†,—

“एवं स्नात्वा ततः पश्चादाचम्य च विधानतः ‡ ।

उत्थाय वाससी शुक्ले शुद्धे तु परिधाय च §”—इति ।

कर्म्म कुर्य्यादितिशेषः । योगियाज्ञवल्क्यः,—

“स्नात्वैवं वाससी धौते ॥ अच्छिन्ने परिधाय च ।

प्रक्षाल्योरू मृदा चाद्भिः हस्तौ प्रक्षालयेत्ततः ¶”—इति ।

अत्र विशेषमाह व्यासः,—

“नोत्तरीयमधः कुर्य्यान्नोपर्य्याधस्थमम्बरम् ।

नान्तर्वासो विना जातु निवसेद्वसनं बुधः”—इति ।

अत्र मार्कण्डेयपुराणे,—

---

* तृप्यन्तु,—इति सो० शा० पुस्तकयोः पाठः ।

† वामनपुराणे, इति मु० पुस्तके पाठः ।

‡ यथाविधि,—इति मु० पुस्तके पाठः ।

§ परिधायवा,—इति स० सो० शा० पुस्तकेषु पाठः ।

॥ शुक्ले,—इति मु० पुस्तके पाठः ।

¶ प्रक्षालयेदिति,—इति मु० पुस्तके पाठः ।

"अवमृज्यान्न च* स्नातो गात्राण्यम्बर-पाणिभिः।

न च निर्धूनुयात्केशान् वासश्चैव न पीड़येत्†"—इति।

अत्र कारणमाह गोभिलः‡,—

"पिवन्ति शिरसोदेवाः पिवन्ति पितरोमुखात्।

मध्यतः सर्व्व-गन्धर्व्वा अधस्तात् सर्व्व-जन्तवः॥

तस्मात् स्नातो नावमृज्यात् स्नान-शाट्या न पाणिना"—इति।

व्यासोऽपि,—

"तिस्रः कोट्योऽर्द्ध-कोटी-च यावन्त्यङ्गरुहाणि वै।

स्रवन्ति§ सर्व्व-तीर्थानि तस्मान्न परिमार्ज्जयेत्"—इति।

जावालिः,—

"स्नानं कृत्वाऽऽर्द्र-वासास्तु विण्मूत्रं कुरुते यदि।

प्राणायाम-त्रयं कृत्वा पुनः स्नानेन शुद्ध्यति"—इति।

वस्त्र विषये विशेषमाह भृगुः,—

"ब्राह्मणस्य सितं वस्त्रं नृपतेरक्तमुल्वणम्॥(१)।

पीतं वैश्यस्य शूद्रस्य नीलं मलवदिष्यते"—इति।

प्रजापतिरपि,—

---

* नरः,—इति सो० शा० पुस्तकयोः पाठः।

† निर्धुनेत्,—इति सो० स० शा० पुस्तकेषु पाठः।

‡ देवलः,—इति मु० पुस्तके पाठः।

§ वसन्ति,—इति स० सो० शा० पुस्तकेषु पाठः।

|| रक्तमम्बरम्,—इति शा० पुस्तके पाठः।

---

(१) उल्वणं उत्कटम्। रक्तविशेषणमिदम्।

"क्षौमं वासः प्रशंसन्ति तर्पणे सदसन्तथा ।
काषायं धातु-रक्तं वा * सोल्वणं तच कर्हिचित्"—इति ।

देवलोऽपि†,—

"स्वयं धौतेन कर्त्तव्या क्रिया धर्म्मा विपश्चिता ।
न तु सेवक-धौतेन‡ नाहतेन न§ कुचचित्"—इति ।

नाहतेनेति समस्तं पदम् । आहत-लक्षणमाह पुलस्त्यः,—

"ईषद्धौतं नवं श्वेतं सदृशं यन्न धारितम् ॥ ।
आहतं तद्विजानीयात् सर्व्व-कर्म्मसु पावनम्"—इति ।

बौधायनोऽपि,—

"कर्त्तव्यमुत्तरं वासः पञ्चस्वेतेषु कर्म्मसु ।
स्वाध्याय-होम-दानेषु¶ भक्षाचमनयोस्तथा"—इति ।

एतत्, सर्व्व-कर्म्मोपलक्षणार्थं, अनुत्तरीयस्य कर्म्ममात्र-निषेधात् ।
तथा च भृगुणोक्तम्,—

"विकच्छोऽनुत्तरीयश्च नग्नश्चावस्त्रएवच ।
श्रौतं स्मार्त्तं तथा कर्म्म न नग्न श्चिन्तयेदपि** ॥
नग्नोमलिन-वस्त्रः स्यान्नग्नश्चार्द्र-पटः स्मृतः ।

---

* काषायधातुवस्त्रं च,—इति मु० पुस्तके, काषायधातुरक्तं वा,—इति शा० पुस्तके पाठः ।
† नास्तीदं मु० पुस्तके ।
‡ रजकधौतेन,—इति सो० शा० पुस्तकयोः पाठः ।
§ नाहतेन च,—इति शा० पुस्तके पाठः ।
|| धावितं,—इति शा० पुस्तके पाठः ।
¶ स्वाध्यायोत्सर्गदानेषु,—इति सो० शा० पुस्तकयोः पाठः ।
** न नग्नश्चिन्तयेदिति,—इति मु० पुस्तके पाठः ।

नग्नस्तु दग्ध-वस्त्रः स्यान्नग्नः स्यूत-पटस्तथा"—इति।

विष्णुपुराणेऽपि,—

"होम-देवार्चनाद्यासु क्रियासु पठने तथा।

नैक-वस्त्रः प्रवर्त्तेत द्विजोनाचमने जपे"—इति।

गोभिलोऽपि,—

"एकवस्त्रो न भुञ्जीत न कुर्य्याद्देवताऽर्चनम्"—इति।

अत्रानुकल्पमाह योगियाज्ञवल्क्यः,—

"अलाभे धौतवस्त्रस्य शाण-क्षौमाविकानि च।

कुतुपं योग-पट्टञ्च*(१) विवासास्तु न वै भवेत्"—इति।

कुतुपं योग-पट्टं च, धारयेदितिशेषः।

॥०॥ इति वस्त्र-धारण-प्रकरणम् ॥०॥

---

अथ, ऊर्द्धपुण्ड्र-विधिः† ब्रह्माण्डपुराणे दर्शितः,—

"पर्व्वताग्रे नदी-तीरे धर्म्म-क्षेत्रे विशेषतः।

सिन्धु-तीरे च वल्मीके तुलसी-मूल-मृत्तिकाम्‡॥

मृद एतास्तु संग्राह्याः§ वर्ज्जयेत्त्वन्यमृत्तिकाम्।

श्यामं शान्ति-करं प्रोक्तं रक्तं वश्य-करं भवेत॥

---

* कुतपं योगपादञ्च,—इति सो० शा० पुस्तकयोः पाठः। एवं परत्र पंक्तौ।

† त्रिपुण्ड्रविधि,—इति शा० पुस्तके पाठः।

‡ तुलसीमूलमाश्रिते,—इति सो० शा० पुस्तकयोः पाठः।

§ सम्पाद्याः,—इति स० सो० शा० पुस्तकेषु पाठः।

---

(१) कुतुपोनेपालकम्बलः। योगपट्टम् 'योगपाटा'—इति प्रसिद्धम्।

श्री-करं पीतमित्याहु र्वैष्णवं श्वेतमुच्यते ।
अङ्गुष्ठः पुष्टि-दः प्रोक्तो मध्यमाऽऽयुष्करी भवेत् ॥
अनामिकाऽन्न-दा नित्यं मुक्ति-दा च* प्रदेशिनी ।
एतैरङ्गुलि-भेदैस्तु कारयेन्न नखैः स्पृशेत् ॥
वर्त्ति-दीपाकृतिं वाऽपि वेणु-पत्राकृतिं तथा ।
पद्मस्य मुकुलाकारं तथैव कुमुदस्य च ॥
मत्स्य-कूर्म्माकृतिं वाऽपि शङ्खाकारमतः परम् ॥
दशाङ्गुल-प्रमाणन्तु उत्तमोत्तममुच्यते ।
नवाङ्गुलं मध्यमं स्यादष्टाङ्गुलमतः परम् ॥
सप्त-षट्-पञ्चभिः पुण्ड्रं मध्यमं त्रिविधं स्मृतम् ।
चतुस्त्रिद्व्यङ्गुलैः पुण्ड्रं कनिष्ठं त्रिविधं भवेत् ॥
ललाटे केशवं विद्यान्नारायणमथोदरे ।
माधवं हृदि विन्यस्य गोविन्दं स्कन्ध-मूलके† ॥
उदरे दक्षिणे पार्श्वे विष्णुरित्यभिधीयते ।
तत्पार्श्वे बाहु-मध्ये मधु-सूदनमनुस्मरेत् ॥
त्रि-विक्रमं कण्ठ-देशे वाम-कुक्षौ तु वामनम् ।
श्रीधरं बाहुके वामे हृषीकेशन्तु कर्णके‡ ॥
द्वादशैतानि नामानि वासुदेवेति मूर्द्धनि ॥
पृष्ठे तु पद्मनाभन्तु ककुद्दामोदरं स्मरेत् ।

---

* मुक्तिदाम्,—इति मु० पुस्तके पाठः ।
† स्कन्द-कूपके,—इति सो० शा० पुस्तकयोः पाठः ।
‡ कण्ठके,—इति सो० शा० पुस्तकयोः पाठः ।

पूजा-काले च होमे च सायं प्रातः* समाहितः।
नामान्युच्चार्य्य विधिना धारयेदूर्द्धपुण्ड्रकम्"—इति।

सत्यव्रतोऽपि,—

"मन्त्राक्तो धारयेन्नित्यं ऊर्द्धपुण्ड्रं विना तु तत्।
यत्कर्म्म कारयेन्नित्य तत्सर्व्वं निष्फलं भवेत्"—इति †।
"ऊर्द्धपुण्ड्रं मृदा शुभ्रं ललाटे यस्य दृश्यते।
स चाण्डालोऽपि शुद्धात्मा ‡ पूज्यएव न संशयः"—इति।

॥०॥ इति ऊर्द्धपुण्ड्र-प्रकरणम् ॥०॥

---

प्रातःस्नान-प्रसङ्गेन स्नानान्तराण्युच्यन्ते।

तत्र शङ्खः,—

"स्नानन्तु द्विविधं प्रोक्तं गौण-मुख्य-प्रभेदतः।
तयोस्तु वारुणं मुख्यं तत्पुनः षड्विधं भवेत्"—इति।

तत्र, मुख्य-स्नानस्य षट्-प्रकारता आग्नेयपुराणे दर्शिता,—

"नित्यं नैमित्तिकं काम्यं क्रियाऽङ्गं मलकर्षणम्।
क्रिया-स्नानं तथा षष्ठं षोढ़ा स्नानं प्रकीर्त्तितम्"॥

एतेषां लक्षणमाह शङ्खः,—

"अस्नातस्य पुमान्नार्हो जपाग्निहवनादिषु।
प्रातःस्नानं तदर्थन्तु नित्य-स्नानं प्रकीर्त्तितम्॥

---

* सायं काले,—इति स० शा० पुस्तकयोः पाठः।
† 'मन्त्रोक्त'—इत्यारभ्य, 'इति' इत्यन्तोग्रन्थः नास्ति मु० पुस्तके।
‡ चाण्डालोऽपि विशुद्धात्मा—इति मु० पुस्तके पाठः।

चाण्डाल-शव-यूपांश्च*(१) स्पृष्ट्वाऽस्नातां रजस्वलाम् ।
स्नानार्हस्तु यदाप्नोति स्नानं नैमित्तिकं हि तत् ॥
पुण्य-स्नानादिकं† यत्तु दैवज्ञ-विधि-चोदितम्‡ ।
तद्धि काम्यं समुद्दिष्टं नाकामस्तत्§ प्रयोजयेत् ॥
जप्तुकामः पवित्राणि(२) अर्च्चिष्यन् देवताः पितॄन् ।
स्नानं समाचरेद् यस्तु|| क्रियाऽङ्गं तत्प्रकीर्त्तितम् ॥
मलापकर्षणं नाम¶ स्नानमभ्यङ्ग-पूर्व्वकम्(३) ।
मलापकर्षणार्थाय प्रवृत्तिस्तस्य कीर्त्तिता ॥
सरःसु देवखातेषु तीर्थेषु च नदीषु च ।
क्रिया-स्नानं समुद्दिष्टं स्नानं तत्र मता क्रिया"—इति ।

यद्यपि, मध्याह्न-स्नानस्य नेदानीमवसर स्तथापि प्रातःस्नानवत्तस्य नित्यत्वात् प्रसङ्गेनाभिधीयते । तस्य नित्यत्वञ्च व्याघ्रपादेनोक्तम्,—

---

* चाण्डालशवपूजादि,—इति से० मा० पुस्तकयोः पाठः ।
† पुण्यस्नानादिकं,—इति स० से० मा० पुस्तकेषु पाठः ।
‡ विधिनोदितं,—इति मा० पुस्तके पाठः ।
§ सकामस्तत्,—इति मु० पुस्तके पाठः ।
|| समाचरेन्नित्यं,—इति मा० पुस्तके पाठः ।
¶ मपापकर्षणं स्नानं,—इति मु० पुस्तके पाठः ।

---

(१) यज्ञिययूपस्पर्शोऽपि निषिद्धः । स च वहिः कर्म्मणः ऊर्द्धमेव मन्तव्यः । गोभिलेन तत्र होमादिकं विहितम् ( गो०गृ०—३प्र०३का० ३४—३८ सूत्रम्)
(२) पवित्राणि मन्त्रान् ।
(३) अभ्यङ्गस्य,—"मूर्द्ध्नि दत्तं यदा तैलं भवेत् सर्व्वाङ्गसङ्गतम् । स्रोतोभिस्तर्पयेद्धातू अभ्यङ्गः स उदाहृतः"—इत्यायुर्व्वेदात्तल्लक्षणम् ।

"प्रातः स्नायी भवेन्नित्यं मध्य-स्नायी भवेदिति[१]"।

कूर्म्मपुराणे,—

"ततो मध्याह्न-समये स्नानार्थं मृदमाहरेत्।
पुष्पाक्षतान्[२] कुश-तिलान् गोमयं शुद्धमेवच।
नदीषु देवखातेषु तड़ागेषु* सरःसु च॥
स्नानं समाचरेन्नित्यं गर्त्त-प्रस्रवणेषु च[३]।
परकीय-निपानेषु[४] न स्नायाद्वै कदाचन॥
पञ्च पिण्डान् समुद्धृत्य स्नायाद्वाऽसम्भवे पुनः"—इति।

तत्राधिकार्य्यनधिकारिणो व्यासो विभजते†,—

"स्नानं मध्यन्दिने कुर्य्यात् सुजीर्णेऽन्ने निरामयः।

---

* तटाकेषु,—इति मु० पुस्तके पाठः।
† तत्राधिकार्य्यनधिकारिणौ विभजते,—मु० पुस्तके पाठः।

---

(१) अत्र नित्यपदं काकाक्षिगोलकन्यायात् पूर्व्वेण प्रातःस्नायीत्यनेन परेण च मध्यस्नायीत्यनेनान्वेति। मध्यस्नायी मध्याह्नस्नायी। तथा च नित्य-पदसंबन्धान्नित्यत्वं सिद्धम्। तदुक्तम्। "नित्यं सदा यावदायुर्न कदा-चिदतिक्रमेत्। उपेत्यातिक्रमे दोषश्रुतेरत्यागदर्शनात्। फलाश्रुते-र्वीप्सया च तन्नित्यमिति कीर्त्तितम्"—इति।

(२) अक्षतायवाः। "अक्षतास्तु यवाः प्रोक्ताः"—इति स्मरणात्। यवा-नामासादनञ्च तर्पणार्थमिति बोध्यम्। एवं तिलानामपि।

(३) गर्त्तास्तु, "धनुः सहस्राण्यष्टौ च गतिर्यासां न विद्यते। न ता नदी-शब्दवहा गर्त्तास्ते परिकीर्त्तिताः"—इत्युक्तलक्षणाः।

(४) परकीयत्वं परस्वामिकत्वं तेन परस्वानिते निपाने उत्सर्गात्परं न पिण्डोद्धारः,—इत्येके निबन्धारः। परकीयत्वं परकृतत्वं तेनोत्सर्गात् परमपि पिण्डोद्धारः,—इत्यपरे।

न भुक्त्वाऽलङ्कृतोरोगी* नाज्ञातेऽम्भसि नाकुलः"—इति ।

आश्रम-भेदेन स्नान-व्यवस्थामाह दक्षः,—

"प्रातर्मध्याह्नयोः स्नानं वानप्रस्थ-गृहस्थयोः ।

यतेस्त्रिषवनं प्रोक्तं† सकृत्तु ब्रह्मचारिणः"—इति ।

अन्वय-व्यतिरेकाभ्यां स्नानस्य समन्त्रतामाह व्यासः,—

"मन्त्र-पूतं जले स्नानं प्राहुः स्नान-फल-प्रदम् ।

न वृथा वारि-मग्नानां यादसामिव तत्-फलम्" ॥

योगियाज्ञवल्क्यः,—

"मत्स्य-कच्छप‡-मण्डूकास्तोये मग्नादिवानिशम् ।

वसन्ति चैव ते स्नानान्नाप्नुवन्ति फलं क्वचित्"—इति ।

समन्त्रत्वं द्विजाति-विषयम् । यदाह विष्णुः,—

"ब्रह्म-क्षत्र-विशां चैव मन्त्रवत् स्नानमिष्यते ।

तूष्णीमेव हि शूद्रस्य स्त्रीणाञ्च कुरु-नन्दन"—इति ।

'स्नानार्थं मृदमाहरेदित्'—इति यदुक्तं, तत्र विशेषमाह शातातपः,—

"शुचि-देशात्तु§ संग्राह्या शर्कराश्मादि-वर्ज्जिता ।

रक्ता गौरा तथा श्वेता मृत्तिका त्रिविधा स्मृता ॥

मृत्तिकाऽऽखूत्कराल्लेपाद् विलाच्च|| वरिष्ठत्रयो. ।

---

* योगी,—इति मु॰ पुस्तके पाठः ।

† त्रिसवनस्नानं,—इति मु॰ पुस्तके पाठः ।

‡ कूर्म्मक,—इति मु॰ पुस्तके पाठः ।

§ शुचौ देशे तु,—इति मु॰ पुस्तके पाठः ।

|| जलाच्च,—इति सो॰ पुस्तके पाठः ।

कृत-शौचाऽवशिष्टा च* न ग्राह्याः सप्त मृत्तिकाः।
मृत्तिकां गोमयं वाऽपि न निशायां समाहरेत्।
न गोमूत्र-पुरीषे तु गृह्णीयाद्बुद्धिमान्नरः"—इति।

योगियाज्ञवल्क्योऽपि,—

"गत्वोदकान्तं विविधत् स्थापयेत्तत् पृथक् चितौ।
त्रिधा कृत्वा मृदन्तान्तु गोमयं तद्विचक्षणः॥
अधमोत्तम-मध्यानामङ्गानां चालनन्तु तैः।
भागैः पृथक् पृथक् कुर्य्यात् चालने मृदसङ्करम् †"—इति।

शौनकोऽपि,—

"प्रयतो मृदमादाय दूर्वाऽपामार्ग-गोमयम्।
एकदेशे पृथक् कुर्य्यात् * * * * "—इति।

वशिष्ठः,—

"मृदेकया शिरः चाल्यं द्वाभ्यां नाभेस्तथोपरि।
अधस्तु तिसृभिः कार्य्यं ‡ षड्भिः पादौ तथैव च।
प्रक्षाल्य सर्व्व-कायन्तु द्विराचम्य यथाविधि"—इति।

काय-प्रक्षालनानन्तरभावि-कर्त्तव्यमाह§ शौनकः,—"गायत्र्या आदित्योदेवता ख्याताऽतो देवा॥—इति मृदमभिमन्त्रयेत्,—ततो

---

* कृतशौचावशेषाञ्च,—इति वे० शा० पुस्तकयोः पाठः।
† कुर्य्यात्तालनेमृदसङ्करः,—इति मु० पुस्तके पाठः।
‡ अधस्तत्तिसृभिः कार्य्यं,—इति मु० पुस्तके पाठः।
§ कृत्यमाह,—इति मु० पुस्तके पाठः।
|| गायत्र्या आदित्या अवहित्याता ततोदेवा—इति वे० शा० पुस्तकयोः पाठः।

यत इन्द्र स्वस्तिदा विशस्पतिर्व्विरचोविमृध इनगं सुमेजरितरिति मृदं संगृह्य प्रतिमन्त्रं प्रतिदिशं क्षिपेत् पूर्व्वादि-क्रमेण(१) ततः सम्मार्ज्जनं कुर्य्यात् मृदा पूर्व्वन्तु मन्त्रवत्"।

'अश्वक्रान्ते'—इत्यादयो मृद्ग्रहण-मन्त्रा यजुर्वेद-प्रसिद्धाः(२)।

"पुनश्च गोमयेनैवमग्रमग्रमीरिति ब्रुवन्(३)।
अग्रमग्रं चरन्तीनामोषधीनां वनेवने॥
तासामृषभ-पत्नीनां सुरभीणां शरीरतः।
उत्पन्नं लोक-सौख्यार्थं पवित्रं* काय-शोधनम्॥
त्वं मे रोगांश्च शोकांश्च पापञ्च हर गोमय"—इति।

---

* पावनं,—इति स० सो० शा० पुस्तकेषु पाठः।

---

(१) अतोदेवा इति मन्त्रः ऋग्वेदे (१।२२।१६।) एवं सामवेदे उत्तरार्च्चिके (८।२।५।६।) यत इन्द्र इति ऋग्वेदे (८।६१।१३।) सामवेदे छन्दस्यार्च्चिके (३।३।४।२।) उत्तरार्च्चिके (५।२।१५।१।) तैत्तिरीयारण्यके (१०।१।) स्वस्तिदा विशस्पतिः इति ऋग्वेदे (१०।१५२।२।) तैत्तिरीयारण्यके (१०।५५।) अथर्व्ववेदे (८।५।२२) परं तत्र विशाम्पतिरिति पाठः। विरच्चो विमृध इति सामवेदे उत्तरार्च्चिके (९।३।७।१) इनगं सुमेजरितः,—इत्यादिकोमन्त्रोनास्माभिरुपलब्धः। इदं सुमेनरः,—इत्यादिकोमन्त्रः अथर्व्ववेदे (१४।२।९।) दृश्यते। अनुमीयते चात्रादर्शपुस्तकेषु लेखकप्रमादात् पाठोऽन्यथा जातः।

(२) तैत्तिरीयारण्यके दशमप्रपाठकस्य प्रथमानुवाके।

(३) अत्र, "पुनश्च गोमयेनैवमग्रमग्र्यमिति ब्रुवन्"—इत्येव पाठो मम प्रतिभाति। सएव अग्रमग्र्यमिति मन्त्रः पश्चात् पठितः। यथोक्तपाठे त्वनुष्टुप्छन्दसोभङ्गापत्तिः। परमस्मदवलोकितेषु सर्व्वेषु पुस्तकेषु तथैव दृष्टत्वात् तथैव रक्षितः।

"काण्डात् काण्डादिति द्वाभ्यां[१] अङ्गमङ्गमुपस्पृशेत्"—इति। दूर्व्वाद्वयेन,—इति शेषः।

"अपापमपकिल्विषमपकृत्य मपोरप* अपामार्ग, त्वमस्माकं दुष्टं भयं नुद स्वाहेत्यपामार्गेणाङ्गमङ्गमुपस्पृशेत्। अथ हिरण्य शृङ्गमापो देवीरपस्तवन्तरित्यप उपस्थाप, सुमित्रियान इत्यपः स्पृष्ट्वा दुर्मित्रियान इति बहिः क्षिपेत्। ततः, इन्द्रः शुद्ध इत्यृचा चापः प्रविश्य† मनसा जपेत्[२]।

"तत्र गायेत सामानि अपि वा व्याहृतीर्जपेत्।

शिवेन मे[३] जपित्वेदमाप इत्यप आप्लवेत्"—इति।

वशिष्ठः,—

* मपातवः,—इति मु॰ पुस्तके पाठः।

† इन्द्रः शुद्ध इत्यृचश्चापःप्रविश्य,—इति मु॰ पुस्तके पाठः।

(१) काण्डात् काण्डादिति द्वौ मन्त्रौ तैत्तिरीयारण्यके दशमप्रपाठके प्रथमानुवाके पठितौ। तत्र काण्डात् काण्डादिति प्रथमोमन्त्रः। याशतेन प्रतनोषीति द्वितीयोमन्त्रः।

(२) हिरण्यशृङ्गमिति तैत्तिरीयारण्यके (१०।१।) आपोदेवीरपस्तवन्तः,—इत्यादिको मन्त्रो नास्माभिरुपलब्धः। ऋग्वेदे (१।२३।१८।) अथर्व्ववेदे च (१।४।३।) अपोदेवीरुपह्वये,—इत्यादिको मन्त्रोदृश्यते। एवं ऋग्वेदे (१।८३।२।) आपोनदेवीरुपयन्ति,—इत्यादिर्मन्त्रोदृश्यते। अत्राप्यादर्शपुस्तकेषु लेखकप्रमादः सम्भाव्यते। सुमित्रियान इति दुर्म्मित्रियान इति चैतौ मन्त्रौ तैत्तिरीयारण्यकस्य दशमप्रपाठकस्य प्रथमानुवाके पठितौ। इन्द्रः शुद्ध इति मन्त्रोपि नोपलब्धः। परन्तु सामवेदे उत्तरार्च्चिके (३।२।८।२।) इन्द्र शुद्धोन,—इत्यादिको मन्त्रो दृश्यते। सम्भावयामः अत्रापि लेखकप्रमाद एव प्रभवति।

(३) शिवेन मे,—इति तैत्तिरीयारण्यके (१०।७७।)

"ये ते शतमिति द्वाभ्यां तीर्थान्यावाहयेद्बुधः ।
कुरुक्षेत्रं गयां गङ्गां प्रभासं नैमिषं जपेत्*"—इति ।

शङ्खः,—

"प्रपद्ये वरुणं देवमम्भसां पतिमीश्वरम् ।
याचितं देहि मे तीर्थं सर्व्व-पापापनुत्तये ॥
तीर्थमावाहयिष्यामि सर्व्वाघौघ-निसूदनम् ।
सान्निध्यमस्मिंस्त्वित्तोये क्रियतां मदनुग्रहात् ॥
रुद्रान् प्रपद्ये वरदान् सर्व्वानप्सुषदस्तथो ।
अपः पुण्याः पवित्रास्त्र† प्रपद्ये वरुणं तथा ।
शमयन्त्वाशु मे पापं रक्षन्तु च सदैव माम्"—इति ।

वशिष्ठः,—

"आपोहिष्ठेदमापस्च द्रुपदादिव इत्यपि ।
तथा हिरण्यवर्णाभिः पावमानीभिरन्ततः(१) ॥
ततोऽर्कमीक्ष्य चोङ्कारं निमज्यान्तर्ज्जले बुधः ।

---

* तथा,—इति मु० पुस्तके पाठः ।

† सर्व्वाघौघनिसूदनम्,—इत्यादि, 'अपः पुण्याः पवित्राश्च'—इत्यन्तं नास्ति स० सो० शा० पुस्तकेषु ।

---

(१) आपोहिष्ठा,—इति ऋग्वेदे (१०।९।१।) वाजसनेयिसंहितायां (११।५।११।) सामवेदे उत्तरार्च्चिके (९।२।१०।१।) अथर्व्ववेदे (१।५।१।) इदमाप इति ऋग्वेदे (१।२३।२२।) एवं (१०।९।८।) द्रुपदादिव इति अथर्व्ववेदे (६।११५।३।) हिरण्यवर्णा इति तैत्तिरीयसंहितायां (५।६।१।४।) अथर्व्ववेदे (१।३३।१।) पावमान्योमन्त्राः सामवेदे छन्दसार्च्चिके पावमानकाण्डे बहवः पठिताः । अन्यत्रापि बहुत्र ।

प्राणायामांश्च कुर्व्वीत गायत्रीञ्चाघ-मर्षणम्''—इति।

विष्णुरपि,—''ततोऽप्सु निमग्न स्त्रिरघ-मर्षणं जपेत्, तद्विष्णोः परमं पदमिति वा, द्रुपदां सावित्रीं वा, युंजते मन इत्यनुवाकं वा, पुरुष सूक्तं वा(१), स्नात-श्चार्द्र-वासा देवर्षि-पितृ-तर्पणमम्भस्थ एव कुर्य्यात्''—इति। मेधातिथिरपि,—

''ततोऽम्भसि निमग्नस्तु त्रिः पठेदघ-मर्षणम्।

प्रदद्यान् मूर्द्धनि तथा महाव्याहृतिभिर्ज्जलम्''—इति।

वसिष्ठः,—

''स्नात्वा संगृह्य वासोऽन्यदुरू संशोधयेन्मृदा।

अपवित्रीकृतौ तौ तु* कौपीनास्राव-वारिणा॥

योऽनेन विधिना स्नाति यत्र तत्राम्भसि† द्विजः।

स तीर्थ-फलमाप्नोति तीर्थे तु द्विगुणं फलम्‡''—इति।

तत्रानुकल्पमाह योगियाज्ञवल्क्यः,—

---

* अपवित्रीकृते ते तु,—इति स० सो० शा० पुस्तकेषु पाठः।

† कुत्राम्भसि, इति मु० पुस्तके पाठः।

‡ भवेत्,—इति मु० पुस्तके पाठः।

---

(१) तद्विष्णोरिति ऋग्वेदे (१।२२।२०।) सामवेदे उत्तरार्च्चिके (८।२।५।४।) अथर्व्ववेदे (७।२६।७।) युञ्जते मनः इत्यनुवाकस्य तैत्तिरीयारण्यकस्य चतुर्थप्रपाठकस्य द्वितीयः। एवं वाजसनेयिसंहितायां पञ्चमस्य पञ्चमः। तथा तैत्तिरीयसंहितायाः प्रथम-द्वितीय-त्रयोदशः। पुरुषसूक्तञ्च ऋग्वेदे दशम-नवतितमस्य प्रथमं सूक्तम्। वाजसनेयिसंहितायां एकत्रिंशतः प्रथमोऽनुवाकः। तैत्तिरीयारण्यकस्य तृतीयस्य द्वादशोऽनुवाकः। एवं अथर्व्ववेदस्य ऊनविंशति-षष्ठः।

"यएष विस्तृतः* प्रोक्तः स्नानस्य विधिरुत्तमः।
असामर्थ्यान्न कुर्य्याच्चेत् तत्रायं विधिरुच्यते।
स्नानमन्तर्जले चैव मार्ज्जनाचमने तथा॥
जलाभिमन्त्रणञ्चैव तीर्थस्य परिकल्पनम्।
अघमर्षण-सूक्तेन त्रिरावृत्तेन नित्यशः॥
स्नानाचरणमित्येतदुपदिष्टं महात्मभिः"—इति।
॥०॥ इति माध्याह्निक-स्नानम्॥०॥

---

## अथ नैमित्तिक-स्नानम्।

तत्र मनुः,—

"दिवाकीर्त्तिं† मुदक्याञ्च पतितं सूतिकां तथा।
शवं तत्-स्पृष्टिनञ्चैव स्पृष्ट्वा स्नानेन शुद्ध्यति"॥

दिवाकीर्त्तिश्चाण्डालः। अङ्गिराः,—

"शव-स्पृशमथोदक्यां सूतिकां पतितं तथा।
स्पृष्ट्वा स्नानेन शुद्धः स्यात् सचैलेन न संशयः"—इति।

गौतमोऽपि,—"पतित-चाण्डाल-सूतिकोदक्या-शवस्पृक्-तत्-स्पृष्टि-स्पर्शने‡ सचैल उदकोपस्पर्शनात् शुद्ध्येत्"—इति। पतितादि

---

* विस्तरः,—इति मु० पुस्तके पाठः।

† दिवाकीर्त्यं,—इति से० पुस्तके, दिवाकृत्य,—इति शा० पुस्तके पाठः। एवं परत्र।

‡ शवतत्स्पृष्ट्युपस्पर्शने,—इति शा० से० पुस्तकयोः पाठः।

स्पृष्टिनं समारभ्य तृतीयस्य सचेलं स्नानं, चतुर्थस्य तु उदकोपस्पर्शनाच्छुद्धिः। तथा च मरीचिः,—

"उपस्पृशेच्चतुर्थस्तु तदूर्द्धं प्रोक्षणं स्मृतम्"—इति।

यत्तु संवर्त्तेन द्वयोरेव स्नानमुक्तम्,—

"तत्-स्पृष्टिनं स्पृशेद्यस्तु स्नानं तस्य विधीयते।
ऊर्द्धमाचमनं प्रोक्तं द्रव्याणां प्रोक्षणं तथा*"—इति।

तदबुद्धि-पूर्व्व-स्पर्शन-विषयम्। तथा च संग्रहकारः,—

"अबुद्धि-पूर्व्वक-स्पर्शे द्वयोः स्नानं विधीयते।
त्रयाणां बुद्धि-पूर्व्वे तु तत् स्पृष्टि-न्याय-कल्पना"—इति।

कूर्म्मपुराणम्,—

"चाण्डाल-सूतिक-शवैः संस्पृष्टं संस्पृशेद् यदि।
प्रमादात्तत आचम्य जपं कुर्य्यात् समाहितः॥
तत्-स्पृष्टि-स्पृष्टिनं स्पृष्ट्वा बुद्धिपूर्व्वं† द्विजोत्तमः।
आचमेत विशुद्ध्यर्थं‡ प्राह देवः पितामहः"॥

याज्ञवल्क्योऽपि,—

"उदक्या सूतिभिः§ स्नायात् संस्पृष्टः तैरुपस्पृशेत्।
अब्लिङ्गानि(१) जपेच्चैव गायत्रीं मनसा सकृत्"—इति।

एतद्दण्डाद्यन्तरित-स्पर्श-विषयम्, अन्यथा द्वयोः स्नानमित्यनेन

---

* यथा,—इति मु० पुस्तके पाठः।
† संस्पृश्यातु,—इति शा० पुस्तके पाठः।
‡ आचमेत्तद्विशुद्ध्यर्थं,—इति शा० पुस्तके पाठः।
§ उदक्याऽशुचिभिः,—इति मु० पुस्तके पाठः।

---

(१) अब्लिङ्गानि 'आपोहिष्ठा' इत्यादीनि।

विरोधः प्रसज्येत । वस्त्रान्तरित-स्पर्शने तु दण्डान्तरित-न्याय-प्राप्ता वाह* प्रचेताः,—

"वस्त्रान्तरित-संस्पर्शः साक्षात् स्पर्शोऽभिधीयते ।
साक्षात् स्पर्शे तु यत् प्रोक्तं तद्वस्त्रान्तरितेऽपि च"—इति ।

चतुर्विंशतिमते स्नानस्य निमित्तान्तरमुक्तम्,—

"बौद्धान् पाशुपतान् जैनान् लोकायतिक-कापिलान् ।
विकर्म्मस्थान् द्विजान् स्पृष्ट्वा सचेलोजलमाविशेत् ॥
कापालिकांस्तु संस्पृश्य प्राणायामोऽधिको मतः"—इति ।

चाण्डालादि-स्पर्श-निमित्त-स्नाने † विशेषमाह विष्णुः,—

"स्नानार्हो योनिमित्तेन कृत्वा तोयावगाहनम् ।
आचम्य प्रयतः पश्चात् स्नानं विधिवदाचरेत्"—इति ।

योगियाज्ञवल्क्योऽपि,—

"तूष्णीमेवावगाहेत यदा स्यादशुचिर्न्नरः ।
आचम्य प्रयतः पश्चात् स्नानं विधिवदाचरेत्"—इति ।

गार्ग्योऽपि,—

"कुर्य्यान्नैमित्तिकं स्नानं शीताद्भिः काम्यमेवच ।
नित्यं याद्दृच्छिकं चैव यथारुचि समाचरेत्"—इति ।

॥०॥ इति नैमित्तिक-स्नान-प्रकरणम् ॥०॥

---

* यत्र वस्त्रान्तरितस्पर्शनं तत्र न दण्डान्तरितन्यायः । तथा च,—इति मु० पुस्तके पाठः ।

† निमित्तमृतस्नाने—इति म्रा० पुस्तके पाठः ।

## अथ काम्य-स्नानम्।

तत्र पुलस्त्यः,—

"पुष्ये च जन्म-नक्षत्रे व्यातीपाते च वैधृतौ।
अमावास्यां(१) नदी-स्नानं पुनात्यासप्तमं कुलम्॥
चैत्र-कृष्ण-चतुर्द्दश्यां यः स्नायाच्छिव-सन्निधौ।
न प्रेतत्वमवाप्नोति* गङ्गायाञ्च विशेषतः॥
शिवलिङ्ग-समीपेतु यत्तोयं पुरतः स्थितम्।
शिव-गङ्गेति विज्ञेयं† तत्र स्नात्वा दिवं व्रजेत्"—इति।

यमोऽपि,—

"कार्त्तिक्यां पुष्करे स्नातः सर्व्व-पापैः प्रमुच्यते।
माघ्यां स्नातः प्रयागे तु मुच्यते सर्व्व-किल्विषैः॥
ज्यैष्ठे मासि सिते पक्षे दशम्यां‡ हस्त-संयुते।
दशजन्माघहा गङ्गा तेन पाप-हरा स्मृता"—इति।

विष्णुः,—

"सूर्य्यग्रहण-तुल्या तु शुक्ला माघस्य सप्तमी।
अरुणोदय-वेलायां तस्यां स्नानं महाफलम्॥
पुनर्वसु-बुधोपेता चैत्रे मासि सिताऽष्टमी।
स्रोतःसु विधिवत् स्नात्वा वाजपेय-फलं लभेत्"—इति।

---

* न स प्रेतत्वमाप्नोति,—इति मु० पुस्तके पाठः।
† शिवतीर्थमितिख्यातं,—इति मु० पुस्तके पाठः।
‡ द्वादश्यां,—इति मु० पुस्तके पाठः।

---

(१) अमावासीशब्दस्य रूपमिदम्।

आदि*पुराणे,—

"कार्त्तिकं सकलं मासं नित्यस्नायी जितेन्द्रियः ।
जपन् हविष्य-भुक् क्रान्तः† सर्व्व-पापैः प्रमुच्यते ॥
तुला-मकर-मेषेषु प्रातः स्नायी सदा भवेत् ।
हविष्यं ब्रह्मचर्य्यञ्च महापातक-नाशनम्"—इति ।

मत्स्यपुराणे,—

"आषाढ़ादि चतुर्म्मासं प्रातःस्नायी भवेन्नरः ।
विप्रेभ्यो भोजनं दत्त्वा कार्त्तिक्यां गो-प्रदो‡ भवेत् ॥
स वैष्णव-पदं याति विष्णु-व्रतमिदं स्मृतम्"—इति ।

मार्कण्डेयोऽपि§,—

"सर्व्व-कालं तिलैः स्नानं पुण्यं व्यासोऽब्रवीन्मुनिः ।
तुष्यत्यामलकैर्विष्णु रेकादश्यां विशेषतः ॥
श्रीकामः सर्व्वदा स्नानं कुर्व्वीतामलकैर्न्नरः ।
सप्तमीं नवमीञ्चैव पर्व्व-कालञ्च ||(१) वर्ज्जयेत्"—इति ॥

विष्णुः,—

---

* आदित्य,—इति मु० पुस्तके पाठः ।
† स्नातः,—इति स० सो० शा० पुस्तकेषु पाठः ।
‡ सप्रदो,—इति मु० पुस्तके पाठः ।
§ मार्कण्डेयपुराणे,—इति मु० पुस्तके पाठः ।
|| पञ्चपर्व्वसु,—इति मु० पुस्तके पाठः ।

---

(१) पर्व्वाणि च,—"चतुर्दश्यष्टमी चैव अमावस्याथपूर्णिमा । पर्व्वाण्येतानि राजेन्द्र रविसंक्रान्तिरेवच"—इत्युक्तलक्षणानि ।

"बालाश्च तरुणा वृद्धा नर-नारी नपुंसकाः।
स्नात्वा माघे शुभे तीर्थे प्राप्नुवन्तीप्सितं फलम्॥
माघे मास्युषसि स्नात्वा विष्णु-लोकं स गच्छति"—इति॥
॥०॥ इति काम्य-स्नानम्॥०॥

---

## अथ मलापकर्षण-स्नानम्।

तत्र वामनपुराणम्,—

"नाभ्यङ्गमर्के न च भूमिपुत्रे
क्षौरं च शुक्रे च कुजे च मांसम्।
बुधे च योषित्परिवर्ज्जनीया
शेषेषु सर्व्वेषु सदैव कुर्य्यात्"—इति।

ज्योतिःशास्त्रे,—

"सन्तापः कान्ति* रल्पायुर्धनं निर्धनता तथा।
अनारोग्यं सर्व्व-कामाः अभ्यङ्गाद्भास्करादिषु"—इति।

मनुरपि,—

"पक्षादौ च रवौ षष्ठ्यां रिक्तायाञ्च तथा तिथौ।
तैलेनाभ्यज्यमानस्तु धनायुर्भ्यां विहीयते"—इति

गर्गोऽपि,—

"पञ्चदश्यां चतुर्द्दश्यामष्टम्यां रवि-संक्रमे।
द्वादश्यां सप्तमी-षष्ठ्योः तैल-स्पर्शं विवर्ज्जयेत्"—इति।

---

* सन्तापशान्ति,—इति मु० पुस्तके पाठः।

बौधायनोऽपि,*—

"अष्टम्याञ्च चतुर्द्दश्यां नवम्याञ्च विशेषतः।

शिरोऽभ्यङ्गं वर्ज्जयेत्तु पर्व्व-सन्धौ तथैवच"—इति।

गर्गोऽपि,—

"न च कुर्य्यात् तृतीयायां त्रयोदश्यान्तिथौ तथा।

शाश्वतीं भूतिमन्विच्छन् दशम्यामपि पण्डितः"—इति।

एवं सर्व्वास्वपि तिथिष्वभ्यङ्गस्य निषेधे प्राप्ते तैल-विशेषेणाभ्यनुजानाति प्रचेताः,—

"सार्षपं गन्ध-तैलञ्च यत्तैलं पुष्प-वासितम्।

अन्य-द्रव्य-युतं तैलं न दुष्यति कदाचन"—इति।

यमोऽपि,—

"घृतञ्च सार्षपं तैलं यत्तैलं पुष्प-वासितं।

न दोषः पक्व-तैलेषु स्नानाभ्यङ्गेषु नित्यशः"—इति।

॥०॥ इत्यभ्यङ्ग-स्नानम्॥०॥

---

## क्रियाऽङ्ग-स्नानन्तु नित्य-स्नानवदनुष्ठेयम्।

"प्रातः शुक्ल-तिलैः स्नात्वा मध्याह्ने पूजयेत् सुधीः"।

इत्यादिकं क्रियाऽङ्ग-स्नानं द्रष्टव्यम्। तस्य क्रियाऽङ्गत्वं पुराणे स्पष्टीकृतम्,—

"धर्म्म-क्रियां कर्त्तुमनाः पूर्व्वं स्नानं समाचरेत्।

क्रियाऽङ्गं तत्समुद्दिष्टं स्नानं वेदमयैर्द्विजैः"—इति।

---

* यमोपि,—इति मु० पुस्तके पाठः।

† देवमयै,—इति मु० पुस्तके पाठः।

## अथ क्रिया-स्नानम्।

तत्र शङ्खः,—

"क्रिया-स्नानं प्रवक्ष्यामि यथावद्विधि-पूर्व्वकम्।
मृद्भिरद्भिश्च कर्त्तव्यं शौचमादौ यथाविधि॥
जले निमग्नस्तून्मज्य* चोपस्पृश्य† यथाविधि।
तीर्थस्यावाहनं कुर्य्यात् तत्प्रवक्ष्याम्यतः परम्।
प्रपद्ये वरुणं देवमम्भसां पतिमीश्वरम्‡॥
याचितं देहि मे तीर्थं सर्व्व-पापापनुत्तये।
तीर्थमावाहयिष्यामि सर्व्वाघ-विनिसूदनम्॥
सान्निध्यमस्मिंस्त्त्तोये क्रियतां मदनुग्रहात्"—इति।

षट्स्वपि स्नानेषु मुख्यानुकल्पाभ्यां जल-विशेषो विष्णुपुराणे निरूपितः,—

"नदी-नद-तड़ागेषु देवखात-बिलेषु च।
नित्य-क्रियाऽर्थं स्नायीत गिरि-प्रस्रवणेषु च॥
कूपे वोद्धृत-तोयेन स्नानं कुर्व्वीत वा भुवि"—इति।

मार्कण्डेयोऽपि,—

"पुराणानां नरेन्द्राणामृषीणाञ्च महात्मनाम्।
स्नानं कूप-तड़ागेषु देवतानां समाचरेत्।
भूमिष्ठमुद्धृतात्पुण्यं ततः प्रस्रवणोदकम्॥

---

* निमग्नस्त्विर्म्मज्य,—इति मु० पुस्तके पाठः।

† चोपविश्य,—इति स० सो० शा० पुस्तकेषु पाठः।

‡ पतिमूर्ज्जितम,—इति शा० पुस्तके पाठः।

ततोऽपि सारसं पुण्यं तस्मान्नादेयमुच्यते ।
तीर्थ-तोयं ततः पुण्यं ततोगाङ्गन्तु सर्व्वतः"—इति ।

मरीचिः,—

"भूमिष्ठमुद्धृतं वाऽपि शीतमुष्णमथापि वा ।
गाङ्गं पयः पुनात्याशु पापमामरणान्तिकम्"—इति ।

निषिद्ध-जलमाह व्यासः,—

"अनुत्सृष्टेषु न स्नायात्तथैवासंस्तुतेषु च* ।
आत्मीयेष्वपि न स्नायात्तथैवाल्पजलेष्वपि"—इति ।

व्यासोऽपि,†—

"नद्यां यच्च परिभ्रष्टं नद्यायच्च‡ विनिःसृतम् ।
गतं प्रत्यागतं यच्च तत्तोयं परिवर्ज्जयेत्"—इति ॥

शातातपोऽपि,—

"अन्यैरपि कृते कूपे सरोवाप्यादिके तथा ।
तत्र स्नात्वा च पीत्वा च प्रायश्चित्तं समाचरेत्"—इति ॥

प्रतिप्रसवमाह मनुः,—

"अलाभे देव-खातानां सरसां सरितां तथा ।
उद्धृत्य चतुरः पिण्डान् पारक्ये स्नानमाचरेत्"—इति ॥

उष्णोदकं§ निषेधयति शङ्खः,—

---

* तथैवासंस्कृतेषु च,—इति स० शा० पुस्तकयोः पाठः ।
† पुण्डरीकोऽपि,—इति मु० पुस्तके पाठः ।
‡ नद्यां यच्च,—इति मु० पुस्तके पाठः ।
§ उष्णोदकस्नानं,—इति मु० पुस्तके पाठः ।

"स्नातस्य वह्नि-तप्तेन तथैव पर-वारिणा।
शरीर-शुद्धिर्विज्ञेया न तु स्नान-फलं लभेत्"—इति॥

याज्ञवल्क्यः,—

"वृथा तूष्णोदक-स्नानं वृथा जप्यमवैदिकम्।
वृथा त्वश्रोत्रिये दानं वृथा भुक्तमसाक्षिकम्"—इति।

यत्तूष्णोदकस्नान* विधानम्,—

"आप एव सदा पूता स्तासां वह्निर्विशोधकः।
ततः सर्व्वेषु कालेषु उष्णाम्भः पावनं स्मृतम्"—इति।

षट्त्रिंशन्मतेऽपि,†—

"आपः स्वभावतोमेध्याः किं पुनर्वह्नि-संयुताः।
तेन सन्तः प्रशंसन्ति स्नानमुष्णेन वारिणा"—इति।

तदातुर-स्नान-विषयम‡। तथाच यमः,—

"आदित्य-किरणैः पूतं पुनः पूतञ्च वह्निना।
आम्नातमातुर-स्नाने प्रशस्तं स्यात् शृतोदकम्§"—इति।

यदा तु नद्याद्यसम्भवस्तदा अनातुरस्याप्युष्णोदक-स्नानमनिषिद्ध-मित्याह यमः,—

"नित्यं नैमित्तिकञ्चैव क्रियांगं|| मल-कर्षणम्।
तीर्थाभावे तु कर्त्तव्यमुष्णोदक-परोदकैः"—इति।

---

* स्नान,—इति नास्ति शा० सो० पुस्तकयोः।
† षड्विंशन्मतेऽपि,—इति शा० पुस्तके पाठः।
‡ तदातुरविषयम्,—इति स० शा० पुस्तकयोः पाठः।
§ न शुभोदकम्,—इति शा० पुस्तके पाठः।
|| क्रियायां,—इति मु० पुस्तके पाठः।

यदपि वृद्धमनुनोक्तम्,—

"मृते जन्मनि संक्रान्तौ श्राद्धे जन्मदिने* तथा ।
अस्पृश्य-स्पर्शने चैव न स्नायादुष्ण-वारिणा ॥
संक्रान्त्यां भानु-वारे च सप्तम्यां राहु-दर्शने ।
आरोग्य-पुत्र-मित्रार्थी न स्नायादुष्ण-वारिणा ॥
पौर्णमास्यां तथा दर्शे यः स्नायादुष्ण-वारिणा ।
स गोहत्या-कृतं पापं प्राप्नोतीह न संशयः"—इति ।

तत्रोक्तेषु मरणादिषु नोष्णोदकैः स्नायात्, अपि तु परकीये-ष्वद्धृतोदकै वेंत्युक्तमिति न विरोधः†। उष्णोदक-स्नाने विशेषमाह व्यासः,—

"शीतास्वप्सु निषिच्योष्णा मन्त्र-संभार-संभृताः ।
गेहेऽपि शस्यते स्नानं नदी-फल-समं विदुः‡"—इति ।

गौणन्तु स्नानमुत्तरत्र स्वयमेव वक्ष्यति ॥

॥०॥ इति क्रिया-स्नानम् ॥०॥

---

## अथ सन्ध्याविधिः।

तत्र सन्ध्या-स्वरूपं दक्षो दर्शयति,—

"अहोरात्रस्य यः सन्धिः सूर्य्य-नक्षत्र-वर्ज्जितः ।
सा तु सन्ध्या समाख्याता मुनिभिस्तत्त्व-दर्शिभिः"—इति ।

---

* जन्मतिथौ,—इति मु० पुस्तके पाठः ।

† तोदकैर्व्वेति न विरोध इत्युक्तम्,—इति मु० पुस्तके पाठः ।

‡ तद्धीनमफलं वहिः,—इति शा० पुस्तके पाठः।

यद्यपि काल-वाचकत्वेनात्र सन्ध्या-शब्दः प्रतीयते, तथापि तस्मिन् काले उपास्या देवता सन्ध्या-शब्देनोपलक्ष्यते। तथा देवतया उपलक्षणमुपलक्ष्य* मूल-वचने कर्म्म-परत्वेन सन्ध्या-शब्दः प्रयुक्तः। अथवा,—सन्धौ भवा क्रिया सन्ध्या। अतएव व्यासः,—

"उपास्ते सन्धि-वेलायां निशाया दिवसस्य च।
तामेव सन्ध्यां तस्मात्तु† प्रवदन्ति मनीषिणः"—इति।

तां क्रियां विदधाति योगियाज्ञवल्क्यः,—

"सन्धौ सन्ध्यामुपासीत नास्तगे नोद्गते रवौ"—इति।

सा च सन्ध्या त्रिविधा। तदुक्तमत्रिणा,—

"सन्ध्या-त्रयन्तु कर्त्तव्यं द्विजेनात्मविदा सदा"—इति।

तत्र, काल-भेदेन देवताया नामादि-भेदमाह‡ व्यासः,—

"गायत्री नाम पूर्व्वाह्णे सावित्री मध्यमे दिने।
सरस्वती च सायाह्ने सैव सन्ध्या त्रिधा§ स्मृता॥
प्रतिग्रहादन्नदोषात् पातकादुपपातकात्।
गायत्री प्रोच्यते तस्माद्गायन्तं त्रायते यतः॥
सवितृ-द्योतनात् सैव|| सावित्री परिकीर्त्तिता।
जगतः प्रसवित्री वा वाग्रूपत्वात् सरस्वती"—इति।

वर्ण-भेदः स्मृत्यन्तरेऽभिहितः,—

---

* तथा च देवताया उपलक्षणमुपलक्ष्य,—इति शा० स० पुस्तकयोः पाठः।
† तस्मात्तत्,—इति शा० पुस्तके पाठः।
‡ नामभेदमाह,—इति मु० पुस्तके पाठः।
§ त्रिषु,—इति शा० सो० पुस्तकयोः पाठः।
|| चैव,—इति मु० पुस्तके पाठः।

"गायत्री तु भवेद्रक्ता सावित्री शुक्लवर्णिका ।
सरस्वती तथा कृष्णा उपास्या वर्ण-भेदतः ॥
गायत्री ब्रह्मरूपा तु सावित्री रुद्ररूपिणी ।
सरस्वती विष्णुरूपा उपास्या रूप-भेदतः"*—इति ।

उपासनमभिध्यानम् । अतएव तैत्तिरीय ब्राह्मणम्,—"उद्यन्तमस्तं यन्तमादित्यमभिध्यायन् कुर्व्वन् ब्राह्मणो विद्वान् सकलं भद्रमश्नुते ऽसावादित्यो ब्रह्मेति ब्रह्मैव सन् ब्रह्माप्येति यएवं वेद"—इति । अयमर्थः, वक्ष्यमाण-प्रकारेण प्राणायामादिकं कर्म्म कुर्व्वन् यथोक्त-नाम-रूपोपेतं† सन्ध्या-शब्द-वाच्यमादित्यं ब्रह्मेति ध्यायन्नैहिकमा-मुष्मिकञ्च सकलं भद्रमश्नुते । यएवमुक्त-ध्यानेन शुद्धान्तःकरणो ब्रह्म साक्षात् कुरुते, स पूर्वमपि ब्रह्मैव सन्नज्ञानाज्जीवत्वं प्राप्नोति यथोक्त-ज्ञानेन तदज्ञानापगमे ब्रह्मैव प्राप्नोति,—इति । व्यासोऽपि एतदेवाभिप्रेत्याह,—

"न भिन्नां प्रतिपद्येत गायत्रीं ब्रह्मणा सह ।
सोऽहमस्मीत्युपासीत विधिना येन केन चित्"—इति ।

तत्र, प्रातःसन्ध्यायाः काल-परिमाणमाह दक्षः,—

"रात्र्यन्त-याम-नाड़ी द्वे सन्ध्यादिः काल उच्यते ।
दर्शनाद्रवि-रेखाया स्तदन्तो मुनिभिः स्मृतः"—इति ।

---

* 'गायत्रीब्रह्मरूपातु,'—इत्यादिः 'रूपभेदतः'—इत्यन्तोग्रन्थः मुद्रिता-तिरिक्तपुस्तकेषु नास्ति ।

† यथोक्तनामाभिध्येय रूपोपहितं, —इति मु० पुस्तके पाठः ।

आ-सङ्गवं प्रातः सन्ध्याया गौणः कालः, आ-प्रदोषावसानं च सायंसन्ध्यायास्तदाह वृहन्मनुः,—

"न प्रातर्न प्रदोषस्य सन्ध्या-कालोऽतिपद्यते।

मुख्य-कल्पोऽनुकल्पस्य सर्वस्मिन् कर्म्मणि स्मृतः"—इति।

कूर्म्मपुराणे सन्ध्योपासि-प्रकारो दर्शितः,—

"प्राक्कूलेषु ततः स्थित्वा दर्भेषु च समाहितः*।

प्राणायाम-त्रयं कृत्वा ध्यायेत्† सन्ध्यामिति श्रुतिः"—इति।

याज्ञवल्क्योऽपि,—

"प्राणानायम्य संप्रोक्ष्य त्र्यृचेनाब्दैवतेन तु"—इति।

वृहस्पतिः,—

"बद्धाऽऽसनं नियम्यासून् स्मृत्वाऽऽचार्य्यादिकं तथा।

सन्निमीलित-दृङ्मौनी प्राणायामं समभ्यसेत्"—इति।

प्राणायाम-लक्षणं मनुराह,—

"सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह।

त्रिः पठेदायत-प्राणः प्राणायामः स उच्यते"—इति।

याज्ञवल्क्यः,—

"गायत्रीं शिरसा सार्द्धं जपेद्व्याहृति-पूर्व्विकाम्।

दश-प्रणव-संयुक्तां‡ त्रिरयं प्राण-संयमः"—इति।

योगियाज्ञवल्क्योऽपि,§—

---

* प्रागग्रेषु ततः स्थित्वा दर्भेषु सुसमाहितः,—इति मु० पुस्तके पाठः।

† ध्यायन्,—इति शा० पुस्तके पाठः।

‡ प्रतिप्रणवसंयुक्तां,—इति मु० पुस्तके पाठः।

§ याज्ञवल्क्योऽपि,—इति स० सो० शा० पुस्तकेषु पाठः।

"भूर्भुवः स्वर्महर्जनः तपः सत्यं तथैवच।
प्रत्योङ्कार-समायुक्त* स्तथा तत्सवितुः परम्।
ओँ आपोज्योतिरित्येतच्छिरः पश्चात् प्रयोजयेत्॥
त्रिरावर्त्तन-योगात्तु प्राणायामः प्रकीर्त्तितः†"—इति॥

स च प्राणायामः पूरक-कुम्भक-रेचक-भेदेन त्रिविधोज्ञेयः। तथा च योगियाज्ञवल्क्यः,—

"पूरकः कुम्भको रेच्यः‡ प्राणायामस्त्रिलक्षणः।
नासिकाऽऽकृष्ट उच्छ्वासोध्मातः पूरक उच्यते।
कुम्भको निश्चलः श्वासोरेच्यमानस्तु रेचकः"—इति।

मार्जनमाह व्यासः।

"आपोहिष्ठेत्यृचैः§ कुर्य्यान्मार्जनन्तु कुशोदकैः।
प्रणवेन तु संयुक्तं क्षिपेद्वारि पदेपदे‖॥
वपुष्यष्टौ क्षिपेदूर्द्ध्वमधो यस्य क्षयाय च।
रजस्तमोमोहमयान् जाग्रत्-स्वप्न-सुषुप्ति-जान्।
वाङ्-मनः-काय-जान् दोषान् नवैतान् नवभिर्द्दहेत्"-इति।

शातातपः,—

"स्नगन्ते मार्जनं कुर्य्यात् पादान्ते-वा समाहितः¶।

---

* समायुक्तं,—इति शा० पुस्तके पाठः।
† सम्प्रकीर्त्तितः,—इति मु० पुस्तके पाठः।
‡ रेचकः,—इति शा० पुस्तके पाठः।
§ आपोहिष्ठेत्यृचा,—इति मु० पुस्तके पाठः।
‖ पदेषु च,—इति शा० पुस्तके पाठः।
¶ ऋगन्तेवाथपादान्ते मार्जनं सुसमाहितः,—इति मु० पुस्तके पाठः।

अर्द्धेर्चान्तेऽथवा कुर्य्याच्छिष्टानां मतमीदृशम्"—इति।

हारीतोऽपि,—"मार्जनार्चन-वलिकर्म्म-भेजनानि देव-तीर्थेन कुर्यात्"। तत्र मार्जनं न धारा-च्युतौ कार्य्यम्। तथा ब्रह्मा,*—

"धाराच्युतेन तोयेन सन्ध्योपास्ति र्विगर्हिता।

पितरो न प्रशंसन्ति न प्रशंसन्ति देवताः"—इति॥

कथं तर्हि मार्ज्जनमिति, तत्राह स एव,—

"नद्यां† तीर्थे तटे वाऽपि भाजने मृण्मयेऽपिवा।

औदुम्बरेऽथ सौवर्णे राजते दारु-सम्भवे।

कृत्वा तु वाम-हस्ते वा सन्ध्योपास्तिं समाचरेत्"—इति।

कृत्वा उदकमिति शेषः। मृण्मयादि पात्र-सद्भावे तु वामहस्तस्य प्रतिषेधः‡

"वामहस्ते जलं कृत्वा ये तु सन्ध्यामुपासते।

सा सन्ध्या वृषली ज्ञेया असुरास्तेषु§ तर्पिताः"।

इति स्मरणात्। मृण्मयाद्यभावे तु, 'कृत्वा तु वामहस्ते वा'— इत्यनेनैव विधानात्। एवमुक्तविधिना मार्ज्जयित्वा सूर्य्यस्त्वेत्यपः पिवेत्। तदाह बौधायनः,—"अथातः सन्ध्योपासन-विधिं व्याख्यास्यामः, तीर्थं गत्वा प्रयतोऽभिषिक्तः प्रक्षालित-पाणि-पादो विधिनाऽऽचम्याग्निश्च मा मन्युश्चेति सायमपः पीत्वा सूर्य्यश्च मामन्युश्चेति

---

* तथाच,—इति स० शा० पुस्तकयोः पाठः।

† सन्ध्यां,—इति मु० पुस्तके पाठः।

‡ वामहस्तः प्रतिषिद्धः,—इति मु० पुस्तके पाठः।

§ असुरास्तेतु,—इति मु० पुस्तके पाठः।

प्रातः सावित्रेण वसुमत्या*(१) अब्लिङ्गाभिर्वारुणीभिः हिरण्यवर्णाभिः पावमानीभिर्व्याहृतिभिरन्यैश्च पवित्रैरात्मानं प्रोक्ष्य प्रयतो भवति" —इति। भारद्वाजः†,—

"सायमग्निश्च मेत्युक्त्वा प्रातः सूर्य्येत्यपः पिबेत्।
आपः पुनन्तु मध्याह्ने ततश्चाचमनञ्चरेत्"—इति।

कात्यायनोऽपि,—

"शिरसो मार्ज्जनं कुर्य्यात् कुशैः सोदक-विन्दुभिः।
प्रणवो भूर्भुवः स्वश्च गायत्री च तृतीयिका।
अब्-दैवत्यं त्यृचं चैव‡ चतुर्थमिति मार्ज्जनम्"—इति।

मार्ज्जनानन्तरं प्रजापतिः,—

"जल-पूर्णं तथा हस्तं नासिकाऽग्रे समर्पयेत्।
ऋतञ्चेति पठित्वा तु तज्जलन्तु क्षितौ क्षिपेत्"—इति।

ततः सूर्य्यायार्घ्यं दद्यात्। तथाच व्यासः,—

---

* सुरभिमत्या,—इति मु० पुस्तके पाठः।
† भरद्वाजः, इति स० शा० पुस्तकयोः पाठः।
‡ अब्दैवतमृचं चैव,—इति मु० पुस्तके पाठः।

---

(१) वसुशब्दोपेता मन्त्रा ऋग्वेदे पठिताः। यथा (१।६।६॥, १।१५८।१॥, ५।२४।२॥, ८।४४।२४॥, १०।७४।१॥, १०।१२२।१॥) सामवेदे उत्तरार्चिके एका पठिता (४।१।२२।२)। एवमाथर्व्वणे (१०।६।८॥, १२।३।४१॥, १६।६।४॥) तैत्तिरीयसंहितायां (३।३.३।३॥, ४।१।६।३॥) काठके (३८।११।३६॥) वाजसनेयिसंहितायां (१।२।२-३॥, २।१६।१॥, ६।३४।१॥, ११।५८।१॥, ११।६०।१॥, ११।६५।१॥, १४।२५।१॥, १८।१५।१॥, २१।८।१॥, २४।२७।१॥)

"करभ्यां तोयमादाय गायत्र्या चाभिमन्त्रितम्।
आदित्याभिमुखस्तिष्ठन् त्रिरूर्द्धमथ चोत्क्षिपेत्"—इति।

हारीतोऽपि,—"सावित्र्याभिमन्त्रितम् उदकं पुष्प-मिश्रमञ्जलिना क्षिपेत्"—इति। अर्घ्य-दाने मन्त्रान्तरमुक्तं विष्णुना,—

"कराभ्यामञ्जलिं कृत्वा जल-पूर्णं समाहितः।
उदुत्यमिति मन्त्रेण तत्तोयं प्रक्षिपेद्भुवि*"—इति।

ततः प्रदक्षिणं कृत्वा उदकं स्पृशेत्†। तदुक्तं वराह‡पुराणे,—

"सायं मन्त्रवदाचम्य प्रोक्ष्य सूर्य्यस्य चाञ्जलिम्§।
दत्वा प्रदक्षिणं कृत्वा जलं स्पृष्ट्वा विशुद्ध्यति"—इति।

श्रुतिरपि,—"यत् प्रदक्षिणं प्रक्रमन्ति तेन पाप्मानमवधुन्वन्ति॥"—इति। कूर्म्मपुराणम्,—

"अथोपतिष्ठेदादित्यमुदयन्तं समाहितः।
मन्त्रैस्तु विविधैः सौरैः ऋग्यजुः-साम-सम्भवैः"—इति।

उपस्थानन्तु स्व-शाखोक्त-मन्त्रैः कार्य्यम्।

"उपस्थानं स्वकैर्मन्त्रैरादित्यस्य तु कारयेत्"।

इति वशिष्ठस्मरणात्। कूर्म्मपुराणे उपस्थानन्तु सूक्तैरित्यादिना¶

---

* तत्तोयं च क्षितौ क्षिपेत्,—इति मु० पुस्तके पाठः।

† ततः प्रदक्षिणं कृत्वा उदकञ्च स्पृशेदिति,—इति श्लोकार्द्धरूपेण लिखितमस्ति मु० पुस्तके।

‡ वराह,—इति नास्ति शा० स० पुस्तकयोः।

§ सायंसन्ध्यामुपासीत प्रोक्ष्य सूर्य्याय चाञ्जलिम्,—इति मु० पुस्तके पाठः।

|| धून्वन्ति,—इति मु० पुस्तके पाठः।

¶ सूपाठेत्यादिना,—इति मु० पुस्तके पाठः।

प्रपञ्चितम् । प्राक्कूलेषु,—इत्यारभ्यादित्योपस्थान-पर्य्यन्तं प्रातः सन्ध्यायां यदुपवर्णितं, तदितरयोरुभयोरपि सन्ध्ययोः समानम् । तत्र, मध्याह्नसन्ध्यायां विशेषो नारायणेनाभिहितः,—

"आपः पुनन्तु मन्त्रेण आपोहिष्ठेति मार्ज्जनम् ।
प्रक्षिप्य चाञ्जलिं सम्यगुदुत्यं चित्रमित्यपि ।
तच्चक्षुर्द्देव इति च हंसः शुचिषदित्यपि ॥
एतत् जपेदूर्द्ध-बाहुः सूर्य्यं पश्यन् समाहितः ।
गायत्र्या तु यथाशक्ति उपस्थाय दिवाकरम्"—इति ।

काल-विशेषस्तु शङ्खेन दर्शितः—

"प्रातःसन्ध्यां सनक्षत्रां मध्यमां स्नान-कर्म्मणि ।
सादित्यां पश्चिमां सन्ध्यामुपासीत यथाविधि"—इति ।

स्नानकर्म्मणीति माध्याह्निक-स्नानानन्तरमित्यर्थः । माध्याह्निक-सन्ध्यायां गौण-कालमाह दक्षः,—

"अध्यर्द्धयामादासायं सन्ध्या माध्याह्निकीष्यते"—इति ।

सन्ध्या-त्रये तारतम्येन देश-विशेषमाह व्यासः,—

"गृहे त्वेक-गुणा सन्ध्या गोष्ठे दशगुणा स्मृता ।
शतसाहस्रिका नद्यामनन्ता विष्णुसन्निधौ"—इति ॥

महाभारते,—

"बहिःसन्ध्या दशगुणा गर्त्त-प्रस्रवणेषु च ।
ख्याता तीर्थे शतगुणा* साहस्रा जाह्नवी-तटे"—इति ॥

शातातपोऽपि,—

---

* दशगुणा,—इति मु० पुस्तके पाठः ।

"अनृतं मद्यगन्धञ्च दिवामैथुनमेवच ।
पुनाति वृषलस्यान्नं सन्ध्या वहिरुपासिता"—इति ॥

वहिः सन्ध्यायामुपासितायां यदा विहरणाद्यङ्गलोपस्तदा गृह-एव सन्ध्यात्रयं कर्त्तव्यमित्याहात्रिः,—

"सन्ध्यात्रयन्तु कर्त्तव्यं द्विजेनात्मविदा सदा ।
उभे सन्ध्ये तु कर्त्तव्ये ब्राह्मणैश्च गृहेष्वपि"—इति ।

यद्यपि, प्रशस्तत्वाद्बहिरेव सन्ध्यात्रयं कर्त्तव्यत्वेन प्राप्तं, तथापि श्रौतत्वेन विहरणस्य प्राबल्यात् तदनुरोधेन सायं-प्रातः-सन्ध्ये गृहेऽभ्यनुज्ञायेते। सायं सन्ध्यायामुपस्थाने मन्त्र-विशेषमाह नारायणः,—

"वारुणीभिस्तथादित्यमुपस्थाय प्रदक्षिणम् ।
कुर्व्वन् दिशोनमस्कुर्य्याद्दिगीशांश्च पृथक् पृथक्"—इति ।

वारुण्यश्च,—'इमं मेवरुण'—इत्याद्याः । यद्यपि, वारुणीभि र्वरुण-स्योपस्थानं लिङ्गबलात् प्राप्तं, तथापि श्रुतेः प्राबल्यात् तया लिङ्गं वाधित्वा आदित्योपस्थाने एव विनियुज्यन्ते। एतच्च तृतीयाध्याये विचारितम्[१] ।

तथा हि, "ऐन्द्र्या गार्हपत्यमुपतिष्ठेत"—इति श्रूयते । इन्द्रो देवतात्वेन यस्यामृचि मन्त्रलिङ्गात् प्रकाश्यते, सेयमृगैन्द्री; 'कदाचन स्तरीरसि नेन्द्र सश्चसि,—इत्यादिका। तत्र, लिङ्गादिन्द्रोपस्थाने मन्त्रस्य विनियोगः प्रतीयते, 'गार्हपत्यम्'—इति द्वितीयाश्रुत्या तु गार्ह-पत्योपस्थाने । तत्र संशयः, किमुभयं समुच्चित्योपस्थेयं, उतैकएव ।

---

(१) पूर्व्वमीमांसायाः,—इति शेषः। एतच्च तत्र तृतीय-तृतीय-सप्तममधि-करणम् ।

तत्रापि किं यः कश्चिदैच्छिकः, किं वैन्द्रएव, उतगार्हपत्यएव,—इति । तत्र, श्रुति-लिङ्गयोः सम-बल-प्रमाणत्वात् विरोधानुपलम्भाच्च समुच्चयः,—इत्येकः पक्षः । एकोपस्थाने मन्त्रस्य निराकाङ्क्षत्वात् नैराकाङ्क्ष्य-लक्षण--विरोधादन्यतर-नियामकादर्शनाच्चैच्छिकः,—इति द्वितीयः पक्षः । श्रुतेः शब्दात्मिकायाः अर्थ-सामर्थ्यानुसारित्वात् सामर्थ्यस्य चोपजीव्यत्वेन प्राबल्यादिन्द्रएवोपस्थेयः,—इति तृतीयः पक्षः । मन्त्रगतोहीन्द्रशब्दोरूढ्या शक्रमभिधत्ते, 'इदि परमैश्वर्य्ये'—इत्यस्माद् धातोरुत्पन्नत्वात् स्वकार्य्य-विषयपरमैश्वर्य्योपेतं गार्हपत्यमभिधत्ते, 'गुणाद्वाप्यभिधानं स्यात्'—इति न्यायेनोभय-साधारणत्वेन लिङ्गस्य सन्देहापादकत्वम् । अथेच्येत ;—'रूढ़िर्योगमपहरति'—इति न्यायेन शीघ्रबुद्ध्युत्पादिकायाः रूढ़ेः प्राबल्याच्छक्रएवोपस्थेयः,—इति । एवं तर्हि, लिङ्गादपि शीघ्र-बुद्ध्युत्पादकत्वेन श्रुतिरेवात्र विनियोजिका(१) । तथा ह्याचार्य्यैरुक्तम्,—

"मन्त्रार्थं मन्त्रतो बुद्ध्वा पश्चाच्छक्तिं† निरूप्य च ।
मन्त्राकाङ्क्षा-बलेनेन्द्र-शेषत्व-श्रुतिकम्पनम् ॥
श्रुत्या प्रत्यक्षया पूर्वं गार्हपत्याङ्गतां गते ।

---

† तत्शक्तिं च,—इति मु० पुस्तके पाठः ।

---

(१) एतच्च, "श्रुति-लिङ्ग-वाक्य-प्रकरण-स्थान-समाख्यानां समवाये पार-दौर्व्वल्यमर्थविप्रकर्षात् (मी० ३अ० ३पा० १४सू०,"—इति जैमिनिसूत्रात् सिद्धम् । श्रुत्यादयस्च, "श्रुतिर्द्वितीया क्षमता च लिङ्गं वाक्यं पदान्येव तु संहतानि । सा प्रक्रिया या कथमित्यपेक्षा स्थानं क्रमो योगबलं समाख्या"—इत्युक्तलक्षणाः । तत्र च, द्वितीयापदं कारक-विभक्त्युपलक्षणम्,—इति वाचस्पतिमिश्राः ।

निराकाङ्क्षीकृते मन्त्रे निर्मूला श्रुति-कल्पना॥
तेन शीघ्र-प्रवृत्तित्वाच्छ्रुत्या लिङ्गस्य बाधनम्"।

तस्मात्सार्द्धपत्यएवोपस्थेयः,—इति सिद्धम्। सन्ध्यां प्रशंसति यमः,—

"सन्ध्यामुपासते ये तु सततं संशित-व्रताः।
विधूत पापास्ते यान्ति ब्रह्मलोकं सनातनम्॥
यदह्ना कुरुते पापं कर्म्मणा मनसा गिरा।
आसीनः पश्चिमां सन्ध्यां प्राणायामैस्तु हन्ति तत्॥
यद्रात्र्या कुरुते पापं कर्म्मणा मनसा गिरा।
पूर्व्वसन्ध्यामुपासीनः प्राणायामैर्व्यपोहति॥
ऋषयोदीर्घ-सन्ध्यत्वाद्दीर्घमायुरवाप्नुयुः * ।
प्रज्ञां यशश्च कीर्त्तिञ्च ब्रह्मवर्चसमेवच"—इति।

अकरणे प्रत्यवायोदर्शितोदक्षेण,—

"सन्ध्याहीनो ऽशुचिर्नित्यमनर्हः सर्व्व-कर्म्मसु।
यदन्यत् कुरुते कर्म्म न तस्य फलभाग्भवेत"—इति।

गोभिलोऽपि,—

"सन्ध्या येन न विज्ञाता सन्ध्या येनानुपासिता।
जीवमानोभवेच्छूद्रो मृतः श्वा चोपजायते †"—इति।

विष्णुपुराणेऽपि,—

"उपतिष्ठन्ति वै ‡ सन्ध्यां ये न पूर्व्वां न पश्चिमाम्।

---

* सर्व्वमायुरुपाययुः,—इति मु० पुस्तके पाठः।
† श्वानोभिजायते,—इति मु० पुस्तके पाठः।
‡ ये,—इति शा० पुस्तके प।

व्रजन्ति ते दुरात्मानस्तामिस्रं नरकं नृप"—इति॥

कूर्म्मपुराणेऽपि,—

"योऽन्यत्र कुरुते यत्नं धर्म्म-कार्य्ये द्विजोत्तमः।

विहाय सन्ध्या-प्रणतिं स याति नरकायुतम्"—इति।

एतत्सर्व्वमनार्त्त-विषयम्। तथाच याज्ञवल्क्यः,—

"अनार्त्तस्त्यजेद्यस्तु सविप्रः शूद्र-सम्मितः।

प्रायश्चित्ती भवेच्चैव लोके भवति निन्दितः"—इति।

अत्रिरपि,—

"नोपतिष्ठन्ति ये सन्ध्यां स्वस्थाऽवस्थास्तु वै द्विजाः।

हिंसन्ति वै सदा पापा भगवन्तं दिवाकरम्"—इति।

विष्णुपुराणेऽपि,—

"सर्व्वकालमुपस्थानं सन्ध्यायाः पार्थिवेष्यते।

अन्यत्र सूतकाशौच-विभ्रमातुर-भीतितः"—इति।

सूतकादौ सत्यपि सामर्थ्ये सन्ध्योपासनं न कार्य्यमित्याह मरीचिः,—

"सूतके कर्म्मणां त्यागः सन्ध्यादीनां विधीयते"—इति।

यदपि पुनस्तेनोक्तम्,—

"सन्ध्यामिष्टिञ्च होमञ्च* यावज्जीवं समाचरेत्।

न त्यजेत् सूतके वाऽपि त्यजन्गच्छत्यधोगतिम्"—इति।

तन्मानसिक-सन्ध्याऽभिप्रायम्। यतस्तेनैवोक्तम्,—

"सूतके मृतके चैव सन्ध्याकर्म्म न तु त्यजेत्†।

मनसोच्चारयेन्मन्त्रान् प्राणायाममृते द्विजः॥

---

* सन्ध्यामिष्टिं चरुं होमं,—इति मु० पुस्तके पाठः।

† न सन्त्यजेत,—इति मु० पुस्तके पाठः।

एतद्विदित्वा यः सन्ध्यामुपास्ते संशितव्रतः।

दीर्घमायुः स विन्देत सर्व्वपापैः प्रमुच्यते"—इति।

॥०॥ इति सन्ध्याविधिः ॥०॥

## अथ सन्ध्याङ्ग-जप-विधिः।

तत्र मनुः,—

"आचम्य प्रयतोनित्यमुभे सन्ध्ये समाहितः।

शुचौ देशे जपन् जप्यमुपासीत यथाविधि"—इति।

कथमित्यपेक्षिते आह शङ्खः,—"कुशवृष्यां समासीनः कुशोत्तरायां वा कुश-पवित्र-पाणिः सूर्य्याभिमुखोवाऽक्षमालामादाय देवतां ध्यायन् जपं कुर्य्यात्"—इति।

व्यासोऽपि,—

"प्रणव-व्याहृति-युतां गायत्रीञ्च जपेत्ततः"—इति।

योगियाज्ञवल्क्यस्तु, अन्तेऽपि प्रणव-योगार्थमाह,—

"ओँकारं पूर्व्वमुच्चार्य्य भूर्भुवः स्वस्तथैवच।

गायत्रीं प्रणवं चान्ते जपएवमुदाहृतः"—इति।

बौधायनोऽपि,—"उभयतःप्रणवां सव्याहृतिकां जपेत्"—इति।

नृसिंहपुराणे जप-यज्ञस्य भेदोऽभिहितः,—

"त्रिविधोजपयज्ञः स्यात्तस्य भेदं निबोधत।

वाचिकश्च उपांशुश्च मानस स्त्रिविधः स्मृतः॥

त्रयाणां जप-यज्ञानां श्रेयः स्यादुत्तरोत्तरः"—इति।

वाचिकोपांशुत्वयोर्लक्षणं पुराणेऽभिहितम्,—

"यदुच्च-नीच-स्वरितैः शब्दैः स्पष्ट-पदाक्षरैः।

मन्त्रमुच्चारयेद्वाचा वाचिकोऽयं जपः स्मृतः ॥
शनैरुच्चारयेन्मन्त्रमीषदोष्ठौ प्रचालयन्।
अपरैरश्रुतः किञ्चित् स उपांशुजपः स्मृतः"—इति।

विश्वामित्रेण मानसस्य लक्षणमुक्तम्,—
"ध्यायेद् यदक्षर-श्रेणीं वर्णाद्वर्णं पदात्पदम्।
शब्दार्थ-चिन्तनं भूयः कथ्यते मानसोजपः"—इति।

त्रयाणां तारतम्यञ्च तेनैवोक्तम्,—
"उत्तमं मानसं जप्यमुपांशुं मध्यमं स्मृतम्।
अधमं वाचिकं प्राहुः सर्व्वमन्त्रेषु वै द्विजाः।
वाचिकस्यैकमेकं स्यादुपांशुः शतमुच्यते ॥
साहस्रोमानसः प्रोक्तोमन्वत्रि-भृगु-नारदैः"—इति।

जप-नियममाह शौनकः,—
"कृत्वोत्तानौ करौ प्रातः सायञ्चाधोमुखौ तथा।
मध्ये स्तम्बकराभ्यान्तु* जपएवमुदाहृतः ॥
मनः-सन्तोषणं शौचं मौनं मन्त्रार्थ-चिन्तनम्।
अव्यग्रत्वमनिर्वेदोजप-संपत्ति-हेतवः"—इति।

मनुरपि,—
"पूर्व्वां सन्ध्यां जपंस्तिष्ठेत् सावित्रीमाऽर्क-दर्शनात्।
पश्चिमान्तु समासीनः सम्यगृक्ष-विभावनात्"—इति।

मध्याह्ने जपस्य नियमः वायुपुराणे दर्शितः,—

---

* स्कन्दकराभ्यान्तु,—इति स० सो० शा० पुस्तकेषु, तिर्य्यक्करा भ्यान्तु,—इत्यन्यत्रपाठः।

"तथा मध्याह्न-सन्ध्यायामासीनः प्राङ्मुखोजपेत्"—इति।
वर्ज्यानाह व्यासः,—

"न संक्रामन् न च हसन् न पार्श्वमवलोकयन्।
नापाश्रितो* न जल्पंश्च न प्रावृतशिरास्तथा।
न पदा पादमाक्रम्य न चैवहि तथा करौ॥
न चासमाहित-मना नच संश्रावयन् जपेत्"—इति।

बौधायनोऽपि,—

"नाभेरधः संस्पर्शनं कर्म्म-संयुक्तोवर्जयेत्"—इति।

व्यासोऽपि,†—

"जपकाले न भाषेत व्रत-होमादिकेषु च।
एतेष्वेवावसक्तस्तु यद्यागच्छेत् द्विजोत्तमः।
अभिवाद्य ततोविप्रं योग-क्षेमञ्च कीर्त्तयेत्"—इति।

योगियाज्ञवल्क्योऽपि,—

"यदि वाग्यम-लोपः स्याज्जपादिषु कदाचन।
व्याहरेद्वैष्णवं मन्त्रं स्मरेद्वा विष्णुमव्ययम्"—इति।

संवर्त्तोऽपि,—

"लोक-वार्त्ताऽऽदिकं श्रुत्वा दृष्ट्वा स्पृष्ट्वा प्रभाषितम्।
सन्ध्यां विना च यज्जप्तं‡ तत्सर्व्वं निष्फलं भवेत्"—इति।

प्रभाषितं§ बहुभाषितं पुरुषमिति। गौतमोऽपि,—

---

* नचाश्रितो,—इति शा० पुस्तके पाठः।
† नास्तीदं मु० पुस्तके।
‡ जप्यं,—इति शा० मु० पुस्तकयोः पाठः।
§ प्रभाषितमिति,—इति शा० पुस्तके पाठः।

"गच्छतस्तिष्ठतोवाऽपि स्वेच्छया कर्म्म कुर्व्वतः।
अशुचेर्व्वा विना संख्यां तत्सर्व्वं निष्फलं भवेत्॥
क्रोधं लोभं तथा निद्रां* निष्ठीवन-विजृम्भणम्।
दर्शनञ्च श्व-नीचानां† वर्जयेज्जप-कर्म्मणि॥
आचामेत्सम्भवे चैषां स्मरेद्विष्णुं सुरार्च्चितम्।
ज्योतींषि च प्रशंसेद्वा कुर्य्याद्वा प्राण-संयमम्॥
ज्वलनं गाश्च विप्रांश्च यतीन्वाऽपि विशुद्धये"—इति।

देश-नियमस्तु याज्ञवल्क्येनोक्तः,—

"अग्न्यागारे जलान्ते वा जपेद्देवालयेऽपि वा।
पुण्यतीर्थे गवां गोष्ठे द्विज-क्षेत्रेऽथवा गृहे"—इति।

शङ्खोऽपि,—

"गृहे त्वेकगुणं जप्यं नद्यादौ द्विगुणं स्मृतम्।
गवां गोष्ठे दशगुणमग्न्यागारे शताधिकम्॥
सिद्ध-क्षेत्रेषु तीर्थेषु देवतायाश्च सन्निधौ।
सहस्र-शत-कोटीनामनन्तं विष्णु-सन्निधौ"—इति।

कूर्म्मपुराणेऽपि,—

"गुह्यका राक्षसाः सिद्धाहरन्ति प्रसभं यतः।
एकान्ते तु शुभे देशे तस्माज्जप्यं सदाचरेत्"—इति।

जप-संख्यामाह योगियाज्ञवल्क्यः,—

"ब्रह्मचार्य्याहिताग्निश्च शतमष्टोत्तरं जपेत्।

---

* क्रोधं मान्द्यं क्षुतं निद्रां,—इति मु० पुस्तके पाठः।
† दर्शनं श्वादिनीचानां,—इति मु० पुस्तके पाठः।

वानप्रस्थोयतिश्चैव सहस्रादधिकं जपेत्"—इति।

स्मृत्यन्तरे,—

"दर्शे श्राद्धे प्रदोषे च गायत्रीं दश-संख्यया।

अष्टाविंशत्यनध्याये सुदिने तु यथाक्रमम्"—इति*।

यमोऽपि,—

"सहस्र-परमां देवीं शत-मध्यां दशावराम्।

गायत्रीन्तु जपेन्नित्यं सर्व्व-पाप-प्रणाशनीम्"—इति।

आपस्तम्बोऽपि,—"दर्भेष्वासीनो दर्भान् धारयमाणः सोदकेन पाणिना प्राङ्मुखः सावित्रीं सहस्रकृत्व आवर्त्तयेच्छतकृत्वोऽपरिमित-कृत्वोवा"—इति।

॥०॥ इति जप-विधिः ॥०॥

जपाङ्गभूतामक्षमालामाह† हारीतः,—

"शङ्ख-रूप्यमयी माला काञ्चनीभिरथोत्पलैः।

पद्माक्षकैश्च‡ रुद्राक्षै विद्रुमैर्मणि-मौक्तिकैः॥

तथाचैन्द्राक्षकैर्माला तथैवाङ्गुलि-पर्व्वभिः।

पुत्रजीवमयी माला शस्ता वै जप-कर्म्मणि"—इति।

गौतमोऽपि,—

"अङ्गुल्या जप-संख्यानमेकमेकमुदाहृतम्।

रेखायाऽष्टगुणं पुत्रजीवैर्दशगुणाधिकम्।

---

* स्मृत्यन्तरे,—इत्यादिः, इति,—इत्यन्तोग्रन्थो नास्ति मुद्रितातिरिक्त-पुस्तकेषु।

† जपाङ्गभूतां मालामाह,—इति मु० पुस्तके पाठः।

‡ पद्माक्षकैश्च,—इति स० शा० पुस्तकयोः पाठः।

शतं स्याच्छङ्खमणिभिः प्रवालैश्च सहस्रकम् ।
स्फटिकैर्दशसाहस्रं मौक्तिकैर्लक्षमुच्यते ।
पद्माक्षैर्दशलक्षन्तु सौवर्णैः कोटिरुच्यते ॥
कुशग्रन्थ्या च रुद्राक्षैरनन्तफलमुच्यते"—इति ।

अथाक्षमाला-मणि-संख्यामाह प्रजापतिः,—

"अष्टोत्तरशतं कुर्याच्चतुःपञ्चाशिकां तथा ।
सप्तविंशतिकां वाऽथ ततोनैवाधिका हिता ॥
अष्टोत्तर-शता माला उत्तमा सा प्रकीर्त्तिता ।
चतुःपञ्चाशिका या तु मध्यमा सा प्रकीर्त्तिता ॥
अधमा प्रोच्यते नित्यं सप्तविंशति-संख्यया"—इति ।

गौतमोऽपि,—

"अङ्गुष्ठं मोक्षदं विद्यात्तर्ज्जनी शत्रु-नाशिनी ।
मध्यमा धन-कामायानामिका[१] पौष्टिकी तथा ॥
कनिष्ठा रक्षणी प्रोक्ता जपकर्म्मणि शोभना ।
अङ्गुष्ठेन जपं जप्यमन्यैरङ्गुलिभिः सह ॥
अङ्गुष्ठेन विना जप्यं कृतं तदफलं भवेत्"—इति ।

गायत्री-जपं प्रशंसति व्यासः,—

"दशकृत्वः प्रजप्ता पात्र्यह्नाद्यच्च कृतं लघु ।
तत् पापं प्रणुदत्याशु नात्र कार्य्या विचारणा ।
शत-जप्ता तु सा देवी पापौघ-शमनी स्मृता ।
सहस्रजप्ता सा देवी उपपातक-नाशिनी ।

---

(१) धनकामाय,—इति क्वेदः ।

लक्ष-जाप्येन च तथा महापातक-नाशिनी ॥
कोटि-जाप्येन राजेन्द्र यदिच्छति तदाप्नुयात्"—इति ।

यमोऽपि,—
"गायत्र्यास्तु परं जप्यं गायत्र्यास्तु परं तपः ।
गायत्र्यास्तु परं ध्यानं गायत्र्यास्तु परं कृतम्"—इति ।

मनुरपि,—
"योऽधीतेऽहन्यहन्येतां त्रीणि वर्षाण्यतन्द्रितः ।
स ब्रह्म परमभ्येति वायुभूतश्च मूर्त्तिमान्"—इति ।

गोतमोऽपि,—
"अनेन विधिना नित्यं जपं कुर्य्यात् प्रयत्नतः ।
प्रसन्नोविपुलान् भोगान् भुक्तिं* मुक्तिञ्च विन्दति"—इति ।

॥०॥ इति सन्ध्या-जपयोः प्रकरणम् ॥०॥

## अथ होम-विधिः ।

तत्र, कूर्म्मपुराणे,—
"अथागम्य गृहं विप्रः समाचम्य यथाविधि ।
प्रज्वाल्य वह्निं विधिवज्जुहुयाज्जातवेदसम्"—इति ।

दक्षोऽपि,—
"सन्ध्या-कर्म्मावसाने तु स्वयं होमोविधीयते ।
स्वयं होमे फलं यत्स्यात्तदन्येन न लभ्यते ॥
होमे यत् फलमुद्दिष्टं जुह्वतः स्वयमेव तु ।

---

* परां,—इति ख्या० पुस्तके पाठः ।

हूयमानं तदन्येन फलमुर्द्धं प्रपद्यते ।
ऋत्विक् पुत्रोगुरुर्भ्राता भागिनेयोऽथ विट्पतिः ।
एतैरपि कृतं यत्स्यात्तद्धुतं स्वयमेव हि"—इति ।

विट्पति र्जामाता । स्वयं होमएव मुख्यः, तदभावे ऋत्विगादि-होमः । तत्र विशेषः कूर्मपुराणे दर्शितः,—

"ऋत्विक् पुत्रोऽथवा पत्नी शिष्योवाऽपि सहोदरः ।
प्राप्यानुज्ञां विशेषेण जुहुयाद्वा यथाविधि"—इति ।

होतृ-तारतम्यं दर्शयति श्रुतिः,*—

"अन्यैः शत-कृताद्धोमादेकः शिष्य-कृतोवरः† ।
शिष्यैः शत-कृताद्धोमादेकः पुत्र-कृतोवरः ।
पुत्रैः शत-कृताद्धोमाकोह्यात्मकृतोवरः"—इति ॥

ऋत्विगादि-होमेऽपि यजमान-सन्निधानेन भवितव्यम् । तदुक्तं कात्यायनेन,—

"असमक्षन्तु दम्पत्योर्होतव्यं नर्त्विगादिना ।
द्वयोरप्यसमक्षन्तु भवेद्धुतमनर्थकम्"—इति ।

उभयोः सन्निधानं मुख्यं, तदभावे लेकतर-सन्निधानेनापि होतुं शक्यम् । तथा च सएवाह,‡—

"निक्षिप्याग्निं स्वदारेषु परिकल्प्यर्त्विजं तथा ।
प्रवसेत् कार्य्यवान् विप्रो वृथैव न चिरं वसेत्"—इति ।

---

* श्रुतिः,—इति नास्ति मु० पुस्तके ।
† नास्तीदमर्द्धं मुद्रितातिरिक्त पुस्तकेषु ।
‡ 'उभयोः'—इत्यारभ्य, 'सएवाह'—इत्यंतस्य स्थाने, प्रवासे विशेषमाह स्मृतिः,—इति मु० पुस्तके पाठः ।

होमकालः कात्यायनेन दर्शितः,—

"यावत् सम्यक् विभाव्यन्ते नभस्यृक्षाणि सर्व्वतः।

लोहितत्वञ्च नापैति तावत् सायन्तु हूयते"—इति।

आपस्तम्बोऽपि,—"समुद्रोवा एष यदहोरात्रः, तस्यैते गाधतीर्थे यत्सन्धी, तस्मात् सन्धौ होतव्यम्—इति कात्यायन-ब्राह्मणं भवति, नक्षत्रं दृष्ट्वा प्रदोषे निशायां वा सायम्"—इति। समुद्रत्वेन निरूपितस्याहोरात्रस्य सन्धिद्वयं† सुप्रवेशं तीर्थं, तस्मात् सन्धिर्होम-कालः,—इति मुख्यः कल्पः। नक्षत्र-दर्शनादयस्त्रयः कालाः सायं होमेऽनुकल्पाः। एकनक्षत्रोदयो नक्षत्रदर्शनं, सर्व्वनक्षत्रोदयः प्रदोषः, निद्रावेला निशा। प्रातर्होमकालोऽपि चतुर्व्विधस्तेनैवदर्शितः,—"उष-स्युषोदयं समयाध्युषिते प्रातः"—इति। मनुस्तु प्रथम-द्वितीयावेकी कृत्य काल-त्रयमाह,—

"उदितेऽनुदिते चैव समयाध्युषिते तथा।

सर्व्वथा वर्त्तते यज्ञ इतीयं वैदिकी श्रुतिः"—इति।

एतेषां लक्षणमाह व्यासः,—

"रात्रेः षोड़शमे भागे ग्रह-नक्षत्र-भूषिते।

कालं त्वनुदितं प्राज्ञ*र्होमं कुर्य्याद्विचक्षणः॥

तथा प्रभात-समये नष्टे नक्षत्र-मण्डले।

रविर्यावन्न-दृश्येत समयाध्युषितस्तु सः॥

रेखामात्रस्तु दृश्येत रश्मिभिस्तु समन्वितः।

उदितं तं विजानीयात् तत्र होमं प्रकल्पयेत्"—इति।

---

* सन्धिचयं,—इति मु० पुस्तके पाठः।

† कालेत्वनुदिते प्रातः,—इति मु० पुस्तके पाठः।

आश्वलायनस्तु अनुकल्पान्तरमाह,—"आसङ्गवान्तं प्रातः"— इति। होम-कालः,—इत्यनुवर्त्तते। अथवा, सर्व्वएवैते काल-विशेषा यथाशाखं मुख्यतयैव व्यवतिष्टन्ते उदितानुदित-होमवत्। यदा तु कथञ्चिन्मुख्यकालातिक्रमः, तदा* गोभिलोक्तं द्रष्टव्यम्;—"अथ यदि गृह्येऽग्नौ सायंप्रातर्होमयोर्दर्शपौर्णमासयोर्व्वा हव्यं होतारं वा नाधिगच्छेत् कथं कुर्य्यादिति, आ सायमाहुतेः प्रातराहुतिर्नात्येत्याप्रातराहुतेः सायमाहुतिराऽमावास्यायाः पौर्णमासी नात्येत्यापौर्णमास्यमावास्या"—इति। बौधायनोऽपि,—

"आ सायंकर्म्मणः प्रातराप्रातः साय-कर्म्मणः।
आहुतिर्न्नातिपद्येत पार्व्वणं पार्व्वणान्तरात्"—इति।

आपन्नस्तु पक्ष-होमं कुर्य्यात्। तथाच मरीचिः,—

"शरीरापद्भवेद् यत्र भयाद्वाऽऽर्त्तिः प्रजायते।
तथाऽन्यास्वपि चापत्सु पक्ष-होमो विधीयते"—इति।

पक्षहोमिनः तत्-पक्ष-मध्ये आपन्निवृत्तौ तदा प्रभृति पुनर्होमः कर्त्तव्यः। तदाह मरीचिः,—

"पक्षहोमानथो कृत्वा गत्वा तस्मात् निवर्त्तितः।
होमं पुनः प्रकुर्य्यात्तु नचासौ दोषभाग्भवेत्"—इति।

एवं होमानुष्ठितावपि सीमोल्लङ्घने कृते पुनराधानं कर्त्तव्यम्। तदाह कात्यायनः,—

"विहायाग्निं सभार्य्यश्चेत् सीमामुल्लङ्घ्य गच्छति।

---

* यथाकथञ्चिन्मुख्यकालातिक्रमः तथा,—इति मु० पुस्तके पाठः।

होम-कालात्यये तस्य* पुनराधानमिष्यते"—इति।

होमकालानत्यये तु नास्ति पुनराधानं, तदाह शौनकः,—

"प्रोषिते तु यदा पत्नी यदि ग्रामान्तरं व्रजेत्।

होम-काले यदि प्राप्ता न सा † दोषेण युज्यते"—इति।

होमद्रव्यमाह सएव,—

"कृतमोदन-सक्त्वादि तण्डुलादि कृताकृतम्।

व्रीह्यादि चाकृतं प्रोक्तमिति हव्यं त्रिधा बुधैः॥

हविष्येषु यवामुख्यास्तदनु व्रीहयः स्मृताः।

अभावे व्रीहि-यवयोर्दध्ना वा पयसाऽपिवा॥

तदभावे यवाग्वा वा जुहुयादुदकेन वा।

यथोक्त-वस्त्वसंप्राप्तौ ग्राह्यं तदनुकारि यत्॥

यवानामिव गोधूमा व्रीहिणामिव शालयः।

आज्यं हव्यमनादेशे जहोतिषु(१) विधीयते॥

मन्त्रस्य देवतायास्तु प्रजापतिरिति स्थितिः"—इति।

आकृति-परिमाणमाह वृद्ध-बृहस्पतिः‡,—

* होमकालादतीतस्य,—इति मु० पुस्तके पाठः।

† होमेकाले तु संप्राप्ते न सा,—इति मु० पुस्तके पाठः।

‡ बृहस्पतिः,—इति स० सो० शा० पुस्तकेषु पाठः।

(१) यद्यपि धातुस्वरूपे शप् अनुशिष्यते, तथापि प्रयोगानुसारात् धात्वर्थेऽपि तस्य साधुत्वं मन्तव्यम्। "ईच्चतेर्नाशब्दम् (शा०१अ०१पा० ५सू०)"—इत्यादिवत्।

"प्रस्थ-धान्यं चतुःषष्टिराहुतेः परिकीर्त्तितम् ।
तिलानान्तु तदर्द्धं स्यात् तदर्द्धं स्याद्घृतस्य तु"—इति ॥

बौधायनोऽपि,—
"व्रीहीनां वा यवानां वा शतमाहुतिरिष्यते"—इति ।

होम-प्रकारः स्व-गृह्योक्त-विधिना द्रष्टव्यः । तदुक्तं गृह्यपरिशिष्टे,—
"स्व-गृह्योक्तेन विधिना होमं कुर्य्याद्यथाविधि"—इति ।

विष्णुरपि*,—
"बहु-शुष्केन्धने चाग्नौ सुसमिद्धे हुताशने ।
विधूमे लेलिहाने च होतव्यं कर्म्म-सिद्धये ॥
योऽनर्च्चिषि जुहोत्यग्नौ व्यङ्गारे चैव मानवः ।
मन्दाग्निरामयावी च दरिद्रश्चोपजायते"—इति ।

एतच्च ज्ञात्वैवानुष्ठेयमन्यथा दोष-श्रवणात् । तदाहाङ्गिराः,—
"स्वाभिप्राय-कृतं कर्म्म यत्किञ्चित् ज्ञान-वर्ज्जितम् ।
क्रीड़ा-कर्म्मेव† बालानां तत्सर्वं निष्प्रयोजनम्"—इति ।

चतुर्विंशतिमते,—
"हतं ज्ञानं क्रिया-हीनं हतास्त्वज्ञानतः‡ क्रियाः ।
अपश्यन्नन्धको दग्धः पश्यन्नपि च पङ्गुकः"—इति ।

श्रौत-स्मार्त्तयोरपि व्यवस्थामाह याज्ञवल्क्यः,—
"कर्म्म स्मार्त्तं विवाहाग्नौ कुर्वीत प्रत्यहं गृही ।

---

* नास्तीदं—मु० पुस्तके ।
† क्रीड़ाकर्म्मच,—इति स० सो० ग्रा० पुस्तके पाठः ।
‡ हतास्त्वज्ञानिनः,—इति ग्रा० पुस्तके पाठः ।

दाय-कालादृते वाऽपि श्रौतं वैतानिकाग्निषु"—इति ।

वैतानिका गार्हपत्यादयः । यस्य पुनः श्रौत-स्मार्त्ताग्नि-द्वयं तस्यानुष्ठान-प्रकारमाह* भरद्वाजः,—

"होमं वैतानिकं कृत्वा स्मार्त्तं कुर्य्याद्विचक्षणः ।

स्मृतीनां वेद-मूलत्वात्, स्मार्त्तं केचित् पुरा विदुः"—इति ।

शातातपोऽपि,—

"श्रौतं यत् तत्† स्वयं कुर्य्यादन्योऽपि स्मार्त्तमाचरेत् ।

अशक्तौ श्रौतमप्यन्यः कुर्य्यादाचारमन्ततः"—इति ।

उक्तस्याग्नेर्नित्यतामाह गर्गः,—

"कृतादारोनैव तिष्ठेत् क्षणमप्यग्निना विना ।

तिष्ठेत चेद्द्विजोव्रात्यस्तथाच‡ पतितोभवेत् ॥

यथा स्नानं यथा भार्य्या वेदस्याध्यायनं यथा§ ।

तथैवौपासनं(१) दृष्टं न तिष्ठेत्तदयोगतः॥"—इति ।

सत्यामपि वैदिकानुष्ठान-शक्तौ न स्मार्त्तमात्रेण परितुष्येत । तदाह सएव,—

"योवैदिकमनादृत्य कर्म्म स्मार्त्तैतिहासिकम् ।

---

* तस्यानुष्ठानव्यवस्थामाह,—इति मु० पुस्तके पाठः ।

† श्रौतं यत्स्यात्,—इति शा० पुस्तके पाठः ।

‡ भाग्यस्तथाच,—इति मु० पुस्तके पाठः ।

§ तथा,—इति शा० पुस्तके पाठः ।

॥ तद्वियोगतः,—इति मु० पुस्तके पाठः ।

---

(१) स्नानं समावर्त्तनापरनामधेयमाप्लवनम् । औपासनं स्मार्त्ताग्निः ।

मोहात् समाचरेद्विप्रो न स पुण्येन युज्यते।
प्रधानं वैदिकं कर्म्म गुण-भूतं तथेतरत्।
गुण-निष्ठः प्रधानन्तु हित्वा गच्छत्यधोगतिम्"—इति।

अशक्तं प्रति व्यासः आह,—
"श्रौतं कर्त्तुं नचेच्छक्तः कर्म्म स्मार्त्तं समाचरेत्।
तत्राप्यशक्तः करणे सदाचारं लभेद्बुधः"—इति।

होमं प्रशंसत्यङ्गिराः,—
"योदद्यात् काञ्चनं मेरुं पृथिवीञ्च ससागराम्।
तत् सायं-प्रात-होमस्य* तुल्यं भवति वा नवा"—इति।

होमन्ते भस्म धार्य्यम्। तदाह वृहस्पतिः,—
"नर्य्यभस्माग्निहोत्रान्ते धार्य्यमेवाग्निहोत्रिभिः।
अनाहिताग्नेर्ब्रह्माख्यमौपासन-समुद्भवम्"।
"कृत्वा चैव तु भस्मना"—इत्यादि स्मृत्यन्तरञ्च †।

॥०॥ इति होम-प्रकरणम् ॥०॥

तदेवं, 'सन्ध्या स्नानं जपोहोमः'—इत्यस्मिन्मूल-वचने होमान्तानि कर्म्माणि निरूपितानि। तान्येतान्यष्टधा विभक्तस्य दिनस्य प्रथम-भागे समापनीयानि। यद्यपि, मध्याह्न-स्नानादीनि निरूपितानि, तथापि तेषां प्रातःस्नानादि-प्रसङ्गेन निरूपितानामाद्य-भागे

* सायं प्रातर्होमस्य,—इति श्रा॰ पुस्तके पाठः।

† होमान्ते,—इत्यादि, स्मृत्यन्तरञ्च,—इत्यंतोग्रन्थः मुद्रितातिरिक्त-पुस्तकेषु न दृश्यते।

न कर्त्तव्यता*। दिवसस्याष्टधा विभागं तत्र कर्त्तव्य-विशेषञ्च दर्शयति,—

"दिवसस्याद्यभागे तु कृत्यं तस्योपदिश्यते।

द्वितीये च तृतीये च चतुर्थे पञ्चमे तथा।

षष्ठे च सप्तमे चैव अष्टमे च पृथक् पृथक्।

विभागेष्वेषु यत् कर्म्म तत् प्रवक्ष्याम्यशेषतः"—

इत्यादिना।

अथ, मूलवचनानुसारेण देवता-पूजनं कर्त्तव्यम्†। तच्च पूजनं प्रातर्होमानन्तरम्,—इति केचित्। तथा च मरीचिः,—

"विधाय देवता-पूजां प्रातर्होमादनन्तरम्"—इति।

ब्रह्मयज्ञ-जपानन्तरम्,—इत्यन्ये। तथाच हारीतः,—

"कुर्व्वीत देवता-पूजां जपयज्ञादनन्तरम्"—इति।

कूर्म्मपुराणेऽपि,—

"निष्पीड्य स्नान-वस्त्रं वै समाचम्य च वाग्यतः।

स्वैर्मन्त्रैरर्चयेद्देवान् पत्रैः पुष्पैस्तथाऽम्बुभिः"—इति।

ततः‡ जपयज्ञानन्तरं देवपूजां निरूपयिष्यामः। प्रातर्होमानन्तर-भावीनि ब्रह्मयज्ञान्तानि मूल-वचनानुक्तान्यप्याह्निक-क्रम-प्राप्तत्वात्तान्युच्यन्ते। होमानन्तर-कृत्यमाह दक्षः,—

"देव-कार्य्यं ततः कृत्वा गुरु-मङ्गल-वीक्षणम्"—इति।

मङ्गलमादर्शादि। तदुक्तं मत्स्यपुराणे,—

---

* प्रातःस्नानादिप्रसङ्गेनाभिहितत्वात्,—इति मु० पुस्तके पाठः।

† देवतानाञ्च पूजनं वक्तव्यं,—इति मु० पुस्तके पाठः।

‡ तत्रचायं,—इति आ० पुस्तके पाठः।

"रोचनं* चन्दनं हेम मृदङ्गं दर्पणं मणिम् ।
गुरुमग्निञ्च सूर्य्यञ्च प्रातः पश्येत् सदा बुधः"—इति ।

विष्णुपुराणेऽपि,—

"स्वाचान्तश्च ततः कुर्य्यात् पुमान् केश-प्रसाधनम् ।
आदर्शाञ्जन-माङ्गल्य-दूर्व्वाद्यालम्भनानि च"—इति ।

ब्रह्मपुराणे,—

"स्वात्मानन्तु† घृते पश्येद्यदीच्छेच्चिर-जीवितम्"—इति ।

नारदोऽपि,—

"लोकेऽस्मिन्मङ्गलान्यष्टौ ब्राह्मणो गौर्हुताशनः ।
हिरण्यं सर्पिरादित्य आपोराजा तथाऽष्टमः ।
एतानि सततं पश्येत् नमस्येदर्च्चयेच्च यः ॥
प्रदक्षिणञ्च कुर्वीत तथा ह्यायुर्न हीयते"—इति ।

मनुरपि,—

"अग्निचित् कपिला सत्री राजा भिक्षुर्महोदधिः ।
दृष्टमात्राः पुनन्त्येते तस्मात् पश्येत नित्यशः"—इति ।

वामनपुराणेऽपि,—

"होमञ्च कृत्वाऽऽलभनं शुभानां
ततो‡ वहिर्निर्गमनं प्रशस्तम् ।
दूर्व्वाञ्च सर्पिर्दधि सोदकुम्भं
धेनुं सवत्सां वृषभं सुवर्णम् ।

* रोचनां,—इति स० शा० पुस्तकयोः पाठः ।
† स्वमात्मानं,—इति मु० पुस्तके पाठः ।
‡ तथा,—इति मुद्रितपुस्तके पाठः ।

म्हद्गोमयं* स्वस्तिकमक्षतांश्च
तैलं मधु ब्राह्मण-कन्यकाश्च।
श्वेतानि पुष्पाणि तथा शमीं च
हुताशनं चन्दनमर्क-बिम्बम्।
अश्वत्थ-वृक्षञ्च समालभेत
ततश्च कुर्य्यान्निज-जाति-धर्म्मम्,"—इति।

भरद्वाजोऽपि,—

"कण्डूय पृष्ठतोगान्तु‡ कृत्वा चाश्वत्थ-वन्दनम्।
उपगम्य गुरून् सर्व्वान् विप्रांश्चैवाभिवादयेत्"—इति।

ब्राह्मण-समवाये प्रथमं कस्याभिवादनमित्याकाङ्क्षायामाह मनुः,—

"लौकिकं वैदिकं वाऽपि तथाऽऽध्यात्मिकमेव वा।
आददीत यतोज्ञानं तं पूर्व्वमभिवादयेत्"—इति।

अभिवादन-काले स्वं नाम कीर्त्तयेदित्याह सएव,—

"अभिवादात् परं विप्रोज्यायांसमभिवादयन्।
असौनामाऽहमस्मीति स्वं नाम परिकीर्त्तयेत्।
भोशब्दं कीर्त्तयेदन्ते स्व-स्व-नाम्नाऽभिवादनम्§"—इति।

---

* यद्गोमयं,—इति मु० पुस्तके पाठः।

† विन्नं,—इति मु० पुस्तके पाठः।

‡ पृष्ठगां गान्तु,—इति मु० पुस्तके पाठः।

§ स्वस्वनाम्नोऽभिवादयेत्,—इति मु० पुस्तके पाठः। स्वस्यनाम्नोऽभिवादने,—इति मुद्रितमनुसंहितायां पाठः।

अभिवादात् परमिति, अभिवादये,—इति शब्दमुच्चार्य्य पश्चादेतन्नामाऽहं भोः,—इति शब्दमुच्चारयेदित्यर्थः। अभिवादन-प्रकारमाहापस्तम्बः,—"दक्षिणं बाहुं श्रोत्र-समं प्रसार्य्य* ब्राह्मणोऽभिवादयेत्, उरः-समं राजन्यो मध्य-समं वैश्यः, नीचैः शूद्रः प्राञ्जलिः"—इति। एक-हस्तेनाभिवादनं निषेधति विष्णुः,—

"जन्म-प्रभृति यत्किञ्चिच्चेतसा धर्म्ममाचरेत्।
सर्व्वं तन्निष्फलं याति ह्येक-हस्ताभिवादनात्"—इति।

एतच्च प्रत्युत्थाय कर्त्तव्यम्। तदाहापस्तम्बः,—

"ऊर्द्ध्वं प्राणाह्युत्क्रामन्ति यूनः स्थविर आगते।
प्रत्युत्थानाभिवादाभ्यां पुनस्तान् प्रतिपद्यते"—इति।

अभिवादितेन वक्तव्यामाशिषमाह† मनुः,—

"आयुष्मान् भव सौम्येति वाच्यो विप्रोऽभिवादने।
अकारश्चास्य नाम्नोऽन्ते वाच्यः पूर्व्वाक्षरः प्लुतः"—इति।

पूर्व्वमक्षरं यस्यासौ पूर्व्वाक्षरः। पूर्व्वमक्षरञ्च नामस्थ-व्यञ्जनं, स्वराणां स्वर-पूर्व्वकत्वासम्भवात्। ततश्चाभिवादक-नाम-गतो व्यञ्जन-निष्ठोऽन्तिम-स्वरः प्लावनीयः। अकारेणान्तिम-स्वरमात्रमुपलक्ष्यते, अशेष-नाम्नामकारान्तत्वासम्भवात्। तथाच सत्येवं प्रयोगो भवति; आयुष्मान् भव सौम्य देवदत्ता३,—इति। यस्तु प्रत्यभिवादन-प्रकारं न जानाति, स नाभिवाद्य इत्याह सएव,—

"योन वेत्त्यभिवादस्य विप्रः प्रत्यभिवादनम्।

---

* प्रस्तीर्य्य,—इति शा० पुस्तके पाठः।

† अभिवाद्येन वक्तव्यमाह,—इति मु० पुस्तके पाठः।

नाभिवाद्यः स विदुषा यथा शूद्रस्तथैव सः"—इति ।

यस्तु जानन्नपि न प्रत्यभिवादनं करोति, तस्य दोषो भविष्यत्पुराणे दर्शितः,—

"अभिवादे कृते यस्तु न करोत्यभिवादनम् ।
आशिषं वा कुरुश्रेष्ठ स याति नरकान् बहून्"—इति ।

यमोऽपि,—

"अभिवादे तु यः पूर्व्वमाशिषं न प्रयच्छति ।
यद्दुष्कृतं भवेदस्य तस्माद्भागं प्रपद्यते ॥
तस्मात् पूर्व्वाभिभाषी* स्याच्चण्डालस्यापि धर्म्मवित् ।
सुरां पिबेति वक्तव्यमेवं धर्म्मो न हीयते ॥
स्वस्तीति ब्राह्मणे ब्रूयादायुष्मानिति राजनि ।
धनवानिति वैश्ये तु शूद्रे त्वारोग्यमेव च†"—इति ॥

मनुरपि,—

"ब्राह्मणं कुशलं पृच्छेत् क्षत्रबन्धुमनामयम् ।
वैश्यं क्षेमं समागम्य शूद्रमारोग्यमेव च ॥
पर-पत्नी तु या स्त्री स्यादसम्बधा च योनितः ।
तां ब्रूयाद्भवतीत्येवं सुभगे भगिनीति च‡"—इति ॥

ज्यायांसमभिवादयेदित्युक्तं, तत्र कियता कालेन ज्यायस्त्वमित्यपेक्षिते

---

* पूर्व्वाभिवादी,—इति शा० पुस्तके पाठः ।

† स्वस्तीति ब्राह्मणं ब्रूयादायुष्मानिति भूमिपः । वर्द्धतामिति वैश्यस्तु शूद्रस्तु स्वागतं वद,—इति मु० पुस्तके पाठः ।

‡ भगिनीति वा,—इति शा० पुस्तके पाठः ।

आह आपस्तम्बः,—"त्रि-वर्ष-पूर्व्वः श्रोत्रियोऽभिवादनमर्हति"—इति ।
मनुरपि,—

"दशाब्दाख्यं पौर-सख्यं पञ्चाब्दाख्यं कलाभृताम् ।
त्र्यब्दपूर्वं* श्रोत्रियाणामल्पेनापि स्व-योनिषु"—इति ।

समान-पुर-वासिनां दशभिः वर्षैः पूर्वः सखा भवति, ततोऽधिकोज्यायान्, कलाभृतां विद्यावतां पञ्चाब्द-पूर्वः सखा, श्रोत्रियाणां वेदाध्यायिनां त्र्यब्द-पूर्वः सखा भवति, ततोऽधिकोज्यायान्, स्व-योनिषु भ्रात्रादिषु सर्व्वेषु स्वल्पेनापि वयसा पूर्व्वः सखा भवति, ततोऽधिकोज्यायानित्यर्थः ।

ननु, एते मान्याः,—इत्यृत्विगादीनां याज्ञवल्क्येन पूज्यत्वाभिधानाद्यवीयसामपि तेषामभिवादनं प्राप्तमिति चेत् । तन्न, प्रत्युत्थान-सम्भाषणाभ्यां मान्यत्व-सिद्धेः । अतएव तेषामभिवाद्यत्वमाह गौतमः,—"ऋत्विक्-श्वशुर-पितृव्य-मातुलादीनां तु यवीयसां प्रत्युत्थानाभिवादनम्"—इति । अभिवादनम् अभिभाषणम् । तथा बौधायनः,—"ऋत्विक्-श्वशुर-पितृव्य-मातुलानां तु यवीयसां प्रत्युत्थानाभिभाषणम्"—इति । एतच्च ब्राह्मण-विषयम् । तथा च शातातपः,—

"अभिवाद्यो नमस्कार्य्यः शिरसा वन्द्यएवच ।
ब्राह्मणः क्षत्रियाद्यैस्तु श्रीकामैः सादरं सदा ॥
नाभिवाद्यास्तु विप्रेण क्षत्रियाद्याः कथञ्चन ।

* अब्दपूर्व्वं,—इति स० शा० पुस्तकयोः पाठः ।

ज्ञान-कर्म्म-गुणोपेतो यद्यप्येते बहुश्रुताः ॥
अभिवाद्य द्विजः शूद्रं सचेलं स्नानमाचरेत् ।
ब्राह्मणानां शतं सम्यगभिवाद्य विशुध्यति'—इति ।

विष्णुरपि,—

"सभासु चैव सर्व्वासु यज्ञे राज-गृहेषु च ।
नमस्कारं प्रकुर्व्वीत ब्राह्मणान्नाभिवादयेत्"—इति ।

गुर्व्वादेरुपसंग्रहणमाह* गौतमः,—"गुरोः पादोपसंग्रहणं प्रातः"—इति। गुरुरत्राचार्य्यः। यतः स एवाह,—"मातृ-पितृ-तद्बन्धूनां पूर्व्वजातानां विद्या-गुरूणां तद्गुरूणाञ्च"†—इति। उपसंग्रहण-लक्षणं मनुराह,—

"व्यत्यस्त-पाणिना कार्य्यमुपसंग्रहणं गुरोः ।
सव्येन सव्यः स्प्रष्टव्यो दक्षिणेन च दक्षिणः"—इति ।

गुरोः सव्य-दक्षिणौ पादौ स्वकीय-सव्य-दक्षिणाभ्यां पाणिभ्यां स्प्रष्टव्यौ। बौधायनोऽपि,—"श्रोत्रे संस्पृश्य मनः समाधायाधस्ताज्जान्वोरापद्भ्यामित्युपसंग्रहणम्"। कुर्य्यादिति शेषः। एतच्च गुरु-पत्नीनामपि कार्य्यम्। तथा च मनुः,—

"गुरुवत् प्रतिपूज्याः स्युः सवर्णा गुरु-योषितः ।
असवर्णास्तु सम्पूज्याः प्रत्युत्थानाभिभाषणैः ॥
भ्रातृभार्य्योपसंग्राह्या सवर्णाऽहन्यहन्यपि ।
विप्रोष्य तूपसंग्राह्या ज्ञाति-सम्बन्धि-योषितः"—इति ।

---

* गुर्व्वादौ तु पूर्व्वमुपसंग्रहणमाह,—इति मु० पुस्तके पाठः ।
† तद्गुरूणाञ्चाभिवादयेत,— इति मु० पुस्तके पाठः ।

एवमविशेषेणोपसंग्रहणे प्राप्ते क्वचिदपवादमाह स एव,—

"गुरु-पत्नी तु युवतिर्नाभिवाद्येह पादयोः।
पूर्ण-विंशति-वर्षेण गुण-दोषौ विजानता।
अभ्यञ्जनं स्नापनञ्च गात्रोत्सादनमेव च*।
गुरु-पत्न्या न कार्य्याणि केशानाञ्च प्रसाधनम्"—इति।

किन्तर्हि तत्र कर्त्तव्यमित्यपेक्षिते स एवाह,—

"कामन्तु गुरु-पत्नीनां युवतीनां युवा भुवि।
विधिवद्वन्दनं कुर्य्यादसावहमिति ब्रुवन्।
विप्रोष्य पाद-ग्रहणमन्वहञ्चाभिवादनम्।
गुरु-दारेषु कुर्व्वीत सतां धर्म्ममनुस्मरन्"—इति।

अभिवादने वर्ज्यानाह आपस्तम्बः,—"न सोपानद्वेष्टितशिरा अनवहिता† पाणिर्वाऽभिवादयीत"—इति।

शङ्खोऽपि,—"नोदकुम्भ-हस्तोऽभिवादयेत् न भैक्ष्यं चरन्न पुष्पान्न-हस्तो‡नाशुचिर्न जपन्न देव-पितृ-कार्य्यं कुर्व्वन् न शयानः"—इति।

आपस्तम्बोऽपि,—"तथा विषम-गताय गुरवे नाभिवाद्यं तथाऽप्रयताायाप्रयतश्च न प्रत्यभिवादयेत्§ प्रतिवयसः स्त्रियः"—इति।

तथाऽन्यत्र स एवाह,—

"समित्-पुष्प-कुशाज्याम्बु-मृदन्नाक्षत-पाणिकः।

---

* गात्रोद्वाहनमेव च,—इति शा० पुस्तके पाठः।

† अवहित,—इति मु० पुस्तके पाठः।

‡ न पुष्पहस्तो,—इति मु० पुस्तके पाठः।

§ न प्रत्यभिवदेत्,—इति मु० पुस्तके पाठः।

जपं होमञ्च कुर्व्वाणो नाभिवाद्यस्तथा द्विजः"—इति* ।
पाखण्डं पतितं व्रात्यं महापातकिनं शठम् ।
नास्तिकञ्च कृतघ्नञ्च नाभिवाद्यात्† कथञ्चन ॥
धावन्तञ्च प्रमत्तञ्च मूत्रोच्चारकृतं तथा ।
भुञ्जानमातुरं नार्हं नाभिवाद्यात् द्विजोत्तमः ॥
वमन्तं‡ जृम्भमाणञ्च कुर्व्वंतं दन्त-धावनम् ।
अभ्यक्त-शिरसञ्चैव स्नास्यन्तं नाभिवादयेत् ॥
स्रुक्-पाणिकमविज्ञातमशक्तं रिपुमातुरम् ।
योगिनञ्च तपः-सक्तं कनिष्ठं नाभिवादयेत्" ॥

शातातपोऽपि,—

"उदक्यां सूतिकां नारीं भर्त्तृघ्नीं गर्भ-घातिनीम् ।
अभिवाद्य द्विजोमोहात् त्रिरात्रेण तु शुद्ध्यति"§—इति ।

गुरोः पादोपसंग्रहणमित्युक्तं, तत्र कीदृशो गुरुरित्याशङ्कायामाह मनुः,—

"निषेकादीनि कर्म्माणि यः करोति यथाविधि ।
सम्भावयति चान्नेन स विप्रो गुरुरुच्यते" ॥

याज्ञवल्क्योऽपि,—

---

* 'इति' शब्दोऽत्राधिक इति प्रतिभाति, किन्तु सर्व्वेष्वेव पुस्तकेषु दृष्टत्वान्नत्यक्तः ।

† नाभिवादेत्,—इति शा० पुस्तके पाठः । एवं परत्र ।

‡ उन्मत्तं,—इति शा० पुस्तके पाठः ।

§ अहोरात्रेण शुध्यति,—इति मु० पुके पाठः ।

"स गुरुर्यः क्रियां कृत्वा वेदमस्मै प्रयच्छति"—इति।

अध्यापनं विप्र-विषयं, निषेकादि-कर्त्तुः पुर्व-साधारणम्। पितृ-व्यतिरिक्तानामौपचारिकं गुरुत्वमाह मनुः,—

"अल्पं वा बहु वा यस्य श्रुतस्योपकरोति यः।
तमपीह गुरुं विद्यात् श्रुतोपक्रियया तया"—इति।

हारीतोऽपि,—

"उपध्यायः पिता ज्येष्ठोभ्राता चैव महीपतिः।
मातुलः श्वशुरस्त्राता मातामह-पितामहौ॥
वर्ण-ज्येष्ठः पितृव्यश्च पुंस्येते गुरवः स्मृताः।
माता मातामही गुर्वी पितुर्मातुः सहोदराः।
श्वश्रूः पितामही ज्येष्ठा धात्री च गुरवः स्त्रियाम्"*—इति।

अत्र, पितृ-मातृ-ग्रहणं तद्वदेतेऽपि मान्याः,—इत्येतदर्थम्।

अतएवाह सएव,—

"अनुवर्त्तनमेतेषां मनोवाक्कायकर्म्मभिः"—इति।

व्यासोऽपि,—

"मातामहो मातुलश्च पितृव्यः श्वशुरो गुरुः।
पूर्वजः स्नातकश्चर्त्विङ्मान्यास्ते गुरुवत्सदा॥
मातृ-स्वसा मातुलानी श्वश्रूर्धात्री पितृ-स्वसा।
पितामही† पितृव्य-स्त्री गुरु-स्त्री मातृवच्चरेत्"—इति।

मनुरपि,—

* गुरुवत् स्त्रियः,—इति मु० पुस्तके पाठः।
† मातामही,—इति मु० पुस्तके पाठः।

"पितुर्भगिन्यां मातुश्च ज्यायस्याञ्च स्वसर्य्यपि।
मातृवद्वृत्तिमातिष्ठेन्माता ताभ्यो गरीयसी।
उपाध्यायान् दशाचार्य्य आचार्य्याणां शतं पिता।
सहस्रन्तु पितुर्माता गौरवेणातिरिच्यते"—इति।

यत्तु,—

"द्वौ गुरू पुरुषस्येह पिता माता च धर्म्मतः।
पिता गुरुतरस्तद्वन्माता गुरुतरा तथा।
तयोरपि पिता श्रेयान् वीज-प्राधान्य-दर्शनात्।
अभावे वीजिनोमाता तदभावे तु पूर्व्वजः"।

इति पुराण वचनम्। तन्निषेकादि-समस्त-संस्कार-पूर्व्वकाध्यापक-पितृ-विषयम्। अन्यथा, मातैव गरीयसीति वचनं विरुध्येत। तस्या-गरीयस्त्वमुपपादयति व्यासः,—

"मासान् दशोदरस्थं या धृत्वा शूलैः समाकुला।
ततोऽपि* विविधैर्दुःखैः प्रसूयेत विमूर्च्छिता।
प्राणैरपि प्रियान् पुत्रान् मन्यते सुत-वत्सला।
कस्तस्यानिष्कृतिं कर्त्तुं शक्तोवर्ष-शतैरपि"—इति।

"उपाध्यायान् दशाचार्य्यः"—इति यदुक्तं, तत्रोपाध्यायाचार्य्य-योर्लक्षणमाह मनुः,—

"एकदेशन्तु वेदस्य वेदाङ्गान्यथवा पुनः।
योऽध्यापयति वृत्त्यर्थमुपाध्यायः स उच्यते॥
उपनीय तु यः शिष्यं वेदमध्यापयेद्द्विजः।

* वेदना,—इति मु० पुस्तके पाठः।

सकल्पं सरहस्यञ्च तमाचार्य्यं प्रचक्षते"—इति ॥

आचार्य्योऽपि पितृमात्राद्यपेक्षया गरीयानेव ; तदाह सएव,—

"उत्पादक-ब्रह्मदात्रोर्गरीयान् ब्रह्मदः पिता ।

ब्रह्म-जन्म हि विप्रस्य प्रेत्य चेह च शाश्वतम्"—इति ॥

यस्तु बालोऽपि वृद्धमध्यापयति, सोऽपि तस्य गरीयानिति सएवाह,—

"बालोऽपि विप्रोवृद्धस्य पिता भवति मन्त्रदः ।

अध्यापयामास पितॄन् शिशुराङ्गिरसः कविः ॥

पुत्रका इति होवाच ज्ञानेन परिगृह्य तान् ।

ते तमर्थमपृच्छन्त देवानागत-मन्यवः ॥

देवाश्चैतान् समेत्योचुर्न्याय्यं वः शिशुरुक्तवान् ।

अज्ञोभवति वै बालः पिता भवति मन्त्रदः ॥

अज्ञं हि बालमित्याहुः पितेत्येव च मन्त्रदम् ।

न हायनैर्न पलितैर्न वृत्तेन* न बन्धुभिः ॥

ऋषयश्चक्रिरे धर्म्मं योऽनूचानः स नोमहान्"—इति ।

तथा च विष्णुः,—"बाले समान-वयसि अध्यापके गुरुवद्वर्त्तितव्यम्"—

इति । ज्येष्ठ-भ्रातर्य्यपि गुरुवद्वर्त्तितव्यमित्यभिहितं पुराणसारे,—

"ज्येष्ठोभ्राता पितृ-समो मृते पितरि भृगुसुग ।

कनिष्ठास्तं नमस्येरन् सर्व्वे छन्दानुवर्त्तिनः ।

तमेव चोपजीवेरन् यथैव पितरन्तथा"—इति ।

मनुरपि,—

"पितृवत् पालयेत् पुत्रान् ज्येष्ठोभ्राता यवीयसः ।

---

* वित्तेन,—इति मु० पुस्तके पाठः ।

पुत्रवच्चापि वर्त्तेरन् यथैव पितरं तथा"—इति ।

परम-गुरावपि तथेत्याह सएव,—

"गुरोर्गुरौ सन्निहिते गुरुवद्वृत्तिमाचरेत्"—इति ।

आचार्य्यानुज्ञामन्तरेण मातुलादीन् असमावृत्तो नाभिवादयेदित्याह सएव,—

"नचानिसृष्टोगुरुणा स्वान् गुरूनभिवादयेत्"—इति ।

समावृत्तस्य तु नानुज्ञाऽपेक्षा । तदाहापस्तम्बः,—"समावृत्तेन सर्व्वे गुरव उपसंग्राह्याः प्रोष्य च समागमे* आचार्य्य-प्राचार्य्य-सन्निपाते प्राचार्य्यमुपसंगृह्याचार्य्यमुपजिघृक्षेत्"—इति। अभिवादनं प्रशंसति सएव,—

"अभिवादन-शीलस्य नित्यं वृद्धोपसेविनः ।
चत्वारि तस्य वर्द्धन्ते ह्यायुः प्रज्ञा यशोबलम्"—इति ॥

॥०॥ इत्यभिवादन-प्रकरणम् ॥०॥

## अथ द्वितीयभाग-कृत्यमुच्यते† ।

तत्र दक्षः,—

"द्वितीये च तथा भागे वेदाभ्यासो विधीयते"—इति।

कूर्म्मपुराणम्,—

---

* समागते,—इति शा० स० पुस्तकयोः पाठः ।

† अथ द्वितीयभागकृत्यमुच्यते,—इत्यतः पूर्व्वं, वेदाभ्यासकालनिर्णयः—इत्यधिकं मु० पुस्तके ।

"वेदाभ्यासं ततः कुर्य्यात् प्रयत्नाच्छक्तितो द्विजः ।
जपेदध्यापयेच्छिष्यान् धारयेद्वै विचारयेत् ॥
अवेक्षेत च शास्त्राणि धर्म्मादीनि* द्विजोत्तम"—इति ।

वेदाभ्यासं प्रशंसति मनुः,—

"वेदमेव समभ्यस्येत् तपस्तप्त्वा द्विजोत्तमः ।
वेदाभ्यासोहि विप्रस्य तपः परमिहोच्यते ।
ऋषि-देव-मनुष्याणां वेदश्चक्षुः सनातनम्"—इति ।

व्यासोऽपि,—

"नान्योज्ञापयते धर्म्मं वेदादेव स निर्बभौ ।
तस्मात् सर्व्व-प्रयत्नेन धर्म्मार्थं वेदमाश्रयेत्"—इति ॥

याज्ञवल्क्योऽपि,—

"यज्ञानां तपसाञ्चैव शुभानाञ्चैव कर्म्मणाम् ।
वेदएव द्विजातीनां निश्श्रेयस-करः परः" ॥

तथा, वेद-विहीनस्य सर्व्व-क्रिया-वैफल्यं मनुर्दर्शयति,—

"यथा षण्ढोऽफलः स्त्रीषु यथा गौर्गवि चाफला ।
यथा चाज्ञेऽफलं दानं तथा विप्रोऽनृचोऽफलः"—इति ।

अस्मिन्नेव भागे कृत्यान्तरमाह गर्गः,—

"समित्-पुष्प-कुशादीनां स कालः समुदाहृतः"—इति ।

---

* धर्म्मादींश्च,—इति मु॰ पुस्तके पाठः ।

## अथ तृतीय-भाग-कर्त्तव्यम्*।

तत्र दक्षः,—

"तृतीयेच तथा भागे पोष्य--वर्गार्थ-साधनम्"—इति।

कूर्म्मपुराणम् —

"उपेयादीश्वरञ्चाथ योग-क्षेमार्थ-सिद्धये।

साधयेद्विविधानर्थान् कुटुम्बार्थं ततोद्विजः"—इति।

पोष्य-वर्गश्च दक्षेण दर्शितः,—

"माता पिता गुरुर्भार्य्या प्रजा दीनः समाश्रितः।

अभ्यागतोऽतिथिश्चाग्निः पोष्यवर्ग उदाहृतः"—इति।

एतच्च धन-साधनं यथावृत्ति कार्य्यम्। तथाऽऽह मनुः—

"यात्रा-मात्र-प्रसिद्ध्यर्थं स्वैः कर्म्मभिरगर्हितैः।

अक्लेशेन शरीरस्य कुर्वीत धन-सञ्चयम्"—इति।

अगर्हितानि कर्म्माणि अध्यापनादीनि। तानि च निरूपितानि। ननु, ब्राह्मणस्यैवेतानि कर्म्माणि न क्षत्रिय-विशोः। तदाह मनुः,—

"त्रयोधर्म्मा निवर्त्तेरन् ब्राह्मणात् क्षत्रियम् प्रति।

अध्यापनं याजनञ्च तृतीयश्च प्रतिग्रहः॥

वैश्यं प्रति तथैवेते निवर्त्तेरन्निति स्थितिः"—इति।

अतो न तयोरध्यापनादिरर्ज्जनोपायः। वाढं, अतएवोपायान्तरं तेनैवोक्तम्,—

"शस्त्रास्त्रभृत्त्वं क्षत्रस्य वणिक्-पशु-कृषिर्विशः"—इति।

वणिक् वाणिज्यं, पशुः पशु-पालनम्। याज्ञवल्क्योऽपि,—

* अस्मात् पूर्व्वं, 'अर्ज्जनप्रकरणम्'—इत्यधिकः पाठः मु० पुस्तके।

"प्रधानं क्षत्रिये कर्म्म प्रजानां परिपालनम् ।
कुसीद-कृषि-वाणिज्यं पाशुपाल्यं विशः स्मृतम्"—इति ।

उपायान्तराण्याह मनुः,—

"सप्त वित्तागमाधर्म्म्यादायोलाभः क्रयोजयः ।
प्रयोगः कर्म्मयोगश्च सत्-प्रतिग्रह एवच"—इति ।

दायोऽन्वयागतं धनं, लाभोनिधि-दर्शनम् । दाय-लाभ-क्रयाऽन्वयागतास्त्रयुणां, जयः क्षत्रियस्यैव । प्रयोगो वृद्ध्यार्थं धन-प्रदानम्, कर्म्मयोगः कृषि-वाणिज्यम् । प्रयोग-कर्म्मयोगौ वैश्यस्यैव । सत्-प्रतिग्रहो विप्रस्यैव । कूर्म्मपुराणेऽपि,—

"द्विविधस्तु गृही ज्ञेयः साधकश्चाप्यसाधकः ।
अध्यापनं याजनञ्च पूर्व्वस्याहुः प्रतिग्रहम् ।
शिलोञ्छेनाप्युपादद्याद् गृहस्थः साधकः स्मृतः ।
असाधकस्तु यः प्रोक्तो गृहस्थाश्रम-संस्थितः ॥
शिलोञ्छे तस्य कथिते द्वे वृत्ती परमर्षिभिः ।
अमृतेनापि जीवेत मृतेन प्रमृतेन वा ॥
अयाचितं स्यादमृतं मृतं भैक्षन्तु याचितम्"—इति ।

मनुरपि,—

"ऋतामृताभ्यां जीवेत मृतेन प्रमृतेन वा ।
सत्यानृताभ्यामपिवा न श्व-वृत्त्या कथञ्चन ॥
ऋतमुञ्छशिलं ज्ञेयममृतं स्यादयाचितम् ।
मृतन्तु याचितं प्रोक्तं प्रमृतं कर्षणं स्मृतम् ।
सत्यानृतन्तु वाणिज्यं तेन चैवापि जीव्यते ॥

सेवा श्व-वृत्तिर्विख्याता तस्मात्तां परिवर्ज्जयेत्"—इति।

पतित-परित्यक्तैककणोपादानमुञ्छः, शाल्यादेर्निपतित-परित्यक्त-वल्लरी-ग्रहणं शिलम्। याज्ञवल्क्योऽपि,—

"कुशूल-कुम्भी-धान्यो वा त्र्याहिकोऽश्वस्तनोऽपिवा।
जीवेद्वाऽपि शिलोञ्छेन श्रेयानेषां परः परः"—इति॥

कुशूलं कोष्ठकं; तद्भरित-धान्य-सञ्चेता कुशूल-धान्यः, त्र्यह-पर्य्याप्त-धान्य-सञ्चेता त्र्याहिकः, न श्वस्तन-चिन्ताऽप्यस्तीत्यश्वस्तनः सद्यः सम्पादक इत्यर्थः। एतेषां अश्वस्तनान्तानां वृत्तयोमनुनोक्ताः वेदितव्याः। तथाऽऽह,—

"षट्कर्म्मैकोभवत्येषां त्रिभिरन्यः प्रवर्त्तते।
द्वाभ्यामेकश्चतुर्थस्तु ब्रह्म-सत्रेण जीवति"—इति।

अयमर्थः;—एकः कुशूल-धान्योयाजनादि-षट्-कर्म्मा भवेत्, अन्यो द्वितीयः कुम्भी-धान्यो याजनाध्यापनप्रतिग्रहैर्वर्त्तेत, एकस्तृतीयस्त्र्याहिकः प्रतिग्रहेतराभ्यां, चतुर्थस्त्वश्वस्तनोब्रह्मसत्रेणाध्यापनेन जीवति,—इत्यर्थः। शूद्रवृत्तिस्तूशनसा दर्शिता,—

"शूद्रस्य द्विज-शुश्रूषा सर्व्व-शिल्पानि वाऽपिच।
विक्रयः सर्व्ववस्तूनां शूद्रकर्म्मेत्युदाहृतम्"—इति।

याज्ञवल्क्योऽपि,—

"शूद्रस्य द्विज-शुश्रूषा तयाऽजीवन् वणिग्भवेत्।
शिल्पैर्वा विविधैर्जीवेद् द्विजाति-हितमाचरन्"—इति।

अजीवन्निति छेदः। हारीतोऽपि,—"शूद्रस्य धर्म्मो द्विजाति-शुश्रूषाऽपवर्जनं कलत्रादि-पोषणं कर्षणं पशु-पालनं भारोद्वहन-पण्य-

व्यवहार-चित्रकर्म्म-नृत्य-गीत-वेणु-वीणा-मृदङ्ग-वादनानि"—इति।

अथ चतुर्थे भागे कर्त्तव्यमुच्यते। तत्र दक्षः,—

"चतुर्थे तु तथा भागे स्नानार्थं मृदमाहरेत्"—इति।

मध्याह्न-स्नान-विधिस्तु प्रसङ्गात् पूर्व्वमेव निरूपितः।

---

## अथ ब्रह्मयज्ञ-विधिः।

तस्य स्वरूपं तैत्तिरीय-ब्राह्मणे दर्शितम्,—"यत् स्वाध्यायमधीयीतैकामप्यृचं यजुः साम वा तत् ब्रह्मयज्ञः सन्तिष्ठते"—इति। लिङ्गपुराणेऽपि,—

"स्व-शाखाऽध्ययनं विप्र ब्रह्मयज्ञ इति स्मृतः"—इति।

तस्य कालमाह बृहस्पतिः,—

"स चार्वाक् तर्पणात् कार्य्यः पश्चाद्वा प्रातराहुतेः।

वैश्वदेवावसाने वा नान्यदा तु निमित्ततः"—इति।

अत्र, वैश्वदेव-शब्देन मनुष्ययज्ञान्तं कर्म्म विवक्ष्यते। यतः कूर्म्मपुराणेऽभिहितम्,—

"यदि स्यात्तर्पणादर्व्वाक् ब्रह्मयज्ञः कृतो न हि।

कृत्वा मनुष्य-यज्ञन्तु ततः स्वाध्यायमाचरेत्"—इति।

श्रुतिश्च दिग्देश-कालानाह,—"ब्रह्मयज्ञेन यक्ष्यमाणः प्राच्यां दिशि, ग्रामादच्छदिर्दर्श उदीच्यां प्रागुदीच्यां वोदितआदित्ये"—इति। अच्छदिर्दर्श इत्यनेन शब्देन देश-विशेषोलक्षितः। छदिर्गृहाच्छादनं तृण-कटादि, यत्र न दृश्यते तत्रेत्यर्थः। उदिते आदित्ये,

—इत्यनेन सूर्य्योदयात् प्राचीनं कालं निषेधयति, न तूदयानन्तर्य्यं विधीयते, तस्य होम-कालत्वात्। मनुरपि देशादीतिकर्त्तव्यतामाह,—

"अपां समीपे नियतो नैत्यिकं विधिमास्थितः।
सावित्रीमभ्यधीयीत गत्वाऽरण्यं समाहितः"—इति।

उपवीतादीतिकर्त्तव्यतां श्रुतिराह,—"दक्षिणत उपवीयोपविश्य हस्ताववनिज्य त्रिराचामेत् द्विःपरिमृज्य सकृदुपस्पृश्य शिरश्चक्षुषी नासिके श्रोत्रे हृदयमालभ्य"—इति। "दर्भाणां महदुपस्तीर्योपस्थं कृत्वा प्रागासीनः स्वाध्यायमधीयीत"—इति च। "दक्षिणोत्तरौ पाणी पादौ कृत्वा सपवित्रावोमिति प्रतिपद्यते"—इति च। "त्रीनेव प्रायुङ्क्त भूर्भुवः स्वर्" इति च। "अथ सावित्रीं गायत्रीं त्रिरन्वाह पच्छो-ऽर्द्धर्चशोऽनवानम्"—इति च। "ग्रामे मनसा स्वाध्यायमधीयीत दिवा नक्तञ्च"—इति च। "हस्तशौच आक्लेय उतारण्येबल उत वाचो-दतिष्ठन्नुत व्रजन्नुतासीन उत शयानोऽधीयीतैव स्वाध्यायम्"—इति च। "मध्यन्दिने प्रबलमधीयीत"—इति च। "नमो ब्रह्मणे—इति परिधानीयां त्रिरन्वाहाप उपस्पृश्य गृहानेति ततो यत्किञ्चिद्ददाति सा दक्षिणा"—इति च। दक्षिणतः प्रदक्षिणं कृत्वेत्यर्थः। तथाच योगियाज्ञवल्क्यः,—

"प्रदक्षिणं समावृत्य नमस्कृत्योपविश्य च।
दर्भेषु दर्भ-पाणिभ्यां संहताभ्यां कृताञ्जलिः॥
स्वाध्यायन्तु यथाशक्ति ब्रह्मयज्ञार्थमाचरेत्"—इति।

शौनकस्त्वितिकर्त्तव्यान्तरमाह,—

"प्राणायामैर्दग्ध-दोषः शुक्लाम्बर-धरः शुचिः।

यथाविध्युपस्पृश्याचम्य आरोहेद्दर्भ-संस्तरम् ॥
पवित्र-पाणिः कृत्वा तु उपस्थं दक्षिणोत्तरम्"—इति ।

उदाहृत-श्रुतौ, सकृदुपस्पृश्येत्यस्यानन्तरं, सव्यं पाणिं पादौ प्रोक्षेदित्यध्याहर्त्तव्यम्, उत्तरस्मिन् फल-वाक्ये तथाऽनुक्रमणात् । "यत् त्रिराचामेत्—इति, तेन ऋचः प्रीणाति, यद् द्विः परिमृजति तेन यजूंषि, यत् सकृदुपस्पृशति तेन सामानि, यत् सव्यं पाणिं पादौ प्रोक्षति यच्छिरश्चक्षुषी नासिके श्रोत्रे हृदयमालभते तेनाथर्वाङ्गिरसो ब्राह्मणानीतिहासान् पुराणानि कल्पान् गाथा नाराशंसीः प्रीणाति"—इति ।

दर्भाणामित्यादिश्रुत्यर्थः शौनकेन दर्शितः,—"प्राग्वोदग्वा ग्रामान्निष्क्रम्यापआप्लुत्य शुचौ देशे यज्ञोपवीत्याचम्याक्लिन्नवासा दर्भाणां महदुपस्तीर्य्य प्राक्कूलानान्तेषु प्राङ्मुख उपविश्योपस्थं कृत्वा दक्षिणोत्तरौ पाणी पादौ सन्धाय पवित्रवन्तौ द्यावापृथिव्योः सन्धिमीक्षमाणः संमील्य वा यथायुक्तमात्मानं मन्येत तथायुक्तोऽधीयीत स्वाध्यायं, मनसाधीयीत, उत वा दिवा नक्तं वा तिष्ठन् व्रजन्नासीनः शयानो वा" । सर्व्वथा स्वाध्यायमधीयतैव नत्वङ्गाशक्त्या प्रधानं परित्याज्यमित्यर्थः । ब्रह्मयज्ञे जप्यं आश्वमेधिके दर्शितम्,—

"वेदमादौ समारभ्य तथोपर्य्युपरि क्रमात् ।
यदधीतान्वहं शक्त्या तत् स्वाध्यायः प्रचक्षते ॥
ऋचं वाऽथ यजुर्वाऽपि सामाथर्वमथापि वा ।
इतिहास-पुराणानि यथाशक्ति न हापयेत्"—इति ।

याज्ञवल्क्योऽपि,—

"वेदाथर्व्वपुराणानि सेतिहासानि शक्तितः।

जपयज्ञ-प्रसिद्ध्यर्थं विद्यामाध्यात्मिकीं जपेत्"—इति।

ग्रहणाध्ययनवत् ब्रह्मयज्ञाध्ययनस्यानध्याय-दिनेषु परित्याग-प्राप्तौ मनुराह,—

"वेदोपकरणे चैव स्वाध्याये चैव नैत्यिके।

नानुरोधोऽस्त्यनध्याये होम-मन्त्रेषु चैव हि॥

नैत्यिके नास्त्यनध्यायो ब्रह्म-सत्रं हि तत् स्मृतम्।

ब्रह्माहुति-हुतं पुण्य-मनध्याय-वषट्कृतम्"—इति।

ब्रह्मैवाहुति-हूयन्तेन हुतम्। अधीयते,—इत्यनध्यायो याज्यादि-मन्त्र-समूहः, तेन* वषट्कारेण च सहितं हुतम्। यतोनास्त्यनध्यायः, अतएव श्रुतिरनध्याय-विशेषाननूद्य तेषु जपं प्रशशंस,—"यएवं विद्वान्मेघे वर्षति विद्योतमाने स्तनयत्यवस्फूर्ज्जति पवमाने वायावमावास्यायां स्वाध्यायमधीते तपएव तत् तप्यते तपोहि स्वाध्यायः"—इति।

तेष्वनध्यायेष्वल्पमेव पठनीयम्। तदाहापस्तम्बः—"अथ यदि वातोवायात् स्तनयेद्वा विद्योतते वा तयाऽवस्फूर्ज्जेदेकामृचमेकं वा यजुरेकं वा सामाभिव्याहरेत्"—इति। आत्म-देशयोरशुचित्वे ब्रह्मयज्ञोवर्ज्जनीयः। तथाच श्रुतिः,—"तस्य वा एतस्य यज्ञस्य द्वावनध्यायौ यदात्माऽशुचिर्यद्देशः"—इति। ब्रह्मयज्ञं प्रशंसति श्रुतिः, —"उत्तमं नाकमधिरोहति उत्तमः समानानां भवति यावन्तं ह वाइमां वित्तस्य पूर्णां ददत् स्वर्ग-लोकं जयति तावन्तं लोकं जयति

---

* तेन हुतेन,—इति शा० स० पुस्तकयोः पाठः।

भूयांसं चात्यय चाप पुनर्मृत्युं जयति ब्रह्मणः सायुज्यं गच्छति"— इति। याज्ञवल्क्योऽपि,—

"यं यं क्रतुमधीयीत तस्य तस्याप्नुयात् फलम्"—इति।

वित्त-पूर्ण-पृथिवी-दानस्य फलमश्नुते—इति।

॥०॥ इति ब्रह्मयज्ञ-प्रकरणम् ॥०॥

---

## अथ तर्पण-विधिः।

तत्र वशिष्ठः,—

"ऋक्-सामाथर्व-वेदोक्तान् जप्य-मन्त्रान् यजूंषि च।
जप्त्वा चैवं* ततः कुर्य्याद्देवर्षि-पितृ-तर्पणम्"—इति।

वृहस्पतिरपि,—

"ब्रह्मयज्ञ-प्रसिद्ध्यर्थं विद्याञ्चाध्यात्मिकीं जपेत्।
जप्त्वाऽथ प्रणवं वाऽपि† ततस्तर्पणमाचरेत्"—इति।

विष्णुपुराणेऽपि,—

"शुचि-वस्त्र-धरः स्नातो देवर्षि-पितृ-तर्पणम्।
तेषामेव हि तीर्थेन कुर्व्वीत सुसमाहितः॥
त्रिरपः‡ प्रीणनार्थाय देवानामपवर्ज्जयेत्।
ऋषीणां यथान्यायं सकृच्चापि प्रजापतेः॥
पितॄणां प्रीणनार्थाय त्रिरपः पृथिवीपते"—इति।

---

* जपित्वैवं,—इति मु० पुस्तके पाठः।
† चापि इति मु० पुस्तके पाठः।
‡ द्विरपः,—इति सो० शा० पुस्तकयोः पाठः।

व्यासः,—

"एकैकमञ्जलिं देवा द्वौ द्वौ तु सनकादयः* ।

अर्हन्ति† पितरस्त्रींस्त्रीन् स्त्रियश्चैकैकमञ्जलिम्"—इति ।

आग्नेयपुराणेऽपि,—

"प्रागग्रेषु सुरांस्तर्पेन्मनुष्यांश्चैव मध्यतः ।

पितॄंस्तु दक्षिणाग्रेषु चैक-द्वि-त्रि-जलाञ्जलीन्"—इति ।

अत्र, अञ्जलि-सङ्ख्या यथाशाखं व्यवतिष्ठते। यत्र शाखायां न सङ्ख्यानियमः श्रुतः, तत्र विकल्पः । तत्रैव ब्रह्मसूत्र-विन्यास-विशेषो-दर्शितः,—

"सव्येन दैव-कार्य्याणि वामेन पितृ-तर्पणम् ।

निवीतेन मनुष्याणां तर्पणं संविधीयते"—इति ।

सव्येनोपवीतेन, वामेन प्राचीनावीतेन,—इत्यर्थः । तथाच शङ्ख-लिखितौ,—"उभाभ्यामपि हस्ताभ्यां प्राङ्मुखो यज्ञोपवीती प्रागग्रैः कुशैर्देवता-तर्पणं दैव-तीर्थेन कुर्य्यात्"—इति । विष्णुरपि,—

"ततः कृत्वा निवीतन्तु यज्ञसूत्रमतन्द्रितः ।

प्राजापत्येन तीर्थेन मनुष्यांस्तर्पयेत् पृथक्"—इति ।

बौधायनः,—"अथ दक्षिणतः प्राचीनावीती पितॄन् स्वधानमस्तर्प-यामि"—इत्यादि । यत्तु,—

"उभाभ्यामपि हस्ताभ्यामुदकं यः प्रयच्छति ।

स मूढोनरकं याति कालसूत्रमवाक्शिराः"—

---

* सनकादिषु,—इति स० पुस्तके पाठः ।

† अश्नन्ति,—इति मु० पुस्तके पाठः ।

इति । व्याघ्रपाद-वचनं, तच्छ्राद्धादि-विषयम् । अतएव कार्ष्णाजिनिः,—

"श्राद्धे विवाह-काले च पाणिनैकेन दीयते ।
तर्पणे तूभयेनैव विधिरेष पुरातनः"—इति ।

एतच्च तर्पणं स्थलस्थेन नोदके कर्त्तव्यम् । तथाच गोभिलः,—

"नोदकेषु न पात्रेषु न क्रुद्धो नैकपाणिना ।
नोपतिष्ठति तत्तोयं यन्न भूमौ प्रदीयते"—इति ।

अतः स्थलस्थोभूमावेव तर्पणं कुर्व्वीत, न जलादाविति । तथाच विष्णुः,—

"स्थले स्थित्वा जले यस्तु प्रयच्छेदुदकं नरः ।
नोपतिष्ठति तद्वारि पितॄणां तन्निरर्थकम्"—इति ।

अत्र विशेषमाह हारीतः,—

"वसित्वा वसनं शुष्कं स्थले विस्तीर्ण-वर्हिषि ।
विधिज्ञस्तर्पणं कुर्य्यान्न पात्रेषु कदाचन ॥
पात्राद्वा जलमादाय शुभे पात्रान्तरे क्षिपेत् ।
जल-पूर्णेऽथवा गर्त्ते न स्थले तु विवर्हिषि ।
केश-भस्म-तुषाङ्गार-कण्टकास्थि-समाकुलम् ॥
भवेन्महीतलं यस्माद्वर्हिषाऽऽस्तरणं ततः"—इति ।

यत्तु कार्ष्णाजिनिनोक्तम्,—

"देवतानां पितॄणाञ्च जले दद्याज्जलाञ्जलिम्"—इति ।

तदशुचि-स्थल-विषयम् । तदाह विष्णुः,—

"यत्राशुचि स्थलं वा स्यादुदके देवता-पितॄन् ।
तर्पयेत्तु यथाकाममप्सु सर्व्वं प्रतिष्ठितम्"—इति ।

पात्र-विशेषमाह पितामहः,—

"हेम-रूप्यमयं पात्रं ताम्र-कांस्य-समुद्भवम्।

पितॄणां तर्पणे पात्रं मृण्मयन्तु परित्यजेत्"—इति॥

मरीचिः,—

"सौवर्णेन च पात्रेण ताम्र-रूप्यमयेन च*।

औडुम्बरेण विल्वेन† पितॄणां दत्तमक्षयम्"—इति।

रिक्त-हस्तेन न कुर्य्यादित्याह सएव,—

"विना रूप्य-सुवर्णेन विना ताम्र तिलैस्तथा‡।

विना मन्त्रैश्च दर्भैश्च पितॄणां नोपतिष्ठते"—इति।

स्मृत्यन्तरे च—

"खड्ग-मौक्तिक-हस्तेन कर्त्तव्यं पितृ-तर्पणम्।

मणि-काञ्चन-दर्भैर्व्वा न शून्येन§ कदाचन"—इति॥

न चात्र समुच्चयेनापि सम-विकल्प इत्यभिप्रेत्य मरीचिराह,—

"तिलानामप्यभावे तु सुवर्ण-रजतान्वितम्।

तदभावे निषिञ्चेत्तु दर्भैर्मन्त्रेण वा पुनः"—इति॥

तिल-ग्रहणे तु विशेषमाह योगियाज्ञवल्क्यः,—

"यद्युद्धृतं निषिञ्चेत्तु तिलान् संमिश्रयेज्जले।

अतोऽन्यथा तु सव्येन तिला ग्राह्या विचक्षणैः"—इति।

---

* ताम्रकांस्यमयेन वा,—इति मु० पुस्तके पाठः।

† खट्केन,—इति शा० पुस्तके पाठः।

‡ ताम्रमयैस्तथा,—इति मु० पुस्तके पाठः।

§ शुल्केण,—इति मु० पुस्तके पाठः।

एतद्रोमक-प्रदेशाभिप्रायम् । तथाच देवलः,—

"रोम-संस्थान् तिलान् कृत्वा यस्तु तर्पयते पितॄन्।
पितरस्तर्पितास्तेन रुधिरेण मलेन च"—इति।

वर्ण-भेदेन तिलानां विनियोग-विशेषं दर्शयति सएव,—

"शुक्लैस्तु तर्पयेद्देवान् मनुष्यान् शवलैस्तिलैः।
पितॄन् सन्तर्पयेत् कृष्णै स्तर्पयेत् सर्व्वथा द्विज"—इति।

कूर्म्मपुराणेऽपि, देवर्षि-पितृ-तर्पणे विशेषोदर्शितः,—

"देवान् ब्रह्मऋषींश्चैव तर्पयेदक्षतोदकैः।
पितॄन् भक्त्या तिलैः कृष्णैः स्व-सूत्रोक्त-विधानतः"—इति।

तिथ्यादि-विशेषेण तिल-तर्पणं निषेधयति,—

"सप्तम्यां रविवारे च गृहे* जन्मदिने तथा ।
भृत्य-पुत्र-कलत्रार्थी न कुर्य्यात्तिल-तर्पणम्"—इति।

पुराणेऽपि,—

"पक्षयोरुभयो राजन् सप्तम्यां निशि सन्ध्ययोः।
वित्त-पुत्र-कलत्रार्थी तिलान् पञ्चसु वर्ज्जयेत्"—इति।

बौधायनोऽपि,—

"न जीवत्-पितृकः कृष्णैस्तिलैस्तर्पणमाचरेत्।
सप्तम्यां रविवारे च जन्मर्क्षदिवसेषु च ॥
गृहे निषिद्धं सतिलं तर्पणं तद्वद्भिर्भवेत्।
विवाहे चोपनयने चौले सति यथाक्रमम्॥

---

* ग्रहे,—इति सो० स० शा० पुस्तकेषु पाठः। एवं परत्र।

वर्षमर्द्धं तदर्द्धञ्च वर्ज्जयेत् तिल-तर्पणम्।
तिथि-तीर्थ-विशेषेषु कार्य्यं प्रेतेषु सर्व्वदा"—इति।

तर्पणीयान् दर्शयति सत्यव्रतः,—

"कृत्वोपवीती देवेभ्योनिवीती च भवेत्ततः।
मनुष्यांस्तर्पयेद्भक्त्या ब्रह्म-पुत्रानृषींस्तथा।
अपसव्यं ततः कृत्वा सव्यं जान्वाच्य भूतले॥
दर्भपाणिस्तु विधिना प्रेतान् सन्तर्पयेत्ततः"॥

योगियाज्ञवल्क्यः,—

"ब्रह्माणं तर्पयेत् पूर्व्वं विष्णुं रुद्रं प्रजापतिम्।
वेदान् छन्दांसि देवांश्च ऋषींश्चैव तपोधनान्॥
आचार्य्यांश्चैव गन्धर्व्वानाचार्य्य-तनयांस्तथा।
संवत्सरं सावयवं देवीरप्सरसस्तथा॥
तथा देवान् नगान्नागान् सागरान् पर्व्वतानपि।
सरितोऽथ मनुष्यांश्च यक्षान् रक्षांसि चैव हि॥
पिशाचांश्च सुपर्णांश्च भूतान्यथ पशूंस्तथा।
वनस्पतीनोषधींश्च भूतग्रामांश्चतुर्विधान्॥
सव्यं जानुं ततोऽन्वाच्य पाणिभ्यां दक्षिणामुखः।
तल्लिङ्गैस्तर्पयेन्मन्त्रैः सर्व्वान् पितृगणांस्तथा॥
मातामहांश्च सततं श्रद्धया तर्पयेत् द्विज"—इति।

शौनकोऽपि,—"अग्निर्विष्णुः प्रजापतिः"—इत्यादि। यजुःशाखिनान्तु काण्डर्षि-तर्पणमुक्तम्,—

"अथ काण्ड-ऋषीनेतानुदकाञ्जलिभिः शुचिः।

अव्यग्रः* तर्पयेन्नित्यं मन्त्रेणैवाष्ट-नामभिः ॥

पितृ-तर्पणं प्रकृत्य पैठीनसिः,—

"अपसव्यं ततः कृत्वा स्थित्वा च पितृदिङ्मुखः ।
पितॄन् दिव्यानदिव्यांश्च पितृ-तीर्थेन तर्पयेत्"—इति ।

दिव्याः वसु-रुद्रादित्याः† अदिव्याः पित्रादयः । योगियाज्ञवल्क्यः,—

"वसून् रुद्रान् तथाऽऽदित्यान् नमस्कार-समन्वितान्"—इति ।

तर्पयेदिति शेषः । वस्वादीनां नामानि पैठीनसिना दर्शितानि,—

"ध्रुवोधर्म्मश्च‡ सोमश्च आपश्चैवानिलोनलः ।
प्रत्यूषश्च प्रभातश्च वसवोऽष्टौ प्रकीर्त्तिताः ।
अजैकपादहिर्ब्रघ्नो विरूपाक्षोऽथ रैवतः ॥
हरश्च बहुरूपश्च त्र्यम्बकश्च सुरेश्वरः ।
सावित्रश्च जयन्तश्च पिनाकी चापराजितः ।
एते रुद्राः समाख्याता एकादश सुरोत्तमाः ।
इन्द्रोधाता भगः पूषा मित्रोऽथ वरुणोऽर्य्यमा ॥
अहि§ विवस्वान् त्वष्टा च सविता विष्णुरेवच ।
एते वै द्वादशादित्या देवानां प्रवरामताः ॥
एतेच दिव्याः पितरः पूज्याः सर्व्वे-प्रयत्नतः" ।

ततः स्व-पित्रादींस्तर्पयेत् । तत्र प्रकारमाह पैठीनसिः,—

---

* व्यग्रस्तः,—इति शा० पुस्तके पाठः ।
† वसुरुद्रादयः,—इति मु० पुस्तके पाठ ।
‡ थमश्च,—इति मु० पुस्तके पाठः ।
§ अर्चि,—इति मु० पुस्तके पाठः ।

"स्व नाम-गोत्र-ग्रहणं पुरुषं पुरुषं प्रति ।
तिलोदकाञ्जलींस्त्रींस्त्रीनुत्तैरुच्चैर्विनिक्षिपेत्" ।

योगियाज्ञवल्क्योऽपि,—

"सवर्णेभ्योजलं देयं* नासवर्णेभ्यएवच ।
गोत्र-नाम-स्वधाकारैस्तर्पयेदनुपूर्व्वशः"—इति ।

नाम-ग्रहणेऽपि विशेषमाह आश्वलायनः†,—

"शर्म्मान्तं ब्राह्मणस्योक्तं वर्म्मान्तं क्षत्रियस्य च ।
गुप्तान्तं चैव वैश्यस्य दासान्तं शूद्रजन्मनः ॥
चतुर्णामपि वर्णानां पितॄणां पितृ-गोत्रतः ।
पितृ-गोत्रं कुमारीणां ऊढ़ानां भर्तृ-गोत्रतः"—इति ।

पितृ-तर्पणे क्रममाह सत्यव्रतः,—

"पितृभ्यः प्रत्यहं दद्यात्ततोमातृभ्य एवच ।
ततो मातामहानाञ्च पितृव्यस्य सुतस्य च"—इति ।

विष्णुपुराणेऽपि,—

"दद्यात् पैत्रेण तीर्थेन काममानन्यान् शृणुष्व मे ।
मात्रे प्रमात्रे तन्मात्रे गुरुपत्न्यै तथा नृप ।
गुरवे मातुलादीनां स्निग्ध-मित्राय भूभुज"—इति ।

हारीतोऽपि,—"पित्रादीन् मात्रादीन् मातामहादीन् पितृव्यांस्तत्पत्नीर्ज्येष्ठभ्रातॄंस्तत्पत्नीः मातुलादींस्तत्पत्नीः गुर्व्वाचार्य्योपाध्यायादीन् सुहृत्-सम्बन्धि-बान्धवान् द्रव्यान्नदातृपोषकारिणस्तत्पत्नीश्च तर्प-

* सवर्णेभ्योऽञ्जलिर्देयः,—इति मु॰ पुस्तके पाठः ।
† बोधायनः,—इति मु॰ पुस्तके पाठः ।

येत्"-इति । जीवपितृक-तर्पणे विशेषमाह योगियाज्ञवल्क्यः,—

"कव्यवाडनलः सोमो यमश्चैवार्य्यमा तथा ।
अग्निष्वात्ताः सोमपाश्च तथा बर्हिषदोऽपि च ।
यदि स्याज्जीवपितृकस्तान् विद्याच्च तथा पितॄन् ।
येभ्योवाऽपि पिता दद्यात्तेभ्योवाऽपि प्रदीयते ।
एतांश्चैव प्रमीतांश्च प्रमीत-पितृको द्विजः"—इति ।

तर्पयेदितिशेषः । अवमानाञ्जलिमाह कात्यायनः,—

"पितृवंश्या मातृवंश्या ये चान्ये पितरोजनाः ।
मत्तस्तूदकमर्हन्ति ये तांस्तांस्तर्पयाम्यहम्" ।

इत्यवसानाञ्जलिरिति । आदित्यपुराणेऽपि,—

"यत्र क्वचन संस्थानां क्षुत्तृष्णोपहतात्मनाम् ।
तेषां हि दत्तमक्षय्यमिदमस्तु तिलोदकम् ॥
ये मे कुले लुप्तपिण्डाः पुत्त्र-पौत्त्र-विवर्जिताः ।
तेषान्तु दत्तमक्षय्यमिदमस्तु तिलोदकम्"—इति ।

मत्स्यपुराणेऽपि,—

"येऽबान्धवा बान्धवा वा येऽन्यजन्मनि बान्धवाः ।
ते तृप्तिमखिलां यान्तु ये वा मत्तोऽम्बुवाञ्छिताः"—इति ।

विस्तरेण कर्तुमसमर्थस्य संक्षेपेण तर्पणमुक्तं विष्णुपुराणे,—

"आ-ब्रह्म-स्तम्ब-पर्य्यन्तं जगत्तृप्यत्विति ब्रुवन् ।
क्षिपेत् पयोऽञ्जलींस्त्रींस्तु कुर्य्यात् संक्षेपतर्पणम्"—इति ।

यम-तर्पणन्तु वृद्धमनुनोक्तम्,—

"प्रेतोत्सव-चतुर्दश्यां कार्य्यन्तु यम-तर्पणम् ।



कृष्णाङ्गार-चतुर्द्दश्यामपि कार्य्यं सदैव वा ॥
यमाय धर्म्म-राजाय मृत्यवे चान्तकाय च ।
वैवस्वताय कालाय सर्व्व-भूत-क्षयाय च ॥
औडुम्बराय दध्नाय नीलाय परमेष्ठिने ।
वृकोदराय चित्राय चित्रगुप्ताय ते नमः"—इति ।

नियमस्तु स्कन्दपुराणे निरूपितः,—

"दक्षिणाभिमुखोभूत्वा तिलैः सव्यं समाहितः ।
दैवतीर्थेन देवत्वात्तिलैः प्रेताधिपाय च"—इति ।

एवं कुर्व्वतः फलमाह यमः,—

"यत्र क्वचन नद्यां हि स्नात्वा कृष्णचतुर्द्दशीम् ।
सन्तर्प्य धर्म्मराजानं मुच्यते सर्व्वकिल्बिषैः"—इति ।

माघ-शुक्लाष्टम्यां भीष्मतर्पणं कुर्य्यात्तदाह व्यासः,—

"शुक्लाष्टम्यान्तु माघस्य दद्याद्भीष्माय यो जलम् ।
सम्वत्सरकृतं पापं तत्क्षणादेव नश्यति ॥
वैयाघ्रपद्य-गोत्राय साङ्कृति-प्रवराय च ।
गङ्गापुत्राय भीष्माय प्रदास्येऽहं तिलोदकम्* ।
अपुत्राय ददाम्येतत् सलिलं भीष्मवर्म्मणे"—इति ॥

तर्पण-प्रशंसा पुराणसारे दर्शिता,—

"एवं यः सर्व्वभूतानि तर्पयेदन्वहं द्विजः ।
स गच्छेत् परमं स्थानं तेजोमूर्त्तिमनामयम्"—इति ।

---

* 'अपुत्राय'—इत्यर्डानन्तरं, 'गङ्गापुत्राय'—इत्यर्द्धं दृश्यते मुद्रितातिरिक्त पुस्तकेषु ।

अकरणे प्रत्यवायः पुराणे दर्शितः,—

"देवतांश्च पितृंश्चैव मुनीन् व यो न तर्पयेत् ।
देवादीनामृणी भूत्वा नरकं स व्रजत्यधः"—इति ।

याज्ञवल्क्योऽपि,—

"नास्तिक्यभावाद्यस्तांस्तु न तर्पयति वै पितॄन् ।
पिबन्ति देह-निस्रावं पितरोऽस्य जलार्थिनः"—इति ।

हारीतोऽपि,—

"देवाश्च पितरश्चैव काङ्क्षन्ति सतिलाञ्जलिम्* ।
अदत्ते तु निराशास्ते प्रतियान्ति यथागतम्"—इति ।

कात्यायनोऽपि,—

"छायां यथेच्छेच्छरदातपार्त्तः
पयः पिपासुः क्षुधितोऽन्नमन्नम् ।
बालोजनित्रीं जननी च बालं
योषित् पुमांसं पुरुषश्च योषाम् ॥
तथा सर्व्वाणि भूतानि स्थावराणि चराणि च ।
विप्रादुदकमिच्छन्ति सर्व्वेऽप्युदक-काङ्क्षिणः ॥
तस्मात् सदैव कर्त्तव्यमकुर्व्वन्महतैनसा ।
युज्यते ब्राह्मणः कुर्व्वन् विश्वमेतद्बिभर्त्ति हि"—इति ।

अत्र पितृ-गाथा,—

"अपि नः स कुले भूयाद्योनोदद्याज्जलाञ्जलिम् ।
नदीषु बहुतोयासु शीतलासु विशेषतः"—इति ।

---

* सरितोजलम्,—इति शां पुस्तके पाठः ।

तर्पणानन्तरं वस्त्र-निष्पीडनं कर्त्तव्यम्। तदाह योगियाज्ञवल्क्यः,—

"यावद्देवानृषींश्चैव पितृंश्चापि न तर्पयेत्।
तावन्न पीडयेद्वस्त्रं योहि स्नातोभवेद्द्विजः॥
निष्पीडयति योविप्रः स्नान-वस्त्रमतर्प्य च*।
निराशाः पितरोयान्ति शापं दत्वा सुदारुणम्"—इति।

निष्पीडनन्तु स्थले कार्य्यम्। तदुक्तं स्मृत्यन्तरे,—

"वस्त्रनिष्पीडितं तोयं श्राद्धे चोच्छिष्टभोजिनाम्†।
भागधेयं श्रुतिः प्राह तस्मान्निष्पीडयेत् स्थले"—इति।

विष्णुपुराणे,—

"आचम्य च ततोदद्यात् सूर्य्याय सलिलाञ्जलिम्।
नमोविवस्वते ब्रह्मन् भास्वते विष्णुतेजसे।
जगत्-सवित्रे शुचये सवित्रे कर्म्मदायिने"—इति‡।

॥०॥ इति तर्पण-प्रकरणम् ॥०॥

---

## अथ देवार्च्चनम्।

इत्थं मूलवचनानुक्तानि तर्पणान्तानि कर्म्माणि निरूपितानि। अथ, मूलवचनोक्तं क्रम-प्राप्तं देवतार्च्चनं निरूप्यते। तत्र, नृसिंह-पुराणम्,—

---

* स्नानवस्त्रमतर्पणम्,—इति शा० स० पुस्तकयोः पाठः।

† श्राद्धेचोच्छिष्टभोजनम्, इति मु० पुस्तके पाठः।

‡ विष्णुपुराणे,—इत्यारभ्य, एतदन्तोग्रन्थः नास्ति मुद्रितातिरिक्त-पुस्तकेषु।

"जल-देवान् नमस्कृत्य ततोगच्छेद्गृहं बुधः।
पौरुषेण तु सूक्तेन ततोविष्णुं समर्च्चयेत्"—इति।

आग्नेयपुराणे,—

"मन्त्रैर्वैष्णव-रौद्रैस्तु सावित्रैः शाक्तिकैस्तथा*।
विष्णुं प्रजापतिं वाऽपि शिवं वा भास्करन्तथा॥
तल्लिङ्गैरर्च्चयेन्मन्त्रैः सर्व्वदेवान् समाहितः"—इति।

कूर्म्मपुराणेऽपि,—

"ब्रह्माणं शङ्करं सूर्य्यं तथैव मधुसूदनम्।
अन्यांश्चाभिमतान् देवान् भक्त्या चाक्रोधनोऽत्वरः॥
स्वैर्मन्त्रैरर्च्चयेन्नित्यं पत्रैः पुष्पैस्तथाऽम्बुभिः"—इति।

स्मृत्यन्तरे,—

"आदित्यमम्बिकां विष्णुं गणनाथं महेश्वरम्"—इत्यादि†।

यद्यपि, पूर्व्वं मूलवचन-व्याख्याने पूजनीयोदेव‡ एकएव,—इति महता प्रबन्धेन प्रपञ्चितं, तथापि दर्शन-भेदमाश्रित्य विष्णु-शङ्करादिभेदोपन्यासो§ न विरुध्यते। दर्शनभेदश्च पुराणसारे वर्णितः,—

"शैवञ्च वैष्णवं शाक्तं सौरं वैनायकन्तथा।
स्कान्दञ्च भक्तिमार्गस्य दर्शनानि षडेव हि"—इति॥

तत्र, वैष्णवदर्शनानुसारी पूजाक्रम आश्वमेधिके निरूपितः,—

---

* शाम्भवैस्तथा,—इति मु० पुस्तके पाठः।

† स्मृत्यन्तरे-इत्यादिरेतदन्तोग्रन्थः मुद्रितातिरिक्तपुस्तकेषु न दृश्यते।

‡ पूजनीयोमहादेव,—इति मु० पुस्तके पाठः।

§ विष्णुशङ्करादिभेदो,—इति मु० पुस्तके पाठः।

"शृणु पाण्डव तत्सर्व्वमर्चन-क्रममात्मनः।
स्थण्डिले पद्मकं कृत्वा चाष्टपत्रं सकर्णिकम्॥
अष्टाक्षर-विधानेन अथवा द्वादशाक्षरैः।
वैदिकैरथवा मन्त्रैर्मम सूक्तेन वा पुनः॥
स्थापितं मां ततस्तस्मिन्नर्चयीत विचक्षणः॥
पुरुषञ्च ततः सत्यमच्युतञ्च युधिष्ठिर।
अनिरुद्धञ्च मां प्राहुर्वैखानसविदोजनाः॥
अन्ये त्वेवं* विजानन्ति मां राजन् पाञ्चरात्रिकाः।
वासुदेवञ्च राजेन्द्र सङ्कर्षणमथापि वा॥
प्रद्युम्नञ्चानिरुद्धञ्च चतुर्मूर्त्तिं प्रचक्षते।
एताश्चान्याश्च राजेन्द्र संज्ञा-भेदेन मूर्त्तयः॥
विद्ध्यनर्थान्तरा एव† मामेवं चार्चयेद्बुधः"—इति।

आग्नेयेऽपि,—

"अर्चनं सम्प्रवक्ष्यामि विष्णोरमित-तेजसः।
यत्कृत्वा मुनयः सर्व्वे परं निर्वाणमाप्नुयुः॥
अप्स्वग्नौ हृदये सूर्य्ये स्थण्डिले प्रतिमासु च।
षट्स्वेतेषु हरेः सम्यगर्चनं मुनिभिः स्मृतम्॥
अग्नौ क्रियावतां देवो रवौ‡ देवो मनीषिणाम्।
प्रतिमास्वल्पबुद्धीनां योगिनां हृदये हरिः॥

---

* अन्येप्येवं,—इति मु० पुस्तके पाठः।
† विनाध्यात्मपरानेव,—इति मु० पुस्तके पाठः।
‡ दिवि,—इति आं पुस्तके पाठः।

तस्य सर्व्वगतत्वाच्च स्थण्डिले भावितात्मनाम्।
ऋग्वेदे पौरुषं सूक्तमर्च्चितं गुह्यमुत्तमम्।
आनुष्टुभस्य सूक्तस्य त्रैष्टुभं तस्य देवता॥
पुरुषोयोजगद्वीजमृषिर्नारायणः स्मृतः।
प्रथमां विन्यसेद्वामे द्वितीयां दक्षिणे करे॥
तृतीयां वामपादे तु चतुर्थीं दक्षिणे न्यसेत्।
पञ्चमं वामजानौ तु षष्ठीं वै दक्षिणे न्यसेत्॥
सप्तमीं वामकट्यान्तु अष्टमीं दक्षिणे तथा।
नवमीं नाभिमध्ये तु दशमीं हृदये तथा॥
एकादशीं कण्ठमध्ये द्वादशीं वामबाहुके।
त्रयोदशीं दक्षिणे तु तथाऽऽस्ये तु चतुर्दशीम्॥
अक्ष्णोः पञ्चदशीञ्चैव विन्यसेन्मूर्द्ध्नि षोडशीम्।
यथा देहे तथा देवे न्यासं कृत्वा विधानतः॥
न्यासेन तु भवेत् सोऽपि स्वयमेव जनार्द्दनः।
एवं न्यासविधिं कृत्वा पश्चाद्यागं समाचरेत्॥
पूर्व्वयाऽऽवाहयेद्देवमासनन्तु द्वितीयया।
पाद्यं तृतीयया चैव चतुर्थ्याऽर्घ्यं प्रदापयेत्॥
पञ्चम्याऽऽचमनं दद्यात् षष्ठ्या स्नानं समाचरेत्।
सप्तम्या तु ततोवासोह्यष्टम्या चोपवीतकम्॥
नवम्या गन्धलेपन्तु दशम्या पुष्पकन्तथा।
एकादश्या तथा धूपं द्वादश्या दीपमेवच॥
नैवेद्यन्तु त्रयोदश्या नमस्कारे चतुर्द्दशी।

प्रदक्षिणे पञ्चदशी व्यजने* षोड़शी तथा ॥
स्नाने वस्त्रे च नैवेद्ये दद्यादाचमनं तथा।
हुत्वा षोड़शभिर्मन्त्रैः षोड़शान्नस्य चाहुतीः॥
पुनः षोड़शभिर्मन्त्रैर्दद्यात् पुष्पाणि षोड़श।
तच सर्व्वं जपेद्भूयः पौरुषं सूक्तमुत्तमम् ॥
अचिरात्† सिद्धिमाप्नोति ह्येवमेव समाचरन्‡ ॥
ध्येयः सदा सवितृ-मण्डल-मध्य-वर्त्ती
नारायणः सरसिजासन-सन्निविष्टः।
केयूरवान् कनक§ कुण्डलवान् किरीटी
हारी हिरण्मय-वपुर्धृत-शङ्ख-चक्रः"—इति।

बौधायनोऽपि,—"अथातो महापुरुषस्याहरहः परिचर्य्या‖ विधिं व्याख्यास्यामः। स्नात्वा शुचिः शुचौ देशे गोमयेनोपलिप्य प्रतिकृतिं कृत्वा फल¶ पुष्पैर्यथालाभमर्चयेत्। सह पुष्पोदकेन महापुरुषमावाहयेत्। ॐभूः पुरुषमावाहयामि, ॐभुवः पुरुषमावाहयामि, ॐसुवः पुरुषमावाहयामि ॐ भूर्भुवःसुवः महापुरुषमावाहयामीत्यावाह्य, आयातु** भगवान् महापुरुष इत्येतेन स्वाग-

---

* शयने,—इति मु० पुस्तके पाठः।
† षण्मासात्,—इति मु० पुस्तके पाठः।
‡ समर्चयेत्,—इति मु० पुस्तके पाठः।
§ मकर,—इति मु० पुस्तके पाठः।
‖ परिचर्या,—इति शा० स० पुस्तकयोः पाठः।
¶ अक्षत,—इति मु० पुस्तके पाठः।
** पुरुषमावाहयामीत्यावाहयेत्,—इति स० सो० शा० पुस्तकेषु पाठः।

तेनाभिनन्दति; स्वागतमधुना भगवतो महापुरुषस्य, भगवते महापुरुषायैतदासन* मुपक्लृप्तमत्रास्यतां भगवन् महापुरुषेति, कूर्चं ददाति भगवतोऽयं कूर्चो दर्भमयस्त्रिवृद्धरितसुवर्णस्तं जुषस्वेत्यत्राधस्थानानि कल्पयत्यग्रतः शङ्खाय कल्पयामि, परतश्चक्राय कल्पयामि, दक्षिणतो गदायै कल्पयामि, वामतो वनमालायै कल्पयामि, पश्चिमतः श्रीवत्साय कल्पयामि, गरुत्मते कल्पयामि, उत्तरतः श्रियै-कल्पयामि, सरस्वत्यै कल्पयामि, पुष्ट्यै कल्पयामि, तुष्ट्यै कल्पयामि, अथ सावित्र्या पात्रमभिमन्त्र्य प्रक्षाल्य परिषिच्याप आनीय सह पवित्रेणादित्यं दर्शयेदोमिति स्नानं, त्रीणि पदा विचक्रमइति पाद्यं दद्यात्, प्रणवेनार्घ्यमथ व्याहृतिभिर्निर्माल्यं व्यपोह्योत्तरतोविष्वक्सेनाय नम इत्यथैनं स्नापयत्यापोहिष्ठामयोभुवः,—इति तिसृभिः, ब्रह्मयज्ञानं वामदेव्यर्चा यजुः पवित्रेणेत्येताभिः षड्भिः स्नापयित्वाऽथाद्भिस्तर्पयति; केशवं नारायणं माधवं गोविन्दं विष्णुं मधुसूदनं त्रिविक्रमं वामनं श्रीधरं हृषीकेशं पद्मनाभं दामोदरं तर्पयित्वाऽथैतानि † वस्त्रयज्ञोपवीताचमनीयान्युदकेन व्याहृतिभि र्दत्वा, व्याहृतिभिः प्रदक्षिणमुदकं परिषिच्येदं विष्णुर्विचक्रमइति गन्धं दद्यात्, तद्विष्णोः परमं पदमिति पुष्पं, इरावतीत्यक्षतान्, सावित्र्या धूपमुद्दीप्यस्वेति दीपं, देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णोहस्ताभ्यां भगवते महापुरुषाय जुष्टं चरुं निवेदयामीति नैवेद्य-

---

* स्वागतमधुना भगवतो महापुरुषस्यैतदासन,—इति मु० पुस्तके पाठः।

† केशवं नारायणमित्यादि दामोदरान्तं तर्पयित्वाथैतानि,—इति मु० पुस्तके पाठः।

अथ केशवादिनामभिर्द्वादश पुष्पाणि दद्यात्। शङ्खाय नमः, चक्राय नमः, गदायै नमः, वनमालायै नमः, श्रीवत्साय नमः, गरुत्मते नमः, श्रियै नमः, सरस्वत्यै नमः, पुष्ट्यै नमः, तुष्ट्यै नमः,—इत्यवशिष्टैर्गन्धमाल्यैः* ब्राह्मणानलङ्कृत्य अथैनं ऋग्यजुःसामभिः† स्तुवन् ध्रुवसूक्तं जपित्वा पुरुषसूक्तं वाऽन्यांश्च वैष्णवान्मन्त्रानित्येके। ॐभूर्भुवः सुवरोम् भगवते महापुरुषाय चरुमुद्वासयामीति चरुमुद्वास्योद्वासनकाले ॐभूः पुरुषमुद्वासयामि, ॐभुवः पुरुषमुद्वासयामि, ॐसुवः पुरुषमुद्वासयामि, ॐभूर्भुवःसुवः महापुरुषमुद्वासयामीत्युद्वास्य प्रयातु भगवान् महापुरुषोऽनेन हविषा तृप्तोहरिः पुनरागमनाय पुनः सन्दर्शनाय चेति। प्रतिमास्थानेनेष्वप्स्वग्न्यावाहन-विसर्ज्जन-वर्ज्जं‡ सर्व्वं समानं महत्स्वस्त्ययनमित्याचक्षते, महत्स्वस्त्ययनमित्याह भगवान् बौधायनः"—इति। कूर्म्मपुराणेऽपि,—

"न विष्ण्वाराधनात् पुण्यं विद्यते कर्म्म वैदिकम्।
तस्मादनादौ मध्यान्ते§ नित्यमाराधयेद्धरिम्।
तद्विष्णोरिति मन्त्रेण सूक्तेन पुरुषेण च।
नैताभ्यां सदृशोमन्त्रो वेदेषूक्तश्चतुर्ष्वपि"—इति।

एवं वैष्णवधर्मानुसारि-पूजा ज्ञातव्या।

"अथवा देवमीशानं भगवन्तं सनातनम्।

---

* गन्धपुष्पै,—इति मु॰ पुस्तके पाठः।

† ऋग्यजुःसामाथर्व्वभिः,—इति मु॰ पुस्तके पाठः।

‡ प्रतिमादिस्थानेष्वप्स्वग्न्यावाहनविसर्जनवर्जं,—इति मु॰पुस्तके पाठः।

§ तस्मादनादिमध्यान्तं,—इति शा॰ पुस्तके पाठः।

आराधयेत् महादेवं भाव-पूतो महेश्वरम् ।
मन्त्रेण रुद्र-गायत्र्या प्रणवेणाथवा पुनः ॥
ईशानेनाथवा रौद्रैस्त्र्यम्बकेन समाहितः ।
पुष्पैः पत्रैरथाद्भिर्वा चन्दनाद्यैर्महेश्वरम् ।
तथोंनमः शिवायेति मन्त्रेणानेन वा यजेत् ॥
नमस्कुर्य्यान्महादेवमृतं सत्यमितीश्वरम् ।
निवेदयीत चात्मानं यो ब्रह्माणमितीश्वरम् ॥
प्रदक्षिणं द्विजः कुर्य्यात् पञ्च ब्रह्माणि वा जपेत् ।
ध्यायीत देवमीशानं व्योम-मध्य-गतं शिवम्"—इति ।

बौधायनोऽपि,—"अथातो महादेवस्याहरहः परिचर्य्या-विधिं व्याख्यास्यामः । स्नात्वा शुचौ देशे गोमयेनोपलिप्य प्रतिकृतिं कृत्वाऽक्षत-पुष्पैर्यथालाभमर्च्चयेत् । सह पुष्पोदकेन महादेवमावाहयेत् । ॐभूर्महादेवमावाहयामि, ॐभूवो महादेवमावाहयामि, ॐसुवः महादेवमावाहयामि, ॐभूर्भुवःसुवः महादेवमावाहयामीत्यावाह्य, आयातु भगवन्महादेव इत्यथ स्वागतेनाभिनन्दति; स्वागतमधुना भगवते महादेवाय एतदासनमुपक्लृप्तमत्रास्यतां भगवन् महादेव इत्यत्र कूर्चं ददाति भगवतोऽयं कूर्चोदर्भमयस्त्रिवृद्धरितसुवर्णस्तं जुषस्वेत्यथ स्थानानि कल्पयत्यग्रतो विष्णवे कल्पयामि ब्राह्मणे कल्पयामि, दक्षिणतः स्कन्दाय कल्पयामि विनायकाय कल्पयामि, पश्चिमतः शूलाय कल्पयामि महाकालाय कल्पयामि, उत्तरतः उमायै कल्पयामि नन्दिकेश्वराय कल्पयामीति कल्पयित्वाऽथ सावित्र्या पात्रमभिमन्त्र्य प्रक्षाल्य त्रिरपः पवित्रमपआनीय सह पवित्रेणादित्यं

दर्शयेदोमिति स्नानं, पठितिरुद्रेण पाद्यं दद्यात्, प्रणवेनार्घ्यमथ व्याहृतिभिर्निर्माल्यं व्यपोह्योक्तरतखण्डेशाय*नम इत्यथैनं स्नापयित्वा आपोहिष्ठामयोभुवइति तिसृभिर्हिरण्यवर्णाः शुचयः पावकाइति चतसृभिः पवमानः सुवर्जन इत्यनुवाकेन स्नापयित्वा अद्भिस्तर्पयति महादेवं† तर्पयामि शर्व्वं देवं तर्पयामि ईशानं देवं तर्पयामि पशुपतिं देवं तर्पयामि रुद्रं देवं तर्पयामि उग्रं देवं तर्पयामि भीमं देवं तर्पयामि महान्तं देवं तर्पयामि इति तर्पयित्वाऽथैतानि वस्त्रयज्ञोपवीताचमनीयान्युदकेन व्याहृतभिर्दत्वा, व्याहृतिभिः प्रदक्षिणमुदकं परिषिच्य, नमस्ते रुद्र मन्यवइति गन्धं दद्यात्, सहस्राणि सहस्रशइति पुष्पं दद्यात्, ईशानं त्वा भुवनानामधिश्रियमित्यक्षतान् दद्यात्, सावित्र्या धूपमुद्दीप्यस्वेति दीपं देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पुष्णोहस्ताभ्यां भगवते महादेवाय जुष्टं चरुं निवेदयामीति नैवेद्यं, अथाष्टभिर्नामधेयैरष्टौ पुष्पाणि दद्यात्; भवाय देवाय नमः शर्वाय देवाय नमः ईशानाय देवाय नमः पशुपतये देवाय नमः रुद्राय देवाय नमः उग्राय देवाय नमः भीमाय देवाय नमः महते देवाय नमः विष्णवे नमः ब्रह्मणे नमः स्कन्दाय नमः विनायकाय नमः शूलाय नमः महाकालाय नमः उमायै नमः नन्दिकेश्वराय नमःइति चरुशेषेणाष्टभिर्नामधेयैरष्टाहुतीर्जुहोति भवाय देवाय स्वाहेत्यादिभिर्हुत्वाऽवशिष्टैर्गन्धमाल्यैर्ब्राह्मणानलंकृत्याथैनं ऋग्यजुःसामभिः स्तुवन्ति, सहस्राणि सहस्रशइत्यनुवाकं जपि-

* चण्डाय,—इति शा० पुस्तके पाठः।

† भवं देवं,—इति मु० पु के पाठः।

त्वाऽन्यांश्च रौद्रान् मन्त्रान्यथाशक्ति जपित्वा, ॐभूर्भुवःसुवरोमिति महादेवाय चरुमुद्वास्योद्वासनकाले* ॐभूः महादेवमुद्वासयामीति प्रतिमन्त्रं रुद्रमुद्वास्य†।

प्रयातु भगवानीशः सर्व्व-लोक-नमस्कृतः।
अनेन हविषा तृप्तः पुनरागमनाय च॥

पुनः सन्दर्शनाय वेति‡। प्रतिमा§ स्थानेष्वप्स्वग्नावावाहन-विसर्ज्जन-वर्ज्जं सर्व्वं समानं, महत् स्वस्त्ययनमित्याचचतइत्याह भगवान् बौधायनः"—इति। शिवार्चनं प्रशंसति नन्दिकेश्वरः,—

"यः प्रदद्याद् गवां लक्षं दोग्ध्रीणां वेद-पारगे।
एकाहमर्च्चयेल्लिङ्गं तस्य पुण्यं ततोऽधिकम्।
सकृत् पूजयते यस्तु भगवन्तमुमापतिम्।
अश्वमेधादधिकं फलं भवति भूसुराः"—इति।

निर्म्माल्य गन्धोऽपि धार्य्यः। "देवानभ्यर्च्य गन्धेन"—इत्यादि स्मृति विधानात्||। देवार्चनाकरणे दोषः कूर्म्मपुराणेऽभिहितः,—

"योमोहादथवाऽऽलस्यादकृत्वा देवतार्च्चनम्।
भुङ्क्ते, स याति नरकं सूकरेष्वपि जायते"—इति।

॥०॥ इति देवता-पूजा-प्रकरणम् ॥०॥

---

* भूर्भुवः स्वरोम् भगवते महादेवमुद्वासयामीत्यादिभिः रुद्रमुद्वासनकाले, —इति स० शा० पुस्तकयोः पाठः।

† प्रतिमन्त्रमिति नास्ति स० शा० सो० पुस्तकेषु।

‡ चेति,—इति शा० पुस्तके पाठः।

§ प्रतिमादि,—इति मु० पुस्तके पाठः।

|| निर्म्माल्यगन्धोऽपि,—इत्यादिः एतदन्तोग्रन्थो नास्ति मुद्रितातिरिक्त-पुस्तकेषु।

## अथ गुरु-पूजा-प्रकरणम्।

एवं मूलवचनोक्त-देवता-पूजनं निरूपितम्। 'देवतानाञ्च'—इति चकारेण गुरुं समुच्चिनोति। गुरोरपि देवतावत् पूजनीयत्वात्। अतएव श्रुतिः,—

"यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ।
तस्यैते कथिताह्यर्थाः प्रकाशन्ते महात्मनः"—इति।

शैवपुराणे,—

"योगुरुः स शिवः प्रोक्तो यः शिवः स च शङ्करः।
शिव-विद्या-गुरूणाञ्च भेदोनास्ति कथञ्चन॥
शिवे मन्त्रे गुरौ यस्य भावना सदृशी भवेत्।
भोगोमोक्षश्च सिद्धिश्च शीघ्रं तस्य भवेद्ध्रुवम्॥
वस्त्राभरणमाल्यानि शयनान्यासनानि च।
प्रियाणि चात्मनोयानि तानि देयानि वै गुरोः॥
तोषयेत्तं प्रयत्नेन मनसा कर्म्मणा गिरा"—इति।

मनुरपि,—

"इमं लोकं मातृ-भक्त्या पितृ-भक्त्यातु मध्यमम्।
गुरु-शुश्रूषया चैव ब्रह्म-लोकं समश्नुते॥
सर्व्वे तस्यादृताधर्मा यस्यैते त्रय आदृताः।
अनादृतास्तु यस्यैते सर्व्वास्तस्याफलाः क्रियाः॥
यावत् त्रयस्ते जीवेयुस्तावन्नान्यं समाचरेत्।
तेष्वेव नित्यं शुश्रूषां कुर्य्यात् प्रिय-हिते रतः"—इति।

॥०॥ इति गुरुपूजा-प्रकरणम् ॥०॥

## अथ वैश्वदेव-प्रकरणम् ।

पञ्चमभाग-कृत्यमाह दक्षः,—

"पञ्चमे च तथा भागे संविभागो यथाऽर्हतः ।

पितृ-देव मनुष्याणां कीटानां चोपदिश्यते"—इति ।

यद्यपि, 'आतिथ्यं वैश्वदेवञ्च'—इत्यातिथ्यस्य पूर्व्वभावित्वं मूलवचनोक्तं, तथापि वैश्वदेवस्य देवपूजाऽनन्तरभावित्वं नृसिंहपुराणेऽभिहितम्,—

"पौरुषेण च सूक्तेन ततोविष्णुं समर्च्चयेत् ।

वैश्वदेवं ततः कुर्य्याद्बलिकर्म्म तथैव च"—इति ॥

तत्र, 'ततः'—इति* पञ्चमी-श्रुत्या क्रमः प्रतीयते, मूलवचने तु पाठमात्रेण। पाठात्तत्-सन्निधिरूपाच्छ्रुतिर्बलीयसी,—इति† श्रुति-लिङ्ग-सूत्रे (मी० ३अ० ३पा० १४सू०) व्यवस्थापितम् । तस्माद्वैश्वदेवं प्रथमं कर्त्तव्यम् । एवञ्च सति, वेदपाठोऽप्यनुगृहीतोभवति;—"देवयज्ञः पितृयज्ञोभूतयज्ञो मनुष्ययज्ञो ब्रह्मयज्ञः"—इति । स्मार्त्ताच्च पाठाद्वैदिकः पाठोबलीयानिति विरोधाधिकरणे (मी० १अ० ३पा० २अ०) न्यायेनावगम्यते । तस्मादपि वैश्वदेवस्य प्राथम्यम् । तत्र, वैश्वदेवं विधत्ते व्यासः,—

"वैश्वदेवं प्रकुर्व्वीत स्व-शाखा-विहितं ततः ।

संस्कृतान्नैर्हि विविधैर्हविष्यव्यञ्जनान्वितैः‡ ॥

---

* ततस्ततइति,—इति मु० पुस्तके पाठः ।

† पाठान्तरनिरूपिका श्रुतिर्बलीयसीति,—इति मु० पुस्तके पाठः ।

‡ हविर्भिर्व्यञ्जनान्वितैः,—इति मु० पुस्तके पाठः ।

तेनैवाग्नेर्बलिं दद्याच्छेषमाप्लाव्य वारिणा।

कृत्वाऽपसव्यं स्वधया सर्व्वदक्षिणतो* हरेत्"—इति।

ततो देवार्च्चनानन्तरमित्यर्थः। नारायणोऽपि,—

"सभार्य्यस्तु शुचिः स्नातो विधिनाऽऽचम्य वाग्यतः।

प्रविश्य सुसमिद्धेऽग्नौ वैश्वदेवं समाचरेत्"—इति।

कूर्म्मपुराणेऽपि,—

"शालाग्नौ लौकिके वाऽथ जले भूम्यामथापि वा।

वैश्वदेवस्तु कर्त्तव्यो देवयज्ञः स वै स्मृतः॥

यदि स्याल्लौकिके पाकः ततोऽन्नं तत्र हूयते†।

शालाग्नौ तु पचेदन्नं‡ विधिरेष सनातनः"—इति।

अङ्गिराः,—

"शालाग्नौ वा पचेदन्नं लौकिके वाऽपि नित्यशः।

यस्मिन्नग्नौ पचेदन्नं तस्मिन् होमो विधीयते"—इति।

शातातपोऽपि,—

"लौकिके वैदिके वाऽपि हुतोत्सृष्टे जले क्षितौ।

वैश्वदेवस्तु कर्त्तव्यः पञ्चसूनाऽपनुत्तये"—इति।

सूनाः पञ्च दर्शयति यमः,—

"पञ्च सूना गृहस्थस्य वर्त्तन्तेऽहरहः सदा।

कण्डनी§ पेषणी चुल्ली जलकुम्भ उपस्करः।

---

* सर्व्वं दक्षिणतो,—इति मु० पुस्तके पाठः।

† कारयेत्,—इति शा० स० पुस्तकयोः पाठः।

‡ शालाग्नौ तत्र वै दत्तं,—इति शा० स० पुस्तकयोः पाठः।

§ खण्डिनी,—इति मु० पुस्तके पाठः। एवं परत्र।

एतानि वाहयन् विप्रो बध्यते वै मुहुर्मुहुः।
एतासां पावनार्थाय पञ्च यज्ञाः प्रकीर्त्तिताः”—इति।

सूना हिंसा-स्थानानि। कण्डनी मुषलोलूखलादिः। पेषणी दृषदुपलादिः। चुल्ली पाक-स्थानम्। जलकुम्भः उदकस्थानम्। उपस्करः शूर्पादिः। अवस्करः,—इति पाठे, मार्ज्जन्यादिर्द्रष्टव्यः। एताः सूनाः स्वस्वकार्य्यं प्रापयन् पापेन युज्यते,—इत्यर्थः। तच्च काल-द्वयेऽपि कर्त्तव्यमित्याह कात्यायनः,—

“सायं प्रातर्वैश्वदेवः कर्त्तव्यो बलिकर्म्म च।
अनश्नताऽपि सततमन्यथा किल्बिषी भवेत्”—इति।

होम-प्रकारमाहाश्वलायनः,-“अथ सायं प्रातः सिद्धस्य हविष्यस्य जुहुयादग्निहोत्र-देवताभ्यः सोमाय वनस्पतये अग्नीषोमाभ्यामिन्द्राग्निभ्यां द्यावापृथिवीभ्यां धन्वन्तरये इन्द्राय विश्वेभ्योदेवेभ्यो ब्रह्मणे स्वाहा”—इति। हविष्यस्येति हविर्योग्यस्येत्यर्थः। अग्निहोत्र-देवताभ्यः सूर्य्याग्निप्रजापतिभ्य इत्यर्थः। आपस्तम्बोऽपि,—“औपासने पचने वा षड्भिराद्यैः प्रतिमन्त्रं हस्तेन जुहुयादुभयतः परिषेचनं यथा पुरस्तात्”-इति। आद्यैरनुवाकादावुक्तैरग्नये स्वाहा इत्यादिभिः स्विष्टकृदन्तैः। उभयतः कर्म्मादावन्ते चेत्यर्थः। कात्यायनोऽपि,— “वैश्वदेवादन्नात्पर्युक्ष्य स्वाहाकारैर्जुहुयात्; ब्रह्मणे प्रजापतये गृह्येभ्यः* काश्यपायानुमतये”—इति। अत्र यथास्वशाखं व्यवस्था। होतव्यान्न-संस्कारमाह, व्यासः,—

---

* गृहेभ्यः,—इति मु० पुस्तके पाठः।

"जुहुयात् सर्पिषाऽभ्यक्तं तैल-क्षार-विवर्ज्जितम्।
दध्यक्तं पयसाऽक्तं वा तदभावेऽम्बुनाऽपि वा"—इति॥

द्रव्यानुकल्पश्चतुर्विंशतिमते दर्शितः,—

"अलाभे येन केनापि फलशाकोदकादिभिः।
पयोदधिघृतैः कुर्य्याद्वैश्वदेवं स्रुवेण तु।
हस्तेनान्नादिभिः कुर्य्यादद्भिरञ्जलिना जले"-इति।

यदद्यते तेनैव होतव्यम्। तदुक्तं गृह्यपरिशिष्टे,—

"शाकं वा यदि वा पत्रं मूलं वा यदि वा फलम्।
सङ्कल्पयेद्यदाहारस्तेनैव जुहुयादपि"-इति।

क्षार-लवण-परान्न-संसृष्टेन हविष्येन* होमोऽग्नौ न कार्य्यः, किन्तूष्णं भस्माग्न्यायतनानुत्तरतोऽपोह्य तस्मिन् होतव्यम्। तदाहापस्तम्बः,— "न क्षार-लवण-होमोविद्यते, तथा परान्न-संसृष्टस्य हविष्यस्य† होमः, उदीचीनमुष्णं भस्मापोह्य तस्मिन् जुहुयात्तद्धुतमहुतं चाग्नौ भवति"—इति। परिशिष्टेऽपि,—

"उत्तानेन तु हस्तेन ह्यङ्गुष्ठाग्रेण पीड़ितम्।
संहताङ्गुलिपाणिस्तु वाग्यतो जुहुयाद्धविः"—इति।

अनग्निकस्य वैश्वदेवे विशेषमाह वृद्धवशिष्ठः,—

"अनग्निकस्तु योविप्रः सोऽन्नं व्याहृतिभिः स्वयम्।
हुत्वा शाकल-मन्त्रैश्च शिष्टं काक-वलिं हरेत्"—इति।

---

* संसृष्टेनाहविष्येण,—इति स० सो० शा० पुस्तकेषु पाठः।
† संसृष्टस्याहविष्यस्य,—इति स० सो० शा० पुस्तकेषु पाठः।

देवकृतस्यैनस इत्याद्याः शाकलमन्त्राः । विष्णुरपि,—

"अन्नं व्याहृतिभिर्हुत्वा हुत्वा मन्त्रैश्च शाकलैः ।
प्रजापतेर्हविर्हुत्वा पूजयेदतिथिं ततः"—इति ।

भूतयज्ञः कूर्म्मपुराणे दर्शितः,—

"देवेभ्यस्तु हुतादन्नाच्छेषाद्भूत-बलिं हरेत् ।
भूतयज्ञः सवै प्रोक्तो भूतिदः सर्व्वदेहिनाम्"—इति ।

हारीतोऽपि,—"वास्तुपाल-भूतेभ्यो बलिहरणं भूतयज्ञः"—इति ।

कात्यायनोऽपि,—

"उद्धृत्य हविषाऽऽषिच्य हविष्येण घृतादिना ।
स्व-शाखा-विधिना हुत्वा तच्छेषेण बलिं हरेत्"—इति ।

गौण-कर्त्तृनाहात्रिः,—

"पुत्त्रोभ्राताऽथवा ऋत्विक् शिष्यः श्वशुर-मातुलाः ।
पत्नी-श्रोत्रिय-याज्याश्च दृष्टास्तु बलिकर्म्मणि"—इति ।

गृहे कर्त्रन्तराभावे प्रवसता स्वयमेव कर्त्तव्यमित्याह बौधायनः,—

"प्रवासं गच्छतोयस्य गृहे कर्त्ता न विद्यते ।
पञ्चानां महतामेषां स यज्ञैः सह गच्छति"—इति ।

बलि-हरण-प्रकारमाह शौनकः,—"अथ बलिहरणमेताभ्यश्चैव देवताभ्योऽद्भ्य ओषधिवनस्पतिभ्यो गृहाय गृहदेवताभ्यो वास्तुदेवताभ्य इन्द्रायेन्द्रपुरुषेभ्योयमाय यमपुरुषेभ्यो वरुणाय वरुणपुरुषेभ्यः सोमाय सोमपुरुषेभ्यः,—इति प्रतिदिशं, ब्रह्मणे ब्रह्मपुरुषेभ्यः,—इति मध्ये, विश्वेभ्योदेवेभ्यः सर्व्वेभ्योभूतेभ्यो दिवाचारिभ्यः,—इति दिवा, नक्तं चारिभ्यः,—इति नक्तं, रक्षोभ्यः,—इति उत्तरतः, स्वधा पितृभ्यः,—

इति प्राचीनावीती शेषं दक्षिणा* निनयेत्''—इति। आपस्तम्बोऽपि,—"अपरेणाग्निं सप्तमाष्टमाभ्यामुदगपवर्गमुदधान-संनिधौ नवमेन मध्येऽगारस्य दशमैकादशभ्यां प्रागपवर्गमुत्तरपूर्व्वदेशेऽगारस्योत्तरैश्चतुर्भिः शय्यादेशे कामलिङ्गेन देहल्यामन्तरिक्षलिङ्गेनोत्तरेणापिधान्यामुत्तरैर्ब्रह्मसदने† दक्षिणतः पितृलिङ्गेन प्राचीनावीती अवाचीनपाणिः कुर्य्यात्, रौद्र उत्तरतो यथा देवताभ्यस्तयोर्नाना परिषेचनं तयोर्धर्म्मभेदान्नक्तमेवोत्तरेण वैहायसम्''—इति। मार्कण्डेयोऽपि,—

"एवं गृहबलिं कृत्वा गृहे गृहपतिः शुचिः।
आप्यायनाय भूतानां कुर्य्यादुत्सर्गमादरात्''—इति।

कूर्म्मपुराणे च,—

"श्वभ्यश्च श्वपचेभ्यश्च पतितेभ्यस्तथैव च।
दद्याद्भूमौ बहिश्चान्नं पक्षिभ्योऽथ द्विजोत्तमः''—इति।

मनुरपि,—

"शुनाञ्च पतितानाञ्च श्वपचां पापरोगिणाम्।
वायसानां कृमीनाञ्च शनकैर्निर्वपेद्भुवि''—इति।

अन्नमिति शेषः। अन्नोत्सर्गमन्त्रो विष्णुपुराणे दर्शितः,—

"देवामनुष्याः पशवोवयांसि
सिद्धाः सयक्षोरगदैत्यसङ्घाः।
प्रेताः पिशाचास्तरवः समस्ता-
ये चान्नमिच्छंति मया प्रदत्तम्।

---

* दक्षिणायां,—इति मु० पुस्तके पाठः।
† मुत्तरे ब्रह्मसदने,—इति शा० स० पुस्तकयोः पाठः।

पिपीलिकाः कीटपतङ्गकाद्या-
बुभुक्षिताः कर्म्मनिबन्धबद्धाः।
प्रयान्तु ते तृप्तिमिदं मयाऽन्नं
तेभ्योविसृष्टं सुखिनोभवन्तु।
येषां न माता न पिता न बन्धु,-
र्नैवान्नसिद्धिर्न तथाऽन्नमस्ति।
तत् तृप्तयेऽन्नं भुवि दत्तमेतत्
प्रयान्तु तृप्तिं मुदिता भवन्तु।
भूतानि सर्व्वाणि तथाऽन्नमेतत्
अहञ्च विष्णुर्न ततोऽन्यदस्ति।
तस्मादिदं भूतहिताय भूत-
मन्नं प्रयच्छामि भवाय तेषाम्।
चतुर्द्दशो लोकगणो यएष
तत्र स्थिताये किल भूतसङ्घाः।
तृप्त्यर्थमन्नं हि मया विसृष्टं
तेषामिदं ते मुदिता भवन्तु।
इत्युच्चार्य्य नरोदद्यादन्नं श्रद्धा-समन्वितः।
भुवि भूतोपकाराय गृही सर्व्वाश्रयोयतः"—इति।

पितृयज्ञः श्रुत्या दर्शितः,—"यत् पितृभ्यः स्वधाकरोत्यप्यपस्तत्-पितृयज्ञः सन्तिष्ठते"—इति। कात्यायनोऽपि,—

"अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम्।
होमोदैवोबलिर्भौतो नृयज्ञोऽतिथि-पूजनम्॥

श्राद्धं वा पितृयज्ञः स्यात् पित्र्योबलिरथापि वा" - इति।

अत्र, यथास्वशाखं व्यवस्था। श्राद्धं चात्र नित्यश्राद्धम्। तथा कूर्म्मपुराणम्,—

"एकन्तु भोजयेद्विप्रं पितॄनुद्दिश्य सत्तमः।
नित्यश्राद्धं तदुद्दिष्टं पितृयज्ञोगति-प्रदः"—इति।

मार्कण्डेयोऽपि,—

"कुर्य्यादहरहः श्राद्धमन्नाद्येनोदकेन वा।
पितॄनुद्दिश्य विप्रांस्तु भोजयेद्विप्रमेव वा"इति।

नित्यश्राद्ध-प्रकारो मत्स्यपुराणे दर्शितः,—

"नित्यं तावत् प्रवक्ष्यामि अर्घ्यावाहन-वर्ज्जितम्।
अदैवं तद्विजानीयात् पार्व्वणं तद्धि कीर्त्तितम्"—इति।

प्रचेताः,—

"नावाहनाग्नौकरणं न पिण्डं न विसर्ज्जनम्"—इति।

व्यासोऽपि,—

"नित्यश्राद्धेऽर्घ्यगन्धाद्यै र्द्विजानभ्यर्च्य शक्तितः।
सर्व्वान् पितृगणान् सम्यक् सहैवोद्दिश्य भोजयेत्॥
आवाहन-स्वधाकार-पिण्डाग्नौकरणादिकम्।
ब्रह्मचर्य्यादि-नियमो विश्वेदेवास्तथैव च॥
नित्यश्राद्धे त्यजेदेतान् भोज्यमन्नं प्रकल्पयेत्।
दत्वा तु दक्षिणां शक्त्या नमस्कारैर्विसर्ज्जयेत्॥
एकमप्याशयेन्नित्यं षण्णामप्यन्वहं गृही"—इति।

कात्यायनः तत्रानुकल्पमाह,—

"एकमप्याशयेन्नित्यं पितृयज्ञार्थ-सिद्धये ।
अदैवं, नास्ति चेदन्योभोक्ता भोज्यमथापि वा ॥
अभ्युद्धृत्य यथाशक्ति किञ्चिदन्नं यथाविधि ।
पितृभ्यइदमित्युक्त्वा स्वधाकारमुदाहरेत्"*—इति ।

उद्धृतमन्नं ब्राह्मणाय दद्यात । तदुक्तं कूर्म्मपुराणे,—

"उद्धृत्य वा यथाशक्ति किञ्चिदन्नं समाहितः ।
वेद-तत्त्वार्थ-विदुषे द्विजायैवोपपादयेत्"—इति ।
"दद्यादहरहः श्राद्धमन्नाद्येनोदकेन वा ।
पयोमूलफलैर्वाऽपि पितृभ्यः प्रीतिमावहन्"† ।

तएते देवयज्ञ-भूतयज्ञ-पितृयज्ञास्त्रयोऽपि वैश्वदेव-शब्देनोच्यन्ते । यत्र विश्वेदेवाइज्यन्ते तद्वैश्वदेविकं कर्म्म । देवयज्ञे च, विश्वेभ्यो देवेभ्यः स्वाहेति पठितत्वात् तत्रैतन्नाम मुख्यम् । येषान्तु शाखायां भूतयज्ञेऽप्ययं मन्त्रोऽस्ति, तेषां तत्राप्येतन्मुख्यम् । पितृयज्ञे तु छत्रि-न्यायेन तन्नाम-प्रवृत्तिः । अथवा, मूलवचने, 'वैश्वदेवञ्च'—इति च कारेण पितृयज्ञादिकमनुक्तं समुच्चीयते ।

यद्यपि, "सायं प्रातः सिद्धस्य हविष्यस्य जुहुयात्"—इति वचनेन वैश्वदेवस्यान्न-संस्कारता प्रतीयते, तथापि पुरुषार्थत्वमेवा-भ्युपेयम् । "तानेतानहरहः कुर्व्वीत"—इति वाक्यशेषे तदवगमात् । नचोभयार्थत्वं शङ्कनीयं, परस्पर-विरोधात् । अन्न-संस्कारत्वे ह्यन्नस्य प्राधान्यं वैश्वदेवस्य गुणता, पुरुषार्थत्वे तु तद्विपर्य्ययः । तथा च

* तथाग्रे ब्राह्मणायेति दत्त्वा भुञ्जीत वाग्यतः,—इत्यर्द्धमधिकं मु०पुस्तके ।
† अयं श्लोको मुद्रितातिरिक्तपुस्तकेषु न दृश्यते ।

षति, एकस्यैव युगपत् प्राधान्यं गुणत्वं च विरुध्येयाताम्। तर्ह्यस्त्वन्न-संस्कारत्वैव, मा भूत् पुरुषार्थत्वमिति चेत्। तन्न,

"महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः"—इति

मनुना पुरुषार्थत्व-स्मरणात्। यत्तु,—"सिद्धस्य हविष्यस्य जुहुयात्" —इत्युदाहृतं, तदन्यथाप्युपपद्यते। तत्र, जुहुयादित्युत्पत्तिविधिः। सिद्धस्य हविष्यस्येति विनियोगविधिः। तानेतानहरहः कुर्व्वीतित्यधिकारः। किञ्च, अन्न-संस्कार-पक्षे प्रतिपाकमावृत्तिः प्रसज्येत, "प्रतिप्रधानं गुणावृत्तिः"—इति न्यायात्। तस्मात्, पुरुषार्थत्वमेव-न्याय्यम्। अतएव गृह्यपरिशिष्टेऽभिहितम्,—

"प्रोषितोऽप्यात्म-संस्कारं कुर्य्यादेवाविचारयन्"—इति।

गोभिलोऽपि,—"यद्येकस्मिन् काले व्रीहि-यवौ पच्येयातां; अन्यतरस्य हुत्वा कृतं मन्येत, यद्येकस्मिन् काले पुनः पुनरन्नं पच्येत; सकृदेव वलिं कुर्व्वीत, यद्येकस्मिन् काले बहुधाऽन्नं पच्यते; गृहपति-महानसादेवैतं वलिं कुर्व्वीत"—इति। अयमर्थः। नानाद्रव्यकान्न-पाके पुनःपुनरन्नपाकेऽपि बहूनामविभक्तानां भ्रात्रादीनां पृथक् पृथक् पाकेऽपि, एकस्मादेव द्रव्यात् सकृदेव गृहपति-पाकादेव होतव्यमिति।

॥०॥ इति वैश्वदेवप्रकरणम् ॥०॥

---

## अथातिथ्यापरनामको मनुष्ययज्ञोनिरूप्यते।

आतिथ्यस्य मनुष्ययज्ञत्वं कात्यायनेनोक्तम्,—

"अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम्।
होमोदैवो वलिर्भौतो नृयज्ञोऽतिथि-पूजनम्"—इति।

श्रुतिरपि,—"यद्ब्राह्मणेभ्योऽन्नं ददाति तन्मनुष्ययज्ञः सन्तिष्ठते"—इति। बौधायनोऽपि,—"अहरहः ब्राह्मणेभ्योऽन्नं दद्यान्मूल-फल-शाकानि वेत्यथैनं मनुष्ययज्ञं समाप्नोति"। कार्ष्णाजिनिरपि,—

"भिक्षां वा पुष्कलं वाऽपि हंतकारमथापि वा।
असम्भवे तथा* दद्यादुदपात्रमथापि वा"—इति।

कूर्म्मपुराणेऽपि,—

"हंतकारमथाग्रं वा भिक्षां वा शक्तितो द्विजः।
दद्यादतिथये नित्यं बुध्येत परमेश्वरम्"—इति।

भिक्षादि-लक्षणं मनुराह,—

"ग्राससमात्रं भवेद्भिक्षा अग्रं ग्राम-चतुष्टयम्।
अग्रं चतुर्गुणीकृत्य हन्तकारो विधीयते"—इति।

अतिथि-निरीक्षणाय गृहांगणे कंचित्कालन्तिष्ठेदित्युक्तं मार्कण्डेय-पुराणे,—

"आचम्य च ततः कुर्य्यात् प्राज्ञोद्वारावलोकनम्।
मुहूर्त्तस्याष्टमं भागमुदीक्ष्योह्यतिथिर्भवेत्"—इति।

विष्णुपुराणेपि,—

"ततो गोदोहमात्रं वा कालन्तिष्ठेद् गृहाङ्गणे।
अतिथि-ग्रहणार्थाय तदूर्द्धं वा यथेच्छया"—इति।

॥०॥ इति मनुष्ययज्ञः ॥०॥

---

* सदा,—इति मु० पुस्तके पाठः।

तदेवं, 'सन्ध्या स्नानम्'—इत्यस्मिन् मूलवचने स्नानादीन्यातिथ्यान्तानि षट् कर्म्माणि निरूपितानि।

न चात्र सप्तत्व-प्रतिभानात् षट्त्वं विरुद्धमिति शङ्कनीयं, सम्मार्ग-न्यायेनोद्देश्य-गतायाः सङ्ख्याया अविवक्षितत्वात्। यानि कर्म्माणि उद्देश्यगतानि, तानि दिनेदिने कर्त्तव्यानीति तेषां नित्यत्व-विधानात्। सम्मार्ग-न्यायस्तु तृतीयाध्याये प्रतिपादितः,—

ज्योतिष्टोमे, "दशापवित्रेण ग्रहं संमार्ष्टि"—इति श्रूयते। तत्र संशयः, किमेकस्य सम्मार्गः किंवा सर्व्वेषामिति। तदर्थं चिन्ता; किमत्रोद्देश्य-गता सङ्ख्या विवक्षिता उताविवक्षितेति। यथा "पशुना यजेत"—इत्यत्र एकवचन-श्रुति-बलादुपादेय-पशु-गता सङ्ख्या विवक्षिता, तथैव ग्रहमित्येकवचन-श्रुति-बलादुद्देश्य-गताऽपि सङ्ख्या विवक्षिता भवितुमर्हति। तस्मादेकस्यैव ग्रहस्य सम्मार्गे प्राप्ते ब्रूमः। पशोरनेनैव वचनेन याग-सम्बन्धावगमात् यागं प्रति पशोर्गुणी-भूतत्वाद्यावद्गुणं प्रधानावृत्त्यभावात् कियता पशुनेत्यवच्छेदकाका-ङ्क्षायां तदवच्छेदकत्वेनैकत्व-सङ्ख्या* सम्बध्यते,—इत्युपादेय-गतायाः सङ्ख्यायाः विवक्षितत्वं युक्तम्। ग्रहाणान्तु वाक्यान्तरेण याग-सम्बन्धा-वगमात् संमार्गवाक्ये द्वितीयाश्रुत्या संमार्गं प्रति ग्रहस्य प्राधान्याव-गमात् प्रतिप्रधानं गुणस्य संमार्गस्यावर्त्तनीयत्वात् कियन्तो ग्रहाः संमार्ज्जनीया इत्याकाङ्क्षाया अनुदयादुद्देश्य-ग्रह-गता सङ्ख्या न

---

* कियता पशुनेति परिच्छेदकाकाङ्क्षायां तत्परिच्छेदकत्वेनैकत्वसंख्या,—इति मु० पुस्तके पाठः।

विवक्षिता । तस्मात्, सर्व्वे ग्रहाः संमार्ज्जनीयाः । प्रकृतेऽप्युद्देश्य-सन्ध्यादि-गता षट्त्वसंख्या न विवक्षिता ।

अथोच्येत, अस्यां पराशरस्मृतौ वाक्यान्तरेण सन्ध्यादीनां निरूप्यभावादनेनैव वाक्येन नित्यत्व-विशिष्टानां तेषां उत्पादनादुपादेय-गतत्वेन पश्वेकत्ववदविवक्षितत्वमेव सङ्ख्याया युक्तमिति । एवं तर्हि, सन्ध्यासहितं स्नानं सन्ध्यास्नानमिति समासे सत्यङ्गेन स्नानेन सहितायाअङ्गीभूतायाः सन्ध्याया एकत्वेन परिगणनान्नात्र षट्संख्या विरुध्यते,—इति गमयितव्यम् ।

सन्ध्यादीनां नित्यत्वं चाग्निहोत्रादिवद्यावज्जीव-कर्त्तव्यतयाऽवगम्यते । जीवनवदधिकारित्वञ्च, दिने दिने इति वीप्सयाऽवगम्यते । यथा "वसन्ते वसन्ते ज्योतिषा यजेत"—इत्यत्र वीप्सया तदवगमस्तद्वत् ॥

आतिथ्यं वैश्वदेवं चेत्युक्तम् । तत्र, कीदृशोऽतिथिरित्याकाङ्क्षायामाह,—

**इष्टो वा यदि वा द्वेष्यो मूर्खः पण्डित एव वा ।**
**संप्राप्तो वैश्वदेवांते सोऽतिथिः स्वर्ग-संक्रमः ॥ ४० ॥**

इष्टः सख्यादिः । तस्य च भोजनीयत्वं याज्ञवल्क्येनोक्तम्,—

"भोजयेच्चागतान् काले सखि-सम्बन्धि-बान्धवान्"—इति ।

द्वेष्यस्य भोजनीयत्वं मनुना निन्दितम्,—

"काममभ्यर्च्चयेन्मित्रं नाभिरूपमपि त्वरिम् ।
द्विषता हि हविर्भुक्तं भवति प्रेत्य निष्फलम्"—इति ।

एवं मत्यरि-मित्र-विवेको यथा क्रियते, तथैवातिथावपि तत् प्रसक्तौ तन्निराकरणाय, 'इष्टो वा यदि वा द्वेष्यः'—इत्युक्तम्। मुर्खस्य भोजनीयत्वं स्मृत्यन्तरे निषिद्धम्;

"नष्टशौचे व्रतभ्रष्टे विप्रे वेद-विवर्ज्जिते।
दीयमानं रुदत्यन्नं किं मया दुष्कृतं कृतम्"—इति।

पण्डितस्य भोजनीयत्वं मनुना दर्शितम्,—

"श्रोत्रियायैव दयानि हव्यकव्यानि दातृभिः।
अर्हत्तमाय विप्राय तस्मै दत्तं महाफलम्"—इति।

एवं सति, श्राद्धादाविव वैश्वदेवान्तेऽपि पण्डित-मूर्ख-विवेक प्रसक्तौ तन्निराकरणायोक्तं, मूर्खः पण्डित एववा,—इति। वैश्वदेवान्तशब्देन देवयज्ञ-भूतयज्ञादीनामुपरि घटिका-पादमात्र-परिमितः कालो विवक्षितः। तथा च मार्कण्डेयपुराण-वचनमुदाहृतम्; 'मुहूर्त्तस्याष्टमं भागम्'—इति। अतएव, तस्मिन् काले समागमनमेवातिथि-लक्षणं, नेतरदित्यादि। संक्रम्यतेऽनेनेति संक्रमः, स्वर्गस्य संक्रमः स्वर्ग संक्रमः, स्वर्ग-प्राप्ति-हेतुरिति यावत्। तथाचाश्वमेधिके,—

"क्षुत्पिपासाश्रमार्त्ताय देशकालागताय च।
सत्कृत्यान्नं प्रदातव्यं यज्ञस्य फलमिच्छति"*—इति॥

तमेवातिथिं विशिनष्टि,—

**दूराध्वोपगतं† श्रान्तं वैश्वदेव उपस्थितम्।**
**अतिथिं तं विजानीयान्नातिथिः पूर्व्वमागतः॥४१॥**

---

* दूराध्वोपगतं,—इति ख्या॰ पुस्तके पाठः।
† [illegible], [illegible],—इति पाठो भवितुं युक्तः।

दूराध्वोपगतं ग्रामान्तरादागतम्। श्रान्तं क्षुत्-तृष्णा-परिपीड़ितम्। अतएव व्यासः,—

"आदूरादाश्रमं प्राप्तः* क्षुत्-तृष्णा-श्रम-कर्षितः।
यः, पूज्यतेऽतिथिः† सम्यगपूर्व्वक्रतुरेव‡ सः"—इति।

नातिथिः पूर्व्वमागत इति, तस्मिन्नेव दिनेऽतिथिर्नीत्तरेद्युरित्यर्थः। तथा च मनुः,—

"एकरात्रं हि निवसन्नतिथि र्ब्राह्मणः स्मृतः"—इति।

वैश्वदेव उपस्थितम्,—इति दिवसाभिप्रायम्। सायन्तु वैश्वदेव-काले कालान्तरे वा प्राप्तोऽतिथिरेव। तथा च मनुः,—

"अप्रणोद्योऽतिथिः सायं सूर्य्योढो गृहमेधिनाम्।
काले प्राप्तस्त्वकाले वा नास्यानश्नन् गृहे वसेत्"—इति।

सूर्य्योढ इति अस्तंगच्छता सूर्य्येण देशान्तर-गमनाशक्तिमुत्पाद्य गृहं प्रापित इत्यर्थः। याज्ञवल्क्योऽपि,—

"अप्रणोद्योऽतिथिः सायमपि वाग्भूतृणोदकैः"—इति।

प्रचेता अपि,—

"यः सायं वैश्वदेवान्ते सायं वा गृहमागतः।
देववत् पूजनीयोऽसौ सूर्य्योढः सोऽतिथिः स्मृतः"—इति॥

दूराध्वपद-व्यावर्त्त्यमाह,—

---

* अतिदूरागतः श्रान्तः,—इति मु० पुस्तके पाठः।

† यः पूज्यस्त्वातिथिः,—इति मु० पुस्तके पाठः।

‡ सम्यगयूपः क्रतुरेव,—इति मु० पुस्तके पाठः।

नैकग्रामीणमतिथिं न गृह्लीत कदाचन।
अनित्यमागतो यस्मात्तस्मादतिथिरुच्यते ॥४२॥

न विद्यते तिथिर्यस्यासावतिथिः। तथा च यमः,—

"तिथिपर्व्वोत्सवाः सर्व्वे त्यक्ता येन महात्मना।
सोऽतिथिः सर्व्वभूतानां शेषानभ्यागतान् विदुः"—इति।

मन्वादि-युगादि-प्रभृतिषु तिथि-विशेषेषु द्रव्य-लाभमुद्दिश्य येऽभ्यागच्छन्ति, तेऽभ्यागताः। तादृशं तिथि-विशेषमनपेच्य यदा कदाचित् क्षुत्तृष्णादि-पीड़या वा समागतोऽतिथिः। एवञ्च सत्येक-ग्रामीणः प्रतिनियतेषु तिथिविशेषेषु समागच्छतीति* नासावतिथिः। यस्तु ग्रामान्तरादकस्मादसङ्केतितो बुभुक्षुः सन्नागच्छति, सोऽनित्य-मागतः, सएवातिथित्वेन संगृह्यते, नेतरः। तथा च विष्णु-पुराणम्,—

"अज्ञात-कुल-नामानमन्यतः समुपागतम्†।
पूजयेदतिथिं सम्यक् नैक-ग्राम-निवासिनम्॥
अकिञ्चनमसंवन्धमन्य-देशादुपागतम्"—इति।

मार्कण्डेयोऽपि,—

"न मित्रमतिथिं कुर्य्यान्नैक-ग्राम-निवासिनम्।
अज्ञात-कुल-नामानं तत्काले समुपस्थितम्॥
बुभुक्षुमागतं श्रान्तं याचमानमकिञ्चनम्।

---

* यदागच्छतीति,—इति मु० पुस्तके पाठः।
† समुपस्थितम्,—इति मु० पुस्तके पाठः।

ब्राह्मणं प्राङ्गरतिथिं स पूज्यः* शक्तितोवुधैः"—इति ।

मनुरपि,—

"नैकग्रामीणमतिथिं विप्रं साङ्गतिकं तथा ।

उपस्थितं गृहे विद्याद्भार्य्या यत्राग्नयोऽपिवा"—इति ।

एकग्रामवासी अतिथि-धर्म्मेणागतोऽप्यतिथिर्न भवति । तथा, साङ्गतिकः सङ्गतेन चरः; सङ्गतपूर्व्वोद्दृष्टपूर्व्वः,—इति यावत् । नापि, यत्र क्वचन देशे अतिथि-धर्म्मेणागतोऽतिथिः । किन्तु, यस्मिन् स्वकीये परकीये वा देशे भार्य्याऽग्नयो भवन्ति, तत्रैवोपस्थितोऽतिथिर्भवति ॥ अतिथेः स्वरूपं निरूप्य तस्मिन्नागते सति यत्कर्त्तव्यं तदाह,—

**अतिथिं तत्र सम्प्राप्तं पूजयेत् स्वागतादिना ।**

**अर्घ्यासन-प्रदानेन पाद-प्रक्षालनेन च ॥४३॥**

**श्रद्धया चान्नदानेन प्रियप्रश्नोत्तरेण च ।**

**गच्छंतश्चानुयानेन† प्रीतिमुत्पादयेत् गृही ॥४४॥**

निगद-व्याख्यातमेतच्छ्लोकद्वयम् । तदेतत् ब्राह्मण-विषयम्, "यद्ब्राह्मणेभ्योऽन्नं ददाति"—इति, "अहरहः ब्राह्मणेभ्योऽन्नं ददाति" —इति श्रुति-स्मृतिभ्यामुदाहृतत्वात्‡ । क्षत्रियादयस्तु न ब्राह्मण-गृहे अतिथि-सत्कारमर्हंति, किन्तु भोजनमात्रम् । तथा च मनुः,—

---

* संपूज्यः,—इति ग्रा० पुस्तके पाठः ।

† गच्छतस्वानयानेन,—इति ग्रा० स० पुस्तकयोः पाठः ।

‡ श्रुतिस्मृत्योरुदाहृतत्वात्,—इति ग्रा० पुस्तके पाठः ।

"ब्राह्मणस्य त्वनतिथि गृहे राजन्य उच्यते।
वैश्य-शूद्रौ सखा* चैव ज्ञातयो गुरुरेव च॥
यदि त्वतिथि-धर्म्मेण क्षत्रियो गृहमाव्रजेत्।
भुक्तवत्सु च विप्रेषु कामं तमपि भोजयेत्॥
वैश्य-शूद्रावपि प्राप्तौ कुटुम्बेऽतिथि-धर्म्मिणौ।
भोजयेत् सह भृत्यैस्तावानृशंस्यं प्रकल्पयेत्॥
इतरानपि सख्यादीन् सम्प्रीत्या गृहमागतान्।
सत्कृत्यान्नं यथाशक्ति भोजयेत् सह भार्य्यया"—इति॥

आसनादि-दाने विशेषमाह सएव,—

"आसनावसथे शय्यामनुव्रज्यामुपासनम्।
उत्तमेषूत्तमं कुर्य्याद्धीने हीनं समे समम्"—इति॥

अतिथि-सत्काराकरणे प्रत्यवायमाह,—

**अतिथिर्यस्य भग्नाशो गृहात् प्रति निवर्त्तते।**
**पितरस्तस्य नाश्नन्ति दश वर्षाणि पञ्च च॥४५॥**
**काष्ठ-भार-सहस्रेण घृत-कुम्भ-शतेन च।**
**अतिथिर्यस्य भग्नाशस्तस्य होमो निरर्थकः॥४६॥**

अहमस्य गृहे भोक्ष्ये,—इत्याशया समागतोऽतिथिर्यदि भोजनमप्राप्य तद्गृहान्निवर्त्तेत, तदा गृहिणा क्रियमाणं पैतृकं निष्फलं स्यात्। तथा, वैदिकोऽपि विहितद्रव्याद्यङ्ग-सम्पन्नोऽपि निष्फलोभवेत्। तथा च मनुः,—

* तथा,—इति ग्रा० पुस्तके पाठः।

"त्रिलोकी चरतो नित्यं पञ्चाग्नीनपि जुह्वतः।
सर्वं सुकृतमादत्ते ब्राह्मणोऽनर्च्चितो वसन्"—इति।

आश्वमेधिकेऽपि,—

"साङ्गोपाङ्गांस्तथा वेदान् पठतीह दिने दिने।
न चातिथिं पूजयति वृथा स पठति द्विजः॥
पाकयज्ञैर्महायज्ञैः सोमसंस्थाभिरेव च।
ये यजन्ति न चार्चन्ति गृहेष्वतिथिमागतम्॥
तेषां यशोऽभिकामानां दत्तमिष्टञ्च यद्भवेत्।
वृथा भवति तत्सर्वमाशया हतया हतम्"—इति।

अत्र, सुकृतहान्यभिधानं दुष्कृतप्राप्तेरप्युपलक्षणम्। तथा च विष्णुः,—

"अतिथिर्यस्य भग्नाशो गृहस्थस्य तु गच्छति।
तस्मात् सुकृतमादाय दुष्कृतन्तु प्रयच्छति"—इति।

आश्वमेधिकेऽपि,—

"वैश्वदेवान्तिके प्राप्तमतिथिं यो न पूजयेत्।
स चाण्डालत्वमाप्नोति सद्य एव न संशयः॥
निर्व्वासयति यो विप्रं देशकालागतं गृहात्।
पतितस्तत्क्षणादेव जायते नात्र संशयः"—इति॥

अतिथि-सत्कारं प्रशंसति,—

**सुक्षेत्रे वापयेद्बीजं सुपात्रे निक्षिपेद्धनम्।**
**सुक्षेत्रे च सुपात्रे च ह्युप्तं तत् न विनश्यति॥४७॥**

यथा सुक्षेत्रोप्तबीजं न विनश्यति* किन्तु महते फलाय कल्पते,

---

* न जीर्य्यति,—इति मु० पुस्तके पाठः।

तथा सुपात्रेऽतिथौ दत्तमन्नादिकमक्षयफलमित्यर्थः*। तदाह मनुः,—

"नैव स्वयं तदश्नीयादतिथिं यन्न भोजयेत्।
धन्यं यशस्यमायुष्यं स्वर्ग्यं चातिथि-पूजनम्"—इति॥

आश्वमेधिकेऽपि,—

"पादाभ्यङ्गाम्बुदानैस्तु योऽतिथिं पूजयेन्नरः।
पूजितस्तेन राजेन्द्र, भवामीह न संशयः"—इति।

शातातपोऽपि,—

"स्वाध्यायेनाग्निहोत्रेण यज्ञेन तपसा तथा।
नावाप्नोति गृही लोकान् यथा त्वतिथि-पूजनात्"—इति॥

आतिथ्यकर्तुर्नियममाह,—

**न पृच्छेद्गोत्र-चरणे न स्वाध्यायं श्रुतं तथा।**
**हृदये कल्पयेद्देवं† सर्व्व-देवमयो‡ हि सः॥४८॥ इति।**

श्राद्धे त्वादावेव ब्राह्मणः परिक्षणीयः,—इति मनुना दर्शितम्,—

"दूरादेव परीक्षेत ब्राह्मणं वेद-पारगम्।
तीर्थं तद्धव्य-कव्यानां प्रदाने सोऽतिथिः स्मृतः"—इति।

यमेनापि,—

"पूर्व्वमेव परीक्षेत ब्राह्मणान् वेद-पार-गान्।
शरीर-प्रभवैर्दोषैर्विशुद्धान् चरित-व्रतान्"—इति।

---

* दत्तमन्नादिकं महाफलप्रदमित्यर्थः,—इति मु० पुस्तके पाठः।

† हृदयं कल्पयेत्तस्मिन्,—इति मु० मू० पुस्तके पाठः।

‡ सर्व्वदेवसमो,—इति शा० पुस्तके पाठः।

अतः श्राद्ध-न्यायेनातिथ्येऽपि कर्म्मणि गोत्रादि-परीक्षा-प्राप्तौ तत् निवार्य्यते। गोत्रं वंश-प्रवर्त्तक-महर्षि-सम्बन्धः। चरणमाचारः। शाखा-विशेषः स्वाध्यायः। श्रुतं व्याकरण-मीमांसादि। एतद्देश-नामादीनामुपलक्षणम्। अतएव यमः,—

"न पृच्छेद्गोत्र-चरणे देशं नाम कुलं श्रुतम्।
अध्वनोऽभ्यागतं विप्रं भोजनार्थमुपस्थितम्"—इति।

न केवलं गोत्र-प्रश्नादि-वर्जनं, किन्तर्हि देवता-बुद्धिरपि कर्त्तव्या। तदुक्तं शातातपेन,—

"चित्ते विभावयेत्तस्मिन् व्यासः स्वयमुपागतः"*—इति।

विष्णुपुराणेऽपि,—

"स्वाध्याय-गोत्र-चरणमपृष्ट्वा च तथा कुलम्।
हिरण्यगर्भ-बुद्ध्या तं मन्येताभ्यागतं गृही"—इति।

देवता-बुद्धि-विषयत्वे हेतुः सर्व्व-देवमयत्वम्। तच्च पुराणसारे दर्शितम्,—

"धाता प्रजापतिः शक्रोवह्निर्वसुगणोयमः।
प्रविश्यातिथिमेते वै† भुञ्जतेऽन्नं द्विजोत्तम"—इति।

गोत्रादि-प्रश्ने फलाभावो बौधायनेन दर्शितः,—

"देशं नाम कुलं विद्यां पृष्ट्वा योऽन्नं प्रयच्छति।
न स तत्फलमाप्नोति दत्वा स्वर्गं न गच्छति"—इति।

---

* व्यासं स्वयमुपस्थितम्,—इति मु० पुस्तके पाठः।
† प्रविश्यातिथिमेवैते,—इति मु० पुस्तके पाठः।

यथाऽऽतिथ्यकर्त्ता गोत्रादीन् न पृच्छेत्, तथाऽतिथिरपि न ब्रूयात्। तदाह मनुः,--

"न भोजनार्थं स्वे विप्रः कुल-गोत्रे निवेदयेत्।

भोजनार्थं हि ते शंसन् वान्ताशीत्युच्यते बुधैः"—इति॥

अतिथि-दृष्टान्तेन भिक्षुकयोर्यति-ब्रह्मचारिणोः पूज्यतामाह,—

**अपूर्वः सुव्रती विप्रो ह्यपूर्व्वश्चातिथिस्तथा।**

**वेदाभ्यासरतोनित्यं त्रयः पूज्या दिने दिने॥४९॥**

सुष्ठु व्रतं सुव्रतं मोक्षहेतुर्यतिधर्म्मः, सोऽस्यास्तीति सुव्रती यतिः। वेदाभ्यास-रतोब्रह्मचारी, तदर्थत्वात् तस्याश्रमस्य। तावुभौ प्रतिदिन-मपूर्व्वावतिथिवत् पूज्यावित्यर्थः।तथा च याज्ञवल्क्यः,—

"सत्कृत्य भिक्षवे भिक्षा दातव्या सुव्रताय च"—इति।

नृसिंहपुराणेऽपि*,—

"भिक्षाञ्च भिक्षवे दद्याद्विधिवद्ब्रह्मचारिणे†।

यत्पुण्यफलमाप्नोति गां दत्वा विधिवद्गुरोः॥

तत्पुण्यफलमाप्नोति भिक्षां दत्वा द्विजोगृही"-इति।

यमः,—

"सत्कृत्य भिक्षवे भिक्षां यः प्रयच्छति मानवः।

गो-प्रदान-समं पुण्यं तस्याह भगवान् यमः"—इति।

ब्रह्मचारिणं स्वस्तीति वाचयित्वा तद्धस्ते जलं प्रदाय भिक्षा-प्रदानं

---

* मनुरपि,—इति मु० पुस्तके पाठः।

† वनचारिणे,—इति शा० स० पुस्तकयोः पाठः।

कार्य्यम् । तदाह गौतमः,—"स्वस्तिवाच्य* भिक्षादानमपूर्व्वम्"—इति ॥

यति-ब्रह्मचारिणौ यदि वैश्वदेवान्ते समागच्छतस्तदाऽस्त्वेवं†, यदा तु वैश्वदेवात् पूर्व्वमागच्छतस्तदा कथमित्याह,—

> वैश्वदेवे तु संप्राप्ते भिक्षुके गृहमागते ।
> उद्धृत्य वैश्वदेवार्थं भिक्षुकन्तु‡ विसर्ज्जयेत् ॥५०॥

संप्राप्ते प्रसक्ते अननुष्ठिते सतीति यावत् । तथा च नृसिंहपुराणे,—

"अकृते वैश्वदेवे तु भिक्षुके गृहमागते"—इति ।

भिक्षुकन्तु विसर्ज्जयेत्, यावद्वैश्वदेवाद्युपयुक्तमन्नं, तावत् पृथक् कृत्वाऽवशिष्टादन्नाद्भिक्षां दत्वा भिक्षुकं विसर्ज्जयेत् ॥

अकरणे प्रत्यवायमाह,—

> यतिश्च ब्रह्मचारी च पक्वान्न-स्वामिनावुभौ ।
> तयोरन्नमदत्वा तु भुक्त्वा चान्द्रायणञ्चरेत् ॥५१॥

चान्द्रायणस्य लक्षणं वक्ष्यामः प्रायश्चित्त-प्रकरणे§ । प्रायश्चित्त-विधानात् प्रत्यवायोऽवगम्यते । तयोः पक्वान्न-स्वामित्वादन्नादाने प्रत्यवायउपपन्नः । अतएव पुराणेऽपि,—

"अकृत्वाऽग्निंसन्तर्प्य तपस्विनमुपस्थितम् ।

---

* स्वस्तीतिवाच्यं,—इति मु० पुस्तके पाठः ।

† समागतौ तदात्वेवं,—इति मु० पुस्तके पाठः ।

‡ भिक्षां दत्त्वा,—इति ग्रा० पुस्तके पाठः ।

§ प्रायश्चित्तप्रकरणे,—इति नास्ति मुद्रितातिरिक्तपुस्तकेषु ।

अश्नित्वा तु परे लोके श्वानि मांसानि खादयेत्''—इति ॥

बहुषु भिक्षुकेषु आगतेष्वशक्तेन किं कर्त्तव्यमित्याशङ्क्याह,—

दद्याच्च भिक्षा-त्रितयं परिव्राड्ब्रह्मचारिणाम्।
इच्छया च ततोदद्याद्विभवे* सत्यवारितम्† ॥ ५२ ॥

निगद-व्याख्यातमेतत्। यथाविभवं भिक्षा-दानं कूर्म्मपुराणे दर्शितम्,—

"भिक्षां वै भिक्षवे दद्यात् विधिवद्ब्रह्मचारिणे।
दद्यादन्नं यथाशक्ति ह्यर्थिभ्योलोभवर्ज्जितः''—इति ॥

यति-भिक्षा-प्रदाने‡ नियममाह,—

यति-हस्ते जलं दद्याद्भैक्षं दद्यात् पुनर्ज्जलम्।
तद्भैक्षं मेरुणा तुल्यं तज्जलं सागरोपमम् ॥ ५३ ॥

स्पष्टमेतत्। तच्च भैक्षं सति विभवे बहुलं दातव्यम्। तदुक्तं ब्रह्मपुराणे,—

"यः पात्र-पूरणीं भिक्षां यतिभ्यः संप्रयच्छति।
विमुक्तः सर्व्वपापेभ्यो नासौ दुर्गतिमाप्नुयात्''—इति ॥

यथा भिक्षुकस्य समागतस्यातिथ्यमवश्यं कर्त्तव्यं, तद्वदैश्वर्य्योपेतस्यापि स्वगृहे समागतस्यातिथ्यमभ्युदय-कामिना कर्त्तव्यमित्याह,—

यस्य छत्रं हयश्चैव कुञ्जरारोहमृद्धिमत्।
ऐन्द्रं स्थानमुपासीत तस्मात्तन्न विचारयेत् ॥ ५४ ॥

---

* ततोविद्वान् विभवे,—इति मु० पुस्तके पाठः।
† श्लोकोऽयं मुद्रितमूलपुस्तके नास्ति।
‡ भिक्षाप्रदाने,—इति स० शो० प्रा० पुस्तकेषु पाठः।

यस्य छत्र-हयौ विद्येते, तस्यातिथ्यं कुर्व्वन् ऐन्द्रं पदमवाप्नुयात्। एतस्माद्वचनात् पूर्व्वोत्तर-वचनयोरातिथ्य-विषयत्वात् तत्-प्रकरणान्तः-पातित्वेनास्मिन् वचनेऽनुक्तमपि, आतिथ्यं कुर्व्वन्निति पद-द्वयं, सन्दंश-न्यायेनात्र लभ्यते। कुञ्जरस्यारोहो यस्मिन्नैन्द्रे पदे, तत्कुञ्जरारोहम्। ऋद्धिरमृतपानाप्सरःसेवादिरस्मिन्नस्तीत्यृद्धिमत्। छत्रादिमान् क्षत्रियादिरतिथिर्जातिकुलाचारैर्यद्यपि हीनः, तथापि तत्पूजायाः स्वर्ग-प्राप्ति-हेतुत्वात् तमतिथिं, हीनत्व-बुद्ध्या पूज्योऽयं न वा,—इति न विचारयेत् न सन्दिह्यात् किन्त्वीश्वर-बुद्ध्या तं पूजयेत्।

यद्यपि, भिक्षुकवन्नायमस्मिन् जन्मनि तपस्वी, तथाप्यतीते जन्म-न्यनेन तपोऽनुष्ठितम्, अन्यथेदृशस्यैश्वर्य्यस्य प्राप्त्यसंभवात्। अतएव विभूतिमत ईश्वरांशत्वं भगवता दर्शितम्,—

"यद्यद्विभूतिमत्सत्वं श्रीमदूर्ज्जितमेव वा।
तत्तदेवावगच्छ त्वं मम तेजोऽंश-सम्भवम्"—इति॥

तस्माद्युक्तमैश्वर्य्योपेतस्यातिथ्यम्॥

यदुक्तं वैश्वदेवात् पूर्व्वमपि यति-ब्रह्मचारिभ्यां भिक्षा दातव्येति, तत्रोपपत्तिमाह,—

**वैश्वदेव-कृतं पापं शक्तो भिक्षुर्व्यपोहितुम्।**
**न हि भिक्षु-कृतान् दोषान् वैश्वदेवो व्यपोहति॥५५॥**

वैश्वदेवस्य पश्चात् करणेन प्रसक्तो यो दोषः, स भिक्षा-दानेन निवर्त्तते। भिक्षा-परिहारेण तु यो दोषः, नासौ पूर्व्वकृतेनापि वैश्वदेवेन निवर्त्तते। अत्र, भिक्षुशब्दो विद्यार्थ्यादीनामुपलक्षकः। तथा च तेषां भिक्षुकत्वं व्यासेनोक्तम्,—

"यतिश्च ब्रह्मचारी च विद्यार्थी गुरु-पोषकः।
अध्वगः क्षीण-वृत्तिश्च षड़ेते भिक्षुकाः स्मृताः"—इति।

पुराणेऽपि,—

"व्याधितस्यार्थ-हीनस्य कुटुम्बात् प्रच्युतस्य च।
अध्वानं प्रतिपन्नस्य भिक्षाचर्य्या विधीयते"—इति।

वैश्वदेवकृतमित्युक्ता* बुद्धिस्थत्वाद्वैश्वदेवस्याकरणे प्रत्यवायमाह,—

**अकृत्वा वैश्वदेवन्तु भुञ्जते ये द्विजाधमाः।**
**सर्व्वे ते निष्फलाज्ञेयाः पतन्ति नरकेऽशुचौ ॥ ५६ ॥**

निष्फला-यथोक्त-फल रहिताः। न केवलमिष्ट-प्राप्त्यभावः किन्त्व-निष्ट-प्राप्तिरपि दर्शिता;—'पतन्ति नरकेऽशुचौ'—इति॥

वैश्वदेव-दृष्टान्तेनातिथ्याकरणेऽपि प्रत्यवायमाह,—

**वैश्वदेव-विहीनाये आतिथ्येन वहिष्कृताः।**
**सर्व्वे ते नरकं यान्ति काकयोनिं व्रजन्ति च ॥५७॥**

नरको रौरवादिः, तमनुभूय पश्चात् काकयोनिं व्रजन्ति॥

अतिथित्वेन स्तुवन्नन्यानपि भोजनीयानाह†,—

**पापो वा यदि चण्डालो विप्रघ्नः पितृघातकः।**
**वैश्वदेवे तु संप्राप्तः सोऽतिथिः स्वर्ग-संक्रमः ॥५८॥**

---

* वैश्वदेवं कर्त्तव्यमित्युक्ता,—इति मु० पुस्तके पाठः।

† अतिथित्वेन प्राप्तस्य पापिष्ठस्यापि भोजनीयतामाह,—इति मु० पुस्तके पाठः।

पापो गोवधाद्युपपातकी । एतेषां भोजनीयत्वमेव, नतु अशेषातिथ्य-सत्काराईत्वम् । तदेतदेवाभिप्रेत्याश्वमेधिके वर्णितम्,—

"चण्डालोवा श्वपाकोवा* काले यः कश्चिदागतः ।
अन्नेन पूजनीयस्स्व परच हितमिच्छता"—इति ।

विष्णुधर्मोत्तरे,—

"चण्डालोवाऽथ वा पापः शत्रुर्व्वा पितृघातकः ।
देशकालाभ्युपगतो भरणीयोमतोमम"—इति ।

उक्तान् पञ्च महायज्ञान् प्रशंसति हारीतः,—

"देवानृषीन् पितृंश्चैव भूतानि ब्राह्मणांस्तथा ।
तर्पयन् विधिना विप्रो ब्रह्मभूयाय कल्पते"—इति ।

पुराणेऽपि,—

"यत्फलं सोमयागेन प्राप्नोति धनवान् द्विजः ।
सम्यक् पञ्चमहायज्ञै र्दरिद्रस्तदवाप्नुयात्"—इति ।

अकरणे प्रत्यवायमाह व्यासः,—

"पञ्चयज्ञांस्तु योमोहान्न करोति गृहाश्रमी ।
तस्य नायं न च परोलोको भवति धर्मतः"—इति ॥

पञ्चयज्ञानन्तरं भोजनमभिप्रेत्य तदनुवादेन तत्र वर्जनीयामाह,—

**योवेष्टितशिराभुङ्क्ते योभुङ्क्ते दक्षिणामुखः ।**
**वाम-पाद-करः स्थित्वा तद्वै रक्षांसि भुञ्जते ॥५९॥**

---

* पापोवा यदि चण्डालो,—इति मु० पुस्तके पाठः ।

भोजन-विधिश्च मनुना दर्शितः,—

"भुक्तवत्सु च विप्रेषु स्वेषु भृत्येषु चैव हि।

भुञ्जीयातां ततः पश्चादवशिष्टन्तु दम्पती"—इति।

विष्णुपुराणे,—

"ततः सुवासिनी-दुःखि-गर्भिणी-वृद्ध-बालकान्।

भोजयेत् संस्कृतान्नेन प्रथमन्तु परं गृही॥

अभुक्तवत्सु चैतेषु भुञ्जन् भुङ्क्ते सुदुष्कृतम्।

मृतश्च गत्वा नरकं श्लेष्मभुग्जायते नृप"—इति।

मार्कण्डेयपुराणे,—

"पूजयित्वाऽतिथीन्निखान्* ज्ञातीन् बन्धूंस्तथाऽर्थिनः।

विकलान् बाल-वृद्धांश्च भोजयेदातुरांस्ततः॥

वाञ्छेत् क्षुत्तृट्परीतात्मा यच्चान्नं रस-संयुतम्"—इति।

भोजनेतिकर्त्तव्यतामाह बौधायनः,—

"उपलिप्ते समे स्थाने शुचौ श्लक्ष्ण-समन्विते†।

चतुरस्रं त्रिकोणं वा वर्त्तुलं वाऽर्द्धचन्द्रकम्॥

कर्त्तव्यमानुपूर्व्येण ब्राह्मणादिषु मण्डलम्"—इति।

शङ्खोऽपि,—

"आदित्यावसवोरुद्रा ब्रह्मा चैव पितामहः।

---

* पूजयित्वातिथीन् विप्रान्,—इति मु० पुस्तके पाठः।

† श्लक्ष्णामलान्विते,—इति स० शा० पुस्तकयोः पाठः। तत्र, न मला-न्वितं अमलान्वितं, श्लक्ष्णञ्च तदमलान्वितञ्चेति तत्तथा, तस्मिन्नि-त्यर्थोबोध्यः।

मण्डलान्युपजीवन्ति तस्मात् कुर्व्वीत मण्डलम्"—इति।

कूर्म्मपुराणेऽपि,—

"उपलिप्ते शुचौ देशे पादौ प्रक्षाल्य वै करौ।

आचम्यार्द्राननोऽक्रोधः पञ्चार्द्रो भोजनञ्चरेत्"—इति।

व्यासोऽपि,—

"पञ्चार्द्रोभोजनं कुर्य्यात् प्राङ्मुखोमौनमास्थितः।

हस्तौ पादौ तथैवास्यमेषु पञ्चार्द्रता मता"—इति।

आश्वमेधिकेऽपि,—

"आर्द्रपादस्तु भुञ्जीयात् प्राङ्मुखश्चासने शुचौ।

पादाभ्यां धरणीं स्पृष्ट्वा पादेनैकेन वा पुनः"—इति।

तच्च भोजनं शुद्धपात्रे कर्त्तव्यम्। तदुक्तं कूर्म्मपुराणे,—

"प्रशस्त-शुद्ध-पात्रेषु भुञ्जीताकुत्सिते द्विजः"*—इति।

प्रशस्तानि च पात्राणि पैठीनसिना दर्शितानि,—

"सौवर्णे राजते ताम्रे पद्मपत्रपलाशयोः† ।

भोजनेभोजने चैव‡ त्रिरात्र-फलमश्नुते॥

एकएव तु योभुङ्क्ते विमले कांस्य-भाजने।

चत्वारि तस्य वर्द्धन्ते आयुः प्रज्ञा यशोबलम्"—इति।

तत्र, पद्मपत्र-पलाशपत्र-भोजनं§ गृहि-व्यतिरिक्त-विषयम्,

---

* भुञ्जीताक्रोधनोद्विजः,—इति मु० पुस्तके पाठः।

† सौवर्णे राजते पात्रे ताम्रे पद्मपलाशयोः,—इति मु० पुस्तके पाठः।

‡ भोजनाभोजने चैव,—इति स० आ० पुस्तकयोः पाठः।

§ पद्मपत्रपलाशपत्रभोजनं,—इति मु० पुस्तके पाठः।

"पलाश-पद्म-पत्रेषु* गृही भुक्त्वैन्दवं चरेत्।
ब्रह्मचारि-यतीनाञ्च चान्द्रायण-फलं भवेत्"—इति

व्यास-स्मरणात्। कांस्य-पात्रन्तु गृहस्थैकविषयं†, यत्यादीनान्तु निषेधात्‡। तदाह प्रचेताः,—

"ताम्बूलाभ्यञ्जनं चैव कांस्यपात्रे च भोजनम्।
यतिश्च ब्रह्मचारी च विधवा च विवर्ज्जयेत्"—इति।

तच्च पात्रं भूमौ स्थापनीयम्। यदुक्तं कूर्म्मपुराणे,—

"पञ्चार्द्रो भोजनं कुर्य्याद्भूमौ पात्रं निधाय तु।
उपवासेन तत्तुल्यं मनुराह प्रजापतिः"—इति।

तच्च स्थापनं प्राणाहुति-पर्य्यन्तं, पश्चात्तु यन्त्रिकामारोप्य भोक्तव्यम्। तदाह व्यासः,—

"न्यस्य पात्रं तु भुञ्जीत§ पञ्च ग्रासान् महामुने।
शेषमुद्धृत्य भोक्तव्यं श्रूयतामत्र कारणम्॥
विप्रुषां पाद-संस्पर्शः पाद-चैल-रजस्तथा।
सुखेन भुङ्क्ते विप्रो हि पित्रर्थन्तु न लुप्यते"॥

पैतृक-भोजने भूमि-पात्र-प्रतिष्ठापनं न लोपनीयमित्यर्थः। उक्त-पात्र-निहितमन्नं नमस्कुर्य्यात्। तदुक्तं ब्रह्मपुराणे,—

"अन्नं दृष्ट्वा प्रणम्यादौ प्राञ्जलिः कथयेत्ततः।

---

* पलाशपद्मपत्रेषु,—इति मु० पुस्तके पाठः।
† गृहस्थविषयं,—इति मु० पुस्तके पाठः।
‡ अत्र, यत्यादीनां तन्निषेधात्,—इति पाठः समीचीनः प्रतिभाति।
§ न्यस्तपात्रं न भुञ्जीत,—इति शा० पुस्तके पाठः।

अस्माकं नित्यमस्त्वेतदिति भक्त्याऽथ वन्दयेत्" ॥

वन्दनानन्तर-कृत्यमाह गोभिलः,—"अथातः प्राणाहुति-कल्पो-व्याहृतिभिर्गायत्र्याऽभिमन्त्र्य ऋतं त्वा सत्येन परिषिञ्चामीति सायं, सत्यं त्वर्त्तेन परिषिञ्चामीति प्रातः,

अन्तश्चरसि भूतेषु गुहायां विश्वतोमुखः ।
त्वं यज्ञस्त्वं वषट्कार आपोज्योतीरसोऽमृतम् ॥

त्वं ब्रह्मा त्वं प्रजापतिः ब्रह्मभूर्भुवः स्वरोममृतोपस्तरणमसीत्यपः पीत्वा दशहोतारं* मनसानुद्रुत्यैतद्दन्† पञ्च ग्रासान् गृह्णीयात् प्राणाय स्वाहेति गार्हपत्यमेव तेन‡ जुहोति। अपानाय स्वाहेत्यन्वाहार्य्यपचनमेव तेन जुहोति। व्यानाय स्वाहेत्याहवनीयमेव तेन जुहोति। उदानाय स्वाहेति सत्यमेव तेन जुहोति । समानाय स्वाहेत्यावसथ्यमेव तेन जुहोति" । एते पञ्च मन्त्राः प्रणवाद्याः कर्त्तव्याः । तथाच शौनकः,—

"स्वाहाऽन्ताः प्रणवाद्यास्च नाम्ना मन्त्रास्तु वायवः ।
जिह्वयैव ग्रसेदन्नं दशनैस्तु न संस्पृशेत्"—इति ।

जिह्वा-ग्रसने विशेष आश्वमेधिके दर्शितः,—

"यथा रसं न जानाति जिह्वा प्राणाहुतौ नृप ।
तथा समाहितः कुर्य्यात् प्राणाहुतिमतन्द्रितः"—इति ।

प्राणाहुतिष्वङ्गुलि-नियममाह शौनकः,—

---

* चच, दशहोतारं,—इति पाठः समीचीनः प्रतिभाति ।
† मनसानुद्रुत्य त्वरन्,—इति शा० पुस्तके पाठः ।
‡ तेनाग्नेन,—इति मु० पुस्तके पाठः ।

"तर्ज्जनी-मध्यमा-ऽङ्गुष्ठ-लग्ना प्राणाहुतिर्भवेत्।
मध्यमा-ऽनामिका-ऽङ्गुष्ठैरपाने जुहुयात्ततः॥
कनिष्ठा-ऽनामिका-ऽङ्गुष्ठै र्व्याने तु जुहुयाद्धविः* ।
तर्ज्जनीन्तु वहिः कृत्वा† उदाने जुहुयात्ततः॥
समाने सर्व्वहस्तेन समुदायाहुतिर्भवेत्"—इति।

परिषेचनानन्तरभावि-विशेषोभविष्यपुराणे दर्शितः,—

"भोजनात् किञ्चिदन्नाग्रं धर्म्मराजाय वै वलिम्।
दत्वाऽथ चित्रगुप्ताय प्रेतेभ्यश्चेदमुच्चरेत्॥
यत्र क्वचन संस्थानां क्षुत्तृष्णोपहतात्मनाम्।
प्रेतानां तृप्तयेऽक्षय्यमिदमस्तु यथासुखम्"—इति।

कूर्म्मपुराणेऽपि,—

"महाव्याहृतिस्त्वन्नं परिधायोदकेन तु।
अमृतोपस्तरणमसीत्यापोशानक्रियां चरेत्"—इति।

बौधायनस्तु, सर्व्वमेतत् संगृह्याह,—"सर्व्वावश्यकावसानेषु प्रक्षालित-पाणि-पादोऽप आचम्य शुचौ संवृते देशे प्राङ्मुख उपविश्य उद्धृतमाह्रियमाणं भूर्भुवः स्वरोमित्युपस्थाय वाचं यच्छेदन्यत् समानं महाव्याहृतिभिः प्रदक्षिणमन्नमुदकं परिषिच्य सव्येन पाणिनाऽविमुञ्चन्नमृतोपस्तरणमसीत्यपः पीत्वा पञ्चान्नेन प्राणाहुतीर्जुहोति; श्रद्धायां प्राणे निविष्टोऽमृतं जुहोमि शिवोमाविशाप्रदाहाय प्राणाय स्वाहा,

---

* जुहुयात्ततः,—इति मु० पुस्तके पाठः।
† मध्यमानामिका स्पृन्यैः,—इति मु० पुस्तके पाठः।

अपाने व्यानउदाने समाने निविष्ट इत्यादिना, यथालिङ्ग मनुषङ्गः । एवं पञ्चान्नेन, तूष्णीं भूयोवर्त्तयेत् प्रजापतिं मनसा ध्यायेत्, अथाप्युदाहरन्ति,—

आसीनः प्राङ्मुखोऽश्नीयात् वाग्यतोऽन्नमकुत्सयन् ।
अस्कन्दयंस्तन्मनाश्च* भुक्त्वा,न्नं समुपस्पृशेत् ॥

सर्व्वभक्ष्यापूप-कन्द-मूल-फल-मांसानां दन्तैर्नावर्जयेत् । नातिसुहितः अमृतापिधानमसीत्युपरिष्टादपः पीत्वाऽऽचान्तो हृदयदेशमभिमृशति; प्राणानां ग्रन्थिरसि रुद्रोमाविशान्तकस्तेनान्नेनाप्यायस्वेति । पुनराचम्य दक्षिणपादाङ्गुष्ठे पाणिं निस्रावयति,—

"अङ्गुष्ठमात्रः पुरुषो अङ्गुष्ठञ्च समाश्रितः ।
ईशः सर्व्वस्य जगतः प्रभुः प्रीणाति विश्वभुक्"—इति ॥

कृतान्नानुमन्त्रणमूर्द्धहस्तः समाचरेत्, श्रद्धायां प्राणे निविश्या-मृतꣳ कृतं प्राणमन्नेनाप्यायस्व, श्रद्धायामपाने, श्रद्धायां व्याने, श्रद्धायामुदाने, श्रद्धायां समाने, निविश्येत्यादिर्यथालिङ्गमनुषङ्गः† । ब्रह्मणि मआत्माऽमृतत्वायेत्यात्मानं योजयेत् सर्व्व-क्रतु-याजिनामा-त्मयाजी विशिष्यते"—इति । विष्णुपुराणे,—

"अश्नीयात् तन्मनाभूत्वा पूर्व्वन्तु मधुरं रसम् ।
लवणाम्लौ तथा मध्ये कटु-तिक्तादिकांस्ततः ॥

---

* आस्कन्धयंस्तन्मनाश्च,—इति मु० पुस्तके पाठः ।

† श्रद्धायामपाने निविश्यामृतगुं कृतमपानमन्नेनाप्यायस्व श्रद्धायां व्याने निविश्यामृतगुं कृतं व्यानमन्नेनाप्यायस्व श्रद्धायामुदाने निविश्यामृतगुं कृतमुदानमन्नेनाप्यायस्व श्रद्धायां समाने निविश्यामृतगुं कृतं समानमन्नेना-प्यायस्वेति यथालिङ्गमनुषङ्गः,—इति मु० पुस्तके पाठः ।

प्राग्द्रवं पुरुषोऽश्नीयान्मध्ये च कठिनाशनः*।
अन्ते पुनर्द्रवाशी तु बलारोग्ये न मुञ्चति"—इति॥

भोजने कवल-सङ्ख्यामाहापस्तम्बः,—

"अष्टौ ग्रासामुनेर्भक्ष्याः षोड़शारण्यवासिनः।
द्वात्रिंशत्तु गृहस्थस्य ह्यमितं ब्रह्मचारिणः"—इति।

आश्वमेधिकेऽपि,—

"वक्त्र-प्रमाण-पिण्डांश्च ग्रसेदेकैकशः पुनः।
वक्त्राधिकन्तु यत् पिण्डमात्मोच्छिष्टं तदुच्यते॥
पिण्डावशिष्टमन्नञ्च वक्त्र-निःसृतमेवच।
अभोज्यं तद्विजानीयात् भुक्त्वा चान्द्रायणं चरेत्।
सदा चात्यशनं नाद्यात् नातिहीनं च कर्हिचित्।
यथाऽन्नेन व्यथा न स्यात् तथा भुञ्जीत नित्यशः"—इति।

वृद्धमनुः,—

"पीत्वाऽपोऽशनमश्नीयात्† पात्र-दत्तमगर्हितम्।
भार्य्या-भृतक-दासेभ्य उच्छिष्टं शेषयेत् द्विजः"‡—इति।

उच्छिष्ट-शेषणन्तु घृतादि-व्यतिरिक्त-विषयम्। तदाह पुलस्त्यः,—

"भोजनन्तु न निःशेषं कुर्य्यात् प्राज्ञः कथञ्चन।
अन्यत्र दधिसक्ताज्यं फलं क्षीरं च मध्वपः"—इति।

एतच्च भोजनं सायं प्रातश्च कर्तव्यम्। तदुक्तं मनुना,—

---

* कठिनाशिनम्—इति मु० पुस्तके पाठः।
† पीत्वापोशानमश्नीयात्,—इति शा० पुस्तके पाठः।
‡ ततः,—इति स० शा० पुस्तकयोः पाठः।

"सायं प्रातर्द्विजातीनामशनं श्रुति-चोदितम्।
नान्तरा भोजनं कुर्य्यादग्निहोत्र-समो विधिः"—इति।

गौतमः,—"सायं प्रातस्त्वन्नमभिपूजितमनिन्दन् भुञ्जीत"—इति। उदाहृत-वचन-समूहेन प्रसिद्धं साङ्ग-भोजनं मूलवचने,"यो भुङ्क्ते"—इत्यनूद्य वेष्टित-शिरस्त्वादिकं प्रत्यवायाभिधानेन निषेधयति। एतच्च वर्ज्ज्यान्तराणामप्युपलक्षणम्। तानि च ब्रह्मपुराणे दर्शितानि,—

"यस्तु पाणि-तले भुङ्क्ते यस्तु फुत्कार-संयुतम्* ।
प्रसृताङ्गुलिभिर्यश्च† तस्य गोमांसवच्च तत्।
नाजीर्णे भोजनं कुर्य्यात् कदन्नानि वुभुक्षितः‡ ॥
हस्त्यश्वरथयानोष्ट्रमास्थितो नैव भक्षयेत्।
श्मशानाभ्यन्तरस्थो वा देवालय-गतोऽथवा ॥
शयनस्थो न भुञ्जीत न पाणिस्थं न चासने।
नार्द्रवासा नार्द्रशिरा नचायज्ञोपवीतवान् ॥
न प्रसारित-पादस्तु पादारोपित-पाणिमान्।
स्व-बाहु-सव्य-संस्थश्च न च पर्य्यङ्कमास्थितः ॥
न वेष्टित-शिराश्चापि नोत्सङ्ग-कृत-भाजनः§ ।
नैकवस्त्रोदृषन्मध्ये नोपानत्-कृत-पादकः¶ ।
न चर्म्मोपरिसंस्थश्च चर्म्म-वेष्टित-पार्श्ववान् ॥

* फुत्कारवायुना,—इति मु० पुस्तके पाठः।
† यश्च,—इति शा० स० पुस्तकयोः पाठः।
‡ कुर्य्यान्नातिवुभुक्षितः,—इति मु० पुस्तके पाठः।
§ नोत्सङ्गकृतभोजनः,—इति मु० पुस्तके पाठः।
¶ नोपानत्कः सपादुकः,—इति मु० पुस्तके पाठः।

ग्रास-शेषं न चाश्नीयात् पीत-शेषं पिबेन्न च।
शाक-मूल-फलेक्षूणां दन्तच्छेदैर्न भक्षयेत्॥
बहूनां भुञ्जतां मध्ये न चाश्नीयात्त्वराऽन्वितः।
वृथा न विसृजेदन्नं नोच्छिष्टं कुत्रचिद्व्रजेत्*"॥

बृहस्पतिः,—

"न स्पृशेद्वामहस्तेन भुञ्जानोऽन्नं कदाचन।
न पादौ न शिरोवस्तिं न पदा भाजनं स्पृशेत्"—इति।

उशनाः,—

"नादत्वा मिष्टं† मश्नीयाद्बहूनां चैव पश्यताम्।
नाश्नीयुर्बहवश्चैव तथाऽनेकस्य पश्यतः"—इति।

आदित्यपुराणे,—

"नोच्छिष्टं‡ ग्राहयेदाज्यं जग्धशिष्टं च§ सन्त्यजेत्।
शूद्र-भुक्तावशिष्टन्तु नाद्याद्भाण्ड-स्थितं त्वपि"—इति।

कूर्म्मपुराणे,—

"नार्द्धरात्रे न मध्याह्ने नाजीर्णे नार्द्रवस्त्रधृक्।
न भिन्न-भाजने चाद्यात्‖ न भूम्यां न च पाणिषु॥
नोच्छिष्टो घृतमादद्यान्न मूर्द्धानं स्पृशन्नपि।
न ब्रह्म कीर्त्तयित्वाऽपि न निःशेषं न भार्य्यया॥

---

* अत्र, नोच्छिष्टः कुत्रचिद्व्रजेत्,—इति पाठो भवितुं युक्तः।
† मृष्टं,—इति मु० पुस्तके पाठः।
‡ नोच्छिष्टो,—इति शा० पुस्तके पाठः।
§ जग्धशिष्टं न,—इति स० शा० पुस्तकयोः पाठः।
‖ चैव,—इति शा० पुस्तके पाठः।

नान्यागारे न वाऽऽकाशे* न च देवालयादिषु"—इति।

याज्ञवल्क्योऽपि,—

"न भार्य्या-दर्शनेऽश्नीयान्नैकवासा न संस्थितः"—इति।

यत्तु,—

"ब्राह्मणा सह योऽश्नीयादुच्छिष्टं वा कदाचन।
न तस्य दोषमिच्छन्ति नित्यमेव मनीषिणः।
उच्छिष्टमितरस्त्रीणां योऽश्नीयाद् ब्राह्मणः क्वचित्॥
प्रायश्चित्ती स विज्ञेयः संकीर्णो मूढ़चेतनः"—इति।

न तत्सर्व्वथा दोषाभाव-प्रतिपादन-परं, कदाचनेति वचनात्।

अतएवादित्यपुराणम्,—

"ब्राह्मणा भार्य्यया सार्द्धं क्वचिद्भुञ्जीत चाध्वनि।
असवर्ण-स्त्रिया† सार्द्धं भुक्त्वा पतति तत्क्षणात्"—इति।

वृद्धमनुरपि‡,—

"न पिबेन्न च भुञ्जीत द्विजः सव्येन पाणिना।
नैकहस्तेन च जलं शूद्रेणावर्ज्जितं पिबेत्॥
पिबतो यत् पतेत्तोयं भाजने मुख-निःसृतम्।
अभोज्यं तद्भवेदन्नं भुक्त्वा भुञ्जीत किल्विषम्॥
पीतावशेषितं तोयं ब्राह्मणः पुनरापिबेत्§।

---

* नागारे च नवाकाशे,—इति शा० पुस्तके पाठः।

† अधोवर्णस्त्रिया,—इति मु० पुस्तके पाठः।

‡ मनुरपि, इति मु० पुस्तके पाठः।

§ अत्र, ब्राह्मणो न पुनः पिबेत्,—इति पाठो भवितुं युक्तः। 'पिबतो-यत्'—इत्यारभ्य, 'पुनरापिबेत्'—इत्यन्तो ग्रन्थः मुद्रितातिरिक्तपुस्तकेषु न दृश्यते।

पिवेद्यदि हि तन्मोहात् द्विजश्चान्द्रायणं चरेत्"—इति।

अत्रिः,—

"तोयं पाणि-नख-स्पृष्टं-*ब्राह्मणो न पिवेत् क्वचित्।
सुरापानेन तत्तुल्यमित्येवं मनुरब्रवीत्"—इति।

शातातपः,—

"उद्धृत्य वाम-हस्तेन यत्तोयं पिवति द्विजः।
सुरापानेन तत्तुल्यं मनुराह प्रजापतिः"—इति।

आश्वमेधिकेऽपि,—

"पानीयानि पिवेद्येन तत्पात्रं द्विजसत्तमः।
अनुच्छिष्टं भवेत्तावद्यावद्भूमौ न निक्षिपेत्"—इति।

शङ्खः,—"नानियुक्तोऽप्यासनस्थः प्रथममश्नीयान्नाधिकं दद्यान्न प्रतिगृह्णीयात्"—इति। शातातपोऽपि,—

"अप्यासनोपविष्टस्तु योभुङ्क्ते प्रथमं द्विजः।
बहूनां पश्यतां प्राज्ञः पङ्क्त्या हरति किल्विषम्"—इति।

गोभिलः,—

"एक पङ्क्त्युपविष्टानां विप्राणां सह भोजने।
यद्येकोऽपि त्यजेत् पात्रं नाश्नीयुरितरे पुनः†॥
मोहात्तु भुङ्क्ते यस्तत्र स सान्तपनमाचरेत्।
भुञ्जानेषु तु विप्रेषु यस्तु पात्रं परित्यजेत्॥
भोजने विघ्न-कर्त्ताऽसौ ब्रह्महाऽपि तथोच्यते"—इति।

---

* पाणिनखाग्रेण,—इति शा० पुस्तके पाठः।
† प्यनु,—इति शा० पुस्तके पाठः।

वाग्यमनं प्रक्रम्य पुराणे,—

"स्नास्यतो वरुणः शक्तिं जुह्वतोऽग्निः श्रियं हरेत् ।
भुञ्जतो मृत्युरायुष्यं तस्मान्मौनं त्रिषु स्मृतम्"—इति ।

यत्त्वत्रिणोक्तम्,—

"मौनव्रतं महाकष्टं हुँकारेणापि नश्यति ।
तथा सति महान् दोषः तस्मात्तु नियतश्चरेत्"—इति ।

तदेतत् काष्ठ-मौनाभिप्रायेण। एतच्च पञ्चग्रासादर्वाग्विषयम् ।

तथा च वृद्धमनुः,—

"अनिन्दन् भक्षयेन्नित्यं वाग्यतोऽन्नमकुत्सयन् ।
पञ्च ग्रासान्महामौनं प्राणाद्याप्यायनं महत्"—इति ।

आश्वमेधिकेऽपि,—

"मौनी वाऽप्यथवाऽमौनी प्रहृष्टः संयतेन्द्रियः ।
भुञ्जीत विधिवद्विप्रो न चोच्छिष्टानि चर्वयेत्*"—इति ।

शातातपोऽपि,—

"हस्त-दत्तानि चान्नानि प्रत्यक्ष-लवणन्तथा ।
मृत्तिका-भक्षणञ्चैव गोमांसाशनवत् स्मृतम्"—इति ।

पैठीनसिः,—

"लवणं व्यञ्जनं चैव घृतं तैलं तथैव च ।
लेह्यं पेयञ्च विविधं हस्त-दत्तं न भक्षयेत् ॥
दर्व्या देयं घृतान्नन्तु समस्त-व्यञ्जनानि च ।
उदकं यच्च पक्कान्नं योदर्व्या दातुमिच्छति ।

* नोच्छिष्टानि न चालयेत्,—इति मु० पुस्तके पाठः ।

स भ्रूणहा सुरापश्च स्तेयी च* गुरुतल्पगः"—इति।

आश्वमेधिके,—

"उदक्यामपि चण्डालं श्वानं कुक्कुटमेवच।

भुञ्जानो यदि पश्येत्तु तदन्नन्तु परित्यजेत्॥

केश-कीटावपन्नञ्च† मुख-मारुत-वीजितम्।

अन्नं तद्राक्षसं विद्यात्तस्मात्तत् परिवर्ज्जयेत्"—इति।

कात्यायनः,—

"चण्डालपतितोदक्या-वाक्यं श्रुत्वा द्विजोत्तमः।

भुञ्जीत ग्रासमात्रन्तु दिनमेकमभोजनम्"—इति।

गौतमोऽपि,—

"काहलाभ्रामणग्रावणस्यक्रस्योलूखलस्य च।

एतेषां निनदं यावत्तावत्कालमभोजनम्"—इति।

बृहस्पतिरपि,—

"अप्येकपङ्क्त्या नाश्नीयाद्ब्राह्मणैः स्वजनैरपि।

कोहि जानाति किं कस्य प्रच्छन्नं पातकं भवेत्॥

एकपङ्क्त्युपविष्टानां दुष्कृतं यद्दुरात्मनाम्।

सर्व्वेषां तत्समं तावद्यावत् पङ्क्तिर्न भिद्यते"—इति।

पङ्क्ति-भेद-प्रकारमपि सएवाह,—

"अग्निना भस्मना चैव स्तम्भेन सलिलेन च।

द्वारेण-चैव मार्गेण पङ्क्तिभेदो बुधैः स्मृतः"—इति।

---

* सस्तेनो,—इति स० प्रा० पुस्तकयोः पाठः।

† केशकीटोपपन्नञ्च,—इति मु० पुस्तके पाठः।

यमोऽपि,—

"उदकञ्च तृणं भस्म द्वारं पन्थास्तथैवच ।

एभिरन्तरितं कृत्वा पङ्क्तिदोषो न विद्यते"—इति।

तदेवं मूलवचनोक्त-वेष्टितशिरस्त्वादि-वर्ज्जनोपलक्षिता नियम-विशेषा दर्शिताः। दक्षिणामुखत्व-निषेधो नित्य-भोजन-विषयः। काम्ये तद्विधानात्। तथाच मनुः,—

"आयुष्यं प्राङ्मुखो भुङ्क्ते यशस्यं दक्षिणामुखः।

श्रियं प्रत्यङ्मुखो भुङ्क्ते ऋतं भुङ्क्ते उदङ्मुखः"—इति।

गोभिलोऽपि दक्षिणामुखत्वं निषेधयति,—

"प्राङ्मुखावस्थितो विप्रो प्रतीच्यां वा यथासुखम्।

उत्तरं पितृकार्य्ये तु दक्षिणान्तु विवर्ज्जयेत्*"—इति।

'वाम-पाद-करः' वामपादे करोयस्यासौ वामपादकरः। यो वामपादकरो भुङ्क्ते, यश्च स्थितो भुङ्क्ते, तैः सर्व्वैर्यद्भुक्तं तद्रक्षांसि भुञ्जते, न स्वयं प्राणाग्निहोत्रादि-फलं प्राप्नोतीत्यर्थः। भुक्तस्य† राक्षस-गामित्वं कूर्म्मपुराणेऽपि दर्शितम्,—

"योभुङ्क्ते वेष्टितशिरा यश्च भुङ्क्ते विदिङ्मुखः।

सोपानत्कश्च यो भुङ्क्ते सर्व्वं विद्यात्तदासुरम्"—इति।

अभिप्रेतस्य भोजन-विधेरुदीच्याङ्गानि उच्छिष्टोदक-दानादीनि‡ कर्त्तव्यानि। तत्र देवलः,—

---

* विसर्जयेत्,—इति मु० पुस्तके पाठः।

† उक्त,—इति मु० पुस्तके पाठः।

‡ उच्छिष्टोदकदानादीनि,—इति नास्ति स० सो० प्रा० पुस्तकेषु।

"भुक्तोच्छिष्टं समादाय सर्व्वस्मात् किञ्चिदाचमन् ।
उच्छिष्टभागधेयेभ्यः सोदकं निर्व्वपेद्भुवि"—इति ।

तत्र, मन्त्रः,—

"रौरवेऽपुण्य-निलये पद्मार्बुद-निवासिनाम्।
प्राणिनां सर्व्वभूतानामक्षय्यमुपतिष्ठताम्*"—इति ।

गद्यव्यासोऽपि,—"ततस्तृप्तः सन्नमृतापिधानमसीत्यपः पीत्वा तस्माद्देशान्मनागपसृत्य विधिवदाचामेत्"—इति । स चाचमनप्रकारो देवलेन दर्शितः,—

"भुक्त्वाऽऽचामेद्यथोक्तेन विधानेन समाहितः ।
शोधयेन्मुख-हस्तौ च मृदद्भिर्घर्षणैरपि"—इति ।

तत्र घर्षणं तर्ज्जन्या न कर्त्तव्यम् । तदाह गौतमः,—

"गण्डूषस्याथ समये तर्ज्जन्या वक्त्रशोधनम् ।
कुर्व्वीत यदि मूढात्मा रौरवे नरके पतेत्†"—इति ।

व्यासः,—

"हस्तं प्रक्षाल्य गण्डूषं यः पिबेदविचक्षणः ।
स देवांश्च पितॄंश्चैव ह्यात्मानञ्चैव पातयेत्"—इति‡ ।
"तस्मिन् नाचमनं कुर्य्यात् यत्र भाण्डेऽस्य भुक्तवान् ।
यद्युत्तिष्ठत्यनाचान्तोभुक्तवानासनात्ततः ॥
स्नानं सद्यः प्रकुर्व्वीत सोऽन्यथाऽप्रयतो भवेत्"—इति ।

---

* प्राणिनां सर्वभूतानां ह्यक्षय्यमुपतिष्ठतु,—इति मु० पुस्तके पाठः ।
† रौरवं नरकं व्रजेत्,—इति मु० पुस्तके पाठः ।
‡ 'इति' शब्दोऽत्राधिकः प्रतिभाति ।

कूर्म्मपुराणेऽपि,—

"अमृतापिधानमसीत्यपः पिबेत् * * * ।
आचान्तः पुनराचमेदायं गौरिति मन्त्रतः ।
द्रुपदां वा त्रिरावृत्य सर्व्व-पाप-प्रणाशिनीम् ।
प्राणानां ग्रन्थिरसीत्यालभेत् हृदयं ततः ॥
आचम्याङ्गुष्ठमानीय पादाङ्गुष्ठे तु दक्षिणे ।
निस्रावयेद्धस्त-जलमूर्द्ध-हस्तः समाहितः ॥
कृतानुमन्त्रणं कुर्य्यात् श्रद्धायामिति मन्त्रतः ।
अक्षरेण ह्यात्मानं योजयेद्ब्रह्मणीति हि ।
सर्व्वेषामेवमङ्गानामात्म-याग: परः स्मृतः ॥
योऽनेन विधिना कुर्य्यात् स याति ब्रह्मणः पदम्"—इति ।

अत्रिः,—

"आचान्तोऽप्यशुचिस्तावद्यावत् पात्रमनुद्धृतम् ।
उद्धृतेऽप्यशुचिस्तावद्यावन्नो लिप्यते* मही ।
भूमावपि हि लिप्तायां तावत् स्यादशुचिः पुमान् ॥
आसनादुत्थितस्तस्माद्यावन्न स्पृशते महीम्"—इति ।

शातातपोऽपि,—

"आचम्य पात्रमुत्सृज्य किञ्चिदार्द्रेण पाणिना ।
मुख्यान् प्राणान् समालभ्य नाभिं पाणि-तलेन च ॥
भुक्त्वा नैव प्रतिष्ठेत न चाप्यार्द्रेण पाणिना ।
पाणिं मूर्द्ध्नि समाधाय स्पृष्ट्वा चाग्निं समाहितः ॥

* नोन्मृज्यते,—इति ग्रा० पुस्तके पाठः ।

ज्ञातिश्रैष्ठ्यं समाप्नोति प्रयोग-कुशलो नरः"—इति ।

विष्णुपुराणेऽपि,—

"स्वस्थः प्रशान्त-चित्तस्तु कृतासन-परिग्रहः ।
अभीष्ट-देवतानाञ्च कुर्व्वीत स्मरणं नरः ॥
'अग्निराप्याययेद्धातुं पार्थिवं पवनेरितः ।
दत्तावकाशो नभसा जरयेदस्तु मे सुखम् ।
अन्नं बलाय मे भूमेरपामग्न्यनिलस्य च ॥
भवत्वेतत् परिणतं* ममास्त्वव्याहतं सुखम् ।
प्राणापानसमानानामुदानव्यानयोस्तथा ॥
अन्नं पुष्टिकरञ्चास्तु ममास्त्वव्याहतं सुखम् ।
अगस्तिरग्निर्वडवानलश्च
भुक्तं मयाऽन्नं जरयत्वशेषम् ।
सुखं ममैतत्† परिणाम-सम्भवं
यच्छत्वरोगं मम चास्तु देहे ॥
विष्णुः समस्तेन्द्रिय-देह-देही
प्रधानभूतो भगवान् यथैकः ।
सत्येन तेनान्नमशेषमन्नम्
आरोग्यदं स्यात् परिणाममेतु ।
विष्णुर्यथा तथैवान्नं परिणामश्च वै तथा‡ ।

---

* परिणतौ,—इति शा० पुस्तके पाठः ।
† सुखञ्च मे तत्,—इति स० शा० पुस्तकयोः पाठः ।
‡ विष्णुरात्मा तथैवान्नं परिणामस्तथैव च,—इति मु० पुस्तके पाठः ।

सत्येन तेन मे भुक्तं* जीर्य्यत्वन्नमिदन्तथा।
इत्युच्चार्य्य स्व-हस्तेन परिमृज्य तथोदरम्॥
अनायास-प्रदायीनि कुर्य्यात् कर्म्माण्यतन्द्रितः"—इति।

मार्कण्डेयोऽपि,—
"भूयोऽप्याचम्य कर्त्तव्यं ततस्ताम्बूल-भक्षणम्"—इति।

तत्र वशिष्ठः,—
"सुपूगं च सुपर्णञ्च सुचूर्णेन समन्वितम्† ।
अदत्वा द्विज देवेभ्यः ताम्बूलं वर्ज्जयेद्बुधः।
एक-पूगं सुखारोग्यं द्विपूगं निष्फलम्भवेत्॥
अतिश्रेष्ठं त्रि-पूगस्य ह्यधिकं नैव दुष्यति।
पर्ण-मूले भवेद्व्याधिः पर्णाग्रे पाप-सम्भवः॥
चूर्ण-पर्णं हरेदायुः‡ शिरा बुद्धि-विनाशिनी।
तस्मादग्रञ्च मूलञ्च शिराश्चैव§ विशेषतः॥
जीर्ण-पर्णं‖ वर्ज्जयित्वा ताम्बूलं खादयेद्बुधः"।

यदिदं भोजनं निरूपितं, तद्ग्रहण-काले प्रतिषिद्धम्। तदाह मनुः,—
"चन्द्र-सूर्य्य-ग्रहे नाद्यादद्यात् स्नात्वा विमुक्तयोः।
अमुक्तयोरस्त-गयोर्दृष्ट्वा स्नात्वा¶ परेऽहनि"—इति।

---

* मद्भुक्तं,—इति मु० पुस्तके पाठः।
† सुसंयुतम्,—इति मु० पुस्तके पाठः।
‡ हरत्यायुः,—इति मु० पुस्तके पाठः।
§ शिरश्चैव,—इति स० शा० पुस्तकयोः पाठः।
‖ चूर्णपर्णं,—इति मु० पुस्तके पाठः।
¶ रुष्ट्वा,—इति मु० पुस्तके पाठः।

ग्रहे ग्रहण-काले, स्पर्शमारभ्य मोक्षण-पर्य्यन्तो ग्रह-कालः। तस्मिन् काले न भुञ्जीत, किन्तु राहुणा चन्द्र-सूर्य्ययोः मुक्तयोः सतोः पश्चात् स्नात्वा भुञ्जीत। यदा तु ग्रस्तास्तमयस्तदा परेद्युः विमुक्तौ तौ दृष्ट्वा भुञ्जीत। न केवलं ग्रहण-काले भोजनाभावः, किन्तु ग्रहणात् प्रागपि। तदाह व्यासः,—

"नाद्यात् सूर्य्य-ग्रहात् पूर्व्वमह्नि सायं शशि-ग्रहात्।
ग्रह-काले च नाश्नीयात् स्नात्वाऽश्नीयाच्च मुक्तयोः॥
मुक्ते शशिनि भुञ्जीत यदि न स्यान्महानिशा।
अमुक्तयोरस्तगयोरथ दृष्ट्वा परेऽहनि"—इति।

पूर्व्व-काले भोजन-निषेधे विशेषमाह वृद्धवशिष्ठः,—

"ग्रहणन्तु भवेदिन्दोः प्रथमादधि यामतः।
भुञ्जीतावर्त्तनात् पूर्व्वं पश्चिमे प्रहरादधः॥
रवेस्त्वावर्त्तनादूर्द्धमर्व्वागेव निशीथतः।
चतुर्थे प्रहरे चेत् स्यात् चतुर्थ-प्रहरादधः"—इति।

रात्रौ प्रथमात् यामादधि ऊर्द्धं ग्रहणं चेत्, आवर्त्तनान्मध्याह्नात् पूर्व्वं भुञ्जीत; रात्रि-पश्चिम-यामे चेत्, रात्रि-प्रथम-यामादर्व्वाक् भुञ्जीत; अह्नश्चतुर्थ-प्रहरे रवि-ग्रहश्चेत्, रात्रेः चतुर्थ-प्रहरादधो भुञ्जीतेत्यर्थः। निशीथो मध्यरात्रिः। मध्याह्नादूर्द्धं रवि-ग्रहणं चेत्, मध्य-रात्रादर्व्वागेव भुञ्जीतेत्यर्थः। शशि-ग्रहणे याम-त्रयेण व्यवधानमपेक्षितं, सूर्य्य-ग्रहे तु याम-चतुष्टयेनेति तात्पर्य्यार्थः। तथाच वृद्ध गौतमः,—

"सूर्य्य-ग्रहे तु नाश्नीयात् पूर्व्वं याम-चतुष्टयम्।

चन्द्र-ग्रहे तु यामांस्त्रीन् वाल-वृद्धातुरैर्विना"—इति ।

वालवृद्धातुर-विषये मत्स्यपुराणे,—

"अपराह्णे न मध्याह्ने मध्याह्ने चेन्न सङ्गवे।

सङ्गवे ग्रहणं चेत्स्यान्न पूर्व्वं भोजनञ्चरेत्"—इति ।

समर्थस्य तु भोजने प्रायश्चित्तमुक्तं कात्यायनेन*,—

"चन्द्र-सुर्य्य-ग्रहे भुक्ता प्राजापत्येन शुद्ध्यति ।

तस्मिन्नेव दिने भुक्ता त्रिरात्रेणैव शुद्ध्यति"—इति ।

शशि-ग्रहणे याम-त्रयस्यापवादमाह वृद्धवशिष्ठः,—

"ग्रस्तोदये विधोः पूर्व्वं नाहर्भोजनमाचरेत्"—इति ।

ग्रस्तास्तमये विशेषमाह भृगुः,—

"ग्रस्तावेवास्तमानन्तु रवीन्दू प्राप्नुतो यदि ।

तयोः परेद्युरुदये स्नात्वाऽभ्यवहरेन्नरः"—इति ।

वृद्धगार्ग्योऽपि,—

"सन्ध्या-काले यदा राहुर्ग्रसते शशि-भास्करौ ।

तदहर्नैव भुञ्जीत रात्रावपि कदाचन"—इति ।

विष्णुधर्म्मोत्तरेऽपि,—

"अहोरात्रं न भोक्तव्यं चन्द्र-सूर्य्य-ग्रहोयदा ।

मुक्तिं दृष्ट्वा तु भोक्तव्यं स्नानं कृत्वा ततः परम्"—इति ।

ननु, मेघाद्यन्तर्द्धाने चाक्षुषं दर्शनं न सम्भवति इति चेत्†, दर्शन-शब्देन शास्त्र-विज्ञानस्य विवक्षितत्वात् । तदाह वृद्धगौतमः,—

---

* याज्ञवल्क्येन,—इति मु० पुस्तके पाठः ।

† अत्र,—इति चेन्न,—इति पाठो भवितुं युक्तः ।

"चन्द्र-सूर्य्य-ग्रहे नाद्यात् तस्मिन्नहनि पूर्व्वतः।

राहोर्विमुक्तिं विज्ञाय स्नात्वा कुर्व्वीत भोजनम्"—इति।

एवं तर्हि, परेद्युरुदयात् प्रागपि शास्त्र-विज्ञान-सम्भवाद् ग्रस्तास्तमयेऽपि तथैव भोजनं प्रसज्येत। तन्न,

"तयोः परेद्युरुदये स्नात्वाऽभ्यवहरेन्नरः"।

अहोरात्रं न भोक्तव्यम् * * *"—इति

वचन-द्वयेन * तदप्रसक्तेः। यत्तु स्कन्दपुराणे,—

"यदा चन्द्र-ग्रहस्तात, निशीथात् परतोभवेत्।

भोक्तव्यं तात, पूर्व्वाह्णे नापराह्णे कथञ्चन॥

पूर्व्वं निशीथात् ग्रहणं यदा चन्द्रस्य वै भवेत्।

तदा दिवा न कर्त्तव्यं भोजनं शिखि-वाहन"—इति।

तदिदं याम-त्रयाभिप्रायकं, "चन्द्र-ग्रहे तु यामांस्त्रीन्"—इति विशेषस्य वृद्धगौतमेनाभिधानात्। पाप-क्षय-कामोग्रहण-दिनमुपवसेत्। तदाह दक्षः,—

"अयने विषुवे चैव चन्द्र-सूर्य्य-ग्रहे तथा।

अहोरात्रोषितः स्नात्वा सर्व्वपापैः प्रमुच्यते"—इति।

पुत्री तु नोपवसेत्। तदाह नारदः,—

"संक्रान्त्यामुपवासञ्च कृष्णैकादशि-वासरे।

चन्द्र-सूर्य्य-ग्रहे चैव न कुर्य्यात् पुत्रवान् गृही"—इति।

ग्रस्तास्तमये तु पुत्रिणोऽप्युपवासएव, "अहोरात्रं न भोक्तव्यम्"—

---

* तन्न, तयोः परेद्युरुदयेभ्यवहरेदहोरात्रं न भोक्तव्यमिति वचनद्वयेन,—इति स० शा० पुस्तकयोः पाठः।

—इति भोजन-प्रतिषेधात्। कचित्तु ग्रहण-विशेषे स्नानादिकं न कर्त्तव्यम्। तदुक्तं षट्त्रिंशन्मते,—

"सूर्य्य-ग्रहो यदा रात्रौ दिवा चन्द्र-ग्रहस्तथा।
तत्र स्नानं न कुर्व्वीत दद्याद्दानं न च कचित्"—इति।

एतच्च भू-भाग-विशेष-व्यवस्थितानां ग्रास-मोक्ष-दर्शन-योग्यत्वाभावे द्रष्टव्यम्।

॥०॥ इति भोजन-प्रकरणम्॥०॥

इत्थं निरूपितेन भोजनान्तेन कर्त्तव्यजातेनाह्नः पञ्चम-भागमतिवाहयेत्। एतेन भाग-पञ्चक-कृत्याभिधानेनावशिष्ट-दिवस-कर्त्तव्यजातमुपलक्षणीयम्। तच्च कर्त्तव्यजातं दक्षेण दर्शितम्,—

"भुक्त्वा तु सुखमास्थाय तदन्नं परिणामयेत्*।
इतिहास-पुराणाद्यैः षष्ठ-सप्तमकौ नयेत्।
अष्टमे लोक-यात्रा तु बहिःसन्ध्यान्ततः पुनः"—इति।

अत्रिः,—

"दिवा स्वापं न कुर्व्वीत स्त्रियञ्चैव परित्यजेत्।
आयुःक्षीणा दिवा निद्रा दिवा स्त्री पुण्य-नाशिनी।
इतिहास-पुराणानि धर्म्म-शास्त्राणि चाभ्यसेत्॥
वृथा विवाद-वाक्यानि परिवादञ्च वर्ज्जयेत्"—इति।

विष्णुपुराणेऽपि,—

"अनायास-प्रदायीनि कुर्य्यात् कर्म्माण्यतन्द्रितः।

---

* परिणामयन्,—इति मु० पुस्तके पाठः।

सच्छास्त्रादि-विनोदेन सन्मार्गादविरोधिना *॥
दिनं नयेत्ततः सन्ध्यामुपतिष्ठेत् समाहितः"—इति ।

याज्ञवल्क्योऽपि,—

"अहः-शेषं समासीत शिष्टैरिष्टैश्च बन्धुभिः।
उपास्य पश्चिमां सन्ध्यां हुत्वाऽग्नींस्तानुपास्य च ।
भृत्यैः परिवृतो भुक्ता नातितृप्तोऽथ संविशेत्"—इति ॥

उपास्य चेति चकारेण वैश्वदेवादिकं समुच्चिनोति । सायंसन्ध्या-होमौ निरूपितौ। वैश्वदेवादौ कश्चिद्विशेषो विष्णुपुराणे दर्शितः,—

"पुनः पाकमुपादाय सायमप्यवनीपते ।
वैश्वदेव-निमित्तं वै पत्न्या सार्द्धं बलिं हरेत्॥
तत्रापि श्वपचादिभ्यस्तथैवान्नं विसर्जयेत् † ।
अतिथिं चागतं तत्र स्वशक्त्या पूजयेद्बुधः॥
दिवाऽतिथौ तु विमुखे गते यत्पातकं नृप।
तदेवाष्टगुणं पुंसां सूर्य्योढे विमुखे गते ॥
तस्मात् स्व-शक्त्या राजेन्द्र, सूर्य्योढमतिथिं नरः।
पूजयेत्, पूजिते तस्मिन् पूजिताः सर्व्व-देवताः!
कृत-पादादिशौचश्च भुक्ता सायं ततो गृही ॥
गच्छेच्छय्यामस्फुटितां ‡ ततोदारुमयीं नृप"—इति।

॥०॥ इत्यहःशेषादि-कृत्यम् ॥०॥

---

* नासच्छास्त्रविनोदेन सन्मार्गार्थविरोधिना,—इति मु० पुस्तके पाठः।
† तथैवान्नविसर्ज्जनं,—इति शा० पुस्तके पाठः।
‡ गच्छेच्छय्यामत्रुटितां,—इति मु० पुस्तके पाठः।

शयन-प्रकारमाह * हारीतः,—"सुप्रक्षालित-चरण-तलो रक्षां कृत्वा उदकं-पूर्ण-घटादि-मङ्गल्योपेतमात्माभिरुचितामनुपहतां सूचामां पठन् † शय्यामधिष्ठाय रात्रिसूक्तं जपित्वा विष्णुं नमस्कृत्य 'सर्पापसर्प भद्रन्ते',—इति श्लोकं जपित्वा इष्ट-देवता-स्मरणं कृत्वा समाधिमास्थायान्यांश्चैव वैदिकान् मन्त्रान् सावित्रीञ्च जपित्वा मङ्गल्यं श्रुतं शङ्खञ्च शृण्वन् दक्षिणाशिराः स्वपेत्"—इति । दक्षिणाशिराः,—इति प्रदर्शनार्थम् । तथाच विष्णुपुराणम्,—

"प्राच्यां दिशि शिरः शस्तं याम्यायामथवा नृप ।
सदैव स्वपतः पुंसोविपरीतन्तु रोगदम्"—इति ।

गार्ग्योऽपि,—

"स्वगेहे प्राक्शिराः शेते श्वाशुर्य्ये दक्षिणाशिराः ।
प्रत्यक्शिराः प्रवासे च न कदाचिदुदक्शिराः"—इति ।

पुराणेऽपि ‡,—

"रात्रिसूक्तं जपेत् स्मृत्वा सर्व्वांश्च सुखशायिनः ।
नमस्कृत्वाऽव्ययं विष्णुं समाधिस्थः स्वपेन्निशि"—इति ।

सुखशायिनोऽपि गालवेन § दर्शिताः,—

"अगस्तिर्माधवश्चैव मुचुकुन्दो ‖ महामुनिः ।

---

* अथाहः शेषादिकृत्यं । तत्र शयनप्रकारमाह,—इति स० शा० पुस्तकयोः पाठः ।

† सून्वा प्राणानिति पठन्,—इति शा० पुस्तके पाठः ।

‡ विष्णुपुराणेऽपि,—इति मु० पुस्तके पाठः ।

§ गोभिलेन,—इति मु० पुस्तके पाठः ।

‖ अगस्त्योमाधवश्चैव मुचिकुन्दो,—इति मु० पुस्तके पाठः ।

कपिलो मुनिरास्तीकः * पञ्चैते सुखशायिनः''—इति ।

शयने वर्ज्जनीयानाह मार्कण्डेयः,—

"शून्यालये श्मशाने च एकवृक्षे चतुष्पथे ।
महादेव-गृहे वाऽपि मातृ-वेश्मनि न स्वपेत् ॥
न यक्ष-नागायतने स्कन्दस्यायतने तथा ।
कूल-च्छायासु च तथा शर्करा-लोष्ट-पांशुषु ॥
न स्वपेच्च तथा गर्त्ते † विना दीपां कथञ्चन ।
धान्य-गो-विप्र-देवानां गुरूणाञ्च तथोपरि ॥
न चापि भग्नशयने नाशुचौ नाशुचिः स्वयम् ।
नार्द्रवासा न नग्नश्च ‡ नोत्तरा-स्थित-मस्तकः ॥
नाकाशे सर्व्वशून्ये च न च चैत्यद्रुमे तथा''—इति ।

विष्णुरपि,—"नार्द्रवासाः स्वपेन्न-पलाश-शयने न पञ्च-दारु-कृते न-भग्न-शयने न विद्युद्दग्धे नाग्निस्पृष्टे न बालमध्ये न चारिमध्ये न धान्ये न गुरु-हुताशन-सुराणामुपरि § नोच्छिष्टे न दिवि''—इति ।

विष्णुपुराणेऽपि,—

"नाविशालां न वै भग्नां नासमां मलिनां न च ।
न च जन्तुमयीं शय्यामधितिष्ठेदनास्तृताम्''—इति ॥

उशनाः,—"न तैलाभ्यक्त-शिराः स्वपेन्नादीक्षितः कृष्णचर्म्मणि''—इति।

---

* मुनिरास्तिकः,—इति मु० पुस्तके पाठः ।

† तटाकान्ते—इति मु० पुस्तके पाठः ।

‡ नार्द्रवासाननश्चैव,—इति शा० पुस्तके पाठः ।

§ न गो-हुताशन-गुरूणामुपरि,—इति मु० पुस्तके पाठः ।

दक्षः,—

"प्रदोष-पश्चिमौ यामौ वेदाभ्यास-रतोनयेत् ।
यामद्वयं शयानस्तु ब्रह्मभूयाय कल्पते"—इति ।

'सन्ध्यास्नानम्'—इत्यारभ्य, 'योवेष्टितशिराः'—इत्यन्तेन ग्रन्थ-सन्दर्भेण श्रुत्युपलक्षणाभ्यामाह्निकं संक्षिप्य निरूपितम् । एतस्य करणे श्रेयः अकरणे तु प्रत्यवायः । तदुक्तं कूर्म्मपुराणे,—

"इत्थं तदखिलं प्रोक्तमहन्यहनि वै मया ।
ब्राह्मणानां कृत्यजातमपवर्ग-फल-प्रदम् ॥
नास्तिक्यादथवाऽऽलस्याद्ब्राह्मणो न करोति यः ।
स याति नरकान् घोरान् काकयोनौ प्रजायते ॥
नान्योविमुक्तये पन्था मुक्त्वाऽऽश्रम-विधिं स्वकम् ।
तस्मात् कर्म्माणि कुर्व्वीत तुष्टये परमेष्ठिनः"—इति ॥

इत्यत्र, 'स्वकर्म्माभिरतः'—इत्यनेन ब्राह्मणस्य साधारणधर्म्मान्निरूप्य* तत्राध्ययनादि-साधारण-धर्म्म-प्रसङ्गागतमाह्निकं परिसमाप्येदानीं प्रकृतानेव क्रम-प्राप्तानभिषिक्तस्य क्षत्रियस्य साधारणधर्म्मानाह,—

**अव्रता ह्यनधीयानाः यत्र भैक्ष्यचरा द्विजाः ।**
**तं ग्रामं दण्डयेद्राजा चौर-भक्त-प्रदो हि सः ॥ ६० ॥**
**क्षत्रियो हि प्रजारक्षन्† शस्त्रपाणिः प्रदण्डवान् ।**
**निर्जित्य पर-सैन्यानि क्षितिं धर्म्मेण पालयेत् ॥ ६१ ॥**

---

* साधारणधर्म्मो निरूपितः,—इति मु० पुस्तके पाठः ।

† रक्षन्,—इति मु० पुस्तके पाठः ।

**पुष्पमात्रं विचिनुयान्मूलच्छेदं न कारयेत्।**
**मालाकार इवारामे न यथाऽङ्गार-कारकः॥६२॥इति॥**

द्विविधो हि राजधर्म्मः, दुष्ट-शिक्षा शिष्ट-परिपालनञ्च। तत्राद्येन श्लोकेन दुष्ट-शिक्षा प्रतिपाद्यते। व्रतशब्देनात्र ब्रह्मचारि-कर्त्तृकं मध्वादि-वर्जनमभिप्रेतम्। तथा च याज्ञवल्क्यः, "व्रतमपीडयन्"— इत्युक्ता विवक्षितं तद्व्रतं स्पष्टीचकार,—

"मधु-मांसाञ्जनोच्छिष्ट-शुक्त-स्त्री-प्राणिहिंसनम्।
भास्करालोकनाश्लील-परिवादांश्च वर्जयेत्"—इति।

यद्वा, स्व-गृह्य-प्रसिद्धानि प्राजापत्यादीनि चत्वार्य्यत्र व्रतशब्दाभिधेयानि। तदुभयविध-व्रत-रहिताः स्वाध्यायमप्यनधीयाना ब्रह्मचारिणो यत्र ग्रामे भैक्ष्यमाचरन्ति, तं ग्रामं दण्डयेत्। यतः, स ग्रामश्चौर-सदृशेभ्यो भक्तमन्नं प्रयच्छति। अनेन वचनेन विहितमननुतिष्ठतां प्रतिषिद्धमनुतिष्ठतां सर्व्वेषां राज्ञा दण्डनीयत्वमुपलक्ष्यते। अतएव नारदः,—

"यो यो वर्णोऽवहीयेत यश्चोद्रेकमनुव्रजेत्।
तं तं दृष्ट्वा स्वतोमार्गात् प्रच्युतं स्थापयेत्पथि"—इति॥

याज्ञवल्क्यः,—

"अशास्त्रोक्तेषु चान्येषु पापयुक्तेषु कर्म्मसु।
प्रसमीक्ष्यात्मना राजा दण्डं दण्ड्येषु पातयेत्॥
कुलानि जातीः श्रेणीश्च गणान् जानपदानपि।
स्वधर्म्माच्चलितान राजा विनीय स्थापयेत्पथि"—इति।

मनुरपि,—

"पिताऽऽचार्य्यः सुहृन्माता भार्य्या पुत्रः पुरोहितः ।
नादण्ड्योनाम राज्ञोऽस्ति यस्त्वधर्म्मेण तिष्ठति"—इति ।

याज्ञवल्क्योऽपि,—

"अपि भ्राता सुतोभार्य्या श्वशुरोमातुलोऽपि वा ।
नादण्ड्यो नाम राज्ञोऽस्ति धर्म्माद्विचलितः स्वकात्"—इति ।

दण्ड्य-दण्डनं प्रशंसति याज्ञवल्क्यः,—

"यो दण्ड्यान् दण्डयेद्राजा सम्यग्वध्यांश्च घातयेत् ।
इष्टं स्यात् क्रतुभिस्तेन समाप्त-वर-दक्षिणैः"—इति ।

अदण्ड्य-दण्डनं निषेधयति मनुः,—

"अदण्ड्यान् दण्डयन् राजा दण्ड्यांश्चैवाप्यदण्डयन् ।
अयशोमहदाप्नोति नरकञ्चैव गच्छति"—इति ।

दण्डश्च द्विविधः, शारीरोऽर्थ-दण्डश्च *। यथाऽऽह नारदः,—

"शारीरश्चार्थ-दण्डश्च † दण्डश्च द्विविधः स्मृतः ।
शारीरस्ताडनादिस्तु मरणान्तः प्रकीर्त्तितः ॥
काकिन्यादिस्त्वर्थ-दण्डः ‡ सर्व्वस्वान्तस्तथैवच"—इति ।

राज्ञोदण्डयितृत्वं महता प्रबन्धेन सम्भावयति मनुः,—

"अराजके हि लोकेऽस्मिन् सर्व्वतोविद्रुते भयात् ।
रक्षार्थमस्य सर्वस्य राजानमसृजत्प्रभुः ॥

---

* शारीर आर्थिकश्चेपि,—इति मु० पुस्तके पाठः ।
† शारीर आर्थिकश्चेति,—इति मु० पुस्तके पाठः ।
‡ काण्यादिस्त्वर्थदण्डस्तु,—इति मु० पुस्तके पाठः ।

इन्द्रानिलयमार्काणामग्नेश्च वरुणस्य च।
चन्द्र-वित्तेशयोश्चैव मात्रानिर्हृत्य शाश्वतीः॥
यस्मादेषां सुरेन्द्राणां मात्राभ्योनिर्म्मितोनृपः।
तस्मादभिभवत्येष सर्व्वभूतानि तेजसा॥
तपत्यादित्यवच्चैव चक्षूंषि च मनांसि च।
न चैनं भुवि शक्नोति कश्चिदप्यभिवीक्षितुम्* ॥
सोऽग्निर्भवति वायुश्च सोऽर्कः सोमः स धर्म्मराट्।
स कुवेरः स वरुणः स महेन्द्रः प्रभावतः॥
वालोऽपि नावमन्तव्यो मनुष्य इति भूमिपः।
महती देवता ह्येषा नररूपेण तिष्ठति॥
एकमेव दहत्यग्निर्नरं दुरुपसर्पिणम्।
कुलन्दहति राजाग्निः स-पशु-द्रव्य-सञ्चयम्॥
कार्य्यं सोऽवेक्ष्य शक्तिञ्च देश-कालौ च† तत्त्वतः।
कुरुते धर्म्म-सिद्ध्यर्थं विश्वरूपं पुनः पुनः॥
यस्य प्रसादे पद्माऽऽस्ते विजयश्च पराक्रमे।
मृत्युश्च वसति क्रोधे सर्वतेजोमयो हि सः॥
यस्तु तं द्वेष्टि सम्मोहात् स विनश्यत्यसंशयम्।
तस्य ह्याशु विनाशाय राजा प्रकुरुते मनः॥
तस्माद्धर्ममभीष्टेषु‡ सत्यं पश्येन्नराधिपः।

---

* यः कश्चिदभिवीक्षितुम्,—इति मु० पुस्तके पाठः।
† देशं कालञ्च,—इति मु० पुस्तके पाठः।
‡ तस्माद्धर्म्मोऽयमिष्टेषु,—इति मु० पुस्तके पाठः।

अनिष्टस्याप्यनिष्टेषु तद्धर्म्मं न विचालयेत् ॥
तस्यार्थे सर्वभूतानां गोप्तारं धर्म्ममात्मनः ।
ब्रह्म-तेजोमयं दण्डमसृजत् पूर्वमीश्वरः ॥
तं राजा प्रणयेद्दण्डं * त्रिवर्गेणाभिवर्द्धते"—इति ।

महाभारते,—

"परोक्षादेवताः सर्वा राजा प्रत्यक्ष-देवता ।
प्रसादस्य प्रकोपस्य प्रत्यक्षो यस्य † दृश्यते ॥
राजा माता पिता चैव राजा कुलवतां कुलम् ।
राजा सत्यञ्च धर्म्मश्च राजा हितकरो नृणाम् ॥
कालो वा कारणं राज्ञो राजा वा काल-कारणम् ।
इति ते संशयोमाभूद्राजा कालस्य कारणम् ।
राज-मूलोमहाराज, धर्म्मोलोकस्य रक्ष्यते ॥
प्रजा राज-भयादेव न खादन्ति परस्परम्"—इति ।

ननु, 'दण्डयेद्राजा'—इति भूपालस्यापि दण्डयितृत्वमुक्तम्, तत्कथं क्षत्रियस्यासाधारण-धर्म्मः ? मैवं, राजशब्दस्य क्षत्रिय-विषयत्वेनावेष्ट्यधिकरणे निर्णीतत्वात् । तथाहि,—

द्वितीयाध्याये अवेष्ट्यधिकरणे श्रूयते,—"आग्नेयमष्टाकपालं निर्वपति हिरण्यं दक्षिणा"—इत्यादिना राजकर्तृके राजसूये अवेष्टिनामकेष्टिं प्रकृत्य, "यदि ब्राह्मणोयजेत वार्हस्पत्यं मध्ये विधायाहुतिं हुत्वा तमभिघारयेत्, यदि राजन्यऐन्द्रं, यदि वैश्यो वैश्वदेवम्"—इति ।

* प्रशायन् धर्म्मं,—इति मु० पुस्तके पाठः ।
† यत्र,—इति मु० पुस्तके पाठः ।

तत्र संशयः; किं ब्राह्मणादीनामवेष्टौ प्राप्तानां वर्णानां राजसूये अधिकारः, उत क्षत्रियस्यैव? इति। तदर्थं च, किं राजशब्दः त्रयाणामपि वर्णानां वाचकः, किं वा क्षत्रियस्यैव? इति। ततोऽपि पुनर्विचारयितव्यम्; किं राजशब्दो राज्य-योग-निमित्तः, क्षत्रियत्व-निमित्तो वा? इति। तत्र, राजशब्दो राज्य-योग-निमित्तएव, आर्य्य-प्रसिद्धेः सर्वलोक-प्रसिद्धत्वादविगानाच्च। न तु क्षत्रियत्व-निमित्तः, अनार्य्य-प्रसिद्धेरार्य्य-प्रसिद्ध्यपेक्षया दुर्बलत्वात्। द्रविड़ेषु विगानात्। तदन्येष्वप्रसिद्धेश्च। तत्र स्यात्* राज्य-योगात् राजानस्त्रयोऽपि भवन्ति। राज्यपदन्तु, रूढ्या जनपद-रक्षणे वर्त्तते; न राज-योगमपेक्षते।

ननु, 'कर्म्मणि'—इत्यधिकृत्य, "पत्यन्तपुरोहितादिभ्योयक्"—इति वचनात् राजशब्दस्य तत्र पाठादाचाराच्च स्मृतेर्बलीयस्त्वात् राज-योगएव राज्यपद-प्रवृत्ति-निमित्तमिति चेत्। लोक-प्रयोगस्यैव शब्दार्थावधारणे प्रमाणत्वात् स्मृतेरपि सएव मूलं नान्यत्। प्रयोगाच्च राज्यशब्दस्यैव स्वातन्त्र्यं तन्निमित्तत्वं च राजशब्दस्यावगम्यते। ततस्तदनुसारेण, स्मरणं शब्दापशब्द-विभाग-मात्र-परं व्याख्येयम्। अतस्त्रयाणामपि राजपदाभिधेयत्वेन राजसूये प्राप्तानां निमित्तार्थानि श्रवणानि। 'यदि' शब्दोऽपि, राजशब्दस्य राज्य-योग-निमित्तत्वे प्रमाणम्। अन्यथा, प्राप्त्यभावात् 'यदि' शब्दोऽनुपपन्नः स्यात्। वैदिकस्य निर्देशः स्मृतेरपि बलीयान्। तस्मात्, निमित्तार्थानि श्रवणानि,—इति प्राप्ते ब्रूमः।

न तावद्वैदिक-निर्देशादत्र निर्णयः शक्यते, अन्यथाऽपि तत्-

* अत्र, तस्मात्,—इति पाठो भवितुं युक्तः।

सद्भावात् । 'राजानमभिषेचयेत्'—इति ह्यभिषेक-विधौ प्रागेव राज्य-योगाद्राजशब्दस्य* चत्रियमात्रएव प्रयुक्तः। तेन, रूढमेव राज-पदं निर्णीयते । 'यदि' शब्दस्तु, निपातत्वाद् यथाकथञ्चिदपि नियमे† न दुष्यति,—इति। स्मरणाच्च स्वतन्त्रमेव राजपदम्। नच तस्य निर्मूलत्वं, द्रविड़-प्रयोगस्यैव मूलस्य सम्भवात्। अतोन यथार्थत्वे‡ स्मरणस्य प्रमाणमस्तीति तेनैवाभियुक्त-प्रणीतेनाचारस्य सम्भवात् गौण-भ्रान्त्यादि-प्रयोग-प्रसूतस्य बाधात् राज-योगेन राज्यशब्दः, स्वतन्त्रस्तु राजशब्दः चत्रिय-वचन इति ब्राह्मणादेरवेष्टौ प्राप्त्यभावात् प्रापकानि वचनानि,—इति । एवमत्रापि राजशब्दः चत्रिय-परः§ ।

ननु, जन-रञ्जनाद्राजत्वं महाभारतेऽभिहितम्,

"रञ्जनात् खलु राजत्वं प्रजानां पालनादपि"—इति।

बाढ़ं, सम्भवत्येवं चत्रियस्यापि रञ्जकत्वं, 'चत्रियोहि'—इत्यनेन द्वितीयश्लोकेन शिष्ट-पालनरूपो धर्म्मोविधीयते|| राज-धर्म्मेषु प्रजा-रक्षणस्य¶ प्राधान्येन विवक्षितत्वात् प्रथमं प्रजारक्षणमित्युक्तम् । अतएव याज्ञवल्क्यः,—

"प्रधानः चत्रिये धर्म्मः;** प्रजानां परिपालनम्"—इति ।

---

* राजशब्दः,—इति पाठो भवितुं युक्तः ।

† नयने,—इति पाठो भवितुं युक्तः ।

‡ अतो नायथार्थत्वे,—इति पाठो भवितुं युक्तः ।

§ 'तथाहि'—इत्यारभ्य, 'चत्रियपरः'—इत्यन्तोग्रन्थः मुद्रितातिरिक्त-पुस्तकेषु न दृश्यते ।

|| धर्म्मोनिरूप्यते,—इति मु० पुस्तके पाठः ।

¶ प्रजारञ्जनस्य,—इति मु० पुस्तके पाठः । एवं परत्र ।

** प्रधानं चत्रियेकर्म्म,—इति स० शा० पुस्तकयोः पाठः ।

मनुरपि तदेवादौ प्रदर्शयति,—

"प्रजानां रक्षणं दानमिज्याऽध्ययनमेवच।
विषयेष्वप्रसक्तिश्च क्षत्रियस्य समादिशत्"—इति।

शान्तिपर्व्वण्यपि,—

"नृपाणां परमोधर्म्मः प्रजानां परिपालनम्।
निर्द्दिष्ट-फल-भोक्ता हि राजा धर्मेण युज्यते॥
वर्णानामाश्रमाणाञ्च राजा भवति पालकः।
स्वे स्वे धर्मे नियुञ्जानः प्रजाः स्वाः पालयेत् सदा॥
पालनेनैव भूतानां कृतकृत्यो महीपतिः।
सम्यक् पालयिता भागं धर्मस्याप्नोति पुष्कलम्॥
यजते यदधीते च यद्ददाति यदर्च्चति।
राजा षड्भाग-भाक् तस्य प्रजा धर्मेण पालयन्॥
सर्व्वाश्चैव प्रजा नित्यं राजा धर्म्मेण पालयेत्।
उत्थानेन प्रसादेन पूजयेच्चापि धार्म्मिकान्॥
राज्ञा हि पूजितोधर्म्मस्ततः सर्व्वत्र पूज्यते।
यद् यदाचरते राजा तत् प्रजानाञ्च रोचते"—इति।

मार्कण्डेयपुराणे,—

"वत्स, राज्याभिषिक्तेन प्रजारञ्जनमादितः॥
कर्त्तव्यमविरोधेन स्वधर्म्मस्य महीभृता।
पालनेनैव भूतानां कृतकृत्योमहीपतिः॥
सम्यक् पालयिता भागं धर्म्मस्याप्नोति पुष्कलम्"—इति।

ब्रह्माण्डपुराणे,—

"यदह्ना कुरुते धर्म्मं प्रजाधर्म्मेण पालयन्।
दश-वर्ष-सहस्राणि तस्य भुङ्क्ते महत्फलम्"—इति*।

मनुरपि†,—

"सर्व्वतोधर्म्म-षड्भागो राज्ञोभवति रक्षतः।
अधर्म्मादपि षड्भागो भवत्येव ह्यरक्षतः‡॥
रक्षन् धर्म्मेण भूतानि राजा वध्यांश्च घातयन्।
यजतेऽहरहर्यज्ञैः सहस्र-शत-दक्षिणैः॥
योऽरक्षन्वलिमादत्ते करं शुल्कञ्च पार्थिवः।
प्रीतिं भोगं च दण्डञ्च स सद्योनरकं व्रजेत्"॥

रक्षणीयाश्च प्रजाभयमापन्नाः, भयञ्च तासां द्वेधा सम्पद्यते; चोर-व्याघ्रादिभ्यः पर-सैन्येभ्योवा। अतस्तदुभय-निवारणाय, 'प्रदण्डवान्'—इति, 'परसैन्यानि निर्जित्य'—इति चोक्तम्। एतच्च निवारणं क्षत्रियस्यैव कुतोऽसाधारणमित्याशङ्क्य तद्धेतुत्वेन शस्त्रपाणित्वं वर्णितम्। तच्च क्षत्रियस्यैव। तथाच मनुः,—

"शस्त्रास्त्रभृत्त्वं क्षत्रस्य वणिक्-पशु-कृषिर्व्विशः।
आजीवनार्थं धर्म्मस्तु दानमध्ययनं जगुः"—इति।

आनुशासनिकेऽपि क्षत्रियं प्रकृत्य पठ्यते,—

"उत्साहः शस्त्रपाणित्वं§ तस्य धर्म्मः सनातनः"।

---

* 'इति' शब्दो नास्ति मु० पुस्तके।
† 'मनुरपि'—इति नास्ति मु० पुस्तके।
‡ नास्तीदमर्द्धं मु० पुस्तके।
§ शस्त्रजीवित्वं,—इति शा० पुस्तके पाठः।

शस्त्रपाणित्वेन च युद्धोपकरणानि सर्व्वाण्युपलक्ष्यन्ते। तानि च शान्तिपर्व्वणि दर्शितानि,—

"यष्टयस्तोमाराः खड्गाः निशिताश्च परश्वधाः।
फलकान्यथ वर्म्माणि परिकल्प्यान्यनेकशः"॥

'प्रदण्डवान्'—इत्यनेन चौरादि-शिक्षा विवक्षिता। यद्यप्येषा पूर्व्ववचनएवोक्ता, तथापि तत्र प्राधान्येन प्रतिपादिता, अत्र तु प्रजारक्षण-साधनत्वेनेति न पौनरुक्त्यम्। दण्ड-प्रकारमाह मनुः,—

"अनुबन्धं परीक्ष्याथ देश-कालौ च तत्त्वतः।
सापराधमथालोच्य दण्डं दण्ड्येषु पातयेत्"॥

विष्णुः,—

"आगःस्वपि तथाऽन्येषु ज्ञात्वा जातिं धनं वयः।
दण्डन्तु प्रणयेद्राजा सामन्त-ब्राह्मणैः सह"—इति।

बृहस्पतिरपि,—

"वाग्धिग्वधः स्वकञ्चैव चतुर्द्धा कल्पितोदमः।
पुरुषे दोष-विभवं ज्ञात्वा संपरिकल्पयेत्॥
गुरून् पुरोहितान् विप्रान् वाग्दण्डेनैव दण्डयेत्।
विवादिनोनरांस्त्वान्यान् दोषिणोऽर्थेन दण्डयेत्॥
महापराध-युक्तांश्च बध-दण्डेन दण्डयेत्"।

तथा कात्यायनः,—

"मित्रादिषु प्रयुञ्जीत वाग्दण्डं धिक् तपस्विनाम्।
यथोक्तं तस्य तत्कुर्य्युरनुक्तं साधु-कल्पितम्॥
अधार्म्मिकं त्रिभिर्न्यायैर्निगृह्णीयात् प्रयत्नतः।

निरोधनेन बन्धेन विविधेन वधेन च"—इति।

मनुः,—

"दश स्थानानि दण्डस्य मनुः स्वायम्भुवोऽब्रवीत्।
त्रिषु वर्णेषु तानि स्युरक्षतो ब्राह्मणो व्रजेत्॥
उपस्थमुदरं जिह्वा हस्तौ पादौ च पञ्चमम्।
चक्षुर्नासे च कर्णौ च धनं देहस्तथैव च॥
मौण्ड्यं प्राणान्तिको दण्डो ब्राह्मणस्य विधीयते।
पुरुषाणां कुलीनानां नारीणाञ्च विशेषतः"—इति।

बृहस्पतिरपि,—

"जगत् सर्व्वमिदं हन्यात् ब्राह्मणस्य न तत्समम्।
तस्मात्तस्य वधं राजा मनसाऽपि न चिन्तयेत्॥
अवध्यान् ब्राह्मणानाहुः सर्व्वपापेष्ववस्थितान्।
यद्यद्विप्रेषु कुशलं तत्तद्राजा समाचरेत्॥
राष्ट्रादेनं वहिः कुर्य्यात् समग्रधनमक्षतम्"—इति।

यमोऽपि,—

"एवं धर्म्म-प्रवृत्तस्य राज्ञो दण्डधरस्य च।
यशोऽस्मिन् प्रथते लोके स्वर्गे वासस्तथाऽक्षयः"—इति।

पर-सैन्य-निर्जयस्तु शान्तिपर्व्वणि दर्शितः,—

"चैत्रे वा मार्गशीर्षे वा सेनायोगः प्रशस्यते।
पक्वशस्या हि पृथिवी भवत्यम्बुमती तथा*॥
नैवातिशीतो नात्युष्णः कालो भवति भारत।

* तदा,—इति शा० पुस्तके पाठः।

तस्मात्तदा योजयीत परेषां व्यसनेषु वा ॥
एते हि योगाः सेनायाः प्रशस्ताः पर-बाधने।
जलवांस्तृणवान्मार्गः समोगम्यः प्रशस्यते ॥
चारैः सुविदिताभ्यासः* कुशलैर्वनगोचरैः।
सप्तर्षीन् पृष्ठतः कृत्वा युद्ध्येयुरचलादिव ॥
यतोवायुर्यतः सूर्य्यो यतः शुक्रस्ततोजयः।
अकर्द्दमामनुदकाममर्य्यादामलोष्टकाम् ॥
अश्वभूमिं प्रशंसन्ति ये युद्धकुशलाजनाः।
समा निरुदका चैव रथभूमिः प्रशस्यते ॥
नीचद्रुमा महाकक्षा सोदका हस्तियोधिनाम्।
बहुदुर्गा महावृक्षा वेणु-वेत्र-तिरस्कृता ॥
पदातीनां क्षमा भूमिः सर्व्वतोनवनानि च।
पदाति-बहुला सेना दृढ़ा भवति† भारत ॥
तथाऽश्व-बहुला सेना सुदिनेषु प्रशस्यते।
पदाति-नाग-बहुला प्रावृट्काले प्रशस्यते ॥
गुणानेतान् प्रसङ्ख्याय युद्धं शत्रुषु योजयेत्"—इति।

मनुरपि,—

"यदा तु यानमातिष्ठेदरि-राष्ट्रं प्रति प्रभुः।
तदाऽनेन विधानेन यायादरि-पुरं शनैः ॥
मार्गशीर्षे शुभे मासे यायाद्यात्रां महीपतिः।

---

* सुविदितोऽभ्यास,—इति मु० पुस्तके पाठः।

† प्रधावति च,—इति मु० पुस्तके पाठः।

फाल्गुनं वाऽथ चैत्रं वा मासौ प्रति यथावलम्* ॥
अन्येष्वप्यृतु-कालेषु यदा पश्येद्ध्रुवं जयम् ।
तदा यायाद्विगृह्यैव व्यसने चोत्थिते रिपोः[१] ॥
कृत्वा विधानं मूले तु यात्रिकञ्च यथाविधि ।
उपां गृह्यास्पदञ्चैव चारान् सम्यग्विधाय च[२] ॥
संशोध्य त्रिविधं मार्गं षड्विधञ्च स्वकं बलम्[३] ।
साम्परायिक-कल्पेन यायादरि-पुरं शनैः"—इति ।

बलस्य षड्विधता-उशनसा दर्शिता,—"मूल-बलं श्रेणी-बलं मित्र-बलं भृतक-बलं शत्रु-बलमाटविक-बलं च"—इति । युद्धार्थं सैन्य-सन्नाह-रचनामाह मनुः,—

"दण्डव्यूहेन तन्मार्गं यायात्तु शकटेन वा ।
वराह-मकराभ्यां वा सूच्या वा गरुडेन वा ॥

* फाल्गुने वाथ चैत्रे वा मासे प्रति यथावलम्,—इति मु० पुस्तके पाठः ।
† उत्त,—इति मु० पुस्तके पाठः ।

(१) व्यसनानि च कामज-क्रोधज भेदेन द्विविधानि । अत्र, कामजानि दश, क्रोधजान्यष्टाविति मिलित्वा अष्टादश । तदुक्तं मनुनैव । "कामजेषु प्रसक्तो हि व्यसनेषु महीपतिः । वियुज्यतेऽर्थधर्माभ्यां क्रोधजे स्वात्मनैव हि ॥ मृगयाऽक्षो दिवास्वप्नः परिवादः स्त्रियो-मदः । तौर्य्यत्रिकं वृथाट्या च कामजोदशकोगणः ॥ पैशुन्यं साहसं द्रोह ईर्ष्याऽसूयाऽर्थदूषणम् । वाग्दण्डजञ्च पारुष्यं क्रोधजोऽपि गणोऽष्टकः"—इति ।
(२) मूले स्वकीयदुर्गराष्ट्ररूपे । विधानं तद्रक्षार्थं सैन्यैकदेशस्थापनम् । आस्पदं शत्रुराष्ट्रस्थस्य येनावस्थानमस्य भवति तादृशं पटमण्डपादि ।
(३) जाङ्गलानूपाटविकरूपविषयभेदेन मार्गस्य त्रैविध्यम् ।

यतश्च भयमाशङ्केत्ततो विस्तारयेद्दलम् ।
पद्मेन चैव व्यूहेन निविशेत तथा स्वयम् ॥
सेनापतीन् बलाध्यक्षान् सर्व्वदिक्षु निवेशयेत् ।
यतश्च भयमाशङ्केत्तां प्राचीं कल्पयेद्दिशम् ॥
गुल्मांश्च स्थापयेदाप्तान् कृतसंज्ञान् समन्ततः ।
स्थाने युद्धे च कुशलानभीरूनविकारिणः ॥
संहतान् योधयेदल्पान्* कामं विस्तारयेद्बहून् ।
सूच्या वज्रेन चैवैतान् व्यूहेन व्यूह्य योधयेत् ॥
स्यन्दनाश्वैः समे युद्ध्येदनूपे नौ-द्विपैस्तथा ।
वृक्षगुल्मावृते चापैरसिचर्म्मायुधैः स्थले ॥
कुरुक्षेत्रांश्च मत्स्यांश्च पाञ्चालाञ्छूरसेनजान् ।
दीर्घान् लघूंश्चैव नरानग्रानीकेषु योजयेत्† ॥
प्रहर्षयेद्दलं व्यूह्य तांश्च सम्यक् परीक्षयेत् ।
चेष्टाश्चैव विजानीयादरीन् योधयतामपि ॥
उपरुध्यारिमासीत राष्ट्रञ्चास्योपपीड़येत् ।
दूषयेच्चास्य सततं यवसान्नोदकेन्धनम् ॥
भिन्द्याच्चैव तटाकानि प्रकार-परिखास्तथा ।
समवस्कन्दयेच्चैनं रात्रौ वित्रासयेदपि ॥
उपजाप्यानुपजपेद्बुध्येच्चैव हि तत्कृतम् ।

---

* संहतान् विभजेदस्मान्,—इति मु॰ पुस्तके पाठः ।

† योधयेत्,—इति पाठान्तरम् ।

युक्ते च दैवे(१) युध्येत जयप्रेप्सुरपेतभीः ।
साम्ना दानेन भेदेन समस्तैरथवा पृथक् ॥
विजेतुं प्रयतेतारीन् न युद्धेन कदाचन ।
अनित्योविजयो यस्मात् दृश्यते युध्यमानयाः ॥
पराजयश्च संग्रामे तस्माद्युद्धं विवर्जयेत् ।
त्रयाणामप्युपायानां पूर्व्वोक्तानामसम्भवे ।
तथा युध्येत संयत्तो* विजयेत रिपुं यथा ॥
जित्वा संपूजयेद्देवान् ब्राह्मणांश्चैव धार्म्मिकान् ।
प्रदद्यात् परिहारांश्च† ख्यापयेदभयानि च ॥
सर्व्वेषान्तु विदित्वैषां समासेन चिकीर्षितम् ।
स्थापयेत् तत्र तद्वंश्यं कुर्य्याच्च समयक्रियाम् ॥
प्रमाणानि च कुर्व्वीत तेषां धर्म्मान् यथोदितान्''—इति ।

उक्त-प्रकारेण परसैन्यानि निर्जित्य, जितामेतां पूर्व्वाञ्च स्वकीयां भुवं राज-धर्म्मेण‡ पालयेत्। तदेव धर्म्मेण पालनं, 'पुष्पमात्रं'—इति तृतीय-श्लोकेन विशदीक्रियते । यथा, मालाकार आरामे यदा यदा यत् यत्पुष्पं विकसति तदा तदा तद्विचिनोति न तु पुष्पलतामुन्मूलयति, तथा प्रजाभ्यः करमाददानो राजा यथोदयं षष्ठं भागं

* युद्ध्येत सममम्पत्त्या,—इति मु० पुस्तके पाठः ।
† परिहारार्थं,—इति मु० पुस्तके पाठः ।
‡ राजा धर्म्मेण,—इति पाठो भवितुं युक्तः ।

(१) पूर्व्वकालीनपुरुषदेहनिष्पन्नं सुकृतं दुष्कृतञ्च फलोन्मुखीभूतं सत् सुदैवं दुर्दैवञ्चेत्युच्यते । तदुक्तम् । "तत्र दैवमभिव्यक्तं पौरुषं पौर्व-देहिकम्''—इति ।

गृह्णीयात्। अंगार-कारकस्तु वृक्षमुन्मूल्य सर्व्वात्मना दहति, न तु तथा प्रजाः पीड़येत्। एतच्च शान्तिपर्व्वणि दर्शितम्,—

"मधुदोहं दुहेद्राष्ट्रं भ्रमरान्न प्रवासयेत्।
नचेत्तुवत् पीड़येत* स्तनांश्चैव विकुट्टयेत्॥
जलौकावत्† पिवेद्राष्ट्रं मृदुनैव नराधिपः।
व्याघ्रीवद्धरेत्‡ पुत्रं न दंशेन्न च पीड़येत्॥
यथा च लेखकः पर्णमाखुः पादत्वचं यथा।
अतीक्ष्णेनाप्युपायेन वर्द्धमानं प्रदापयेत्॥
ततोभूयस्ततोभूयः क्रमाद्वृद्धिं समाचरेत्"—इति।

मनुरपि,—

"क्रयविक्रयमध्वानं भक्तञ्च सपरिव्ययम्।
योगं क्षेमञ्च संप्रेक्ष्य वणिजो दापयेत् करान्॥
यथा फलेन युज्येत राजा कर्त्ता च कर्म्मणाम्।
तथाऽवेक्ष्य नृपोराष्ट्रे कल्पयेत् सततं करान्॥
यथाऽल्पाल्पमदन्त्याद्यं वार्य्योकोवत्सषट्पदाः।
तथाऽल्पाल्पोग्रहीतव्यो राष्ट्राद्राज्ञाऽऽब्दिकः करः"—इति।

मार्कण्डेयोऽपि,—

"मासानष्टौ यथा सूर्य्यस्तोयं हरति रश्मिभिः।
सूक्ष्मेणैवाभ्युपायेन तथा शुल्कादिकं नृपः"—इति।

---

* नेक्षुवत् पीड़येल्लोकं,—इति शा० पुस्तके पाठः।
† जलूकावत्,—इति मु० पुस्तके पाठः।
‡ व्याघ्रीवदाहरेत,—इति मु० पुस्तके पाठः।

एतच्च करादानं मालाकार-दृष्टान्तेन प्रतिपादितमितरेषामपि सर्व्वेषां राज-धर्म्माणामुपलक्षणम्। ते च धर्म्माः याज्ञवल्क्येन दर्शिताः,—

"महोत्साहः स्थूललक्षः कृतज्ञो वृद्ध-सेवकः।
विनीतः सत्वसम्पन्नः कुलीनः सत्यवाक् शुचिः॥
अदीर्घसूत्रः स्मृतिमानक्षुद्रो*ऽपरुषस्तथा।
धार्म्मिकोऽव्यसनश्चैव प्राज्ञः शूरोरहस्यवित्॥
स्व-रन्ध्र-गोप्ताऽऽन्वीक्षिक्यां दण्डनीत्यां तथैवच।
विनीतस्त्वथ वार्त्तायां त्रय्याञ्चैव नराधिपः"—इति।

यएतेऽन्तरङ्गा राजधर्म्माः, एतएव राजगुणाः,—इत्यप्युच्यन्ते†। अतएव, "षट्त्रिंशद्गुणोपेतो राजा",—इत्यस्य सूत्रस्य व्याख्यानावसरे, महोत्साहादयः उशनसा पठिताः। वहिरङ्गाश्रपि राजधर्म्मा याज्ञवल्क्येन दर्शिताः,—

"सुमन्त्रिणः प्रकुर्व्वीत प्राज्ञान्मौलान् स्थिरान् शुचीन्।
तैः सार्द्धं चिन्तयेद्राज्यं विप्रेणाथ ततः स्वयम्"—इति।

मनुरपि,—

"मौलाञ्छास्त्रविदः शूरान् लब्धलक्षान् कुलोद्गतान्।
सचिवान् सप्त चाष्टौ वा प्रकुर्व्वीत परीक्षितान्॥
तैः सार्द्धं चिन्तयेन्नित्यं सामादीन् सन्धि-विग्रहान्‡।

---

* स्मृतिमानक्षुद्रो,—इति मु० पुस्तके पाठः।
† यएतेऽन्तरङ्गाराजगुणा इत्युच्यन्ते तएते राजधर्म्माः,—इति मु० पुस्तके पाठः।
‡ सामान्यं सन्धिविग्रहम्,—इति पाठान्तरम्।

स्थानं समुदयं गुप्तिं लब्ध-प्रशमनानि च[१] ॥
तेषां स्वं स्वमभिप्रायमुपलभ्य पृथक् पृथक्।
समस्तानाञ्च कार्य्येषु विदध्याद्धितमात्मनः ॥
सर्व्वेषान्तु विशिष्टेन ब्राह्मणेन विपश्चिता।
मन्त्रयेत् परमं मन्त्रं राजा षामान्य-संयुतम्* ॥
नित्यं तस्मिन् समाश्वस्तः सर्व्वकार्य्याणि निःक्षिपेत्।
तेन सार्द्धं विनिश्चित्य ततः कर्म्म समारभेत्"—इति।

आरभणीयञ्च कर्म्म, देश-विशेषे दुर्ग-सम्पादनम्। तच्च याज्ञवल्क्येन दर्शितम्,—

"रम्यं यशस्यमाजीव्यं† जाङ्गलं देशमावसेत्।
तत्र दुर्गाणि कुर्व्वीत जनकोशात्मगुप्तये"—इति ॥

दुर्गभेदामनुना दर्शिताः,—

"धन्वदुर्गं महीदुर्गमब्दुर्गं वार्क्षमेव वा।
नृदुर्गं गिरिदुर्गञ्च समावृत्य वसेत् पुरम् ॥
सर्व्वेण तु प्रयत्नेन गिरिदुर्गं समाश्रयेत्"—इति।

दुर्ग-संविधान-प्रकारः शान्तिपर्व्वणि दर्शितः,—

---

* षाड्गुण्यसंयुतम्,—इति पाठान्तरम्।
† प्रशस्यमाजीव्यम्,—इति मु० पुस्तके पाठः।

---

(१) तिष्ठत्यनेनेति स्थानं दण्डकोषपुरराष्ट्रात्मकं चतुर्व्विधम्। समुदयन्त्युत्पद्यंते अर्था अस्मादिति समुदयोधान्यहिरण्याद्युत्पत्तिस्थानम्। आत्मगता राष्ट्रगता च रक्षा गुप्तिः। लब्धस्य प्रशमनं सत्पात्रे प्रतिपादनादिकम्।

"दृढ-प्राकार-परिखं हस्त्यश्व-रथ-सङ्कुलम् ।
ऊर्ज्जस्विननागरञ्च चत्वरापण-शोभितम् ॥
प्रसिद्ध-व्यवहारञ्च प्रशान्तमकुतोभयम् ।
शूराढ्यं प्राज्ञ-सम्पूर्णं तत्पुरं स्वयमाविशेत्"—इति ।

मनुरपि,—

"तस्यादायुध-सम्पन्नं धन-धान्येन वाहनैः ।
ब्राह्मणैः शिल्पिभिर्यन्त्रैर्यवसेनोदकेन्धनैः ॥
तस्य मध्ये तु पर्य्याप्तं कारयेद्गृहमात्मनः ।
गुप्तं सर्व्वर्त्तुकं शुद्धं जल-वृक्ष-समन्वितम्"—इति ।

दुर्ग-संविधानमुक्त्वा यागादि-धर्म्मानपि सएवाह,—

"तदध्यास्योद्वहेद्भार्य्यां सवर्णां लक्षणान्विताम् ।
कुले महति सम्भूतां हृद्यां रूप-समन्विताम्* ॥
पुरोहितञ्च कुर्व्वीत वृणुयादेव चर्त्विजम् ।
तेऽस्य गृह्याणि कर्म्माणि कुर्य्युर्वैतानिकानि च ॥
यजेत राजा क्रतुभिर्विविधैराप्तदक्षिणैः ।
यज्ञार्थं† चैव विप्रेभ्यो दद्याद्भोगान् धनानि च ॥
सांवत्सरिकमाप्तैश्च राष्ट्रादाहारयेद्बलिम् ।
स्याच्चाम्नाय-परो लोके वर्त्तेत पितृवन्नृषु"—इति ।

याज्ञवल्क्योऽपि,—

---

* रूपगुणान्विताम्,—इति पाठान्तरम् ।

† धर्म्मार्थं,—इति पाठान्तरम् ।

"पुरोहितञ्च कुर्व्वीत दैवज्ञमपिचाधिकम्।
दण्डनीत्याञ्च कुशलमथर्व्वाङ्गिरसे तथा॥
श्रौत-स्मार्त्त-क्रिया-हेतोर्वृणुयादेव चर्त्विजः।
यज्ञांश्चैव प्रकुर्व्वीत विधिवद्भूरि-दक्षिणान्॥
भोगांश्च दद्याद्विप्रेभ्यो वसूनि विविधानि च।
स-दान-मान-सत्कारैर्वासयेत् श्रोत्रियान् सदा"—इति।

मनुरपि,—

"म्रियमाणोऽप्याददीत न राजा श्रोत्रियात् करम्।
न च क्षुधाऽस्य संसीदेत् श्रोत्रियो विषये वसन्॥
यस्य राज्ञस्तु विषये श्रोत्रियः सीदति क्षुधा।
तस्यापि तत् क्षुधा राष्ट्रमचिरादेव सीदति॥
श्रुत-वृत्ते विदित्वाऽस्य वृत्तिं धर्म्यां प्रकल्पयेत्।
संरक्षेत् सर्व्वतश्चैनं पिता पुत्रमिवौरसम्"—इति।

आनुशासनिकेऽपि,—

"शाला-प्रपा-तड़ागानि देवताऽऽयतनानि च।
ब्राह्मणावसथश्चैव कर्त्तव्यं नृपसत्तमैः॥
ब्राह्मणा नावमन्तव्याः भस्म-छन्नादवाग्नयः।
कुलमुत्पाटयेयुस्ते क्रोधाविष्टा द्विजातयः॥
दुष्टानां शासनं धर्म्मः शिष्टानां परिपालनम्।
कर्त्तव्यं भूमिपालेन नित्यं कार्य्येषु चार्ज्जवम्"—इति।

शान्तिपर्व्वण्यपि,—

"बालातुरेषु भूतेषु परित्राणं कुरुद्वह।

शरणागतेषु कारुण्यं कुर्य्यात्तत्र समाहितः ॥
भरणं सर्व्वभूतानां रक्षणञ्चापि सर्व्वशः ।
यष्टव्यं क्रतुभिर्न्नित्यं दातव्यञ्चाप्यपीडया ॥
प्रजानां रक्षणं कार्य्यं न कार्य्यं कर्म्म गर्हितम् ।
आश्रमेषु यथाकालं चैलं भोजन-भाजनम् ॥
स्वयन्तूपहरेद्राजा सत्कृत्य विधिपूर्व्वकम् ।
आत्मानं सर्व्वकार्य्याणि तापसे राज्यमेवच ॥
निवेदयेत् प्रयत्नेन तिष्ठेत् प्रह्वश्च नित्यशः ।
विक्रमेण महीं लब्ध्वा प्रजाधर्म्मेण पालयन् ॥
आहवे निधनं कुर्य्याद्राजा धर्म्म-परायणः ।
आहवे च महीं लब्ध्वा श्रोत्रियायोपपादयेत्"—इति ।

मनुः,—

"मोहाद्राजा स्वराष्ट्रं यः कर्षयत्यनवेक्षया ।
सोऽचिराद्भ्रश्यते राज्याज्जीविताच्च सबान्धवः ॥
शरीर-कर्षणात् प्राणाः क्षीयन्ते प्राणिनां यथा ।
तथा राज्ञामपि प्राणाः क्षीयन्ते राष्ट्र-कर्षणात्"—इति ।

दिन-चर्य्या तु मनुना दर्शिता,—

"उत्थाय पश्चिमे यामे कृतशौचः समाहितः ।
हुत्वाऽग्निं ब्राह्मणांश्चार्च्य प्रविशेच्च सभां शुभाम्*"—इति ।

स्मृत्यन्तरेऽपि,—

* ततः,—इति मु० पुस्तके पाठः ।

"प्रातरुत्थाय नृपतिः कुर्य्याद्दन्तस्य धावनम्।
स्नान-शालां समागत्य स्नात्वा पूतेन वारिणा॥
अर्घं दत्वा तु देवाय भास्कराय समाहितः।
ततोऽलङ्कृत-गन्धः सन् वक्त्रमालोक्य मन्त्रवित्* ॥
घृत-पात्रं† तु विप्राय दद्यात् सकनकं नृपः"—इति।

याज्ञवल्क्योऽपि,—

"ऋत्विकपुरोहिताचार्य्यैराशीर्भिरभिनन्दितः।
दृष्ट्वा ज्योतिर्विदोवैद्यान् दद्याद्गाः काञ्चनं महीम्।
नैवेशिकानि च तथा श्रोत्रियाणां गृहाणि च"—इति।

नैवेशिकानि विवाहोपयोगीनि कन्याऽलङ्कारादीनि। दानानन्तरं कृत्यं मनुराह,—

"तत्र स्थितः प्रजाः सर्वाः प्रतिनन्द्य विसर्जयेत्।
विसृज्य च प्रजाः सर्वाः मन्त्रयेत् सह मन्त्रिभिः॥
गिरिपृष्ठं समारुह्य प्रासादं वा रहोगतः।
अरण्ये निःशलाके वा मन्त्रयेताविभावितः॥
मध्यन्दिनेऽर्द्धरात्रे वा विश्रान्तो विगतक्लमः।
चिन्तयेत् धर्म्मकामार्थान् सार्द्धं तैरेकएवच॥
कन्यानां सम्प्रदानञ्च कुमाराणाञ्च रक्षणम्।
दूतस्य प्रेषणञ्चैव कार्य्यशेषं तथैवच॥
अन्तःपुर-प्रजानाञ्च प्रणिधीनाञ्च चेष्टितम्।

---

* मन्त्रवत्,—इति मु० पुस्तके पाठः।
† घृतपात्रे,—इति शा० पुस्तके पाठः।

कृत्स्नं चाष्टविधं कर्म्म पञ्चवर्गञ्च तत्त्वतः ॥
अनुरागापरागौ च प्रचारं मण्डलस्य च ।
अरेरनन्तरं मित्रमुदासीनं तयोः परम् ॥
तान् सर्व्वानभिसन्दध्यात् सामादिभिरुपक्रमैः ।
व्यस्तैश्चैव समस्तैश्च पौरुषेण नयेन च ॥
सन्धिं च विग्रहं चैव यानमासनमेव च ।
द्वैधीभावं संश्रयं च षड्गुणांश्चिन्तयेत्सदा ॥
आसनञ्चैव यानञ्च सन्धिं विग्रहमेवच ।
कार्य्यं वीक्ष्य प्रयुञ्जीत द्वैधं संश्रयमेवच ॥
उपेतारमुपेयञ्च सर्व्वोपायांश्च कृत्स्नशः ।
एतत्त्रयं समाश्रित्य प्रयतेतार्थसिद्धये" ॥

अष्टविधत्वन्तु कर्म्मण उशनसा प्रदर्शितम्,—

"आदाने च विसर्गे च तथा प्रैषनिषेधयोः ।
पञ्चमे चार्थवचने व्यवहारस्य चेक्षणे ॥
दण्डशुद्ध्योः समायुक्तस्तेनाष्टगतिकोनृपः" ।

शुद्धिः प्रायश्चित्तम् । पञ्चवर्गस्तु, कापटिक-दाम्भिक-गृहपति-वैदेहक-तापस-व्यञ्जनाश्चराः । कर्म्मणामारम्भोपायः, पुरुष-द्रव्य-संपत्, विनिपात-प्रतीकारः, कार्य्यसिद्धिरिति वा पञ्चवर्गः* ।

"एवं सर्वमिदं राजा सह संमन्त्य मन्त्रिभिः ।
व्यायाम्याप्लुत्य मध्याह्ने भोक्तुमन्तःपुरं व्रजेत् ॥
तत्रात्मभूतैः कालज्ञैरहार्य्यैः परिचारकैः ।

* शुद्धिरित्यारभ्य, पञ्चवर्गः,—इत्यन्तो ग्रन्थोनास्ति मु० पुस्तके ।

सुपरीक्षितमन्नाद्यमद्यान्मन्त्रैर्विषापहैः ॥
विषघ्नैरगदैश्चास्य सर्व्वद्रव्याणि योजयेत् ।
विषघ्नानि च रत्नानि नियतोधारयेत्सदा ॥
परीक्षिताः स्त्रियश्चैनं व्यजनोदकधूपनैः ।
वेषाभरणसंयुक्ताः संस्पृशेयुः समाहिताः ॥
एवं प्रयत्नं कुर्व्वीत यान-शय्याऽऽसनाशने ।
स्नाने प्रसाधने चैव सर्व्वालङ्कारकेषु च ॥
भुक्तवान् विहरेच्चैव स्त्रीभिरन्तःपुरे सह ।
विहृत्य च यथाकामं* पुनः कार्य्याणि चिन्तयेत् ॥
अलङ्कृतश्च संपश्येदायुधीयं पुनर्जनम् ।
वाहनानि च सर्व्वाणि शस्त्राण्याभरणानि च ॥
सन्ध्याञ्चोपास्य शृणुयादन्तर्वेश्मनि शस्त्रभृत ।
रहस्याख्यायिनां चैव प्रणिधीनाञ्च चेष्टितम् ॥
गत्वा कक्षाऽन्तरं सम्यक्† समनुज्ञाप्य तं जनम् ।
प्रविशेद्भोजनार्थन्तु स्त्री-वृतोऽन्तःपुरं पुनः ॥
तत्र भुक्त्वा पुनः किञ्चित्तूर्य्यघोषैः प्रहर्षितः ।
संविशेच्च यथाकालमुत्तिष्ठेच्च गतक्लमः ॥
एतद्विधानमातिष्ठेदरोगः पृथिवीपतिः ।
अस्वस्थः सर्व्वमेवैतत् भृत्येषु विनिवेशयेत्”–इति ।

धर्म्मान्तरमाह मनुः,—

---

* यथाकालं,—इति पाठान्तरम् ।
† स्वन्यत्,—इति पाठान्तरम् ।

"सङ्ग्रामेष्वनिवर्त्तित्वं प्रजानाञ्चैव पालनम्।
शुश्रूषा ब्राह्मणानाञ्च राज्ञः श्रेयस्करं परम्॥
अलब्धञ्चैव लिप्सेत लब्धं रक्षेच्च यत्नतः।
रक्षितं वर्द्धयेच्चैव वृद्धं पात्रेषु निःक्षिपेत्॥
अमाययैव वर्त्तेत न कथञ्चन मायया।
बुद्ध्येतारि-प्रयुक्तान्तु मायां नित्यं सुसंवृतः"—इति।

शान्तिपर्व्वण्यपि,—

"व्यसनानि च सर्व्वाणि नृपतिः परिवर्जयेत्।
लोक-संग्रहणार्थाय कृतकव्यसनी भवेत्"—इति।

तानि व्यसनानि मनुना दर्शितानि,—

"दश काम-समुत्थानि तथाऽष्टौ क्रोधजानि च।
मृगयाऽक्षो दिवास्वप्नः परीवादः स्त्रियोमदः॥
तौर्य्यत्रिकं वृथाऽट्या कामजोदशकोगणः।
पैशुन्यं साहसं द्रोह ईर्ष्याऽसूयाऽर्थ-दूषणम्॥
वाग्दण्डजञ्च पारुष्यं क्रोधजोऽपि गणोऽष्टकः।
कामजेषु प्रसक्तो हि व्यसनेषु महीपतिः॥
वियुज्यतेऽर्थ-धर्माभ्यां क्रोधजे स्वात्मनैव तु।
द्वयोरप्येतयोर्मूलं यं सर्व्वे कवयोविदुः॥
तं यत्नेन त्यजेल्लोभं त्याज्यौ ह्येतौ गणावुभौ।
पानमक्षाः स्त्रियश्चैव मृगया च यथाक्रमम्॥
एतत्कष्टतमं विद्याच्चतुष्कं कामजे गणे।
दण्डस्य पातनञ्चैव वाक्पारुष्यार्थदूषणे॥

क्रोधजेऽपि गणे विद्यात् कष्टमेतत्त्रिकं सदा।
व्यसनस्य च मृत्योश्च व्यसनं कष्टमुच्यते॥
व्यसन्यधो हि व्रजति स्वर्यात्यव्यसनी मृतः"—इति।

मार्कण्डेयोऽपि,—

"व्यसनानि परित्यज्य सप्त मूलहराणि च(१)।
आत्मा रिपुभ्यः संरक्ष्योवह्निर्मन्त्र-विनिर्गमात्॥
स्थान-वृद्धि-क्षय-ज्ञान-षाड्गुण्य-विजितात्मना।
भवितव्यं नरेन्द्रेण न कामवशवर्त्तिना*॥
प्रागात्मा मन्त्रिणश्चैव ततोभृत्यामहीभृता।
ज्ञेयाश्चानन्तरं पौराविरुध्येत ततोऽरिभिः॥
यस्त्वेतानविनिर्जित्य वैरिणोविजिगीषते।
सोऽजितात्माऽजितामात्यः शत्रुवर्गेण वाध्यते"—इति।

तदेवमुक्त-धर्म्मकलापेन संयुक्तो राजा प्रजाः पालयेत्। तदुक्तं मनुना,—

"एवं सर्व्वं विधायेदमितिकर्त्तव्यमात्मनः।
युक्तश्चैवाप्रमत्तश्च परिरक्षेदिमाः प्रजाः"—इति।

प्रजा-रक्षणे राज्ञः श्रेयोविशेष ऐहिक आमुष्मिकश्च शान्तिपर्व्वणि-दर्शितः,—

---

* प्रजासु समवर्तिना,—इति मु० पुस्तके पाठः।

---

(१) कामजेषु पानादिचतुष्कं क्रोधजेषु दण्डपातनादित्रिकं च कष्टतमत्वे-नोक्तम्। तान्येवात्र 'सप्त' शब्देन निर्दिश्यन्ते। तान्येव च कष्टतमत्वात् मूल-हराणीत्युच्यन्ते।

"स्त्रियश्च पुरुषामार्गं सर्व्वालङ्कार-भूषिताः।
निर्भयाः प्रतिपद्यन्ते यदा रक्षति भूमिपः॥
धर्म्ममेव प्रपद्यन्ते न हिंसन्ति परस्परम्।
अनुयुञ्जन्ति* चान्योन्यं यदा रक्षति भूमिपः॥
यजन्ते च महायज्ञैस्त्रयोवर्णाः पृथग्विधैः।
युक्ताश्चाधीयते वेदान् यदा रक्षति भूमिपः॥
यदा राजाऽऽयुधं श्रेष्ठमादाय वहति प्रजाः।
महता बलयोगेन तदा लोकान् समश्नुते"—इति।

रामायणेऽपि,—

"यः क्षत्रियः स्वधर्म्मेण पृथिवीमनुशास्ति वै।
स लोके लभते वीर्य्यं यशः प्रेत्य च सद्गतिम्"—इति।

अपालने दोषः शान्तिपर्व्वणि दर्शितः,—

"यानं वस्त्राण्यलङ्कारान् रत्नानि विविधानि च।
हरेयुः सहसा पापाः, यदि राजा न पालयेत्॥
पतेद्बहुविधं शस्त्रं न कृषिर्न वणिक्पथः।
मज्जेद्धर्म्मस्त्रयी न स्यात् यदि राजा न पालयेत्"—इति।

॥०॥ इति राज-धर्म्म-प्रकरणम्॥०॥



* अत्र, अनुरुध्यन्ति,—इति पाठो भवितुं युक्तः।

## अथ वैश्य-धर्म्म-प्रकरणम्।

क्रम-प्राप्तान् वैश्यस्यासाधारण-धर्म्मानाह,—

**लाभकर्म्म तथा रत्नं गवां च परिपालनम्।**
**कृषि-कर्म्म च वाणिज्यं वैश्य-वृत्तिरुदाहृता ॥६३॥**

लाभार्थं कर्म्म, लाभकर्म्म; कुसीदाद्युपजीवनमित्यर्थः। रत्नं मणि-मुक्तादि। तेन च तत्परीक्षण-क्रय-विक्रया उपलक्ष्यन्ते। गवां पालनं तृणोदकप्रदान-बन्धन-मोचन-दोहनादि। कृषिकर्म्म, भूमिकर्षण-बीज वापनादि। वाणिज्यं क्रयिक-धान्यादि-क्रय-विक्रयौ। कुसीदादीनां वैश्य-धर्म्मत्वमाह याज्ञवल्क्यः,—

"कुसीद-कृषि-वाणिज्यं पाशुपाल्यं विशः स्मृतम्"—इति।

मनुरपि,—

"पशूनां रक्षणं दानमिज्याऽध्ययनमेवच।
वणिक्पथं कुसीदञ्च वैश्यस्य कृषिमेवच"—इति।

समादिशदिति शेषः। वराहपुराणेऽपि,—

"स्वाध्यायं यजनं दानं कुसीद-पशुपालनम्।
गोरक्षां कृषिवाणिज्यं कुर्य्याद्वैश्यो यथाविधि"—इति।

पशुपालनं अजाश्वादि-पालनं, गोशब्दस्य पृथगुपात्तत्वात्। आनु-शासनिके विक्रेय-द्रव्याण्यपि निदर्शितानि,—

"तिल-चर्म्म-रसाश्चैव विक्रेयाः पशुवाजिनः।
वणिक्पथमुपासीनैर्वैश्यैर्वैश्य-पथि-स्थितैः"—इति।

शान्तिपर्व्वणि जाबाल्युपाख्यान-प्रसङ्गेन वैश्यधर्म्मास्तुलाधारेणोदिताः,—

लाभकर्म्मादीनि वाणिज्यान्तानि, तानि सर्वाणि वैश्यवृत्तिः वैश्यस्य जीवनहेतुः,—इत्यर्थः। तदुक्तं मार्कण्डेये,—

"दानमध्ययनं यज्ञोवैश्यस्यापि त्रिधैव सः।
वाणिज्यं पाशुपाल्यञ्च कृषिश्चैवास्य जीविका"—इति।

अर्घ-विज्ञानादयो वैश्यधर्म्मत्वेन द्रष्टव्याः। अतएव मनुना वैश्यधर्म्मेषु पठिताः,—

"वैश्यस्तु कृत-संस्कारः कृत्वा दार-परिग्रहम्।
वार्त्तायां नित्ययुक्तः स्यात् पशूनाञ्चैव रक्षणे॥
प्रजापतिर्हि वैश्याय सृष्ट्वा परिददे पशून्।
न च वैश्यस्य कामः स्यान्न रक्षेयं पशूनिति॥
वैश्ये चेच्छति नान्येन रक्षितव्याः कथञ्चन।
मणि-मुक्ता-प्रवालानां लौहानां तान्तवस्य च॥
गन्धानाञ्च रसानाञ्च विद्यादर्घबलाबलम्।
वीजानामुप्तिविच्च स्यात् क्षेत्र-दोष-गुणस्य च॥
मान-योगांश्च जानीयात्तुला-योगांश्च सर्वतः।
सारासारञ्च भाण्डानां देशानाञ्च गुणागुणम्॥
लाभालाभञ्च पण्यानां पशूनाञ्च विवर्द्धनम्।
भृत्यानाञ्च भृतिं विद्याद्भाषाश्च विविधानृणाम्॥
द्रव्याणां स्थान-योगांश्च क्रयं विक्रयमेवच॥
धर्म्मेण च द्रव्य-वृद्धावातिष्ठेद्यत्नमुत्तमम्।
दद्याच्च सर्वभूतानामन्नमेव प्रयत्नतः"—इति।

कृषि-वाणिज्य-गोरक्षाः वार्त्ताशब्देनोच्यन्ते, मानयोगा प्रस्थि-

प्रश्नादि-साध्याः। मूलवचने 'लाभकर्म्म'—इत्यत्र, 'लौहकर्म्म'—इति केचित् पठन्ति। लौहस्य सुवर्णरजतादेरर्घपरिज्ञान-क्रयादिकं* तत्कर्म्मेति व्याख्येयम्। लौहानाञ्चेति मनुपठितत्वात्। यथोक्तधर्म्मानुष्ठाने फलमाश्वमेधिके वर्णितम्,—

"वणिग्धर्म्मञ्च शृण्वन् वै देव-ब्राह्मण-पूजकः।
स वणिक् स्वर्गमाप्नोति पूज्यमानोऽप्सरोगणैः"—इति।

वैपरीत्ये दोषः शान्तिपर्व्वणि दर्शितः,—

"यः करोति जनान् साधून् वलिकर्म्मणि वञ्चनम्।
स याति नरकं घोरं धनं तस्यापि हीयते"—इति।

॥०॥ इति वैश्यधर्म्म-प्रकरणम्॥०॥

क्रम-प्राप्तान्छूद्रस्यासाधारण-धर्म्मानाह,—

**शूद्रस्य द्विज शुश्रूषा परमोधर्म्मउच्यते।**
**अन्यथा कुरुते किञ्चित्तद्भवेत्तस्य निष्फलम्॥६४॥**

अत्र, द्विज-शब्दो ब्राह्मण-परः, तत्-शुश्रूषायाः परमत्वं निःश्रेयस-हेतुत्वात्। तदाह मनुः,—

"विप्राणां वेदविदुषां गृहस्थानां यशस्विनाम्।
शुश्रूषैव तु शूद्रस्य धर्म्मो नैश्रेयसः परः॥
शुचिरुत्कृष्ट-शुश्रूषुर्म्मृदुः शान्तोऽनहंकृतः।
ब्राह्मणाद्याश्रयोनित्यमुत्कृष्टां जातिमश्नुते"—इति।

विष्णुपुराणेऽपि,—

* रजतादेरर्घपरीक्षाज्ञानक्रयादिकं, —इति मु० पुस्तके पाठः

"द्विज-शुश्रुषयैवैष पाकयज्ञाधिकारवान् ।
निजान् जयति वै लोकान् शूद्रोधन्यतरः स्मृतः"—इति ।

आनुशासनिकेऽपि,—

"रागोद्वेषश्च मोहश्च पारुष्यञ्च नृशंसता ।
शाठ्यञ्च दीर्घवैरत्वमतिमानमनार्ज्जवम् ॥
अमतञ्चातिवादश्च पैशुन्यमतिलोभता ।
निष्कृतिश्चाप्यविज्ञानं जनने शूद्रमाविशत् ॥
दृष्ट्वा पितामहः शूद्रमभिभूतन्तु तामसैः ।
द्विज-शुश्रूषणं धर्म्मं शूद्राणाञ्च प्रयुक्तवान् ॥
नश्यन्ति तामसाभावाः शूद्रस्य द्विजभक्तितः ।
द्विज-शुश्रूषया शूद्रः परं श्रेयोऽधिगच्छति"—इति ।

परम्,—इति विशेषणादन्येऽपि केचन धर्म्माः सन्तीति गम्यते । ते च देवलेन दर्शिताः,—"शूद्रधर्म्मास्त्रिवर्ण-शुश्रूषा कलत्रादि-पोषणं कर्षण-पशुपालन-भारोद्वहन-पण्यव्यवहार-चित्रकर्म्म-नृत्य-गीत-वेणु-वीणा-मुरज-मृदङ्ग-वादनानि"—इति । विष्णुपुराणेऽपि,—

"दानञ्च दद्याच्छूद्रोऽपि पाकयज्ञैर्यजेत च ।
पित्र्यादिकञ्च वै सर्व्वं शूद्रः कुर्वीत तेन वा"—इति ।

याज्ञवल्क्योऽपि,—

"भार्यारतः शुचिर्भृत्य-भर्त्ता श्राद्ध-क्रिया-परः ।
नमस्कारेण मन्त्रेण पञ्च यज्ञान्न हापयेत्"—इति ।

शान्तिपर्व्वण्यपि,—

"स्वाहाकार-नमस्कार-मन्त्रं शूद्रे विधीयते ।

तार्भ्यां शूद्रः पाकयज्ञैर्यजेत ब्राह्मणान्* स्वयम् ॥
सञ्चयांश्च न कुर्वीत जातु शूद्रः कथञ्चन ।
सेवया हि धनं लब्ध्वा वशे कुर्य्याद्गरीयसः ॥
राज्ञा दानमनुज्ञातः कामं कुर्वीत धार्म्मिकः"—इति।

आनुशासनिकेऽपि,—

"अहिंसकः शुभाचारो देवता-द्विज-पूजकः ।
शूद्रो धर्म्म-फलैरिष्टैः स्वधर्म्मेणैव युज्यते"—इति।

न केवलं विप्र-शुश्रूषा निःश्रेयसार्थ्था, अपि तु वृत्त्यर्थ्थाऽपि। अत एव प्रकल्प्यमाना वृत्तिर्मनुना दर्शिता,—

"प्रकल्प्या तस्य वै वृत्तिः स्वकुटुम्बाद्यथार्हतः ।
शक्तिञ्चावेक्ष्य दाक्ष्यञ्च† भृत्यानाञ्च परिग्रहम् ॥
उच्छिष्टमन्नं दातव्यं जीर्णानि वसनानि च ।
पुलाकाश्चैव धान्यानां जीर्णाश्चैव परिच्छदाः"—इति ।

शान्तिपर्व्वण्यपि,—

"यश्च कश्चिद्द्विजातीनां शूद्रः शुश्रूषुराव्रजेत् ।
प्रकल्प्या तस्य तैराज्ञैर्वृत्तिर्धर्म्मविदो जनाः ॥
छत्र-वेष्टन-पुञ्जानि उपानद्व्यजनानि च ।
यातयामानि देयानि शूद्राय परिचारिणे"—इति ।

अन्यथा द्विज-शुश्रूषामन्तरेण यदि किञ्चित् पाकयज्ञादिकं कुर्य्यात्, तत्सर्व्वं निष्फलं भवेत्। तदुक्तं मनुना,—

---

* ब्रह्मवान्,—इति शा० पुस्तके पाठः।
† भक्तिञ्च,—इति मु० पुस्तके पाठः।

"विप्र-सेवैव शूद्रस्य विशिष्टं कर्म्म कथ्यते ।
यदतोऽन्यद्धि कुरुते तद्भवेत्तस्य निष्फलम्"—इति ।

तस्मात्, द्विज-शुश्रूषैव तस्य परमोधर्म्मः, क्षत्रिय-वैश्य-शुश्रूषा तु केवल-वृत्त्यर्थत्वादपरमोधर्म्मः । अतएव मनुना, विप्र-शुश्रूषायाउभयार्थत्वमितर-शुश्रूषायाः केवल-वृत्त्यर्थत्वञ्च दर्शितम्,—

"शूद्रस्तु वृत्तिमाकाङ्क्षन् क्षत्रमाराधयेद्यदि ।
धनिनं वाऽप्युपाराध्य वैश्यं शूद्रोजिजीविषेत् ॥
स्वर्गार्थमुभयार्थं वै विप्रानराधयेत् तु सः* ।
जात-ब्राह्मण-शब्दः स्यात् सा ह्यस्य कृतकृत्यता†"—इति ॥

यदा द्विज-शुश्रूषया जीवितुं न शक्नोति, तदा किं कुर्य्यादित्यतआह,—

**लवणं मधु तैलञ्च दधि तक्रं घृतं पयः ।**
**न दुष्येच्छूद्रजातीनां कुर्य्यात्सर्व्वेषु विक्रयम् ॥६५॥**

शुश्रूषया जीवितुमशक्तोजीवनाय लवणादिषु सर्व्वेषु विक्रयं कुर्य्यात्‡ । ननु, लवणादीनि विक्रीयमाणानि विक्रेतुर्दोषमावहन्ति । तदाह याज्ञवल्क्यः,—

"फलोपलक्षौमसोमनुष्यापूपवीरुधः ।
तिलौदनरसक्षारान् दधि क्षीरं घृतं जलम् ॥

---

* ब्राह्मणानेव राधयेत्,—इति शा० स० पुस्तकयोः पाठः ।

† जातब्राह्मणशब्दस्य सह्यस्य कृतकृत्यता,—इति मु० पुस्तके पाठः ।

‡ यदि शुश्रूषया जीवितुं न शक्नोति, जीवनाय लवणादिविक्रयं कुर्य्यात्,—इति मु० पुस्तके पाठः ।

वसा-रस-मधूच्छिष्ट-मधु-लाक्षा* सवर्हिषः।
मृच्चर्म्म-पुष्प-कुतप-केश-तक्र-विष-क्षितीः॥
कौशेय-नील-लवण-मांसैकशफ-सीसकान्।
शाकार्द्रौषधि-पिण्याक-पशु-गन्धांस्तथैव च॥
वैश्य-वृत्त्याऽपि जीवन्तो विक्रीणीत कदाचन।
लाक्षा-लवण-मांसानि वर्जनीयानि विक्रये॥
पयोदधि च मद्यं च हीनवर्ण-कराणि च"—इति।

हीनवर्णः शूद्रः†। मैवम्, अस्य ब्राह्मण-विषयत्वात्। अतएव मनुः,—

"सद्यः‡ पतति मांसेन लाक्षया लवणेन च।
त्र्यहेण शूद्रीभवति ब्राह्मणः क्षीर-विक्रयात्§"—इति।

शूद्रस्तु लवणादीनि विक्रीणन्नपि न दुष्येत्‖। 'विक्रीणन्'—इति पदं वक्ष्यमाण-श्लोकादनुषज्य योजनीयम्। याज्ञवल्क्योऽपि शुश्रूषया जीवितुमशक्तस्य शूद्रस्य वाणिज्यादिकमाह,—

"शूद्रस्य द्विज-शुश्रूषा तयाऽजीवन् वणिग्भवेत्।
शिल्पैर्वा विविधैर्जीवेत् द्विजाति-हितमाचरन्"—इति।

यैः कर्मभिर्द्विजातयः शुश्रूष्यन्ते, तैरित्यर्थः। मनुरपि,—

---

* शस्त्रासवमधूच्छिष्टमधुलाक्षाः,—इति मु० पुस्तके पाठः।

† पयोदधि च,—इत्यादि, शूद्रः,—इत्यन्तं नास्ति मुद्रितातिरिक्तपुस्तकेषु।

‡ सम्यक्,—इति मु० पुस्तके पाठः।

§ क्षीरविक्रयी,—इति मु० पुस्तके पाठः।

‖ शूद्रस्तु लवणादीनि विक्रीणन्न हि दुष्यति,—इति श्लोकार्द्धतयैव लिखितमस्ति मु० पुस्तके।

"अशक्नुवंस्तु शुश्रूषां शूद्रः कर्त्तुं द्विजन्मनाम्।
पुत्रदारात्ययं प्राप्तोजीवेत्कारुक-कर्म्मभिः ॥
यैः कर्म्मभिः सुचरितैः शुश्रूष्यन्ते द्विजातयः ।
तानि कारुक-कर्म्माणि शिल्पानि विविधानि च"—ति ॥

शूद्रस्यापि वर्ज्यानाह,—

**विक्रीणन् मद्य-मांसानि ह्यभक्ष्यस्य च भक्षणम् ।**
**कुर्वन्नगम्या-गमनं शूद्रः पतति तत्क्षणात् ॥ ६६ ॥**
**कपीला-क्षीर-पानेन ब्राह्मणी-गमनेन च ।**
**वेदाक्षर-विचारेण शूद्रः पतति तत्क्षणात्* ॥ ६७ ॥**

मद्यं च बहुविधं; ताल-पानस-द्राक्ष-माधूक-खार्जूरादिकम् । अभक्ष्यं गो-मांसादि । अगम्या भगिन्यादयः† । स्पष्टमन्यत् ।

॥०॥ इति शूद्र-धर्म्म-प्रकरणम् ॥०॥

प्रख्याता हि पराशर-स्मृतिरिह स्मृत्यागमख्यापनं
धर्म्मोवर्ण-चतुष्टयी-बहुमता साधारणाख्याभिधा ।
आद्यस्त्वाह्निक-शिष्ट-नाम-विहितः षट्कर्म-पूतोऽपरः
पूर्व्वाध्याय-निरूपितं तदखिलं व्याख्यत् सुधीर्माधवः ॥

इति श्रीराजाधिराज-परमेश्वर-वैदिकमार्गप्रवर्त्तक-श्रीवीर-बुक्क-भूपाल-साम्राज्य-धुरन्धरस्य माधवामात्यस्य कृतौ पराशर-स्मृति-व्याख्यायां प्रथमोऽध्यायः ॥०॥

---

* शूद्रस्याशुचाण्डालतामियात्,—इति स० शा० पुस्तकयोः पाठः ।
† ब्राह्मण्यादयः,—इति मु० पुस्तके पाठः ।

## अथ द्वितीयोऽध्यायः ।

वागीशाद्याः सुमनसः सर्व्वार्थानामुपक्रमे ।

यं नत्वा कृतकृत्याः स्युः तं नमामि गजाननम् ॥

प्रथमेऽध्याये व्यासेन पृष्टयोर्वर्ण-चतुष्टय-साधारणासाधारण-धर्म्म-योर्मध्ये साधारण-धर्म्मं संक्षिप्यासाधारण-धर्म्मः प्रपञ्चितः, अथेदानीं संक्षिप्तः साधारण-धर्म्मो द्वितीयेऽध्याये प्रपञ्च्यते ।

अथवा, पूर्व्वाध्याय आमुष्मिक-धर्म्म-प्राधान्येन प्रवृत्तः, अयन्तु ऐहिक-जीवन-हेतु-धर्म्म* प्राधान्येन प्रवर्त्तते । तत्रादावध्याय-प्रति-पाद्यमर्थं प्रतिजानीते,—

**अतः परं गृहस्थस्य कर्म्माचारं† कलौ युगे ।**

**धर्म्मं साधारणं शक्त्या चातुर्वर्ण्याश्रमागतम् ॥१॥**

**तं प्रवक्ष्याम्यहं पूर्व्वं पराशर-वचो यथा ।**

अतः परं, चातुर्व्वर्ण्य-साधारण-धर्म-संक्षेपेणा(उ)त्तरस्मिन् काले । सएव विस्तर-कथनस्योचितोऽवसरः । बहु-ग्रन्थ-पाठ-शक्ति-रहितान् मन्द-प्रज्ञान् प्रति संक्षेपेणाभिहिते सति, समर्थानामुत्तमप्रज्ञानां बुद्धिस्थत्वात्तान् प्रति विस्तरेण कथयितुमुचितत्वात् । अतएवाहुः-राचार्य्याः,—

---

* 'धर्म्म' पदं नास्ति मु० पुस्तके ।

† धर्म्माचारं,—इति स० से० आ० पुस्तकेषु पाठः ।

"संक्षेप-विस्तराभ्यां हि मन्दोत्तमधियां नृणाम्।
वस्तूच्यमानमप्यन्तःकरणं तेन तृप्यते"—इति।

यद्वा, अतःपरं आमुष्मिक-प्रधान-धर्म्म-कथनादनन्तरम्। "षट्-कर्म्माभिरतः" "सन्ध्या स्नानम्"—इत्यादिना ह्यामुष्मिक-फले धर्म्मेऽभिहिते सत्यैहिक-फलस्य कृष्यादि-धर्म्मस्य बुद्धिस्थत्वात् तदभिधानस्य युक्तोऽवसरः।

वक्ष्यमाणस्य कृष्यादि-धर्म्मस्य ब्रह्मचारि-वनस्थ-यतिष्वसम्भवमभिप्रेत्य तद्योग्यमाश्रमिणं दर्शयति,—'गृहस्थस्य'—इति। कृत-त्रेता-द्वापरेषु वैश्यस्यैव कृष्यादावधिकारो न तु गृहस्थमात्रस्य विप्रादेरतो विशिनष्टि,—'कलौ युगे'—इति। कर्म्मशब्दो लोके व्यापारमात्रे प्रयुज्यते, आचारशब्दस्तु धर्म्मरूपे शास्त्रीये व्यापारे। कृष्यादेस्तु युगान्तरेषु कर्म्मत्वं, कलावाचारत्वमित्युभयरूपत्वमस्ति। तथैवाश्रमान्तरेषु कर्म्मत्वं गार्हस्थ्ये त्वाचारत्वमित्युभयरूपता। तद्विवक्षया 'कर्म्माचारम्' इत्युक्तम्। कलौ गृहस्थस्य याजनादीनां दुर्लभत्वाज्जीवन-हेतुतया कृष्यादि-विधानादाचारत्वमुपपन्नम्।

कृष्यादेः साधारण-धर्म्मत्वमुपपादयति,—'चातुर्वर्ण्याश्रमागतम्'—इति। चतुर्वर्णा एव चातुर्वर्ण्यम्। तत्र सर्व्वत्रैव प्रसिद्धः आश्रमो गार्हस्थ्यरूपः। सन्ति हि शूद्रस्यापि विवाह-पञ्चमहायज्ञादयो गृहस्थ-धर्म्माः। एतत् सर्व्वमस्माभिः उत्तरत्राश्रम-निरूपणे विस्पष्टमभिधास्यते। तस्मिन्नाश्रमे विधानात् साधारण्यम्। पराशरशब्देनाचातीतकल्पोत्पन्नो विवक्षितः। एतदेवाभिव्यञ्जयितुं 'पूर्व्वम्'—इत्युक्तम्। पूर्व्वकल्प-सिद्धं पराशर-वाक्यं कलि-धर्म्मे कृष्यादौ यथा वृत्तं, तथैवाहं

संप्रवक्ष्यामि। अतः, सम्प्रदायागतत्वात् कृष्यादेराचारतायां न विवादः कर्त्तव्यः,—इत्याशयः। 'गुरुतरविषये विनयः कर्त्तव्यः' इति शिष्टाचारं शिक्षयितुं 'शक्त्या सम्प्रवक्ष्यामि' इत्युक्तं, न तु कस्मिंश्चिद्धर्म्मे स्वस्याशक्तिं द्योतयितुम्। कलि-धर्म्म-प्रवीणस्य पराशरस्य तत्राशक्त्य सम्भवात्॥

प्रतिज्ञातं धर्म्मं दर्शयति,—

**षट्कर्म्म-सहितोविप्रः कृषिकर्म्म च कारयेत्॥२॥**

षट्कर्म्माणि पूर्व्वोक्तानि; यजनादीनि, सन्ध्याऽऽदीनि च। तैः सहितोविप्रः शुश्रूषकैः शूद्रैः कृषिं कारयेत्। न च याजनादीनां जीवन-हेतुत्वात् किमनया कृष्येति वाच्यं, कलौ जीवन-पर्य्याप्ततया याजनादीनां दुर्लभत्वात्। यत्तु मनुनोक्तम्,—

"वैश्य-वृत्त्या तु जीवंस्तु ब्राह्मणः क्षत्रियोऽपि वा।
हिंसा-भयात् पराधीनां * कृषिं यत्नेन वर्ज्जयेत्॥
कृषिं साध्विति मन्यन्ते सा वृत्तिः सद्विगर्हिता।
भूमिं भूमिशयांश्चैव हन्ति काष्ठमयोमुखम्"—इति।

तत् स्वयङ्कृताभिप्रायम्। अन्यथा, मनोः स्व-वचन-विरोधात्। तेनैव कृषिरभ्युपगता;

"उभाभ्यामप्यजीवंस्तु कथं स्यादिति चेद्भवेत्।
कृषिगोरक्षमास्थाय जीवेद्वैश्यस्य जीविकाम्"—इति।

ननु,कूर्म्मपुराणे स्वयं कृता कृषिरभ्युपगता,—

* जीवहिंसाप्रदामेषां,—इति मु० पुस्तके पाठः।

"स्वयं वा कर्षणं कुर्य्याद्वाणिज्यं वा कुसीदकम्।
कष्टा* पापीयसी वृत्तिः कुसीदन्तां विवर्ज्जयेत्"—इति।

तन्न, अस्य वचनस्य कुसीद-निन्दा-परत्वात्। अतएव नारदः,—

"आपत्स्वपिच कष्टासु ब्राह्मणस्य न वार्द्धुषम्"—इति।

ननु, बृहस्पतिः स्वयङ्कर्त्तृकां कृषिमङ्गीचकार,—

"कुसीद-कृषि-वाणिज्यं प्रकुर्वीतास्वयंकृतम्।
आपत्काले स्वयं कुर्व्वन्नैनसा युज्यते द्विजः"—इति।

वाढं, कारयितुमप्यशक्तस्य तत्कर्त्तृत्वम्, 'आपत्काले'—इति विशेषितत्वात्। ननु, कारयितृत्वमप्यापद्विषयमेव, कृषेर्वैश्य-धर्म्मत्वाद्विप्रस्य याजनादीनामेव मुख्य-जीवन-हेतुत्वात्। एवं तर्ह्यापत्तारतम्येन व्यवस्थाऽस्तु। अल्पापदि कारयितृत्वमत्यन्तापदि कर्त्तृत्वम्,—इति। अथवा, युग-भेदेन व्यवस्थाप्यतां; युगान्तरेषु कारयितृत्वमापद्धर्म्मः, कलौ मुख्यधर्म्मः, प्राधान्येनोपक्रम्य प्रतिपादनात्।

तत्र, कृषौ हालिकस्य वलीवर्द्द-संख्या-नियममाह हारीतः,—

"अष्टागवं धर्म्म्यहलं षड्गवं जीवितार्थिनाम्।
चतुर्गवं नृशंसानां द्विगवं ब्रह्मघातिनाम्"—इति।

तत्राद्यौ पचौ हेयौ† इतरावपि क्रमेण मुख्यानुकल्पौ द्रष्टव्यौ॥

कृषौ वर्ज्यान् वलीवर्द्दानाह,—

**क्षुधितं तृषितं श्रान्तं वलीवर्द्दं न योजयेत्।**
**हीनाङ्गं व्याधितं क्लीवं वृषं विप्रो न वाहयेत्॥३॥** इति।

---

* तेन,—इति मु० पुस्तके पाठः।

† तत्राद्यौ पक्षावधमतया हेयौ,—इति मु० पुस्तके पाठः।

क्षुधादयस्तत्तल्लिङ्गैरवगन्तव्याः। हीनाङ्गः पाद-विकलः। क्लीवः पुंस्त्व-रहितः॥

कीदृशस्तर्हि बलीवर्द्दः कृषौ योज्यइत्यतआह,—

**स्थिराङ्गं नीरुजं तृप्तं सुनर्दं षण्डवर्ज्जितम्।**
**वाहयेद्दिवसस्यार्द्धं पश्चात् स्नानं समाचरेत्॥४॥ इति।**

स्थिराङ्गः पादादि-वैकल्य-रहितः। नीरुजोव्याधि-रहितः। तृप्तः क्षुत्तृष्णाभ्यामपीड़ितः। सुनर्द्दोहिंसकोदृप्तः श्रम-रहितः,—इति यावत्। षण्डेति भाव-प्रधानोनिर्द्देशः। षण्डत्व-वर्जितः पुंस्त्वोपेतः अक्तः,—इति यावत्। दिवसस्यार्द्धं याम-द्वयम्। 'पश्चात् स्नानं समाचरेत्'—इति, बलीवर्द्दान् स्नापयेदित्यर्थः। तथा च हारीतः,—"स्नापयित्वाऽनडुहोऽलङ्कृत्य ब्राह्मणान् भोजयेत्"—इति। वाहने विशेषः आश्वमेधिके दर्शितः,—

"वाहयेद्धुंकृतेनैव शाखया वा सपत्रया।
न दण्डेन न यष्ट्या वा न पाशेन च वा पुनः॥
न क्षुत्तृष्णाश्रमश्रान्तं वाहयेद्विकलेन्द्रियम्।
सुतृप्तेषु च भुञ्जीयात् पिबेत् पीतेषु चोदकम्॥
अक्तः पूर्व्वं द्वियामं वा धुर्य्याणां वाहनं स्मृतम्।
विश्रामयेन्मध्यमे भागे भागे चान्त्ये यथासुखम्॥
यत्र वा त्वरया नित्यं संश्रयोयत्र वाऽध्वनि।
वाहयेत्तत्र धुर्य्यांस्तु न स पापेन लिप्यते॥
अन्यथा वाहयन् राजन्, नियतं याति रौरवम्।

रुधिरं वाहयेत् तेषां यस्तु मोहान्नराधमः।
भ्रूण-हत्या-समं पापं तस्य स्यात् पाण्डुनन्दन"—इति॥

बलीवर्द्द-स्नापनानन्तरं कर्त्तव्यमाह,—

**जप्यं देवार्च्चनं होमं स्वाध्यायञ्चैवमभ्यसेत्।**
**एक-द्वि-त्रि-चतुर्व्विप्रान् भोजयेत् स्नातकान् द्विजः॥५॥**

यथा, बलीवर्द्द-श्रान्ति-कृत-दोषापनयनाय स्नापनं, एवं प्राण्युपघात-दोषापनयनाय यथाशक्ति जप्यादीनामन्यतममनुतिष्ठेत्। एकं द्वौ त्रींश्चतुरोविप्रान् स्नातकान् यथाशक्ति भोजयेत्। स्नातका नवविधभिक्षुकाः। तदाह मनुः,—

"सान्तानिकं यक्ष्यमाणमध्वगं सर्व्ववेदसम्।
गुर्व्वर्थं पितृमात्रर्थं स्वाध्यायार्थ्युपतापिनम्"—इति।

सान्तानिकं सन्तानाय विवाहोपयुक्त-द्रव्यार्थिनम्। सर्व्ववेदसः सर्व्वस्व-दक्षिणं यागं कृत्वा निस्वत्वमापन्नोद्रव्यार्थी, तमित्यर्थः। पितृमात्रर्थं पितृ-मातृ-शुश्रूषाऽर्थिनम्। स्वाध्यायार्थी स्वाध्याय-प्रवचन-निर्व्वाहाय द्रव्यार्थी, उपतापी रोगी, स्वाध्यायार्थि-सहितः उपतापी स्वाध्यायार्थ्युपतापी, तमिति मध्यम-पद-लोपी समासः। तावुभावित्यर्थः॥

कृषौ फलितस्य धान्यस्य विनियोगमाह,—

**स्वयङ्कृष्टे तथा क्षेत्रे धान्यैश्च स्वयमर्जितैः।**
**निर्व्वपेत् पञ्चयज्ञांश्च क्रतु-दीक्षाञ्च कारयेत्॥६॥ इति।**

यानि स्वयङ्कृष्टे क्षेत्रे फलितानि धान्यानि, यानि वाऽन्यैः कर्षिते क्षेत्रे स्वयमर्जितानि धान्यानि, तैः सर्व्वैः स्मार्त्तान् पञ्चमहायज्ञान् श्रौतामग्निष्टोमादि-क्रतु-दीक्षाञ्च कुर्य्यात्। कारयेदिति स्वार्थिकोणिच्। अथवा, स्वयञ्च महायज्ञान् कुर्वीत, ऋत्विग्भ्यो-धान्यं दत्वा तैः क्रतु-दीक्षाञ्च कारयेत्। कूर्म्मपुराणेऽप्येष विनियोगो दर्शितः,—

"लब्धलाभः पितॄन् देवान् ब्राह्मणांश्चापि पूजयेत्।
ते तृप्ताः तस्य तद्दोषं शमयन्ति न संशयः"—इति॥

कृषीवलस्य तिलादि-धान्य-सम्पन्नस्य धन-लोभेन प्रसक्तस्तिलादिविक्रयस्तं निवारयति,—

**तिलारसान विक्रेयाविक्रेयाधान्य-तत्समाः।**
**विप्रस्यैवंविधा वृत्तिस्तृण-काष्ठादि-विक्रयः॥७॥ इति।**

रसाः दधि-मधु-घृतादयः। यदि धान्यान्तर-रहितस्य तिल-विक्रयमन्तरेण जीवनं वा धर्म्मोवा न सिद्ध्येत्, तदा तिलाधान्यान्तरैर्विनिमातव्याः,—इत्यभिप्रेत्य 'विक्रेयाधान्य-तत्समाः'—इत्युक्तम्। यावद्भिः प्रस्थैस्तिलादत्तास्तावद्भिरेव धान्यान्तरमुपादेयं नाधिकमित्यर्थः। तदुक्तं नारदेन,—

"अशक्तौ जीवनस्यार्थे* यज्ञहेतोस्तथैवच।
यद्यवश्यन्तु विक्रेयास्तिला धान्येन तत्समाः"—इति।

---

* भेषजस्यार्थे,—इति स० शा० पुस्तकयोः पाठः।

याज्ञवल्क्योऽपि,—

"धर्म्मार्थं विक्रयं नेयास्तिलाधान्येन तत्समाः"—इति ।

तिलन्यायोरसेऽपि योजनीयः । अतएव मनुः,—

"रसारसैर्निमातव्या न त्वेव लवणं रसैः ।

कृतान्नञ्चाकृतान्नेन* तिलाधान्येन तत्समाः"—इति ।

आपस्तम्बोऽपि,—"अन्येन चान्नस्य मनुष्यानाञ्च मनुष्यैः रसानाञ्च रसैः गन्धानाञ्च गन्धैर्विद्यया च विद्यानाम्"—इति । रस-विनिमये विशेषमाह वशिष्ठः,—"रसारसैः समतोहीनतोवा निमातव्याः"—इति । अन्न-विनिमये विशेषमाह गौतमः,—"समेनासमेन तु पक्कस्य"—इति । ननु तिल-विक्रयोऽभ्युपगतोमनुना,—

"काममुत्पाद्य कृष्यान्तु स्वयमेव कृषीवलः ।

विक्रीणीत तिलान् शुद्धान् धर्म्मार्थमचिर-स्थितान्"—इति ।

अत्र केचिदाहुः,—'तदेतद्विनियमाभिप्रायम्'—इति । अपरे तु मन्यन्ते, ऋणापकरणाद्यापद्धर्म्मार्थे तिल-विक्रयोन विरुद्धः । अयमेव पक्षोयुक्तः, वशिष्ठ-वचन-संवादनात् । "कामं वा स्वयं कृष्योत्पाद्य तिलान् विक्रीणीरन्"—इति । विनिमयाभिप्राये तु वचनान्तरेण सह पौनरुक्त्यमपरिहार्य्यं स्यात् । यतोमनुनैव वचनान्तरेण 'तिला धान्येन तत्समाः'—इति विनियमोदर्शितः । यत्त्वन्यस्मिन्वचने अर्थात्तिलविक्रय-निषेधः प्रतिभाति । तथाहि मनुयमाभ्यामुपदर्शितम्,—

"भोजनाभ्यञ्जनाद् दानाद् यदन्यत् कुरुते तिलैः ।

---

* कृतान्नञ्च कृतान्नेन,—इति ग्रा० पुस्तके पाठः ।

कृमिर्भूत्वा स विष्ठायां पितृभिः सह मज्जति *"—इति।

नायं दोषः। आवश्यक-धर्म्म-व्यतिरिक्त-विषयत्वात्। योऽयं तिलानां धान्य-समत्वेन विनियमः, यश्च तृणादि-विक्रयः, सेयमेवंविधा विप्रस्य जीवनार्था वृत्तिः। तथा च नारदः,—

"ब्राह्मणस्य तु विक्रेयं शुष्क-दारु-तृणादिकम्"—इति॥

इदानीं कृषावानुषङ्गिकस्य पाप्मनः प्रतीकारं वक्तुं प्रथमतस्तं पाप्मानं दर्शयति,—

**ब्राह्मणश्चेत् कृषिं कुर्य्यान्महादोषमवाप्नुयात्॥ इति॥**

कृषौ हिंसाया अवर्जनीयत्वात् सावधानस्यापि कृषीवलस्य दोषोऽनुषज्यते इति। अत्र, हिंसायां पापमिति मनुवचनं पूर्वमेवोदाहृतम्॥

उक्तस्य दोषस्य महत्त्वं विशदयति,—

**संवत्सरेण यत्पापं मत्स्यघाती समाप्नुयात्॥८॥**
**अयोमुखेन काष्ठेन तदेकाहेन लाङ्गली। इति।**

लोह-सहितेन लाङ्गल-मुखेन प्राणिनां चिरवधो भवतीति मत्स्यवधात् पापाधिक्यमुक्तम्॥

उक्तरीत्या कर्षकमात्रस्य पाप-प्रसक्तौ तद्वारयितुं विशिनष्टि,—

**पाशको मत्स्यघाती च व्याधः शाकुनिकस्तथा॥९॥**
**अदाता कर्षकश्चैव सर्वे ते समभागिनः। इति।**

---

* कृमिर्भवति विष्ठायां कर्म्मणा तेन पापकृत्,—इति मु० पुस्तके पाठः।

वागुरां प्रसार्य्य मृगादि-ग्राही पाशकः। व्याधोमृग-वधाजीवः। शाकुनिकः पक्षि-घाती। अदाता खले राशिमूलमुपागतेभ्योऽप्रदाता। तेषां सर्वेषां प्रत्यवायः समानः। ततश्च, दृष्टान्तत्वेन पाशकादयदूह वर्ण्यन्ते। यथा पाशकादीनां पापं महत्, एवमेवादातुः कर्षकस्येत्यर्थः॥

"यदर्थं कृषीवलस्य पाप्मा" दर्शितः, तमिदानीं पाप-परिहार-प्रकारमाह,—

**वृक्षांश्छित्त्वा महीं भित्त्वा हत्त्वा च कृमि-कीटकान्॥१०॥**
**कर्षकः खलयज्ञेन सर्व्वपापैः प्रमुच्यते। इति।**

छेदन-भेदन-हननैर्यावन्ति पापानि निष्पद्यन्ते, तेषां सर्वेषां खले धान्यदानं प्रतीकारः। तथा च हारीतः,—

"भूमिं भित्वौषधीश्छित्वा हत्वा कीट-पिपीलिकाः।
पुनन्ति खलयज्ञेन कर्षकानात्र संशयः॥
यूपोऽयं निहितोमध्ये† मेधिर्नाम हि कर्षकैः।
तस्मादतन्द्रितोदद्यात्तत्र धान्यार्थदक्षिणाम्"—इति॥

खलयज्ञाकरणे प्रत्यवायमाह,—

**योन दद्याद्विजातिभ्योराशिमूलमुपागतः॥११॥**
**स चौरः स च पापिष्ठो ब्रह्मघ्नन्तं विनिर्द्दिशेत्। इति।**

कर्षकस्यायं खलयज्ञोनित्यः काम्यश्च,—इति वचन-द्वय-बलादव-

* प्रत्यवायो,—इति मु॰ पुस्तके पाठः।

† मेध्ये इति मु॰ पुस्तके पाठः।

गम्यते। अकरणे प्रत्यवायात् नित्यत्वं, छेदनादि-पाप-निवर्त्तकत्वात् काम्यत्वञ्च। खलयज्ञस्य नित्यत्वं सौरपुराणे दर्शितम्,—

"अदत्त्वा कर्षकोदेवि, यस्तु धान्यं प्रवेशयेत्।
तस्य तृष्णाऽभिभूतस्य देवि, पापं ब्रवीम्यहम्॥
दिव्यं वर्ष-सहस्रन्तु दुरात्मा कृषिकारकः।
मरुदेशे भवेद्वृक्षः स पुष्प-फल-वर्जितः॥
तस्यान्ते मानुषोभूत्वा कदाचित्काल-पर्य्ययात्।
दरिद्रोव्याधितोमूर्खः कुल-हीनश्च जायते"—इति॥

दातव्यस्य धान्यस्य परिमाणमाह,—

**राज्ञे दत्वा तु षड्भागं देवानाञ्चैकविंशकम्॥ १२॥**
**विप्राणां त्रिंशकं भागं सर्वपापैः प्रमुच्यते*।**

षट्सु भागेष्वकोभागः षड्भागः, एकविंशति-संख्यकेषु भागेष्वन्यतमोभागएकविंशकः। तद्वत् त्रिंशकेषु भागेष्वन्यतमोभागस्त्रिंशः,—इति ज्ञेयम्। देववत् पितृभ्योऽपि देयः†। तदुक्तं कूर्म्मपुराणे,—

"देवेभ्यश्च पितृभ्यश्च दद्याद्भागं तु विंशकम्।
त्रिंशद्भागन्तु विप्राणां कृषिं कुर्व्वन्न दोषभाक्‡"—इति।

विप्रस्येतिकर्त्तव्यकृषिमुक्त्वा वर्णान्तराणामपि तामाह,—

---

* त्रिंशद्भागं ब्राह्मणानां कृषिं कुर्व्वन्नदोषभाक्,—इति मु० पुस्तके पाठः।

† नास्त्ययमंशः मु० पुस्तके।

‡ दुष्यति,—इति मु० पुस्तके पाठः।

क्षत्त्रियोऽपि कृषिं कृत्वा देवान् विप्रांश्च पूजयेत् ॥१३॥
वैश्यः शूद्रस्तथा कुर्य्यात् कृषि-वाणिज्य-शिल्पकम्। इति

वाणिज्य-शिल्पयोरपि कलौ वर्ण-चतुष्टय-साधारण्यं दर्शयितुं 'वाणिज्य-शिल्पकम्'—इत्युक्तम्। यद्यपि वैश्यस्य कृषिः पूर्व्वाध्याये विहिता, तथाप्यत्रेतिकर्त्तव्यता-विधानाय पुनरुपन्यासः। 'तथा कुर्य्यात्'—इत्यतिदेशेन ब्राह्मणस्य कृषौ विहितेतिकर्त्तव्यता सर्वाऽप्यत्र विहिता भवति,—इति ॥

यदि शूद्रस्यापि कृष्यादिकमभ्युपगम्येत, तर्हि तेनैव जीवन-सिद्धेः कलौ द्विज-शुश्रूषा परित्याज्येत्याशङ्क्याह,—

विकर्म्म कुर्वते शूद्राः द्विजशुश्रूषयोज्झिताः ॥ १४ ॥
भवन्त्यल्पायुषस्ते वै निरयं यान्त्यसंशयम्। इति।

लाभाधिक्येन विशिष्ट-जीवन-हेतुत्वात् कृष्यादिकं विकर्म्मेत्युच्यते। द्विजशुश्रूषया तु जीर्ण-वस्त्रादिकमेव लभ्यते इति न लाभाधिक्यम्। अतोऽधिक-लिप्सया कृष्यादिकमेव कुर्वन्तोयदि द्विज-शुश्रूषां परित्यजेयुस्तदा तेषामैहिकमामुष्मिकञ्च हीयते॥

इत्थं वर्ण-चतुष्टय-साधारणं जीवन-हेतुं धर्म्मं प्रतिपाद्य निगमयति,—

चतुर्णामपि वर्णानामेष धर्म्मः सनातनः॥ १५ ॥

अतीतेष्वपि कलियुगेषु विप्रादीनां कृष्यादिकमस्तीति सूचयितुं 'सनातनः'—इत्युक्तम्।

यद्यपि स्मृत्यन्तरेष्विवात्रापि वर्ण-धर्मानन्तरमाश्रम-धर्म्मावक्तु-मुचिताः, तथापि व्यासेनापृष्टत्वादाचार्य्येणोपेक्षिताः। अस्माभिस्तु श्रोत्-हितार्थाय ते वर्ण्यन्ते। न च पूर्वाध्याय एव कुतो न वर्णिता इति मन्तव्यम्, तत्र प्रसङ्गाभावात्। अत्र तु 'चातुर्वर्ण्याश्रमागतम्'—इत्याश्रम-शब्देन तेषां बुद्धिस्थत्वादस्ति प्रसङ्गः।

ते चाश्रमाश्चतुर्विधाः। तदुक्तं स्कान्दे,—

"ब्रह्मचारी गृहस्थश्च वानप्रस्थोऽथ भिक्षुकः।

एते क्रमेण विप्राणां चत्वारः पृथगाश्रमाः"—इति।

मनुरपि,—

"ब्रह्मचारी गृहस्थश्च वानप्रस्थो यतिस्तथा।

एते गृहस्थ-प्रभवाश्चत्वारः पृथगाश्रमाः"—इति।

गृहस्थप्रभवाः गृहस्थोपजीविन इत्यर्थः। तत्रोपनयनेन संस्कृतो-ब्रह्मचारी, "ब्रह्मचर्य्यमागामुप मा नयस्व"—इति मन्त्रवर्णात्। ब्रह्मचर्य्यमुद्दिश्यागतां मामुपनयस्व इत्यर्थः। उपनयनञ्च गर्भाधानादिषु पठितत्वात् ब्राह्मसंस्कारः*। तदाह हारीतः,—"द्विविधो हि संस्कारो भवति ब्राह्मो दैवश्च, गर्भाधानादिस्मार्त्तो ब्राह्मः पाकयज्ञ-हविर्यज्ञाः सौम्याश्च दैवो ब्राह्मेण संस्कृतऋषीणां समानतां सायुज्यं गच्छति, दैवेनोत्तरेण संस्कृतो देवानां समानतां सायुज्यं गच्छति"—इति।

गर्भाधानादयो गौतमेनानुक्रान्ताः,—"गर्भाधान-पुंसवनानवलो-भन-सीमन्तोन्नयन-जातकर्म-नामकरणान्नप्राशन-चौलोपनयनं चत्वा-

* ब्रह्मसंस्कारः,—इति मु० पुस्तके पाठः। एवं परत्र।

रि वेद-व्रतानि स्नानं सहधर्म्मचारिणी-संयोगः पञ्चानां यज्ञानामनुष्ठानं अष्टका पार्वणश्राद्धं श्रावण्याग्रहायणी चैत्र्याश्वयुजी चेति सप्त पाकयज्ञ-संस्थाअन्याधेयोऽग्निहोत्रं दर्शपूर्णमासाग्रयण-चातुर्मास्यानि निरूढ़पशुबन्धाः सौत्रामणीति सप्त हविर्यज्ञ-संस्थाअग्निष्टोमोऽत्यग्निष्टोमउक्थ्यः षोड़शी वाजपेयोऽतिरात्राप्तोर्य्यामइति सप्त सोम-संस्थाइत्येते चत्वारिंशत् संस्काराः"—इति ।

तत्र, गर्भाधानादयश्चूड़ान्ताः संस्काराः वीज-गर्भ-जनित-दोष-निवृत्त्यर्थाः । अतएव याज्ञवल्क्यः चूड़ान्तान् संस्कारान् निरूप्याह,—

"एवमेनः शमं याति वीज-गर्भ-समुद्भवम्"—इति ।

अतोब्रह्मचर्य्याश्रमात् प्राक् ते वर्ण्यन्ते । तत्र, द्विजानां गर्भाधानादयः समन्त्रकाः* कार्य्याः । तदाह याज्ञवल्क्यः,—

"ब्रह्म-क्षत्रिय-विट् शूद्रावर्णास्त्वाद्यास्त्रयोद्विजाः ।
निषेकादि-श्मशानान्तास्तेषां वै मन्त्रतः क्रियाः"—इति ।

गर्भाधानादीनां काल-विशेषमाह सएव,—

"गर्भाधानमृतौ पुंसः सवनं स्पन्दनात् पुरा ।
षष्ठेऽष्टमे वा सीमन्तोमास्येते जातकर्म च ॥
अहन्येकादशे नाम चतुर्थे मासि निष्क्रमः ।
षष्ठेऽन्नप्राशनं मासि चूड़ा कार्य्या यथाकुलम्"—इति ।

रजोदर्शन-दिवसमारभ्य षोड़श दिवसाकृतुः । तदाह मनुः,—

"ऋतुः स्वाभाविकः स्त्रीणां रात्रयः षोड़श स्मृताः ।

---

* संस्काराः,—इति मु० पुस्तके पाठः ।

चतुर्भिरितरैः सार्द्धमहोभिः सद्विगर्हितैः ॥
तासामाद्यास्तस्तु निन्दितैकादशी च या।
त्रयोदशी च शेषाः स्युः प्रशस्तादश रात्रयः ॥
युग्मासु पुत्राजायन्ते स्त्रियोऽयुग्मासु रात्रिषु।
तस्माद्युग्मासु पुत्रार्थी संविशेदार्त्तवे स्त्रियम्"—इति।

रजोदर्शनमारभ्य चत्वार्य्यहानि सद्विगर्हितानि। युग्मासु समासु, संविशेत् गच्छेत्।

एवमृतौ गर्भाधानं कृत्वा गर्भ-चलनात् पुरा पुंसवनं कार्य्यम्। तच्चलनं द्वितीये वा तृतीये वा भवति। तदाह वैजवापः,—"मासि द्वितीये वा पुरा स्पन्दते"—इति। पारस्करोऽपि,—"मासि द्वितीये वा तृतीये वा यदहः पुंसा नक्षत्रेण चन्द्रमा युक्तः स्यात्"—इति। पुं नक्षत्राणि च हस्तादीनि ज्योतिःशास्त्रे प्रसिद्धानि। अनवलोभनमाश्वलायन-गृह्यपरिशिष्टेऽवगन्तव्यम्।

सीमन्तोन्नयनस्य याज्ञवल्क्योक्त-कालादन्येऽपि कालामुनिभिः दर्शिताः। तत्र लौगाक्षिः,—"तृतीये गर्भमासे सीमन्तोन्नयनं कार्य्यम्"—इति। आपस्तम्बोऽपि,—"प्रथमे गर्भे चतुर्थे मासि"—इति। वैजवापोऽपि,—"अथ, सीमन्तोन्नयनं चतुर्थे पञ्चमे षष्ठे वाऽपि"—इति। शाङ्खायनगृह्येऽपि,—"सप्तमे मासि प्रथमे गर्भे सीमन्तोन्नयनम्"—इति। शङ्खोऽपि,—"गर्भ-स्पन्दनमारभ्य सीमन्तोन्नयनं यावद्वा न प्रसवः"—इति। विशेषाश्रवणात् सर्वेऽप्येते विकल्प्यन्ते। एतच्च सीमन्तोन्नयनं क्षेत्र-संस्कारत्वात् सकृदेव कर्त्तव्यं न प्रतिगर्भम्। तथा च हारीतः,—

"सकृत् संस्कृत-संस्कारा सीमन्तेन द्विजस्त्रियः"—इति।

देवलोऽपि,—

"सकृत् संस्कृता या नारी सर्वगर्भेषु संस्कृता"—इति।

गर्भ-संस्कार-पक्षे तु प्रतिगर्भमावर्त्तनीयम्। तथा च विष्णुः,—

"सीमन्तोन्नयनं कर्म न स्त्री-संस्कारइष्यते।

केचिद्गर्भस्य संस्काराद्गर्भे गर्भे प्रयुञ्जते"—इति।

अनयोः पक्षयोर्यथागृह्यं व्यवस्था। अकृत-सीमन्तायाः प्रसवे सत्यव्रतश्चाह,—

"स्त्री यद्यकृत-सीमन्ता प्रसूयेत कथञ्चन।

गृहीत-पुत्रा विधिवत्पुनः संस्कारमर्हति"—इति।

जातकर्मणः कालोयाज्ञवल्क्येन दर्शितः,—"मास्येते जातकर्म च"—इति। एते आगते जातइति यावत्। विष्णुरपि,—

"जातकर्म ततः कुर्य्यात् पुत्रे जाते यथोदितम्"—इति।

स्व-गृह्ये,—इति शेषः। तच्च स्नानानन्तरं कार्य्यम्। तथा च संवर्त्तः,—

"जाते पुत्रे पितुः स्नानं सचेलन्तु विधीयते"—इति।

जातकर्म च नाभि-वर्द्धनात् प्रागेव कार्य्यम्। तदाह हारीतः,—

"प्राङ्नाभिवर्द्धनात् पुंसोजातकर्म विधीयते।

मन्त्रवत् प्राशनञ्चास्य हिरण्य-मधु-सर्पिषाम्"—इति।

वर्द्धनं छेदनम्। न चाशौच-शङ्कया कर्मानधिकारइति वाच्यं नाभि-छेदात् प्रागशौचाभावात्। तदाह जैमिनिः,—

"यावन्न छिद्यते नालं तावन्नाप्नोति सूतकम्।

छिन्ने नाले ततः पश्चात् सूतकन्तु विधीयते''—इति।

विष्णुधर्मोत्तरे,—

"अच्छिन्न-नाड्यां कर्त्तव्यं श्राद्धं वै पुत्र-जन्मनि।

अशौचोपरमे कार्य्यमथवा नियतात्मभिः''—इति।

तच्च श्राद्धं हेम्ना कार्य्यम्। तदाह व्यासः,—

"द्रव्याभावे द्विजाभावे प्रवासे पुत्र-जन्मनि।

हेम्ना श्राद्धं प्रकुर्वीत यस्य भार्य्या रजस्वला''—इति।

आदित्यपुराणे पक्वान्ननिषेधोदर्शितः,—

"जात-श्राद्धे न दद्यात्तु पक्वान्नं ब्राह्मणेष्वपि।

यस्माच्चान्द्रायणस्तत् शुद्धिस्तेषां भवति नान्यथा''—इति।

तस्मिन् दिने यथाशक्ति दानं कर्त्तव्यम्। तदुक्तम् आदित्यपुराणे,—

"देवाश्च पितरश्चैव पुत्रे जाते द्विजन्मनाम्।

आयान्ति तस्मात्तदहः पुण्यं पूज्यञ्च सर्वदा॥

तत्र दद्यात् सुवर्णन्तु भूमिं गां तुरगं रथम्''—इति।

शङ्खोऽपि,—"सर्वेषां सकुल्यानां द्विपद* चतुष्पद-धान्य-हिरण्यादि दद्यात्''—इति। एतच्चाशौच-मध्येऽपि कार्य्यम्।

"आशौचे तु समुत्पन्ने पुत्र-जन्म यदा भवेत्।

कर्त्तुस्तात्कालिकी शुद्धिः पूर्वाशौचेन शुद्ध्यति''—इति।

नामकरणस्य याज्ञवल्क्योक्त-कालादन्येऽपि कालामनुना दर्शिताः,—

"नामधेयं दशम्यान्तु द्वादश्यां वाऽस्य कारयेत्।

पुण्ये तिथौ मुहूर्त्ते वा नक्षत्रे वा गुणान्विते''—इति।

---

* द्विपद,—इति नास्ति मु० पुस्तके।

कारयेदिति स्वार्थिकोणिच् ।

"ततस्तु नाम कुर्वीत पितैव दशमेऽहनि"—

इति विष्णुपुराण-वचनात् । यद्वा, पितुरभावे अयोग्यत्वे वाऽन्येन कारयेत् । तदाह शङ्खः,—"कुलदेवता-नक्षत्राभिसंबन्धं पिता कुर्य्यादन्योवा कुल-वृद्धः"—इति । भविष्यत्पुराणे,—

"नामधेयं दशम्यां च केचिदिच्छन्ति पार्थिव* ।
द्वादश्यामथवा रात्रौ मासे पूर्णे तथाऽपरे ॥
अष्टादशेऽहनि तथा वदन्त्यन्ये मनीषिणः"—इति ।

गृह्यपरिशिष्टेऽपि,—"जननाद्दशरात्रे व्युष्टे संवत्सरे वा नामकरणम्"—इति । तच, स्व-गृह्यानुसारेण व्यवस्था । नामधेय-स्वरूपञ्च वर्ण-भेदेन दर्शयति मनुः,—

"माङ्गल्यं ब्राह्मणस्य स्यात् क्षत्रियस्य बलान्वितम् ।
वैश्यस्य धन-संयुक्तं शूद्रस्य तु जुगुप्सितम्† ॥
शर्म्मवद्ब्राह्मणस्य स्याद्राज्ञोरक्षा-समन्वितम् ।
वैश्यस्य पुष्टि-संयुक्तं शूद्रस्य प्रेष्य-संयुतम् ॥
स्त्रीणां सुखोद्यमक्रूरं विस्पष्टार्थं मनोरमम् ।
मङ्गल्यं दीर्घ-वर्णान्तमाशीर्वादाभिधानवत्"—इति ।

माङ्गल्यादीनि पूर्व-पदानि, शर्म्मादीन्युत्तर-पदानि । तथा च, नामान्येवंविधानि सम्पद्यन्ते ; श्रीशर्म्मा, विक्रमपालः, माणिक्यश्रेष्ठी, हीनदासः,—इत्यादि । स्त्रीणान्तु श्रीदासीत्यादि । सुखोद्यं सुखेन वदितुं

---

* सूरयः,—इति मु० पुस्तके पाठः ।
† शूद्रस्य प्रेष्यसंयुतम्,—इति मु० पुस्तके पाठः ।

शक्यमित्यर्थः। अत्र विशेषमाह वैजवापः,—"पिता नाम करोत्येकाक्षरं द्व्यक्षरं त्र्यक्षरं चतुरक्षरमपरिमितं वा घोषवदाद्यन्तरन्तस्थं दीर्घाभिनिष्ठानान्तम्"—इति। अयमर्थः,—घोषवन्ति यान्यक्षराणि वर्गतृतीय-चतुर्थानि, तान्यादौ कार्य्याणि। अन्तस्था यरलवा मध्ये कर्त्तव्याः। अभिनिष्ठानो विसर्जनीयः। तथाच, भद्रपालो जातवेदा इत्यादि नाम भवति। यथोक्त-नाम-करणस्य फलमाहतुः शङ्ख-लिखितौ,—"एवं कृते नाम्नि शुचि तत्कुलं भवति"—इति॥

## अथ निष्क्रमणम्।

तत्र मनुः,—

"चतुर्थे मासि कर्त्तव्यं शिशोर्निष्क्रमणं गृहात्"—इति।

अत्र कर्त्तव्यमाह यमः,—

"ततस्तृतीये कर्त्तव्यं मासि सूर्य्यस्य दर्शनम्।
चतुर्थे मासि कर्त्तव्यं शिशोश्चन्द्रस्य * दर्शनम्"—इति।

लौकाक्षिरपि,—"तृतीयेऽर्धमासे दर्शनमादित्यस्य"—इति। पुराणेऽपि,—

"द्वादशेऽहनि राजेन्द्र, शिशोर्निष्क्रमणं गृहात्।
चतुर्थे मासि कर्त्तव्यं तथाऽन्येषाञ्च सम्मतम्"—इति।

अत्रापि यथाशाखं व्यवस्था।

## अथान्नप्राशनम्।

तत्र यमः,—

---

* तथाचन्द्रस्य,—इति मु० पुस्तके पाठः।

"ततोऽन्न-प्राशनं मासि षष्ठे कार्य्यं यथाविधि ।
अष्टमे वाऽपि कर्त्तव्यं यच्चेष्टं मङ्गलं कुले"—इति ।

शङ्खोऽपि,—"संवत्सरेऽन्न-प्राशनमर्द्ध-संवत्सरइत्येके" । लौगाक्षिः,—"षष्ठे मास्यन्न-प्राशनं जातेषु दन्तेषु वा"—इति । तत्र विशेषमाह मार्कण्डेयः,—

"देवता-पुरतस्तस्य धात्र्युत्सङ्ग-गतस्य च ।
अलङ्कृतस्य दातव्यमन्नं पात्रे च काञ्चने ।
मध्वाज्यकनकोपेतं प्राशयेत् पायसं स तम् ।
कृत-प्राशमथोत्सङ्गाद्धात्री बालं समुत्सृजेत्"—इति ।

प्राशनानन्तरं जीविका-परीक्षा मार्कण्डेयेन दर्शिता,—

"अग्रतोऽथ प्रविन्यस्य शिल्पभाण्डानि सर्वशः ।
शस्त्राणि चैव वस्त्राणि ततः पश्येत्तु लक्षणम् ।
प्रथमं यत् स्पृशेद्बालस्ततोभाण्डं* स्वयं तथा ।
जीविका तस्य बालस्य तेनैव तु भविष्यति"—इति ।

## अथ चूड़ाकरणम् ।

तत्र यमः,—

"ततः संवत्सरे पूर्णे चूड़ा-कर्म विधीयते ।
द्वितीये वा तृतीये वा कर्त्तव्यं श्रुति-दर्शनात्†"—इति ।

वैजवापः,—"तृतीयेवर्षे चूड़ा-करणम्"—इति । शङ्खोऽपि,—"तृतीये वर्षे चूड़ा-करणं पञ्चमे वा"—इति । लौगाक्षिरपि,—

* वाढ़ं,—इति मु० पुस्तके पाठः ।
† श्रुतिचोदनात्,—इति मु० पुस्तके पाठः ।

"तृतीयस्य वर्षस्य भूयिष्ठे गते चूडा-करणम्"—इति। शौनकोऽपि*,—"तृतीये वर्षे चौलं यथाकुलधर्मं वा"—इति। तत्र, ऋषि-भेदेन चूडा-नियममाह लौगाक्षिः,—"दक्षिणतः कमुजा वसिष्ठानाम्, उभयतोऽत्रिकाश्यपानां, मुण्डा भृगवः, पञ्च-चूडा अङ्गिरसः, मण्डलार्द्ध-शिखिनोऽन्ये, यथाकुलधर्मं वा"—इति। कमुजा केश-पङ्क्तिः। अत्र, यथाशाखं व्यवस्था।

अत्र, यथोक्ताः चूडा-करणान्ता अनुपनीत-विषयाः, अतस्तत्-प्रसङ्गादन्येऽपि केचनानुपनीत-धर्माः कथ्यन्ते। तत्र, गौतमः,—"प्रागुपनयनात् कामचार-कामवाद-कामभक्षाः"—इति। कामचार इच्छागतिः। कामवादोऽश्लीलादि-भाषणम्। कामभक्षः पर्य्युषितादिभक्षणम्। विष्णुपुराणेऽपि,—

"भक्ष्याभक्ष्ये तथा पेये वाच्यावाच्ये तथाऽनृते।

अस्मिन् काले न दोषः स्यात् स यावन्नोपनीयते"-इति।

एतच्चाभक्ष्य-भक्षणं महापातक-हेतु-व्यतिरिक्त-विषयम्†। अत एव स्मृत्यन्तरम्,—

"स्यात्काम-चार-भक्ष्योक्तिर्महतः पातकादृते"—इति।

यथा भक्ष्याभक्ष्यादि-नियमो नास्ति, एवमाचमनादि कर्त्तव्यान्तरमपि नास्ति। तदाह वसिष्ठः,—

"न ह्यस्य‡ विद्यते कर्म किञ्चिदामौञ्जिबन्धनात्।

वृत्त्या शूद्र-समस्तावद्यावद्वेदी न जायते"-इति।

---

* आश्वलायनोऽपि,—इति मु० पुस्तके पाठः।

† महापातकहेतुद्रव्यव्यतिरिक्तविषयम्,—इति मु० पुस्तके पाठः।

‡ नत्वस्य,—इति स० सो० शा० पुस्तकेषु पाठः।

गौतमोऽपि,—"यथोपपादित-मूत्र-पुरीषोऽसति, न तस्याचमनकल्पो विद्यते न ब्रह्माभिव्याहरेदन्यत्र स्वधा-निनयनात्(१)"—इति ।

अक्षराभ्यासस्तु कर्त्तव्यः । तदाह मार्कण्डेयः,—

"प्राप्ते तु पञ्चमे वर्षे ह्यप्रसुप्ते जनार्द्दने ।
षष्ठीं प्रतिपदं चैव वर्ज्जयित्वा तथाऽष्टमीम् ॥
रिक्तां पञ्चदशीञ्चैव सौरि-भौम-दिनन्तथा * ।
एवं सुनिश्चिते काले विद्यारम्भं तु कारयेत् ॥
पूजयित्वा हरिं लक्ष्मीं देवीञ्चैव सरस्वतीम् ।
स्व-विद्या-सूत्र-कारांश्च† स्वां विद्याञ्च विशेषतः ॥
एतेषामेव देवानां नाम्ना तु जुहुयात् घृतम् ।
दक्षिणाभिर्द्विजेन्द्राणां कर्त्तव्यञ्चापि पूजनम् ॥
प्राङ्मुखोगुरुरासीनोवरुणाभिमुखं शिशुम् ।
अध्यापयेत्तु प्रथमं द्विजातिभिः सुपूजितैः‡ ॥
ततः प्रभृत्यनध्यायान् वर्जनीयान् विवर्ज्जयेत् ।
अष्टमी-द्वितयञ्चैव पक्षान्ते च दिन-त्रयम्"—इति ।

॥०॥ इति गर्भाधानादि-चूड़ान्त-संस्कार-प्रकरणम् ॥०॥

* सौरिभानुदिने तथा,—इति मु० पुस्तके पाठः ।
† स्वविद्यासूत्रवक्तारं,—इति मु० पुस्तके पाठः ।
‡ स पूजितः,—इति आ० पुस्तके पाठः ।

(१) "स्वधा वै पितृणामन्नम्,"—इति श्रुतेः स्वधाशब्देनात्र तत्संबन्धात् श्राद्धमुच्यते । तथा च, स्वधा श्राद्धं निनीयते-सम्पाद्यते येन मन्त्रजातेन तत्तथा । अथ वा, स्वधा पितृणामन्नं, तत् निनीयते प्राप्यते (अर्थात् पितृणामेव) येन मन्त्रजातेन तत्तथा । तथा च श्राद्धसम्पादकवैदिकमन्त्रा अनुपनीतेनापि पठनीयाइति फलितोऽर्थः ।

# अथोपनयनम्।

तत्र मनुः,—

"गर्भाष्टमेऽब्दे कुर्वीत ब्राह्मणस्योपनायनम्।
गर्भादेकादशे राज्ञोगर्भात् तु द्वादशे विशः॥
ब्रह्मवर्चस-कामस्य कार्य्यं विप्रस्य पञ्चमे।
राज्ञोवलार्थिनः षष्ठे वैश्यस्यार्थार्थिनोऽष्टमे॥
आ षोड़शाद्ब्राह्मणस्य सावित्री नातिवर्त्तते।
आ द्वाविंशात् क्षत्रवन्धोरा चतुर्विंशतेर्विशः॥
अतऊर्द्धं त्रयोऽप्येते यथाकालमसंस्कृताः।
सावित्री-पतितात्रात्याभवन्त्यार्य्य-विगर्हिताः॥
नैतैरपूतैर्विधिवदापद्यपि हि कर्हिचित्।
ब्राह्मान् यौनांश्च संवन्धानाचरेत् ब्राह्मणः सह"—इति।

आपस्तम्बोऽपि,—"सप्तमे ब्रह्मवर्चस-काममष्टमआयुःकामं नवमे तेजस्कामं दशमेऽन्नाद्यकाममेकादशइन्द्रियकामं द्वादशे पशुकामम्"—इति। एतच्च वर्ण-त्रयस्य साधारणम्। वर्ण-व्यवस्थया काल-नियममाह सएव,—"वसन्ते ब्राह्मणमुपनयीत ग्रीष्मे राजन्यं शरदि वैश्यम्"—इति। वर्णानुपूर्व्व्येणोपनयनस्येतिकर्त्तव्यतामाह मनुः,—

"कार्ष्ण-रौरव-वास्तानि चर्म्माणि ब्रह्मचारिणः।
वसीरन्नानुपूर्व्येण शाणक्षौमाविकानि च"—इति।

कार्ष्णादीनि चर्म्माणि उत्तरीयाणि। तथा च शङ्खः,—"कृष्ण-रुरु-वस्ताजनान्युत्तरीयाणि"—इति। वशिष्ठोऽपि,—"कृष्णाजिनमुत्तरीयं

ब्राह्मणस्य वौरवं राजन्यस्य गव्यं वस्ताजिनं वा वैश्यस्य”—इति । तथा पारस्करः,—“ऐणेयमजिनमुत्तरीयं ब्राह्मणस्य वौरवं राजन्यस्याजं गव्यं वा वैश्यस्य सर्वेषां वा गव्यम्”—इति । शाणादीन्यधरीयाणि* । आपस्तम्बः,—“वासः शाणक्षौमाजिनानि, काषायं चैके वस्त्रमुपदिशन्ति शुक्लकार्पासवस्त्रं ब्राह्मणस्य माञ्जिष्ठं राजन्यस्य हारिद्रं वैश्यस्य”—इति†। मेखलामाह मनुः,—

“मौञ्जी त्रिवृत्समा श्लक्ष्णा कार्य्या विप्रस्य मेखला ।
क्षत्रियस्य च मौर्वी ज्या वैश्यस्य शणतान्तवी”—इति ।

त्रिवृत् त्रिगुणा । यमोऽपि,—

“विप्रस्य मेखला मौञ्जी ज्या मौर्वी क्षत्रियस्य तु ।
शाणसूत्री तु वैश्यस्य मेखलाधर्मतः स्मृताः॥
एतासामप्यभावे तु कुशाश्मान्तकबल्वजैः ।
मेखला त्रिवृता कार्य्या ग्रन्थिनैकेन वा त्रिभिः”—इति ।

मनुरपि,—

“मुञ्जाभावे तु कर्त्तव्या कुशाश्मान्तकबल्वजैः ।
त्रिवृता ग्रन्थिनैकेन त्रिभिः पञ्चभिरेव वा”—इति ।

दण्डमाहमनुः,—

“ब्राह्मणोवैल्व-पालाशौ क्षत्रियोवाट-खादिरौ ।
पैलवौदुम्बरौ वैश्योदण्डानर्हन्ति धर्मतः”—इति ।

---

* शाणादीन्युत्तरीयाणि,—इति मु० पुस्तके पाठः ।

† “पीतं कौशेयं वैश्यस्य,”—इति । पीतं हारिद्रं,—इति स० शा० पुस्तकयोः पाठः ।

अनुकल्पमाह यमः,—

"एतेषामप्यभावे तु सर्वेषां सर्व-यज्ञियाः"—इति।

मनुर्दण्डपरिमाणमाह,—

"केशान्तिकोब्राह्मणस्य दण्डः कार्य्यः प्रमाणतः।

ललाट-सम्मितोराज्ञः स्यात्तु नासान्तिकोविशः"—इति।

गौतमोऽपि,—"मूर्द्ध-ललाट-नासाग्र-प्रमाणाः"—इति। दण्ड-लक्षण-माह मनुः,—

"ऋजवस्ते तु सर्वे स्युरव्रणाः सौम्यदर्शनाः।

अनुद्वेग-करान्नृणां सत्वचोनाग्नि-दूषिताः"—इति।

गौतमोऽपि,—"अपीड़िताथूपवक्राः सवल्काः"—इति। यज्ञोपवीत-माह मनुः,—

"कार्पासमुपवीतं स्याद्विप्रस्योर्द्धवृतं त्रिवृत्।

शणसूत्रमयं राज्ञोवैश्यस्याविकसूत्रकम्"—इति।

पैठीनसिरपि,—"कार्पासमुपवीतं ब्राह्मणस्य चौमेयं* राजन्यस्याविकं वैश्यस्य"—इति। उक्तोपवीतालाभे यथासम्भवं गो-वालादिकं ग्राह्यम्। तदाह देवलः,—

"कार्पास-चौम-गोवाल-शण-वल्क-तृणादिकम्।

सदा संभवतः कार्य्यमुपवीतं द्विजातिभिः"—इति।

ऋष्यशृङ्गः,—"अपि वा वाससी† यज्ञोपवीतार्थं कुर्यात् तदभावे त्रिवृता सूत्रेण"—इति। तच्च नव-तन्तुकं कार्य्यम्। तदाह देवलः,—

* कौशेयं,—इति मु० पुस्तके पाठः।

† वाससी यज्ञोपवीतधारणं,—इति मु० पुस्तके पाठः।

"यज्ञोपवीतं कुर्वीत सूत्रेण नव-तन्तुकम्"—इति ।

कात्यायनः,—

"त्रिवृदूर्द्ध्ववृतं कार्य्यं तन्तु-त्रयमधोवृतम्"—इति ।

ऊर्द्ध्ववृतस्य लक्षणमाह संग्रहकारः*,—

"करेण दक्षिणेनोर्द्ध्वं गतेन त्रिगुणीकृतम् ।
वलितं मानवैः† सूत्रं शास्त्रऊर्द्ध्ववृतं स्मृतम्"—इति ।

ऊर्द्ध्वं गतेन दक्षिणेन करेण यद्वलितं तदूर्द्ध्ववृतमित्यर्थः। यज्ञोपवीत-प्रयोगमाह देवलः,—

"ग्रामान्निष्क्रम्य सङ्ख्यायां‡ षण्णवत्यङ्गुलीषु तत् ।
तावत्त्रिगुणितं सूत्रं प्रक्षाल्याबलिङ्गकैस्त्रिभिः ॥
देवागारेऽथवा गोष्ठे नद्यां वाऽन्यत्र वा शुचौ ।
सावित्र्या त्रिवृतं कुर्य्यान्नव-सूत्रन्तु तद्भवेत् ॥
विल्वाश्वत्थादि-यज्ञीय-वृक्षस्यान्यतमस्य तु ।
वध्नीयात्तत्र जीवन्तु§ पितृभ्योनमइत्यथ ॥
वामं नावेक्षितव्यं स्यात् पितॄणां तृप्तिदं हि तत् ।
त्रिः पीडयेत्¶ करतलं देवानां तृप्तिदं हि तत् ॥
मध्ये मृदं गृहीत्वाऽस्मिन् स्थापयेद्भूरिति ब्रुवन् ।

---

* ग्रन्थकारः,—इति स० ग्रा० पुस्तकयोः पाठः ।
† मानवे,—इति मु० पुस्तके पाठः ।
‡ ग्रामान्निर्गत्य संख्यायाः,—इति मु० पुस्तके पाठः ।
§ वध्नीयात्तत् सजीवंतु,—इति ग्रा० पुस्तके पाठः ।
¶ त्रिस्ताड़येत्, -इति ग्रा० पुस्तके पाठः ।

पत्रं पुष्पं फलं वाऽपि व्याहृतीभिश्च निःक्षिपेत्* ॥
अभिमन्त्र्याथ भूरग्निश्चेति त्रिवृत्त्वयं त्रिभिः।
हरिब्रह्मेश्वरेभ्यश्च प्रणम्यावदधारिति"—इति।

अवधारण-मन्त्रस्तु, 'यज्ञोपवीतम्' इत्यादि। ग्रन्थि-नियममाह कात्यायनः,—

"त्रिवृतं चोपवीतं स्यात्तस्यैकोग्रन्थिरिष्यते"—इति।

यज्ञोपवीत-परिमाणमाह सएव,—

"पृष्ठवंशे च नाभ्याञ्च धृतं यद्विन्दते कटिम्।
तद्धार्य्यमुपवीतं स्यान्नातिलम्बं नचोच्छ्रितम्"—इति।

देवलोऽपि,—

"स्तनादूर्द्धमधोनाभेर्न कर्त्तव्यं कदाचन"—इति।

उपवीत-सङ्ख्यामाह भृगुः,—

"उपवीतं वटोरेकं द्वे तथेतरयोः स्मृते।
एकमेव यतीनां स्यात् इति शास्त्रस्य निर्णयः"—इति।

एतच्च नित्याभिप्रायम्, कामनया बहूनां श्रवणात्। तदाह देवलः,— "बहूनि चायुः-कामस्य"—इति। एतदुपवीतं सदा धार्य्यम्। तदाह भृगुः,—

"सदोपवीतिना भाव्यं सदा बद्धशिखेन च।
विशिखोव्युपवीतश्च† यत् करोति न तत् कृतम्॥
मन्त्रपूतं स्थितं काये यस्य यज्ञोपवीतकम्।

---

* व्याहृतीः प्रति विक्षिपेत्,—इति स० शा० पुस्तकयोः पाठः।
† व्युपवीती च,—इति मु० पुस्तके पाठः।

नोद्धरेच्च ततः प्राज्ञोयदीच्छेच्छ्रेयआत्मनः ॥
सकृच्चोद्धरणात्तस्य* प्रायश्चित्ती भवेद्द्विजः"—इति ।

उपवीते विशेषमाह देवलः,—

"सूत्रं सलोमकं चेत्स्यात्ततः कृत्वा विलोमकम् ।
सावित्र्या दशकृत्वोऽद्भिः मन्त्रिताभिस्तदुक्षिपेत् ॥
विच्छिन्नं वाऽप्यधोयातं भुक्त्वा निर्मितमुत्सृजेत्"—इति ।

यज्ञोपवीतादीनां त्रोटनादौ प्रतिपत्तिमाह मनुः,—

"मेखलामजिनं दण्डमुपवीतं कमण्डलुम् ।
अप्सु प्रास्य विनष्टानि गृहीतान्यानि मन्त्रवत्"—इति ।

दण्ड-धारणानन्तरमादित्योपस्थानं कार्य्यम् । तथाह मनुः,—

"प्रतिगृह्येप्सितं दण्डमुपस्थाय च भास्करम् ।
प्रदक्षिणं परीत्याग्निं चरेद्भैक्षं यथाविधि"—इति ।

दण्डग्रहणान्तेतिकर्त्तव्यता-युक्तमुपनयनं प्राप्य गायत्री-महावाक्यार्थभूतं भास्करमुपस्थाय सोऽहमित्येवं ज्ञात्वा अग्निं† परिचर्य भैक्ष्यं चरेदित्यर्थः । अग्नि-परिचर्य्या मनुना दर्शिता,—

"दूरादाहृत्य समिधः सन्निदध्याद्विहायसि ।
सायं प्रातश्च जुहुयात् ताभिरग्निमतन्द्रितः"—इति ।

विहायसि अन्तरिक्षे स्थापयेन्न तु भूमावित्यर्थः । समिदाहरणे विशेषमाह वैजवापः,—"पुराऽस्तमयात् प्रागुदीचीं दिशं गत्वा अहिं-

---

* सकृच्चाधारणात्तस्य—इति मु० पुस्तके पाठः । सकृत्सोद्धरणात्तस्य,—इति शा० पुस्तके पाठः ।

† यज्ञाग्निं,—इति शा० पुस्तके पाठः ।

सन्तरणात् समिधमाहरेत्; शुष्काब्रह्मवर्चस-कामश्चार्द्रास्त्वन्नाद्य-कामउभयीरुभय-कामः"—इति। समिल्लक्षणमाह कात्यायनः,—

"नाङ्गुष्ठादधिका कार्य्या समित् स्थूलतया क्वचित्।
न वियुक्ता त्वचा चैव न सकीटा न पाटिता* ॥
प्रादेशान्नाधिका न्यूना तथा न स्याद्विशाखिका।
नासपर्णा नातियामा होमेषु तु विजानता ॥
विशीर्णा विदला ह्रस्वा वक्रा ससुषिरा कृशा।
दीर्घा स्थूला गुणैर्दुष्टा† कर्म-सिद्धि-विनाशिका"—इति।

समिन्नियमउक्तोवायुपुराणे,—

"पालाश्यः समिधः कार्य्याः खादिर्य्यः तदलाभतः।
शमीरोहितकाश्वत्थास्तदभावेऽर्कवेतसौ"—इति।

अग्निकार्य्याकरणे प्रत्यवायमाह हारीतः,—

"पुरा जग्राह वै मृत्युर्हिंसयन् ब्रह्मचारिणम्।
अग्निस्तं मोचयामास तस्मात् परिचरेच्च तम्"—इति।

भिक्षा-चर्य्या-प्रकारमाह याज्ञवल्क्यः,—

"ब्राह्मणेषु चरेद्भैक्ष्यमनिन्द्येष्वात्म-वृत्तये।
आदिमध्यावसानेषु भवच्छब्दोपलक्षिता ॥
ब्राह्मण-क्षत्रिय-विशां भैक्ष्य-चर्य्या यथाक्रमम्"—इति।

ब्राह्मणेष्विति स्वस्वजातीयोपलक्षणम्। अतएव व्यासः,—

"ब्राह्मण-क्षत्रिय-विशस्वरेयुर्भैक्ष्यमन्वहम्।

---

† न तापिता,—इति मु० पुस्तके पाठः।
‡ दीर्घा स्थूलगुणैर्दुष्टा,—इति मु० पुस्तके पाठः।

सजातीय-गृहेष्वेव सार्व्ववर्णिकमेव वा"—इति ।

सार्व्ववर्णिकत्वमापद्विषयम् । अतएव भविष्यत्पुराणे दर्शितम्,—

"चातुर्व्वर्ण्यञ्चरेद्भैक्ष्यमलाभे कुरुनन्दन"—इति ।

आपद्यपि न शूद्रात् पक्वं गृह्णीयात् । तदाहाङ्गिराः,—

"आममेवाददीतान्या*दवृत्तावेकरात्रिकम् ।

आमं पूयति संस्कारे धर्म्मयन्तेभ्यः प्रतीच्छितम्† ॥

तस्मादामं ग्रहीतव्यं शूद्रादप्यंगिरोऽब्रवीत्"—इति ।

अनापदि स्वजातीयेष्वपि प्रशस्तेष्वेव भैक्ष्यमाचरेत् । तदाह मनुः,—

"वेदयज्ञैरहीनानां प्रशक्तानां‡ स्व-कर्मसु ।

ब्रह्मचार्य्याहरेद्भैक्ष्यं गृहेभ्यः प्रयतोऽन्वहम्"—इति ।

आदिमध्यावसानेष्विति, अयमर्थः । भिक्षा-प्रवर्त्तना-वाक्ये वर्ण-क्रमेण§ आदिमध्यावसाने भवच्छब्दः प्रयोज्यः । तथा च मनुः,—

"भवत्पूर्वं चरेद्भैक्ष्यमुपनीतो‖ द्विजोत्तमः ।

भवन्मध्यन्तु राजन्योवैश्यस्तु भवदुत्तरम्"—इति ।

उक्तेषु क्वचिदपवादमाह सएव,—

"गुरोः कुले न भिक्षेत न ज्ञातिकुल-बन्धुषु ।

अलाभे त्वन्यगेहानां पूर्वं पूर्वं परित्यजेत् ॥

सर्वं वाऽपि चरेद्ग्रामं पूर्वोक्तानामसम्भवे ।

---

* आममेवाददीतास्मा,—इति मु० पुस्तके पाठः ।

† प्रपश्चितम्,—इति मु० पुस्तके पाठः ।

‡ प्रशस्तानां,—शा० पुस्तके पाठः ।

§ क्रमेण,—इति मु० पुस्तके पाठः ।

‖ मुपवीती,—इति मु० पुस्तके पाठः ।

नियम्य प्रयतो वाचमभिशस्तांस्तु वर्जयेत्''—इति ।

यत्तु,—

"मातरं वा स्वसारं वा मातुर्वा भगिनीं निजाम् ।

भिक्षेत भिक्षां प्रथमं या चैनं न विमानयेत्''—इति ।

तदुपनयनाङ्ग-भिक्षा-विषयम् । तच्च भैक्ष्यं भोजन-पर्य्याप्तमाहर्त्तव्यम्, अन्यथा दोष-श्रवणात् । तदाह यमः,—

"आहारमात्रादधिकं न क्वचिद्भैक्षमाहरेत् ।

युज्यते स्तेय-दोषेण कामतोऽधिकमाहरन्''—इति ।

तच्च भैक्ष्यं गुर्वनुज्ञा-पुरःसरं भोक्तव्यम् । तदाहतुर्मनु-यमौ,—

"समाहृत्याथ तद्भैक्ष्यं यावदर्थममायया ।

निवेद्य गुरवेऽश्नीयादाचम्य प्राङ्मुखः शुचिः''—इति ।

गुर्वसन्निधौ तद्भार्य्यादिभ्यो निवेदयेत् । तदाह गौतमः,—

"निवेद्य गुरवेऽनुज्ञां ततो भुञ्जीत सन्निधौ ।

गुरोरभावे तद्भार्य्या-पुत्र-सब्रह्मचारिणाम्''—इति ।

गुर्वनुज्ञातं भैक्षं सत्कृत्य भुञ्जीत । तदाह याज्ञवल्क्यः,—

"कृताग्निकार्य्यो भुञ्जीत वाग्यतो गुर्वनुज्ञया ॥

आपोशन-क्रिया-पूर्वं* सत्कृत्यान्नमकुत्सयन्''—इति ।

सत्कारश्च हारीतेन दर्शितः,—"भैक्ष्यमवेक्षितं पर्य्यग्निकृतमादित्य-दर्शितं गुरवे निवेदितमनुज्ञातममृत-सम्मितं प्राङः, यदश्नाति ब्रह्म-चारी ब्रह्म-सिद्धिमवाप्नोति'' । गौतमोऽपि,—"सायं प्रातरभिपूजित-मनिन्दन् भुञ्जीत''—इति । एकान्न-निषेधमाह मनुः,—

* आपोशानक्रियापूर्व्वं,—इति ग्रा० पुस्तके पाठः ।

"भैक्ष्येण वर्त्तयेन्नित्यं नैकान्नादी भवेद्व्रती ।
भैक्ष्येण व्रतिनोवृत्तिरुपवास-समा स्मृता ॥
व्रतवद्देव-दैवत्ये पित्र्ये कर्मण्यथर्षिवत् ।
काममभ्यर्थितोऽश्नीयात् व्रतमस्य न लुप्यते"—इति ।

अकरणे प्रत्यवायमाह सएव,—

"अकृत्वा भैक्ष्यचरणमसमिध्य च पावकम् ।
अनातुरः सप्तराचमवकीर्णि-व्रतञ्चरेत्"—इति ।

उपनीतस्य नियममाह यमः,—

"दण्डं कमण्डलुं वेदं मौञ्जीं च रसनां तथा ।
धारयेद्ब्रह्मचर्य्यञ्च भिक्षान्नाशी गुरौ वसन्"—इति ।

वेदोदर्भमुष्टिः, गुरौ गुरु-गृहे इत्यर्थः । यमः,—

"मेखलामजिनं दण्डं उपवीतं च नित्यशः ।
कौपीनं कटि-सूत्रञ्च ब्रह्मचारी च धारयेत्"—इति ।

मनुः,—

"अग्नीन्धनं भैक्ष्यचर्य्यामधःशय्यां गुरोर्हितम् ।
आ समावर्त्तनात् कुर्य्यात् कृतोपनयनोद्विजः"—इति ।

सुमन्तुरपि,—

"ब्रह्मचर्य्यं तपोभैक्ष्यं सन्ध्ययोरग्नि-कर्म च ।
स्वाध्यायोगुरु-वृत्तिश्च चरेयुर्ब्रह्मचारिणः"—इति ।

गुरु-वृत्ति-प्रकारमाह व्यासः,—

"जघन्यशायी पूर्वं स्यादुत्थायी गुरु-वेश्मनि ।
यच्च शिष्येण कर्त्तव्यं यच्च दानेन वा पुनः ॥

कृतमित्येव तत् सर्वं कृत्वा तिष्ठेत्तु पार्श्वतः।
किङ्करः सर्वकारी च सर्वकर्मसु कोविदः॥
अभुक्तवति नाश्नीयादपीतवति नो पिबेत्।
न तिष्ठति तथाऽऽसीत नासुप्ते प्रसुपेत् तथा"—इति।

विश्वामित्रः,—

"तद्भार्य्या-पुत्रयोश्चैव वृद्धानां धर्मशालिनाम्*।
शुश्रूषा सर्वदा कार्य्या प्रणामादिभिरेव च"—इति।

वर्ज्यानाह याज्ञवल्क्यः,—

"मधुमांसाञ्जनोच्छिष्ट-शुक्त-स्त्री-प्राणिहिंसनम्।
भास्करालोकनाश्लील-परिवादांश्च वर्जयेत्"—इति।

मनुरपि,—

"वर्जयेन्मधुमांसञ्च गन्धं माल्यं रसान् स्त्रियः।
शुक्तानि चैव सर्वाणि प्राणिनां चैव हिंसनम्॥
अभ्यङ्गमंजनञ्चाक्ष्णोरुपानच्छत्र-धारणम्।
कामं क्रोधञ्च लोभञ्च नर्त्तनं गीतवादनम्॥
द्यूतञ्च जनवादं च परिवादं तथाऽनृतम्।
स्त्रीणाञ्च प्रेक्षणालम्भमुपघातं परस्य च॥
एकः शयीत सर्वत्र न रेतः स्कन्दयेत् क्वचित्"—इति।

यमः,—

"खट्वाऽऽसनं च शयनं वर्जयेद्दन्त-धावनम्।

---

* धर्म्मशीलिनाम्,—इति मु० पुस्तके पाठः।

स्वपेदेकः कुशेष्वेव न रेतः स्कन्दयेत् क्वचित्"—इति ।

कूर्मपुराणे,—

"नादर्शञ्चैवमीक्षेत नाचरेद्दन्त-धावनम् ।

गुरूच्छिष्टं भेषजार्थं प्रयुञ्जीत न कामतः"—इति ।

आपस्तम्बोऽपि,—"पितुर्ज्येष्ठस्य च भ्रातुरुच्छिष्टं भोक्तव्यम्"—इति ।

गुरुपुत्रस्याप्युच्छिष्टं न भोक्तव्यम् । तदाह मनुः,—

"उत्सादनञ्च गात्राणां स्नापनोच्छिष्टभोजने ।

न कुर्य्याद्गुरु-पुत्रस्य पादयोश्चावनेजनम् ॥

अभ्यञ्जनं स्नापनञ्च गात्रोत्सादनमेवच ।

गुरुपत्न्या न कार्य्याणि केशानाञ्च प्रसाधनम्"—इति ।

ब्रह्मचर्य्य-कालावधिमाह याज्ञवल्क्यः,—

"प्रतिवेदं ब्रह्मचर्य्यं द्वादशाब्दानि पञ्च वा ।

ग्रहणान्तिकमित्येके केशान्तं चैव षोड़शे"—इति ।

केशान्तं गोदानाख्यं कर्म । तच्च षोड़शे वर्षे कार्य्यम् । तदाह मनुः,—

"केशान्तः षोड़शे वर्षे ब्राह्मणस्य विधीयते ।

राजन्यबन्धोर्द्वाविंशे वैश्यस्य ह्यधिके ततः"—इति ।

यमः,—

"वसेद्द्वादश वर्षाणि चतुर्विंशतिमेव वा ।

षट्त्रिंशतं वा वर्षाणि प्रतिवेदं व्रतञ्चरेत्"—इति ।

एतत् त्रिवेद-ग्रहणाभिप्रायम् । अतएव मनुः,—

"षट्त्रिंशदाब्दिकं चर्य्यं गुरौ त्रैवेदिकं व्रतम् ।

तदर्द्धिकं पादिकं वा* ग्रहणान्तिकमेव वा"—इति ।

एवमुक्तलक्षणोब्रह्मचारी द्विविधः, उपकुर्वाणकोनैष्ठिकश्च । उपकुर्वाणकस्योक्ताः धर्माः, नैष्ठिकस्योच्यन्ते । तत्राह याज्ञवल्क्यः,—

"नैष्ठिकोब्रह्मचारी तु वसेदाचार्य्य-सन्निधौ ।
तदभावेऽस्य तनये पत्न्यां वैश्वानरेऽपिवा"—इति ।

मनुरपि,—

"यदि त्वात्यन्तिकोवासोरोचेतास्य गुरोः कुले ।
युक्तः परिचरेदेनमा शरीर-विमोक्षणात् ॥
आचार्य्ये तु खलु प्रेते गुरुपुत्रे गुणान्विते ।
गुरुदारे सपिण्डे वा गुरुवद्वृत्तिमाचरेत् ॥
एषु त्वविद्यमानेषु स्थानासनविहारवान् ।
प्रयुञ्जानोऽग्नि-शुश्रूषां साधयेद्देहमात्मनः"—इति ॥

एतच्च सद्वृत्त-ब्राह्मण-गुर्वादि-विषयम्, अन्यथा दोषः । तदुक्तं तेनैव,—

"नाब्राह्मणे गुरौ शिष्योवासमात्यन्तिकं वसेत् ।
ब्राह्मणे चाननूचाने काङ्क्षन् गतिमनुत्तमाम्"—इति॥

वसिष्ठोऽपि,—"ब्रह्मचर्य्यं चरेदाशरीर-विमोक्षणात् । आचार्य्ये च प्रेतेऽग्निं परिचरेत् संयतवाक् चतुर्थषष्ठाष्टमकालभोजी भैक्ष्यं गुर्वधीनोजटिलः शिखाजटोवा गुरुं गच्छन्तमनुगच्छेदासीनं चानुतिष्ठेत् शयानश्चेदासीत आहूताध्यायी सर्व-लब्ध-निवेदी खट्वा-शयन-दन्तप्रक्षालनाञ्जनाभ्यञ्जनवर्जनानश्लीलस्त्रीरहस्यभ्युपेयादपः"—इति ।

---

* तदर्द्धिकं वा पादं वा,—इति मु० पुस्तके पाठः ।

अहनि त्रिषवनस्नायी स्यादित्यर्थः। अग्नि-परिचर्य्या हारीत-शङ्ख-लिखित-यमैर्निरूपिता,—"यज्ञियाः समिधश्चाहृत्य सम्मार्जनोपलेपनोद्धमनसमूहनसमिन्धनपर्य्यग्निकरणपरिक्रमणोपस्थानहोमस्तोत्रनमस्कारादिभिरग्निं परिचरेन्नाग्निमधितिष्ठेन्न पद्भ्यां कर्षेन्न मुखेनोपधमेन्नापश्चाग्निञ्च युगपद्धारयेन्नाजीर्णभुक्तोनोच्छिष्टोवाऽभ्यादध्यात्। विविधैर्विविधैर्विविग्नैराग्नेयैरहरहरग्निं समिंधेदामन्त्र्य गच्छेदागत्य निवेदयेत् तन्मनाः शरीरोपरमान्ते ब्रह्मणः सायुज्यं गच्छति"—इति। एवं कुर्वतः फलमाह याज्ञवल्क्यः,—

"अनेन विधिना देहं सादयन् विजितेन्द्रियः।
ब्रह्मलोकमवाप्नोति न चेहाजायते पुनः"—इति।

मनुरपि,—

"आ समाप्तेः शरीरस्य यस्तु शुश्रूषते गुरुम्।
स गच्छत्यञ्जसा विप्रोब्रह्मणः सद्म शाश्वतम्"—इति।

ननु नैष्ठिकब्रह्मचर्य्याङ्गीकारे गार्हस्थ्यं निर्विषयं स्यात्। तन्न, गार्हस्थ्यस्य रागि-विषयत्वात्। तदाह जावालिः,—"यदि गृहमेव कामयेत्तदा यावज्जीवमग्निहोत्रं जुहुयात्"—इति। अत्र केचित्, नैष्ठिक-ब्रह्मचर्य्यं कुब्जादिविषयं मन्वानागार्हस्थ्यस्य तदितर-विषयतामाहुः। उदाहरन्ति च तत्र विष्णुवचनम्,—

"कुब्ज-वामन-जात्यन्ध-क्लीव-पङ्ग्वार्त्तरोगिणाम्।
व्रतचर्य्या भवेत्तेषां यावज्जीवमसंशयम्"—इति।

तन्न, नैष्ठिक-ब्रह्मचर्य्यस्य कुब्जादिष्वेव नियतत्वे समर्थं प्रत्यैच्छिकत्वमुच्यमानं विरुध्येत। ऐच्छिकत्वञ्च वसिष्ठेन दर्शितम,—'स्वार-

आश्रमाः ब्रह्मचारि-गृहस्थ-वानप्रस्थ-परिव्राजकाः, तेषां वेदमधीत्य वेदौ वेदान् वा चीर्ण-ब्रह्मचर्य्योयमिच्छेत्तमावसेत्"—इति। भविष्यत्पुराणेऽपि,—

"गार्हस्थ्यमिच्छन् भूपाल, कुर्य्याद्दार-परिग्रहम्।
ब्रह्मचर्य्येण वा कालं नयेत् सङ्कल्प-पूर्वकम्।
वैखानसोवाऽपि भवेत् परिव्राडथवेच्छया"—इति।

तस्मात्, रागि-विषयत्वेनैव गार्हस्थ्यं व्यवस्थापनीयम्,—इति।

इति ब्रह्मचारि-प्रकरणम्।



## अथ गृहस्थाश्रमं निरूपयितुं तदधिकार-हेतु* स्नानमादौ निरूप्यते†।

तत्र याज्ञवल्क्यः,—

"गुरवे तु वरं दत्त्वा स्नायीत तदनुज्ञया।
वेदं व्रतानि वा पारं नीत्वा ह्युभयमेव वा"—इति।

तत्र, दातव्योवरोमनुना दर्शितः,—

"न पूर्वं गुरवे किञ्चिदुपकुर्वीत धर्मवित्।
स्नास्यंस्तु गुरुणाऽऽज्ञप्तः शक्त्या गुर्वर्थमाहरेत्॥
क्षेत्रं हिरण्यं गामश्वं छत्रोपानहमासनम्।

* तदधिकारहेतुः,—इति पाठो भवितुं युक्तः।
† तदधिकारहेतुं स्नातकमादौ निरूप्यते,—इति मु० पुस्तकेपाठः।

धान्यं वासांसि शाकं वा गुरवे प्रीतिमाहरेत्*"—इति ।

अयञ्च वरो गुरु-प्रीत्यर्थो न तु विद्या-निष्क्रयार्थः। वेद-विद्याऽर्हस्य मूल्यस्यासम्भवात् । तथा च छन्दोग-श्रुतिः,—"यद्यप्यस्मा इमामद्भिः परिगृहीतां धनस्य पूर्णां दद्यात्तदेव ततोभूयः"—इति। तापनीय-श्रुतिरपि,—

"सप्तद्वीपवती भूमिर्दक्षिणार्थं न कल्पते†"—इति ।

हारीत-स्मृतिरपि,—

"एकमप्यक्षरं यस्तु गुरुः शिष्ये निवेदयेत्।

पृथिव्यां नास्ति तद्द्रव्यं यद्दत्वाऽस्यानृणी भवेत्"—इति।

वेदं व्रतानि वेत्यनेन स्नातक-त्रैविध्यं दर्शितम्। तत्र, वेदमात्र-परिसमापकएकः, व्रतमात्र-परिसमापकोद्वितीयः, उभय-परिसमापकस्तृतीयः। व्रतशब्देनात्र गृह्य-प्रसिद्धान्युपनयनव्रत-सावित्रीव्रत-वेदव्रतानि‡ विवक्षितानि। स्नातक-त्रैविध्यं हारीतेनोक्तम्,—"त्रयः स्नातकाभवन्ति; विद्यास्नातकोव्रत-स्नातकोविद्या-व्रत-स्नातकः"—इति। वेदं पारं नीत्वेत्यत्रार्थावगतिरपि विवक्षिता। अतएव कूर्मपुराणे,—

"वेदं वेदौ तथा वेदान् वेदान् वा चतुरोद्विजः।

अधीत्य चाधिगम्यार्थं ततः स्नायाद्विजोत्तम"—इति।

स्नान-प्रकारस्तु गृह्ये प्रसिद्धः। स्नातक-धर्माः कूर्मपुराणे दर्शिताः,—

---

* धान्यं शाकञ्च वासांसि गुरवे प्रीतिमावहेत्,—इति पू० मु० मनुसंहितायां पाठः ॥

† न कल्पिता,—इति मु० पुस्तके पाठः ।

‡ वेदाङ्गव्रतारण्यकव्रतानि,—इति मु० पुस्तके पाठः ।

"यज्ञोपवीत-द्वितयं सोदकञ्च कमण्डलुम्।
छत्रं चोष्णीषममलं पादुके चाप्युपानहौ॥
रौक्मे च कुण्डले वेदं कृत्त-केश-नखः शुचिः।
स्वाध्याये नित्ययुक्तः स्याद्बहिर्माल्यञ्च धारयेत्॥
शुक्लाम्बरधरोनित्यं सुगन्धः प्रियदर्शनः।
न जीर्ण-मलवद्वासाभवेत्तु विभवे सति॥
न रक्तमुल्वणं चान्य धृतं वासोन कण्ठिकाम्"—इति।

इति स्नातक-प्रकरणम्।

## अथ विवाहः।

तत्र मनुः,—

"गुरुणाऽनुमतः स्नात्वा समावृत्तोयथाविधि।
उद्वहेत द्विजोभार्य्यां सवर्णां लक्षणान्विताम्"—इति।

याज्ञवल्क्योऽपि,—

"अविप्लुत-ब्रह्मचर्य्योलक्षण्यां स्त्रियमुद्वहेत्।
अनन्यपूर्व्विकां कान्तामसपिण्डां यवीयसीम्।
अरोगिणीं भ्रातृमतीमसमानार्षगोत्रजाम्"—इति।

लक्षण्यां वाह्याभ्यन्तर-लक्षण-युक्ताम्। वाह्यानि लक्षणानि मनुना दर्शितानि,—

"अव्यङ्गाङ्गीं सौम्यनाम्नीं हंस-वारण-गामिनीम्।
तनु-लोम-केश-दशनां मृद्वङ्गीमुद्वहेत् स्त्रियम्"—इति।

वर्ज्यामाह स एव,—

"नोद्वहेत् कपिलां कन्यां नाधिकाङ्गीं न रोगिणीम्।

नालोमिकां नातिलोमां न वाचालां न पिङ्गलाम् ॥
नर्क्ष-वृक्ष-नदी-नाम्नीं नान्त्य-पर्वत-नामिकाम् ।
न पक्ष्यहि-प्रेष्य-नाम्नीं न च भीषणनामिकाम्''—इति ।

कपिला रक्त-तण्डुल-वर्णा । पिङ्गला अग्निवर्णा । अन्त्येति म्लेच्छनाम्नी । विष्णुपुराणेऽपि,—

"न श्मश्रु-व्यञ्जनवतीं न चैव पुरुषाकृतिम् ।
न घर्घर-स्वरां क्षामां तथा काक-स्वरां न च ।
नानिबंधेक्षणां तद्वद्वृत्ताक्षीं नोद्वहेद्बुधः ।
यस्याश्च रोमशे जंघे गुल्फौ यस्यास्तथोन्नतौ ।
गण्डयोः कूपकौ यस्याहसन्त्यास्तांश्च नोद्वहेत् ।
नातिरूक्षच्छविं पाण्डुकरजामरुणेक्षणाम् ।
अ-पीन-हस्त-पादाञ्च न च तामुद्वहेद्बुधः* ।
न वामनां नातिदीर्घां नोद्वहेत् संहतभ्रुवम् ।
न वातिच्छिद्र-दशनां न कठालमुखीं नरः''—इति ।

आन्तराणि तु लक्षणान्याश्वलायन-गृह्ये विहितानि,—"दुर्विज्ञेयानि लक्षणान्यष्टौ पिण्डान् कृत्वा, ऋतमग्रे प्रथमं यज्ञऋते सत्यं प्रतिष्ठितं यदियं कुमार्यभिजाता तदियमिह प्रतिपद्यतां यत्सत्यं तद्दृश्यतामिति पिण्डानभिमन्त्र्य कुमारीं ब्रूयादेषामेकं गृहाणेति क्षेत्राच्चेदुभयतः शस्याद्गृह्णीयादन्नवत्यस्याः प्रजा भविष्यतीति विद्याद् गोष्ठात् पशुमती वेदिपुरीषाद्ब्रह्मवर्चस्विन्यविदासिनो ह्रदात् सर्वस-

* 'यस्याश्च' इत्यादि 'तामुद्वहेद्बुधः' इत्येतत् श्लोकद्वयं मु० पुस्तके न दृश्यते ।

म्यन्ना देवनात् कितवी चतुष्पथादिप्रव्राजिनीरिणाऽधन्या श्मशाना-त्पतिघ्नी"* इति। विप्रव्राजिनी विविधं प्रकर्षेण व्रजतीति विप्रव्राजिनी स्वैरिणी इत्यर्थः। अनन्यपूर्व्विकामिति दानेनोपभोगेन वा पुरुषान्तराग्टहीताम्। अनेन पुनर्भूर्व्व्यावर्त्त्यते। अतएव काश्यपः,—

"सप्त पौनर्भवाः कन्यावर्जनीयाः कुलाधमाः।
वाचा दत्ता दनोदत्ता कृत-कौतुक-मङ्गला।
उदक-स्पर्शिता या च या च पाणिग्टहीतिका।
अग्निं परिगता या च पुनर्भू-प्रसवा च या।
इत्येताः काश्यपेनोक्तादहन्ति कुलमग्निवत्"—इति।

बौधायनः,—"वाग्दत्ता मनोदत्ताऽग्निं परिगता सप्तमं पदन्नीता भुक्ता ग्टहीतगर्भा प्रसूता चेति सप्तविधा पुनर्भूः, तां ग्टहीत्वा न प्रजां न धर्मं विन्देत्"—इति। नारदोऽपि,—

"कन्यैवाक्षतयोनिर्या पाणि-ग्रहण-पूर्व्विका।
पुनर्भू-प्रतिमा ज्ञेया पुनः संस्कार-कर्मणि"—इति।

---

* 'आन्तराणि' इत्यारभ्य 'इत्यर्थः' इत्यन्तग्रन्थस्थाने मुद्रितपुस्तके अन्यथा पाठो दृश्यते। स यथा,—"आन्तराणि लक्षणानि आश्वलायनग्टह्ये दर्शितानि दुर्ज्ञेयानि तानि वेदितव्यानि। पूर्व्वस्यां रात्रौ गोष्ठ-वेदिका-कितवस्थान-क्षेत्रिण-क्षेत्र-चतुष्पथ-श्मशानेभ्योमृत्तिकां ग्टहीत्वा अष्टौ पिण्डान् कृत्वा ऋतमग्रे प्रथमं जज्ञे ऋते सत्यं प्रतिष्ठितं यदियं कुमार्य्यभिजाता तदियमिह प्रतिपद्यतां यत् सत्यं तद्दृश्यतामिति पिण्डानभिमन्त्र्य कुमारीं ब्रूयादेषामेकं ग्टहाणेति। तत्रानुक्रमेण प्रथमे पिण्डे ग्टहीते धान्यवती भवति, द्वितीये पशुमती, तृतीयेऽग्निहोत्रपरा, चतुर्थे विवेकिनी चतुरा सर्व्वजनार्च्चनपरा भवति, पञ्चमे रोगिणी, षष्ठे वन्ध्या, सप्तमे व्यभिचारिणी, अष्टमे विधवा भवेदिति।" सम्भावयामः आश्वलायनसूत्रस्य तात्पर्य्यमेव तत्र संग्टहीतमिति।

याज्ञवल्क्योऽपि,—

"अक्षता च क्षता चैव पुनर्भूः संस्कृता पुनः"—इति ।

कान्तां कमनीयां उद्वोढुर्मनोनयनानन्दकारिणीम् । अतएव आपस्तम्बः,—"यस्यां मनश्चक्षुषोर्निबन्धस्तस्यामृद्धिः"—इति ।

असपिण्डामिति । समानएकः पिण्डोयस्याः सा सपिण्डा, न सपिण्डा असपिण्डा, ताम् । सपिण्डता च सप्तम-पुरुष-पर्य्यवसायिनी । तत्रैकः पिण्डदाता, त्रयः पिण्डभाजः पितृ-पितामह-प्रपितामहाः, त्रयोलेपभाजः वृद्धप्रपितामहादयः । तथा च मत्स्यपुराणे,—

"लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः ।
पिण्डदः सप्तमस्तेषां सापिण्ड्यं साप्तपौरुषम्"—इति ।

मार्कण्डेयोऽपि,—

"पिता पितामहश्चैव तथैव प्रपितामहः ।
पिण्डसंबन्धिनोह्येते विज्ञेयाः पुरुषास्त्रयः ।
लेपसंबन्धिनश्चान्ये पितामह-प्रपितामहात्—
प्रभृत्युक्तास्त्रयस्तेषां यजमानस्तु सप्तमः ।
इत्येष मुनिभिः प्रोक्तः संबन्धः साप्तपौरुषः"—इति ।

एतदुक्तं भवति, सप्तानां पुरुषाणामेक-पिण्ड-क्रियाऽनुप्रवेशः सापिण्ड्य-हेतुः । तथाच, देवदत्तस्य स्वकीयैः पित्रादिभिः षड्भिः सह सापिण्ड्यम्, तथा पुत्रादिभिः षड्भिः सह सापिण्ड्यम्,—इति । नन्वेवं सति भ्रातृ-पितृव्यादिभिः सह सापिण्ड्यं न स्यात्, परिगणितेष्वनन्तर्भावात् । मैवम् । उद्दिश्य-देवतैक्येन* क्रियैक्यस्यात्र विवक्षितत्वात् ।

* देवदत्तैक्येन,—इति मु० पुस्तके पाठः ।

देवदत्त-कर्तृक-क्रियायां ये देवतात्वेनानुप्रविशन्ति, तेषां मध्ये यः कोऽपि भ्रातृ-पितृव्य-कर्तृक-क्रियायामप्यनुप्रविशतीत्यस्ति तैः सह सापिण्ड्यम्। एवं भार्य्याणामपि भर्तृ-कर्तृक-पिण्डदान-क्रियायां सहकर्तृत्वात् सापिण्ड्यमिति। तदिदं निर्वाप्यसापिण्ड्यम्।

अपरे पुनरन्यथा* सापिण्ड्यमाहुः। तथाहि। समानएकः पिण्डोदेहावयवोयेषां ते सपिण्डाः। तत्र, पुत्रस्य साक्षात् पितृ-देहावयवान्वयेन पित्रा सह सापिण्ड्यम्। तथा, पितामहादिभिरपि पितृ-द्वारेण तच्छरीरावयवान्वयात्। साक्षान्मातृ-शरीरावयवान्वयेन मात्रा, मातामहादिभिभिरपि मातृद्वारेण† तच्छरीरावयवा-न्वयात्। तथा, पितृव्य-पितृष्वस्रादिभिरपि पितामह-देहावयवा-न्वयात्। तथा, मातृस्वसृ-मातुलादिभिः सह मातामह-देहान्वयात्। पत्न्या सह एकशरीरारम्भकतया पत्युः, एवं भ्रातृ-भार्य्याणामप्येक-शरीरारम्भकैः स्व-स्व-पतिभिः सहैकशरीरारम्भकत्वेन। एवं तत्र तत्र साक्षात् परंपरया वा एक-शरीरावयवान्वयेन सापिण्ड्यं योजनीयम्।

उक्तं द्विविधं सापिण्ड्यं यस्यानास्ति सेयमसपिण्डा, तामुद्वहेत्। नन्वेवं सति न काप्युद्वाहः सम्भवेत्, सर्वत्र सापिण्ड्यस्य कथञ्चिद्योज-यितुं शक्यत्वात्, विधातृ-शरीरानुवृत्तेर्दुःपरिहरत्वात्, “बह्व्यः प्रजा-येय”—इति श्रुतेः। नैष दोषः, अविशेषेण प्राप्तस्य-सापिण्ड्यस्य सप्तसु पञ्चसु च पुरुषेषु सङ्कुचितत्वेन तदूर्द्धं सापिण्ड्य-निवृत्तेः। तथा च गौतमः,—“सपिण्ड-निवृत्तिः सप्तमे पञ्चमे वा”—इति। याज्ञ-वल्क्योऽपि,—

---

* पुनरवयव,—इति मु० पुस्तके पाठः।

† मातृशरीरद्वारेण,—इति मु० पुस्तके पाठः।

"पञ्चमात् सप्तमादूर्द्धं मातृतः पितृतस्तथा"—इति ।

मातृ-पक्षे पञ्चमात् पितृ-पक्षे सप्तमात् पुरुषादूर्द्धं, सापिण्ड्यं निवर्त्तते,—इत्यध्याहृत्य योजनीयम् ।

"सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तते"—इति

मनु-स्मरणात् । एतदुक्तं भवति । पितृ-पक्षे कूटस्थमारभ्य तत् पुत्रादि-गणनायां सप्तमादूर्द्धं वर-वध्वोर्विवाहेन दुष्यति । मातृ-पक्षे च कूटस्थमारभ्य तत्पुत्रादि-परिगणनायां वर-वध्वोर्माता चेत् पञ्चमी भवति, तदा तयोः सापिण्ड्यनिवृत्तेर्विवाहेन दोषायेति । यत्तु विष्णुपुराणवचनम्,—

"पञ्चमीं मातृपक्षात् तु पितृपक्षात् तु सप्तमीम् ।

गृहस्थउद्वहेत् कन्यां न्याय्येन विधिना नृप"—इति

तत्र, सप्तमीं पञ्चमीमतीत्येत्यध्याहार्य्यम् । अन्यथा, पञ्चमात् सप्तमादूर्द्धम्,—इति वचन-विरोधात् ।

"पञ्चमे सप्तमे चैव येषां वैवाहिकी क्रिया ।

क्रिया-परा अपि हि ते सर्वतः* शूद्रतां गताः"—इति

मरीचिवचन-विरोधाच्च । यद्यपि पैठीनसिना कल्पद्वयमुक्तम्,— "पञ्च मातृतः परिहरेत् सप्त पितृतस्त्रीन्मातृतः पञ्च पितृतो वा"-इति । तत्र, द्वितीयः कल्पोऽसमानजातीय-विषयः । यतः शङ्ख आह,—

"यद्येकजातावहवः पृथक्क्षेत्राः पृथग्जनाः ।

एकपिण्डाः पृथक्शौचाः पिण्डस्त्वावर्त्तते त्रिषु"—इति ।

अयमर्थः । येषामेकः पिता मातरोभिन्नजातीयास्ते मातृभेदा

---

* तरते,—इति मु० पुस्तके पाठः ।

दसमानजातीयाः,तथापि, पित्रैक्यादस्तिसापिण्ड्यम्, तच्च त्रिषु पुरुषेष्वतीतेषु निवर्त्तते,—इति। नन्वेवं सति पितृ-पक्षेऽपि त्रिभिः पुरुषैः सापिण्डनिवृत्तेः 'पञ्च पितृतोवा'—इति वचनं विरुध्येत। एवन्तर्हि 'त्रीन्मातृतः पञ्च पितृतोवा'—इति पैठीनसिवचनं सजातीयेष्वेव निषेधपरम्*,अनुकल्पोवाऽस्तु। 'मातृतः पितृतस्तथा'—इत्यत्र पितृशब्देन वीजिनोऽपि सङ्ग्रहः। तथा च गौतमः,—"ऊर्द्धं सप्तमात् पितृवन्धुभ्योवीजिनश्च मातृवन्धुभ्यः पञ्चमात्"—इति। योहि नियोगात् पुत्रमुत्पादयति, स वीजी। पितृमातृवान्धवाः स्मृत्यन्तरे दर्शिताः,—

"पितुः पितृ-ष्वसुः पुत्राः पितुर्मातृ-ष्वसुः सुताः।
पितुर्मातुल-पुत्राश्च विज्ञेयाः पितृ-बान्धवाः॥
मातुः पितृ-ष्वसुः पुत्रामातुर्मातृ-ष्वसुः सुताः।
मातुर्मातुल-पुत्राश्च विज्ञेयामातृ-बान्धवाः"—इति।

नन्वसपिण्डामिति न वक्तव्यं, वक्ष्यमाणेन 'असमानार्षगोत्रजाम्'—इत्यनेनैव सपिण्डायाविवाह-निषेध-सिद्धेः†। सत्यं, तथापि या मातुरसपिण्डा‡ भवति, सैवोद्वाह-कर्मणि प्रशस्तेति वक्तव्यम्§। तथा च मनुः,—

"असपिण्डा च या मातुरसगोत्रा च या पितुः।

---

* अर्व्वाङ्निषेधपरम्,—इति मु० पुस्तके पाठः।

† सपिण्डायां विवाहनिषेधसिद्धेः,—इति मु० पुस्तके पाठः।

‡ या पितुरसगोत्रा तथापि या मातुरसपिण्डा,—इति मु० पुस्तके पाठः।

§ वक्तुं,—इति श०। स० पुस्तकयोः पाठः।

सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने"—इति ।

या मातुरपिण्डा असगोत्रा च, या पितुरसगोत्रा, चकारादस-पिण्डा च, सा मैथुने मिथुन-साध्ये दारकर्मणि द्विजातीनां प्रशस्ता परिणेयेत्यर्थः । नन्वत्र मातृग्रहणमनर्थकं, पितृ-गोत्र-सापिण्ड्य-निषेधेनैव मातृ-गोत्र-सापिण्ड्य-निषेध-सिद्धेः । पृथक् पिण्ड-गोत्रयोरभावात्,

"एकत्वं सा गता भर्त्तुः पिण्डे गोत्रे च सूतके।
स्वगोत्राद्भ्रश्यते नारी विवाहात् सप्तमे पदे"—इति

वचनात्। मैवम्। गान्धर्व्वादि-विवाहेषु कन्या-प्रदानाभावेन पितृ-गोत्र-सापिण्ड्ययोरनिवृत्तेः । तथाच मार्कण्डेयपुराणम्,—

"ब्राह्म्यादिषु विवाहेषु या वूढ़ा कन्यका भवेत्।
भर्त्तृ-गोत्रेण कर्त्तव्या तस्याः पिण्डोदक-क्रिया ॥
गान्धर्वादि-विवाहेषु पितृ-गोत्रेण धर्मवित्"—इति।

एतेन मातुल-सुता-विवाह-विषय-विवादोऽपि परास्तः। तथा हि, तन्निषेध-वचनानि गान्धर्वादि-विवाहोढ़ा-जा-विषयाणि, तत्र सापिण्ड्य-निवृत्तेरभात्। तदनुग्राहक-श्रुति-स्मृति-सदाचारात् । न ब्राह्म्यादि-विवाहोढ़ा-जा-विषयाणि,तत्र सापिण्ड्य-निवृत्तेः। तानि च निषेध-वचनानि । तत्र शातातपः,—

"मातुलस्य सुतामूढ्वा मातृ-गोत्रां तथैवच ।
समान-प्रवराञ्चैव द्विजश्चान्द्रायणञ्चरेत्"—इति ।

पैठीनसिरपि,—"पितृ-मातृ-स्वसृ-दुहितरो मातुल-सुताश्च धर्मतस्ता-भगिन्यस्तावर्जयेदिति विज्ञायते"। सुमन्तुरपि,—"पितृ-पत्न्यः सर्व्वामा-

तरस्तद्भ्रातरो मातुलास्तद्भगिन्यो मातृस्वसारः* स्तद्दुहितरश्च भगिन्यस्तदपत्यानि भागिनेयानि, अन्यथा सङ्करकारिण्यः"—इति। व्यासः,—

"मातुः सपिण्डा यत्नेन वर्जनीया द्विजातिभिः"—इति।

नन्वविशेषेण प्रवृत्तानामेषां वचनानां कथं विशेष-विषयता? विशेष-वचन-बलादिति ब्रूमः। तथा च मनुः,—

"पैतृष्वसेयीं भगिनीं स्वस्रीयां मातुरेवच।
मातुश्च भ्रातुराप्तस्य गत्वा चान्द्रायणञ्चरेत्॥
एतास्तिस्रस्तु भार्य्यार्थे नोपयच्छेत बुद्धिमान्"—इति।

भगिनीपदं पैतृष्वसेय्यादि-विशेषणम्। आप्तस्येति मातुर्भ्रातृविशेषणम्। तत्र, सुतामित्यध्याहारः। आप्तस्य सन्निकृष्टस्य सपिण्डस्य गान्धर्वादि-विवाहोढ़ायाः मातुर्भ्रातुरित्यर्थः। पैतृष्वसेयीमित्यत्राप्यनिवृत्त-सापिण्ड्या गन्धर्वादिनोढ़ा पितृ-स्वसा विवक्षिता। तथा च सति, तद्दुहितुर्भगिनीति विशेषणं सार्थकम्। ब्राह्म्यादिविवाहेषु सापिण्ड्य-निवृत्तेर्भगिनीपदं नान्वीयात्। अयमेव न्यायो-मातृष्वस्रीयायामपि योजनीयः। तस्माद्भगिन्याप्तपदोपेत-मनुवचनबलादविशेषे निषेधो विशेष-विषयएवोपसंह्रियते। ननु, ब्राह्म्यादिविवाहविषये मातुल-सुतायाइव मातृ-स्वसृ-सुताया अपि विवाहः प्राप्नुयात्†। तन्न, शिष्ट-गर्हितत्वेन तत्र निषेध-स्मृति-कल्पनात्। शिष्टगर्हितस्यानुपादेयत्वं याज्ञवल्क्यआह,—

---

* तद्भगिन्योमातृस्वसारः,—इति, नास्ति मु० पुस्तके।

† अयमेव न्यायोमातुर्विषये, मातुलसुतापरिणयउदीच्यशिष्टगर्हितः, तथापि दाक्षिणात्यशिष्टैराचरितविषये मातुलसुतायामिव मातृस्वसृसुताया अपि विवाहः प्राप्नुयात्,—इति मु० पुस्तके पाठः।

"अस्वर्ग्यं लोकविद्विष्टं धर्ममप्याचरेन्न तु"—इति ।

यद्यपि मातुलसुता-परिणयनमुदीच्य-शिष्ट-गर्हितम्, तथापि दाक्षिणात्य-शिष्टैराचरितत्वेन नाविगीतोऽयमुदीच्यानामाचारः। न च दाक्षिणात्यानां राग-मूलत्वं शङ्कनीयं, विधि-निषेध-परीक्षिकैरेव तद्विवाह-करणात् । मातृ-स्वसुः सुता-विवाहस्तु अविगीतेन शिष्टाचारेण गर्हितः। मातुल-सुताविवाहस्यानुग्राहका* श्रुतिः। तत्र मन्त्रवर्णः। "आयाहीन्द्र पथिभिरीलितेभिर्यज्ञमिमं नोभागधेयं जुषस्व । तृप्तां जहुर्मातुलस्येव योषा भागस्ते पैतृष्वसेयी वपाम्"—इति ।

अयमर्थः हे इन्द्र, पथिभिरीलितेभिः स्तुतैः सह नोऽस्माकमिमं यज्ञमायाहि । आगत्य च अस्माभिर्दीयमानं भागधेयं जुषस्व, तृप्तामाज्यादिना संस्कृतां वपान्त्वामुद्दिश्य जहुः त्यक्तवन्तः। तत्र दृष्टान्तद्वयम्। यथा, मातुलस्य योषा दुहिता भागिनेयस्य† भागः भजनीया, भागिनेयेन परिणेतुं योग्या, यथा च पैतृष्वसेयी पौत्रस्य भागः। तथाऽयं ते तव भागोवपाऽऽख्यः,—इति । वाजसनेयकेऽपि। "तस्मादा समानादेव पुरुषादत्ता चाद्यश्च जायते, उत तृतीये सङ्गच्छावहै चतुर्थे सङ्गच्छावहै"—इति । समानादेकस्मात् पुरुषादत्ता भोक्ता आद्यश्च भोग्यः द्वावप्युत्पद्येते। तौ च मिथः सङ्कल्पयतः, कूटस्थमारभ्य तृतीये चतुर्थे वा पुरुषे सङ्गच्छावहै विवहावहै इत्यर्थः।

यद्यप्ययमर्थवादः, तथापि मानान्तरविरोधाभावात् स्वार्थे प्रमाणम्। विरोधि-वचनानां मातृ-सपिण्डा-विषयत्वस्य‡ वर्णितत्वात् ।

* विवाहस्यानुग्राहिका,—इति पाठोभवितुं युक्तः।

† दौहित्रस्य,—इति मु० पुस्तके पाठः।

‡ मातृसपिण्डाविषयत्वस्य च,—इति मु० पुस्तके पाठः ।

तस्मादविरुद्धार्थवादेनानूदितत्वादुपरिधारणवद्विधिः कल्पयितुं शक्यते।

तथा हि, प्रेताग्निहोत्रे श्रूयते। "अधस्तात् समिधं धारयन्ननुद्रवेदुपरि हि देवेभ्योधारयति"—इति। तत्र, पैतृकस्य हविषोऽधस्तात् समन्त्रकं समिद्धारणं* विधाय, तद्वाक्य-शेषे समिधोहविरुपरिधारणं दैवे कर्मणि यत् श्रुतं, तत् किमर्थवादः, उत विधीयते? इति संशयः। तत्राधोधारण-विधि-स्तावकत्वेन तदेकवाक्यता-लाभादर्थवादइति पूर्वपक्षः। प्रसिद्धं ह्यर्थमनूद्य तेन स्तुतिर्युक्ता, उपरिधारणन्तु न क्वापि प्रसिद्धम्, अतस्तावकत्वायोगाद्वाक्यभेदमभ्युपगम्याप्यपूर्वार्थत्वाद्विधिः कल्पितः।

एवं तृतीये पुरुषे सह च्छावहे,—इत्यादावपि अपूर्वार्थत्वेन, मातुलसुतां विवहेत्,—इति विधिः कल्प्यते। तस्माच्छास्त्रानुगृहीतोऽयं विवाहः। स्मृतयस्तु ब्राह्म्यादिषु सापिण्ड्य-निराकरणेन मातुल-सुता-विवाह-प्रापकतया दर्शिताः। शिष्टाचारश्च दाक्षिणात्यानामविगीत उदाहृतः।

केचित्तु आसुरादिष्वपि देश-विशेषेण मातुल-सुता-विवाहो-धर्म्यः,—इति मन्यन्ते। उदाहरन्ति च वचनानि। तत्र बौधायनः,—"पञ्चधा विप्रतिपत्तिर्दक्षिणतः; अनुपनीतेन भार्य्यया च सह-भोजनं पर्युषित-भोजनं मातुलदुहितृ-पितृष्वसृदुहितृ-परिणयनमिति, तथोत्तरतः; ऊर्ण-विक्रयः सीधुपानमुभयतोदद्भिर्व्यवहारः आयुधीयकं समुद्रयानमिति, इतरइतरस्मिन् कुर्वन् दुष्यति, इतरइतरस्मिन् तद्देश-प्रमाण्यात्"- इति। इतरोदाक्षिणात्यइतरस्मिन्

* समिधाहरणं,—इति मु० पुस्तके पाठः।

उत्तरदेशे मातुल-संबन्धं कुर्वन् दुष्यति, न स्व-देशे। तथैतरउदीच्यस्तरस्मिन् दक्षिणदेशे सीधु-पानादिकं कुर्वन् दुष्यति, न स्व-देशे। कुतः? देश-प्रामाण्यात् देश-निवन्धनत्वादाचारस्येत्यर्थः * । तथा च देवलः,—

"यस्मिन् देशे य आचारोन्याय-दृष्टस्तु कल्पितः।
स तस्मिन्नेव कर्त्तव्योन तु देशान्तरे स्मृतः † ॥
यस्मिन् देशे पुरे ग्रामे त्रैविद्ये नगरेऽपिवा।
योयत्र विहितोधर्मस्तं धर्मं न विचालयेत्"—इति।

ननु, शिष्टाचार-प्रामाण्ये स्व-दुहितृ-विवाहोऽपि प्रसज्येत, प्रजापतेराचरणात्। तथा च श्रुतिः। "प्रजापतिः स्वां दुहितरमभ्यगात् ‡" —इति। मैवम्। "न देव-चरितञ्चरेत्"—इति न्यायात्। अतएव बौधायनः,—

"अनुष्ठितन्तु यद्देवैर्मुनिभिर्य्यदनुष्ठितम्।
नानुष्ठेयं मनुष्यैस्तदुक्तं कर्म समाचरेत्"—इति।

तदेवं ब्राह्म्यादि-विवाह-व्यवस्थया देशभेद-विषय-व्यवस्थया च मातुल सुता-विवाहः 'न सपिण्डाम्'—इत्यादिशास्त्रादेव सिद्धः(१)।

---

* निवन्धनत्वादाचार प्रामाण्यस्येत्यर्थः,—इति स० शा० पुस्तकयोः पाठः।
† देशाचारः स्मृतोभ्रगोः,—इति मु० पुस्तके पाठः।
‡ दुहितरमभ्यध्यायात्,—इति मु० पुस्तके पाठः।

---

(१) अत्र तावदेवं महता प्रवन्धेन दाक्षिणात्यानां मातुलकन्या-परिणयाचारस्य शास्त्रीयत्वं प्रामाण्यञ्च समर्थितम्। जैमिनीयन्यायमालायान्तु स्वयमेव तादृशाचारस्य स्मृतिविरुद्धत्वमप्रामाण्यञ्च व्यवस्थापितम्। तथा च न्यायमालायां प्रथमाध्यायस्य तृतीयपादे पञ्चमाधिकरणे।

यवीयसीं वयसा काय-परिमाणेन च न्यूनाम्। तत्र, वयोन्यूनतायाद्यत्तामाह मनुः,—

"त्रिंशद्वर्षोद्वहेत् कन्यां हृद्यां द्वादशवार्षिकीम्।
अष्टवर्षोऽष्टवर्षां वा धर्मे सीदति सत्वरः"—इति।

बृहस्पतिरपि,—

"त्रिंशद्वर्षोदशाब्दां तु भार्य्यां विन्देत नग्निकाम्।
एकविंशतिवर्षोवा सप्तवर्षामवाप्नुयात्"—इति।

विष्णुपुराणेऽपि,—

"वर्षैरेकगुणां भार्य्यामुद्वहेत् त्रिगुणः स्वयम्"—इति।

अरोगिणीं अचिकित्स्य-राजयक्ष्मादि-रोग-रहिताम्। भ्रातृमतीं ज्येष्ठः कनिष्ठोवाभ्राता यस्याः, सा भ्रातृमती। अनेन पुत्रिका-शङ्का व्युदस्यते। अतएव मनुः,—

"यस्यास्तु न भवेद्भ्राता न विज्ञायेत वा पिता।
नोपयच्छेत तां प्राज्ञः पुत्रिका-धर्म-शङ्कया"—इति।

यस्याः पिता पुत्रिका-करणाभिप्रायवान् न वा,—इति न

---

"योमातुलविवाहादौ शिष्टाचारः स मा न वा। इतराचारवन्मात्वममात्वं स्मार्त्तवाधनात्। स्मृतिमूलोहि सर्व्वत्र शिष्टाचारस्ततोऽत्र च। अनुमेया स्मृतिः स्मृत्या वाध्या प्रत्यक्षया तु सा"—इति। उक्तञ्च। "आचारात्तु स्मृतिं ज्ञात्वा स्मृतेस्तु श्रुति-कल्पनम्। तेन ह्यन्तरितं तेषां प्रामाण्यं विप्रकृष्यते"—इति। तदत्र स्वोक्तविरोधोदुष्परिहरः। न्यायमालायां संग्रहे प्रवृत्तोग्रन्थकारः मातुलकन्यापरिणयाचारस्याप्रामाण्यं मीमांसकाचार्य्यस्य वार्त्तिककारस्यानुमतमेव संजग्राह, अत्र तु दृष्टाचारस्य स्मृतिसिद्धतया प्रामाण्यमेव स्वस्यानुमतं व्यवस्थापयामास,—इति कथञ्चित् समाधानमास्थेयं धीमद्भिः।

विज्ञायते, तां नोपयच्छेत्। यत्र तु नैषा शङ्का, तामभ्रातृकामप्युप-यच्छेदित्यभिप्रायः। 'न विज्ञायेत वा पिता' इत्युक्तेः वरेण सह संप्रतिपत्तिं विनाऽपि पितुः सङ्कल्पमात्रेण कन्या पुत्रिका भवतीति द्रष्टव्यम्। तथाच गौतमः। "अभिसन्धिमात्रात् पुत्रिकेत्येकेषां, तत् संशयात् नोपयच्छेदभ्रातृकाम्"—इति। मनुरपि,—

"अपुत्रोऽनेन विधिना सुतां कुर्वीत पुत्रिकाम्।
यदपत्यं भवेदस्यां तन्मम स्यात् स्वधाकरम्"—इति।

वरेण सह संप्रतिपत्ति-करणे* तु पुत्रिका-करणं स्पष्टमेव विज्ञा-यते। सा च सम्प्रतिपत्तिर्वसिष्ठेन दर्शिता,—

"अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलङ्कृताम्।
अस्यां योजायते पुत्रः स मे पुत्रोभवेदिति"—इति।

'स नौ पुत्रोभवेदिति'—इति क्वचित्पाठः†। अस्याश्च पुत्रिकाया-गान्धर्वादाविव स्वपित्रादिभिः सह न सापिण्ड्य-सगोत्रत्व-निवृत्तिः। अतएव लौगाक्षिः,—

"मातामहस्य गोत्रेण मातुः पिण्डोदकक्रियाम्।
कुर्वीत पुत्रिकापुत्रएवमाह प्रजापतिः"—इति।

तदेवमभिहितां पुत्रिकां शङ्कमानः पुत्रार्थी भ्रातृमतीमेवो-द्वहेत्। 'असमानार्षगोत्रजाम्' ऋषेरिदमार्षं प्रवरं गोत्र-प्रवर्त्तकस्य मुनेर्व्यावर्त्तक-मुनिगणइत्यर्थः। तद्यथा, गोत्र-प्रवर्त्तकस्य भरद्वाजस्य व्यावर्त्तकावंगिरोवृहस्पती। अतएवाङ्गिरस-वार्हस्पत्य-भरद्वाज-गोत्रो-

---

* संप्रतिपत्तौ,—इति म० ग्रा० से० पुस्तकेषु पाठः।
† नास्त्ययमंशः मुद्रितातिरिक्तपुस्तकेषु।

ऽहमिति प्रयुञ्जते। एवमन्यदप्युदाहार्य्यम्। गोत्रन्तु वंशपरम्परा प्रसिद्धम्। यस्यावश्यंभावरेण सह प्रवरैक्यं गोत्रैक्यं वा नास्ति, सा वधूर्विवाहमर्हति, क्वचिद्गोत्र भेदेऽपि प्रवरैक्यमस्ति। तद्यथा, याज्ञवल्क्य-वाधूल-मौनकानां भिन्न गोत्राणां भार्गव-वीतहव्य-सावेतसेति प्रवरस्यैक्यात्। अतस्तत्र विवाह-प्रसक्तौ तद्व्यवच्छेदाय, असमानार्षजाम्, —इत्युक्तम्। क्वचित् प्रवर-भेदेऽपि गोत्रैक्यम्। तद्यथा, आङ्गिरसांवरीषयौवनाश्व-मान्धात्रंवरीषयौवनाश्वेत्यत्राङ्गिरस-मान्धातृ-प्रवर-भेदेऽपि यौवनाश्वगोत्रमेकम्। अतस्तत्र विवाहोमाभूदित्यसमानगोत्रग्रहणम्*। गोत्र-प्रवर्त्तकाश्च प्राधान्येनाष्टौ मुनयः, ते चागस्त्याष्टमाः सप्तर्षयः। तथा च बौधायनः,—

"यमदग्निर्भरद्वाजोविश्वामित्रोऽत्रि-गौतमौ†।
वशिष्ठकश्यपागस्त्यामुनयोगोत्रकारिणः।
एतेषां यान्यपत्यानि तानि गोत्राणि मन्वते"—इति।

एतेषाञ्च गोत्राणामवान्तरभेदाः सहस्र-सङ्ख्याकास्तेषां गणास्त्वेकोन-पञ्चाशत्। तथा च बौधायनः,—

"गोत्राणाञ्च सहस्राणि प्रयुतान्यर्बुदानि च।
ऊनपञ्चाशदेतेषां प्रवराऋषिदर्शनात्"—इति।

प्रवर-गोत्रयोः समानत्वासमानत्वे बौधायन-कात्यायन-विश्वामित्र-गर्गादि-प्रणीतेषु प्रवरग्रन्थेषु प्रसिद्धः। न चात्र मिलित‡

---

* माभूदित्यसमानार्षगोत्रजामित्युक्तम्,—इति मु० पुस्तके पाठः।

† विश्वामित्रोयमदग्निर्भरद्वाजोऽथ गौतमः,—इति स० ग्रा० पुस्तकयोः पाठः।

‡ गृहीत,—इति मु० पुस्तके पाठः।

योर्गोत्र-प्रवरयोः पर्य्युदास-निमित्तत्वं शङ्कनीयं, प्रत्येकं दोषाभिधानात् । तदाह बौधायनः,—"सगोत्रां चेदमत्योपयच्छेन्मातृवदेनां बिभृयात्"—इति । शातातपोऽपि,—

"परिणीय सगोत्रान्तु समान-प्रवरां तथा ।
कृत्वा तस्याः समुत्सर्गं तप्तकृच्छ्रं* विशोधनम्"—इति ।

आपस्तम्बः,—

"समान-गोत्र-प्रवरां कन्यामूढ्वोपगम्य च ।
तस्यामुत्पाद्य सन्तानं† ब्राह्मण्यादेव हीयते"—इति ।

इत्थं कन्या-लक्षणं परीक्ष्य कुलमपि परीक्षणीयम् । अतएव मनुः,—

"महान्त्यपि समृद्धानि गोऽजाविधनधान्यतः ।
स्त्रीसंबन्धे दशैमानि‡ कुलानि परिवर्जयेत् ॥
हीनक्रियं निष्पुरुषं निश्छन्दो रोमशार्शसम् ।
क्षय्यामयाव्यपस्मारिश्वित्रिकुष्ठिकुलानि च"—इति ।

हीनक्रियं यागादि-क्रिया-रहितम् । निष्पुरुषं स्त्रीमात्रशेषम् । निश्छन्दोऽध्ययन-वर्जितम् । यमोऽपि,—

"चतुर्दश कुलानीमान्यविवाह्यानि निर्दिशेत् ।
अनार्षेयं ब्राह्मणानामृत्विजाञ्चैव वर्जयेत् ॥
अत्युच्चमतिह्रस्वञ्च अतिवर्णञ्च वर्जयेत् ।
हीनाङ्गमतिरिक्ताङ्गमामयावि-कुलानि च ॥

---

* अतिकृच्छ्रं,—इति मु० पुस्तके पाठः ।
† चण्डालं,—इति स० सो० शा० पुस्तकेषु पाठः ।
‡ दशैतानि,—इति शा० स० पुस्तकयोः पाठः ।

श्वित्रिकुष्ठिकुलादीनां कुर्य्याद्विपरिवर्जनम् ।
सदा कामिकुलं वर्ज्यं रोमशानाञ्च यत्कुलम् ॥
अपस्मारि-कुलं यच्च यच्च पाण्डु-कुलं भवेत्"—इति ।

अनार्षेयं अविज्ञात-प्रवरम् । एतच्च हीनक्रियादि-वर्जनं तथाविधापत्य-परिहारार्थम् । "कुलानुरूपाः प्रजाः सम्भवन्ति"—इति हारीतवचनात् । पुराणेऽपि,—

"मातुलान् भजते पुत्रः कन्यका भजते पितॄन् ।
यथाशीला भवेन्माता तथाशीलोभवेत् सुतः*"—इति ।

मनुरपि,—

"पितुर्वा भजते शीलं मातुर्वोभयमेववा ।
न कथञ्चन दुर्योनिः प्रकृतिं स्वां विमुञ्चति"—इति ।

इति हेय-कुलमुक्तम् । उपादेयन्तु याज्ञवल्क्यआह,—

"दशपुरुषविख्यातात् श्रोत्रियाणां महाकुलात्"—इति ।

मातृतः पितृतः पञ्च पञ्च पुरुषाविख्यातायस्मिन् कुले तद्दशपुरुषविख्यातं, तस्मात् महाकुलात् पुत्र-पश्वादि-समृद्धात्कन्यामुद्वहेदित्यर्थः। मनुरपि,—

"उत्तमैरुत्तमैर्नित्यं संबन्धानाचरेत् सह ।
निनीषुः कुलमुत्कर्षमधमानधमांस्त्यजेत्"—इति ।

अथोत्तमान् सएवाह,—

"विशुद्धाः कर्मभिश्चैव श्रुति-स्मृति-निदर्शितैः ।

---

* तथाशीला भवेत् सुता,—इति मु० पुस्तके पाठः ।

अविप्लुत-ब्रह्मचर्य्यामहाकुल-समन्विताः ॥
महाकुलेषु संबन्धामहत्त्वेन व्यवस्थिताः ।
सन्तुष्टाः सज्जनहिताः साधवः समदर्शिनः ॥
लोभरागद्वेषामर्षमानमोहादि-वर्जिताः ।
अक्रोधनाः सुप्रसादाः कार्य्याः संबन्धिनः सदा''—इति ।

अधमानाह सएव,—

''ये स्तनाः पिशुनाः क्लीवाः ये च नास्तिक-वृत्तयः ।
विकर्मणा च जीवन्तोविकृताकृतयस्तथा ॥
प्रवद्ध-वैराः शूरैर्य्ये राजकिल्विषिणस्तथा ।
ब्रह्मस्वादननित्याश्च कदर्य्याश्च विगर्हिताः ॥
अप्रजायेषु वंशेषु स्त्रीप्रजाप्रसवस्तथा ।
पतिघ्नाश्च सुवासिन्यः तांश्च यत्नेन वर्जयेत्''—इति ।

कन्या-दाने वर-नियमोगौतमेन दर्शितः,—''विद्याऽऽचार-बन्धु-लक्षण-शील-सम्पन्नाय दद्यात्''—इति । यमोऽपि,—

''कुलञ्च शीलञ्च वपुर्वयश्च*
विद्याञ्च वित्तञ्च सनाथताञ्च ।
एतान् गुणान् सप्त परीक्ष्य देया
कन्या बुधैः शेषमचिन्तनीयम्''—इति ।

याज्ञवल्क्यः,—

''एतैरेव गुणैर्युक्तः सवर्णः श्रोत्रियोवरः ।

---

* वपुर्यशश्च,—इति मु॰ पुस्तके पाठः ।

यस्मात् परीक्षितः पुंस्त्वे युवा धीमान् जनप्रियः"—इति।
एतैः कन्यकायामुक्तलक्षणैः। पुंस्त्वपरीक्षोपायस्तु नारदेन दर्शितः,—

"यस्याप्सु प्लवते वीर्य्यं ह्रादि मूत्रञ्च फेनिलम्।
पुमान् स्याल्लक्षणैरेतैर्विपरीतस्तु षण्डकः॥
चतुर्दशविधः शास्त्रे षण्डोदृष्टोमनीषिभिः।
चिकित्स्यश्चाचिकित्स्यश्च तेषामुक्तोविधिः क्रमात्॥
निसर्गषण्डोवध्रश्च पक्षषण्डस्तथैवच।
अभिशापाद्गुरोः रोगाद्देवक्रोधात् तथैवच॥
ईर्ष्याषण्डश्च सेव्यश्च वातरेता मुखेभगः।
आचिप्तोमोघवीजश्च शालीनोऽन्यापतिस्तथा"—इति।

निसर्गषण्डः स्वभावतोलिङ्ग-वृषण-हीनः। वध्रः छिन्न-मुष्कः। पञ्चदश दिनानि स्त्रियमासेव्यमानः सन् सकृद्भोग-क्षमः पक्षषण्डः। गुरुशाप-षण्डादयस्त्रयः स्पष्टाः। ईर्ष्यया पुंस्त्वमुत्पद्यते यस्य, स ईर्ष्याषण्डः। स्त्र्युपचार-विशेषेण पुंस्त्व-शक्तिर्यस्य* स सेव्यषण्डः। वातोपहत-रेतस्को वातरेताः। यस्य मुखएव पुंस्त्व-शक्तिर्न योनौ, स मुखेभगः। रेतोनिरोधात् षण्डीभूतआक्षिप्तषण्डः। गर्भाधानासमर्थवीजः मोघवीजः। अप्रगल्भतया क्षोभाद्वा नष्ट-पुंस्त्वः शालीनः। यस्य भार्य्या-व्यतिरेकेणान्यासु पुरुषभावः, सोऽन्यापतिः—इति। एतच्च परीक्ष्य ज्ञेयम्। अत्र कारणमाह सएव,—

"अपत्यार्थं स्त्रियः सृष्टाः स्त्री क्षेत्रं वीजिनोनराः।
क्षेत्रं वीजवते देयं नावीजी क्षेत्रमर्हति"—इति।

---

* पुंस्त्वमुत्पद्यते यस्य,—इति मु० पुस्तके पाठः।

षण्डवदन्यानपि वर्जनीयान्नरानाह कात्यायनः,—

"दूरस्थानामविद्यानां मोक्षमार्गानुसारिणाम् ।
शूराणां निर्द्धनानाञ्च न देया कन्यका बुधैः"— इति ।

कीदृशाय तर्हि देया, इत्यतआह मनुः,—

"उत्कृष्टायाभिरूपाय वराय सदृशाय च ।
अप्राप्तामपि तां तस्मै कन्यां दद्याद्विचक्षणः"—इति ॥

अप्राप्तामपीति अप्राप्त-विवाह-समयां बालिकामपीत्यर्थः ।

"जन्मतो गर्भाधानाद्वा पञ्चमाब्दात् परं शुभम् ।
कुमारीणां तथा दानं मेखला-बन्धनन्तथा* ॥"—इति ।

बौधायनोऽपि,—

"दद्याद्गुणवते कन्यां नग्निकां ब्रह्मचारिणे ।
अपि वा गुणहीनाय नोपरुन्ध्याद्र रजखलाम् ॥"—इति ।

यत्तु यमेनोक्तम्,—

"काममामरणात्तिष्ठेद्गृहे कन्यर्त्तुमत्यपि ।
नत्वेवैनां प्रयच्छेत गुणहीनाय कर्हिचित् ॥"—इति ।

तद्गुणवति सम्भवति गुणहीनाय कन्यां न दद्यादित्येवंपरम्, न तु सर्वथा गुणहीन-निषेध-परम् । न चेत्, 'अपि वा गुणहीनाय' —इति बौधायनोक्तानुकल्पोनिर्विषयः स्यात् । 'ऋतुमत्यपि तिष्टेत्' इति वचनं, उक्तरीत्या न स्वार्थे तात्पर्य्यवत् । यतः, 'नोपरुन्ध्याद्र-रजखलाम्'— इत्येनेन विरुद्ध्यते । अतएव वसिष्ठोऽपि,—

"प्रयच्छेन्नग्निकां कन्यां ऋतुकालभयात् पिता ।
ऋतुमत्यां हि तिष्ठन्त्यां दोषः पितरमृच्छति"—इति ।

* श्लोकोऽयं नास्ति मु॰ पुस्तके ।

संवर्त्तोऽपि,—

"कामकाले तु संप्राप्ते सोमोभुङ्क्ते तु कन्यकाम् ।
रजःकाले तु गन्धर्वा वह्निस्तु कुचदर्शने ।
तस्मादुद्वाहयेत् कन्यां यावन्नर्तुमती भवेत्" — इति

कन्याशब्देन लज्जाऽऽद्यभिज्ञान-रहितवयोयुक्ता विवक्षिता । तथा च पुराणम् ,—

"यावन्न लज्जिताऽङ्गानि कन्या पुरुष-सन्निधौ ।
योन्यादीनि न गूहेत तावद्भवति कन्यका" ॥

संग्रहकारोऽपि,—

"यावद्बालं न गृह्णाति यावत् क्रीडति पांशुभिः ।
यावद्दोषं न जानाति तावद्भवति कन्यका" ॥

वयोविशेषेण दातुः फलविशेषमाह मरीचिः,—

गौरीं ददन्नाकपृष्टं वैकुण्ठं रोहिणीं ददत् ।
कन्यां ददद्ब्रह्मलोकं रौरवन्तु रजस्वलाम्" — इति ।

गौर्य्यादिशब्दार्थो यमेन दर्शितः,—

"अष्टवर्षा भवेद् गौरी नववर्षा तु रोहिणी ।
दशमे कन्यका प्रोक्ता अत ऊर्ध्वं रजस्वला" ॥

संवर्त्तोऽपि,—

"अष्टवर्षा भवेद्गौरी नवमे लग्निका भवेत् !
दशमे कन्यका प्रोक्ता द्वादशे वृषली स्मृता" — इति ।

---

*'संवर्त्तोऽपि' इत्यादिः, 'इति' इत्यन्तः ग्रन्थःक्वचिन्न दृश्यते ।
संग्रहकारोपि इत्यादि कन्यका इत्यन्तं नास्ति मुविविरिक्तपुस्तकेषु ।

मुख्यानुकल्पभेदेन दातृ-विशेषानाह नारदः,—

"पिता दद्यात् स्वयं कन्यां भ्राता वाऽनुमतः* पितुः।
मातामहो मातुलश्च सकुल्यो वान्धवस्तथा॥
माता त्वभावे सर्वेषां प्रकृतौ यदि वर्त्तते।
तस्यामप्रकृतिस्थायां कन्यां दद्युः स्वजातयः†॥

यदा तु नैव कश्चित् स्यात् कन्या राजानमाव्रजेत्"—इति।

याज्ञवल्क्योऽपि,—

पिता पितामहो भ्राता सकुल्यो जननी तथा।
कन्याप्रदः पूर्वनाशे प्रकृतिस्थः परः परः।
अप्रयच्छन् समाप्नोति भ्रूणहत्यामृतावृतौ॥
गम्यं त्वभावे दातृणां कन्या कुर्य्यात् स्वयंवरम्"— इति।

गम्यं गमनार्हं सावर्ण्यादिगुणयुक्तमित्यर्थः। तथाच नारदः,—

"सवर्णमनुरूपञ्च कुलशील-बल-श्रुतैः।
सह धर्म्मञ्चरेत् तेन पुत्रांश्चोत्पादयेत्ततः"— इति।

सवर्णं वरं प्राप्य,— इत्यध्याहृत्य योजनीयम्। तच्चासति रजोदर्शने द्रष्टव्यम्। दृष्टे तु रजसि सत्स्वपि पित्रादिषु कञ्चित्कालं पितुः शासनं परीक्ष्य तदुपेक्षणेन स्वयमेव वरं वरयेत्। तदाह बौधायनः, —

"त्रीणि वर्षाण्यृतुमती काङ्क्षेत पितृशासनम्।
ततश्चतुर्थे वर्षे तु विन्देत सदृशं पतिम्।
अविद्यमाने सदृशे गुणहीनमपि श्रयेत्"—इति।

* वाऽनुमताः, — इति स० सो० शा० पुस्तकेषु पाठः।
† सजातयः, — इति पाठान्तरम्।

मनुरपि,—

त्रीणि वर्षाण्युदीक्षेत कुमार्य्यृतुमती सती।
ऊर्द्ध्वं तु कालादेतस्माद्व विन्देत सदृशं पतिम्।
अदीयमाना भर्त्तारमधिगच्छेद्यदि स्वयम्।
नैनः किञ्चिदवाप्नोति न च यं साऽधिगच्छति"—इति।

सा यं भर्त्तारमधिगच्छति, सोऽपि नैनोऽधिगच्छतीत्यर्थः। यत्तु विष्णुनोक्तम्,—

ऋतुत्रयमुपास्यैव कन्या कुर्य्यात् स्वयंवरम्"—इति।

तद्गुणवद्वरलाभे सति द्रष्टव्यम्। ननु, ऋतुमत्यां कन्याशब्दः कथं प्रयुक्तः यतो यमेन 'दशवर्षा भवेत् कन्या'—इत्युक्तम्। न च दशमे वर्षे ऋतुः सम्भवति। नायं दोषः। गौर्य्यादिशब्दवत् कन्याशब्दस्यापि यमेन परिभाषितत्वात्। सा च परिभाषा, फलकथनादावुपयुक्ता। तच्च पूर्वमेवोदाहृतं, 'कन्यां ददद्व ब्रह्मलोकम्,—इति। लोक-प्रसिद्धस्तु कन्याशब्दो विवाह-रहित-स्त्रीमात्रमाचष्टे। एवञ्च सति, शास्त्रेषु बहवः कन्याशब्दा अनुगृहीता भवन्ति। तथाचानुशासनिकेऽष्टावक्रोपाख्याने वृद्धस्त्रियां प्रयुक्तः —

"कौमारं ब्रह्मचर्य्यं मे* कन्यैवास्मिन् न संशयः"— इति।

शल्यपर्वण्यपि वृद्धस्त्रियां नारदेन प्रयुक्तः,—

"असंस्कृतायाः कन्यायाः कुतो लोकास्तवानघ"— इति।

उमा-महेश्वर-संवादेऽपि,—

"ऋतुस्नाता तु या शुद्धा सा कन्येत्यभिधीयते"— इति।

---

* ब्रह्मचर्य्यं वा,— इति मु० पुस्तके।

ननु, "असंस्कृतायाः"—इति वचने विवाह-रहिताया उत्तमलोकाभाव- उक्तः, सोऽनुपपन्नः, विवाह-रहितानामपि ब्रह्मवाहिनीनामुपनयना- ध्यायनादिभिः उत्तम-लोक-सम्भवात्। अतएव हारीतेनोक्तम्,— "द्विविधाः स्त्रियो ब्रह्मवादिन्यः सद्योवध्वश्च, तत्र वह्मवादिनीना- मुपनयनमग्नीन्धनं वेदाध्ययनं* स्वगृहे भिक्षाचर्य्या" — इति। वधूनां तूपस्थिते विवाहे कथञ्चिदुपनयनमात्रं कृत्वा विवाहः कार्य्यः,—इति । मैवम् । तस्य कल्पान्तर-विषयत्वात् । तथाच यमः, —

पुरा कल्पे कुमारीणां मौञ्जीबन्धनमिष्यते ।
अध्यापनं च वेदानां सावित्री-वचनं तथा ॥
पिता पितृव्यो भ्राता वा नैनामध्यापयेत परः ।
स्वगृहे चैव कन्याया भैक्षचर्य्या विधीयते ।
वर्ज्जयेदजिनं चीरं जटा-धारणमेव च" — इति ।

"अष्टवर्षा भवेद्गौरी" — इत्यादिना विवाह-काल उक्तः । अथ विवाहभेदा उच्यन्ते । तत्र मनुः,—

"चतुर्णामपि वर्णानां प्रेत्य चेह हिताहितान् ।
अष्टाविमान् समासेन स्त्री-विवाहान्निवोधत ।
ब्राह्मोदैवस्तथैवार्षः प्राजापत्यः तथाऽऽसुरः ।
गान्धर्वोराक्षसश्चैव पैशाचश्चाष्टमोमतः" — इति ।

एषां क्रमेण लक्षणमाह स एव,—

आच्छाद्य चार्चयित्वा च श्रुतशोलवते स्वयम् ।
आहूय दानं कन्याया ब्राह्मोधर्मः प्रकीर्त्तितः ॥

---

* वेदाध्ययन् ,— इति नास्ति छ० पुस्तके ।

यज्ञे तु वितते सम्यगृत्विजे कर्मकुर्वते ।
अलङ्कृत्य सुतादानं दैवो धर्मः प्रचक्षते ॥
एकं गोमिथुनं दैवो वरादादाय धर्मतः ।
कन्याप्रदानं बिधिवदार्षोधर्मः स उच्यते ॥
सहोभौ चरतां धर्ममिति वाचाऽनुभाष्य तु ।
कन्याप्रदानमभ्यर्च्चर्य प्राजापत्यो विधिःस्मृतः ॥
ज्ञातिभ्यो द्रविणं दत्वा कन्यायै च*स्वशक्तितः ।
कन्या-प्रदानं स्वाच्छन्द्यादासुरो धर्म उच्यते ॥
इच्छयाऽन्योन्य-संयोगः कन्यायाश्च वरस्य च ।
गान्धर्वः स च विज्ञेयो मैथुन्यः काम-सम्भवः ॥
हत्वा छित्वा च भित्वा च क्रोशन्तीं रुदतीं वलात् † ।
प्रसह्य कन्याहरणं राक्षसो विधिरुच्यते ॥
सुप्तां मत्तां प्रमत्तां वा रहोयत्रोयमच्छति ।
स पापिष्ठो विवाहानां पैशाचः कथितोऽष्टमः" — इति ।

नारदोऽपि,—

"ब्राह्मस्तु प्रथमस्तेषां प्राजापत्यस्तथा ‡ परः ।
आर्षश्चैवाथ दैवश्च गान्धर्वश्चासुरस्तथा ॥
राक्षसोऽनन्तरस्तस्मात् पैशाचश्चाष्टमो मतः" – इति ।

---

* कन्यायाश्च, — इति स० शा० पुस्तकयोः । पाठा ।

† गृहात्,— इवि मु० पुस्तके पाठा ।

‡ वता, — इति स० शा० पुस्तकयोः पाठा ।

§ पैशाचश्चाष्टमोधमः, — इति शा० पुस्तके पाठः ।

वर्णानुपूर्व्येण विवाह-नियममाह मनुः,—

"षड़ानुपूर्व्या विप्रस्य क्षत्रस्य चतुरोऽवरान्।
विट्शूद्रयोस्तु तानेव विद्याद्धर्म्यान्नराक्षसान्"— इति।

आदितः षड् विवाहा विप्रस्य धर्म्याः, आसुरादयश्चत्वारः पैशाचान्ताः क्षत्रियाणां धर्म्याः, राक्षसवर्जं त एव वैश्य-शूद्रयोरपि। एतेषां ब्राह्मादीनां मध्ये प्रशस्तानाह सएव,—

"चतुरोब्राह्मणस्याद्यान् प्रशस्तान् कवयो विदुः।
राक्षसं क्षत्रियस्यैकमासुरं वैश्य-शूद्रयोः" — इति॥

स्मृत्यन्तरेऽपि,—

"चत्वारो ब्राह्मणस्याद्याः शस्ता गान्धर्व-राक्षसौ।
राज्ञस्तथाऽऽसुरोवैश्ये शूद्रे चान्त्यस्तु गर्हितः"— इति।

गर्हितो न कस्यापि प्रशस्त इत्यर्थः। अन्यविवाहालाभे ब्राह्मणादीनां* पैशाचमप्यनुजानाति संवर्त्तः,—

"सर्वोपायैरसाध्या स्यात् सुकन्या पुरुषस्य या।
चौर्य्येणापि विवाहेन सा विवह्या रहः स्थिता"— इति।

ब्राह्मादीनां फलमाह मनुः, —

"दशपूर्वान् परान् वंश्यानात्मानं चैकविंशकम्।
ब्राह्मी-पुत्रः सुकृतकृन्मोचयत्येनसः पितॄन्॥
दैवोढ़ा-जः सुतश्चैव सप्तसप्त परावरान्।
आर्षोढ़ा-जः सुतः स्त्रींस्त्रीन् षट् षट् कायोढ़-जः सुतः॥

---

* क्षत्रियादीनां, — इति मुः पुस्तके पाठः।

ब्राह्मादिषु विवाहेषुचतुर्ष्वेवानुपूर्वशः।
वह्मवर्च्चखिनः पुत्रा जायन्ते शिष्ट-संमताः॥
रूप-सत्व-गुणोपेता धनवन्तो यशखिनः।
पर्य्याप्त-भोगा धर्मिष्ठाजीवन्ति च शतं समाः
इतरेषु च शिष्टेषु* नृशंसानृतवादिनः।
जायन्ते दुर्विवाहे तु† व्रह्म-धर्म-द्विषः सुताः"— इति।

प्रशस्तेष्वपि-चतुर्षु विवाहेषु पूर्वः पूर्वः प्रशस्ततरः। तत्र बौधायनः,— "तेषाञ्चत्वारः पूर्वे ब्राह्मणस्य, तेष्वपि पूर्वः पूर्वः श्रेयान्, इतरेषामुत्तरोत्तरः पापीयान्" — इति। नन्वासुरवदार्षोऽपि पापीयान्, क्रयप्राप्तत्वाविशेषात्। अतएव काश्यपः,—

"क्रयक्रीता तु या नारी न सा पत्न्यभिधीयते।
न स दैवेन सापिण्ड्ये‡ दासीं तां काश्यपोऽव्रवीत्" — इति

मनुरपि आर्षस्य क्रयक्रीतत्वादधर्मत्वमभिप्रेत्याह, —

"पञ्चानान्तु त्रयोधर्म्याः द्वावधर्म्यौ स्मृताविह।
पैशाचश्चासुरश्चैव न कर्त्तव्यौ कथञ्चन §"—इति।

ब्राह्मादीनामासुरान्तानां मध्ये व्रह्म-दैव-प्रजापत्याः त्रयोधर्म्याः क्रयाभावात्। आर्षासुरौ द्वावधर्म्यौ, क्रय-क्रीतत्वात्। तयोरप्यासुरः पैशाचवदापद्यपि न कर्त्तव्यः। तन्न। पञ्चानामिति वचनस्य

* इतरे ष्ववशिष्टेषु, — इति स० शा० पुस्तकयोः पाठः।

† दुर्विवाहेषु, — इति स० शा० पुस्तकयोः पाठः।

‡ न सा दैवे च पित्र्ये च,— इति मु० पुस्तके पाठः।

§ कदाचन, — इति मु० पुस्तके पाठः।

मतान्तरोपन्यास-परत्वात्। कुत एतत्। यतः स्वयमेवोत्तरत्र गोमियुनस्य श्रुल्कत्वं मतान्तरत्वेनानूद्य निषेधति,—

"आर्षे गोमिथुनं शुल्कं केचिदाहुर्मृषैव तत्।
अल्पोवाऽपि महान् वापि विक्रयस्तावदेव सः"— इति।

गोमिथुनं शुल्कम्,— इति यत् केचिदाहुस्तन्मृषैव, न हि तस्य शुल्कत्वं सम्भवति, तल्लक्षणाभावात्। अनियत-परिमाणत्वं हि शुल्क-लक्षणं, क्रये तद्दर्शनात्। क्रयसाधनं हि मूल्यं देश-कालाद्य-पेक्षया अल्पं वा महद्वा भवति। प्रकृते तु परिमाणं नियतं, यतः आर्षस्तावतैव गोमिथुनेनैव सम्पद्यते न त्वन्यथा। अतः क्रय-क्रीत-त्वाभावाद्धर्म्य एवार्षः। अतएव देवलः,—

"पूर्वे विवाहाश्चत्वारो धर्म्यास्तोय-प्रदानिकाः।
अशुल्का ब्राह्मणार्हाश्च तारयन्ति कुलद्वयम्"— इति।

न च, गन्धर्वादि-विवाहेषु सप्तपदाभिक्रमणाद्यभावात् पतित्वभार्या-त्वाभावः,— इति शङ्कनीयम्। स्वीकारात् प्राक्तदभावेऽपि पश्चात्तत्सद्भावात्। तदाह देवलः,—

"गान्धर्वादि-विवाहेषु पुनर्वैवाहिको विधिः।
कर्त्तव्यश्च त्रिभिर्वर्णैः समर्थेनाग्निसक्षिकम्"— इति।

गृह्यपरिशिष्टेऽपि,—

"गान्धर्वासुरपैशाचा विवाहा राक्षसश्च यः*।
पूर्वं परिक्रमश्चैषां† पश्चाद्धोमो विधीयते"— इति।

---

* राक्षसाश्च ये,— इति स० शा० पुस्तकयोः पाठः।

† पश्रिमस्तेषां,— इति मु० पुस्तके पाठः।

होमाकरणे तु ना भार्यात्वम्। अतएव वशिष्ठबौधायनौ, —

"बलादपहृता कन्या मन्त्रैर्यदि न संस्कृता।
अन्यस्मै विधिवद्देया यथा कन्या तथैव सा" — इति।

तस्माद् गन्धर्वादिष्वपि सप्तपद्यभिक्रमणसम्भवादस्ति भार्यात्वम्। ब्राह्म्यादिषु विवाहेषु यद्दानमुक्तं तत्सकृदेव। तथा च याज्ञवल्क्यः, —

"सकृत् प्रदीयते कन्या हरंस्तां चौरदण्डभाक्" — इति।

मनुरपि, —

"सकृदंशो निपतति सकृत् कन्या प्रदीयते।
सकृदाह ददानीति त्रीण्येतानि सकृत् सकृत्" — इति।

एतच्चादुष्टवराभिप्रायम्। यदाह नारदः, —

"दत्वा कान्ताय यः कन्यां वराय न ददाति ताम्।
अदुष्टश्चेद् वरो राज्ञा स दण्ड्यस्तत्र चौरवत्" — इति।

किमयमुत्सर्गः? नेत्याह याज्ञवल्क्यः, —

"दत्तामपि हरेत् पूर्वाच्छ्रेयांश्चेद्वर आव्रजेत्" — इति।

एतद्वाग्दानाभिप्रायम्। यस्मै वाचा दत्ता, ततोऽन्यश्चेत् प्रशस्ततरो लभ्यते, ततस्तस्मै देया, न तु दुष्टाय पूर्वस्मै। तथा च गौतमः, — "प्रतिश्रुत्याप्यधर्मसंयुक्ताय न दद्यात्" — इति। वरदोषास्तु कात्यायनेनोक्ताः, —

"उन्मत्तः पतितः कुष्ठी तथा षण्डः सगोत्रजः।
चक्षुः श्रोत्र-विहीनश्च तथाऽपस्मार-दूषितः॥
वर-दोषास्तथैवेते कन्या-दोषाः प्रकीर्त्तिताः" — इति।

यस्तु ऊढ़ायाः पुनरुद्वाहो यम-शातातपाभ्यां दर्शितः,—

"वरश्चेत्कुल-शीलाभ्यां न युज्येत कथञ्चन ।
न मन्त्राः कारणं तत्र नच कन्याऽनृतं भवेत्* ॥
समाच्छिद्य तु तां कन्यां बलादक्षतयोनिकाम् ।
पुनर्गुणवते दद्यादिति शातातपोऽब्रवीत्"— इति ।
"हीनस्य कुल-शीलाभ्यां हरन् कन्यां न दोषभाक् ।
न मन्त्राः कारणं तत्र न च कन्याऽनृतं भवेत्"— इति ।

कात्यायनोऽपि,—

"स तु यद्यन्यजातीयः पतितः क्लीबएव वा ।
विकर्मस्थः सगोत्रो वा दासो दीर्घामयऽपि वा ॥
ऊढ़ापि देया सान्यस्मै स-प्रावरण-भूषणा"— इति ।

मनुरपि,—

"नष्टे मृते प्रव्रजिते क्लीवे च पतिते तथा † ।
पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते"— इति ।

सोऽयं पुनरुद्वाहो युगान्तरविषय । तथा चादिपुराणम्,—

"दत्तायाः पुनरुद्वाहं ज्येष्ठांशं गोवधं तथा ।
कलौ पञ्च न कुर्वीत भ्रातृजायां † कमण्डलुम्"—इति ।

यस्तु कन्यादोषमनभिज्ञाय प्रयच्छति, स राज्ञा दण्डयितव्यः, नारदः,—

"अनाख्याय ददद्दोषं दण्ड्य उत्तमसाहसम्"— इति ।

---

* नास्तीदमर्द्ध मु० पुस्तके ।

† इपि वा,— ··· मु० पुस्तके पाठः ।

कन्यादोषास्तु नारदेन दर्शिताः,—

"दीर्घ-कुत्सित-रोगार्त्ता व्यङ्गा संस्पृष्ट मैथुना।
दृष्टान्यगताभावा च कन्या दोषाः प्रकीर्त्तिताः"— इति।

न केवलं दोषमनाख्याय ददतो दण्डः, अपि तु सापि परित्याज्येत्याह मनुः,—

"विधिवत् परिगृह्यापि त्यजेत् कन्यां विगर्हिताम्।
व्याधितां विप्रदुष्टां वा छद्मना चोपपादिताम्"— इति।

नारदोऽपि,—

"नादुष्टां दूषयेत् कन्यां नादुष्टं दूषयेद्वरम्।
दोषे सति न दोषः स्यादन्योन्यं त्यजतोर्द्वयोः"— इति।

एतत् सप्तपद्यभिक्रमणादर्वाग्वेदितव्यम्। तत्रैव भार्यात्वस्योत्पत्तेः।

अतएव मनुः,—

"पाणिग्रहण-मन्त्रैस्तु नियतं दार-लक्षणम्।
तेषां निष्ठा तु विज्ञेया विद्वद्भिः सप्तमे पदे"— इति।

यमोऽपि,—

"नोदकेन न वा वाचा कन्यायाः पतिरिष्यते।
पाणिग्रहण-संस्कारात् पतित्वं सप्तमे पदे"— इति।

पाणिग्रहण-संस्कारात् पूर्वं परिणेतुर्मरणेऽपि न कन्यात्वं हीयते। तथा च वशिष्ठः,—

"अद्भिर्वाचा च दत्तायां म्रियते वा वरो यदि।
न च मन्त्रोपनीता स्यात् कुमारी पितुरेव सा"—इति।

* अयञ्चोद्वाहोयुगान्तरविषयः,— इत्यधिकः पाठ ··· पुस्तके दृश्यते।

वरणानन्तरं देशन्तरगमने विशेषमाह कात्यायनः,—

"वरयित्वा तु यः कश्चित् प्रणश्येत् पुरुषो यदा ।
तदा समांस्त्रीनतीत्य कन्यान्यं वरयेद्ववरम्"— इति ।

नारदोऽपि,—

"प्रतिगृह्य तु यः कन्यां वरोदेशान्तरं व्रजेत् ।
संवत्सरमतिक्रम्य कन्यान्यं वरयेद्वरम्"— इति ।

शुल्कं दत्वा यदि वरो म्रियते, तदा किंकर्त्तव्यमित्यत आह नारदः,—

"कन्यायां दत्तशुल्कायां म्रियते यदि शुल्कदः ।
देवराय प्रदातव्या यदि कन्यानुमन्यते"— इति ।

देशान्तरगमने तु विशेषः कात्यायनेनोक्तः,—

"प्रदाय शुल्कं गच्छेद्व यः कन्यायाः स्त्रीधनं तथा ।
धार्या सा वर्षमेकन्तु देयान्यस्मै विधानतः"—इति ।

एवञ्च वाग्दानादारभ्य सप्तमपद्यमिक्रमणात् प्राग्दोषदर्शने मरणादौ वा कन्यामन्यस्मै दद्यादित्युक्तं भवति । अतएव कात्यायनः,—

"अनेकेभ्यो हि दत्तायामनूढायान्तु तत्र वै ।
परागमश्च सर्वेषां लभेत तदिमान्तु ताम् ।
अथागच्छेत वोढायां दत्तां पूर्ववरो हरेत्"—इति ।

अनूढायां यस्मै पूर्वं प्रतिश्रुता स एव कन्यां लभते । अन्येनोढायान्तु स्वदत्तं शुल्कमात्रं हरेत्, न कन्यामित्यर्थः । 'लक्षण्यां स्त्रियमुद्वहेत्'—इति यदुक्तं, तत्रोद्वहनीया कन्या द्विविधा ; सवर्णा चासवर्णा च, तयोराद्या प्रशस्ता । तदाह मनुः,—

"सवर्णाग्रे द्विजातीनां प्रशस्ता दारकर्मणि ।
कामतस्तु प्रवृत्तानामिमाः स्युः क्रमशोऽवराः"—इति ।

अग्रे स्नातकस्य प्रथमविवाहे. दारकर्माणि अग्निहोत्रादौ धर्मे;* सवर्णा, वरेण समानो वर्णोब्राह्मणादिर्यस्याः, सा ; यथा ब्राह्मणस्य ब्राह्मणी क्षत्रियस्य क्षत्रिया वैश्यस्य वैश्या, प्रशस्ता। धर्मार्थमादौ सवर्णामूढ्वा पश्चाद्रिरंसवश्चेत्तदा तेषामवराः हीनवर्णाः इमाः क्षत्रियाद्याः क्रमेण भार्याः स्मृताः। तथा च याज्ञवल्क्यः,—

"तिस्रो वर्णानुपूर्व्येण द्वे तथैका यथाक्रमम्।
ब्राह्मण-क्षत्रिय-विशां भार्या स्वा शूद्रजन्मनः;"—इति।

मनुरपि,—

"शूद्रैव भार्या शूद्रस्य सा च स्वा च विशःस्मृते।
ते च स्वा चैव राज्ञः स्युस्ताश्च स्वा चाग्रजन्मनः"—इति।

नारोदोऽपि,—

"ब्राह्मणस्यानुलोम्येन स्त्रियोऽन्यास्तिस्र एव तु।
शूद्रायाः प्रातिलोम्येन तथान्ये पतयस्त्रयः॥
द्वे भार्ये क्षत्रियस्यान्ये वैश्यस्यैका प्रकीर्त्तिता।
वैश्याया द्वौ पतो ज्ञेयावेकोऽन्यः क्षत्रिया-पतिः"—इति।

वसिष्ठ-पारस्करावपि,—तिस्रो ब्राह्मणस्य वर्णानुपूर्व्येण द्वे राजन्यस्यैका वैश्यस्य सर्वेषां वाशूद्रामेके मन्त्रवर्जम्"—इति। पैठीनसिः,—"अलाभे कन्यायाः स्नातकव्रतं चरेदपि वा क्षत्रियायां पुत्रमुत्पादयीत शूद्रायां वेत्येके"—इति। विष्णुरपि,—

"द्विजस्य भार्या शूद्रा तु धर्मार्थं न भवेत् क्वचित्।
रत्यर्थमेव सा तस्य रागान्धस्य प्रकीर्त्तिता"—इति।

* धर्मे,— इति नास्ति मु० पुस्तके।

एवं तावदेतेषां मतेन द्विजानामापदि शूद्रा-संग्रहणं रतिमात्र-फलमपि दोषमांद्यादनुज्ञातम्। इदानीमपरेषां मतेन ब्राह्मण-क्षत्रिययोः तावच्छूद्रा-वर्जनमेव युक्ततरं नोद्वाहः,— इत्युच्यते। तत्र मनुः,—

"न ब्राह्मण-क्षत्रिययोरापद्यपि हि तिष्ठतोः।
कस्मिंश्चिदपि वृत्तान्ते शूद्रा भार्योपदिश्यते॥
हीनजातिं स्त्रियं मोहादुद्वहन्तो द्विजातयः।
कुलान्येव नयन्त्याशु ससन्तानानि शूद्रताम्॥
शूद्रावेदी पतत्यत्रेरुतथ्य-तनयस्य च।
शौनकस्य सुतोत्पत्त्या तदपत्यतया भृगोः॥
शूद्रां शयनमारोप्य ब्राह्मणो यात्यधोगतिम्।
जनयित्वा सुतं तस्यां ब्राह्मण्यादेव हीयते॥
वृषली-फेन-पीतस्य निश्वासोपहतस्य च।
तस्याञ्चैव प्रसूतस्य निष्कृतिर्न विधीयते॥"—इति।

आश्वमेधिकेऽपि,—

"शूद्रा-योनौ पतद्वीजं हाहाशब्दं द्विजन्मनः।
कृत्वा पुरीषगर्त्तेषु पतितोऽस्मीति दुःखितः॥
मामधःपातयन्नेष पापात्मा काममोहितः।
अधोगतिं व्रजेत् क्षिप्रमिति शप्त्वा पतेत् तु तत्*—इति।

ननु, 'ताश्च स्वा चाग्रजन्मनः'— इति मनुना शूद्रा-विवाहो विप्रस्याभ्यनुज्ञातः। पुनश्च तेनैव 'न ब्राह्मण-क्षत्रिययोः' — इति स निषिद्धः। अतो व्याहतः, — इति चेन्मैवम्। मतभेदेन युगभेदेन वा व्यवस्थोपपत्तेः। अतएव याज्ञवल्क्येन मतभेदः

* पतेत् ध्रुवम्,— इति मु० पुस्तके पाठः।

स्पष्टीकृतः,—

> "यदुच्यते द्विजातीनां शूद्राद्दारोपसंग्रहः ।
> न तन्मम मतं यस्मात् तत्रायं जायते स्वयम् ॥"— इति ।

आनुशासनिकेऽपि,—

> "अपत्यजन्म शूद्रायां न प्रशंसन्ति साधवः ।
> रत्यर्थमपि शूद्रा स्यान्नेत्याहुरपरे जनाः"— इति ।

युगभेदेन व्यवस्था च स्मृत्यन्तरे स्पष्टीकृता,—
"असवर्णासु कन्यासु विवाहश्च द्विजातिभिः"— इत्यादिमनुक्रम्य—

"कलौ युगेत्विमान् धर्मान् वर्ज्यानाहुर्मनीषिणः" — इत्युपसंहारात्* । विवाह-विधिस्तु मनुनाभिहितः,—

> "पाणिग्रहण-संस्कारः सवर्णासूपदिश्यते ।
> असवर्णास्वयं ज्ञेयो विधिरुद्वाहकर्मणि ।
> शरः क्षत्रियया ग्राह्यः प्रतोदो वैश्यकन्यया ।
> वासोदशा शूद्रया तु वर्णोत्कृष्टस्य वेदने"— इति ।

शङ्खलिखितावपि,— "इषुं गृह्णाति राजन्या प्रतोदं वैश्या दशान्तरं शूद्रा, ब्राह्मणस्तु सवर्णायाः पाणिं गृह्णीयात् । पैठीनसिः,—

> "साङ्गुष्ठं ब्राह्मणः पाणिं गृह्णीयात् क्षत्रियः शरम् ।
> वैश्यानाश्च प्रतोदन्तु शूद्रावस्त्रदशामिति**"— इति ।

---

* सा च व्यवस्था दृष्टोपपत्तिमूलिका असवर्णाशौचविधानात्,— इत्याधिकः पाठः मु० पुस्तके ।

** साङ्गुष्ठं ब्राह्मण्याः पाणिं गृह्णीयात् क्षत्रियायाः शरं प्रोतदं वैश्यायाः शूद्रायाश्च स्वदशामिति,— इति मु० पुस्तके पाठः ।

परिक्रमो ब्राह्मणस्योक्तोराजन्यवैश्ययोराचार्य्यपरिक्रमः,[1]– इति।
कृतोद्वाहस्योपगम-नियममाह मनुः,—

"ऋतुकालाभिगामी स्यात् स्व-दार-निरतः सदा।
पर्व्ववर्जं ब्रजेच्चैनां तद्व्रतोरतिकाम्यया"– इति।

रजोदर्शन-प्रभृति षोड़शाहोरात्रात्मकः कालो गर्भग्रहण-समर्थं ऋतुः। तस्मिन्नृतावपत्यार्थो सदा स्त्रियमुपगच्छेत्। तच्चाभिगमनं स्वदारेष्वेव। ऋतावपि पर्वतिथिं वर्जयेत्। अनृतावपि तथास्त्रिया प्रार्थितो विनाऽप्यपत्योद्देशन्तामभिगच्छेत्। यथानिर्द्दिष्टमृतुं याज्ञवल्क्यो दर्शयति, —

"षोड़शर्त्तुनिशाः स्त्रीणां तस्मिन् युग्मासु संविशेत्।
ब्रह्मचार्य्येव पर्वाण्याद्याश्चतस्रश्च वर्जयेत्" — इति।

तस्मिन्नृतौ पर्वाण्याद्याश्चतस्रो रात्रीर्वर्जयित्वा युग्मासु समासु षष्ठी प्रभृतिषु गच्छेत् पुत्रार्थम्। अयुग्मासु स्त्री-जन्म-मयादगमनं, न तु प्रतिषेधात्। युग्मास्वपि रात्रिष्वेवोपगमनं, नाहनि, दिवा कामस्य निषिद्धत्वात्। तथाचाथर्वणी श्रुतिः। प्राणंवा एते प्रस्कन्दयन्ति ये दिवा रत्या संयुज्यन्ते ब्रह्मचर्य्यमेव तद यद्रात्रौ रत्या संयुज्यन्ते"— इति शङ्खलिखितावपि, — "नार्त्तवे दिवा मैथुनं ब्रजेत्" — इति। "ऋतुकालाभिगामी स्यात्" — इत्यत्र नियम-द्वयं वेदितव्यम्; ऋतौ गच्छेदेव न तु वर्जयेत्, — इत्येको नियमः, ऋतावेव गच्छेन्नानृतौ,— इत्यपरः। अतएव देवलः, —

"स्वयं दारानृतुस्नातान् स्वस्थश्चेन्नोपगच्छति।
भ्रूणहत्यामवाप्नोति गर्भं प्राप्तं विनाशयेत्" – इति।

---

[1] अयमप्यंशः पैठिनसिवचनस्यैवांश इत्यनुमीयते।

बौधायनोऽपि, —

"त्रीणि वर्षाण्यृतुमतीं यो भार्य्यां नोपगच्छति ।
स तुल्यं भ्रूणहत्याया दोषमृच्छत्यसंशयम् ।
ऋतौ नोपैति यो भार्य्यामनृतौ यश्च गच्छति ।
तुल्यमाहुस्तयोः पापमयोनौ यश्च सिञ्चति" — इति ।

पर्ववर्जमित्यनेन निषिद्ध-तिथि-नक्षत्राण्युपलक्ष्यन्ते । निषिद्धपर्वत्वमावास्या पौर्णमासी च तत्र स्त्रीगमनं श्रुत्या निषिद्धम् । — नामावास्यायाञ्च पौर्णमास्याञ्च स्त्रियमुपेयाद्व यद्युपेयान्निरिन्द्रियः स्यात्" — इति । अन्याश्च निषिद्ध-तिथयोऽष्टम्यादयः । तत्र मनुः, —

अमावास्याऽष्टमी चैव पौर्णमासी चतुर्द्दशी ।
ब्रह्मचारी भवेन्नित्यमप्यृतौ स्नातको द्विजः" — इति ।

अमावास्यादयो यास्तिथयः, तासु स्त्रीसङ्गत्यागेनेत्यध्याहृत्य योजनीयम् । ऋतुकालेऽपि दिनषट्कं वर्ज्यमिति स एवाह, —

तासामाद्याश्चतस्रस्तु निन्दितैकादशी च या ।
त्रयोदशी च शेषास्तु प्रशस्ता दश रात्रयः" — इति ।

निषिद्धनक्षत्रं याज्ञवल्क्यो दर्शयति, —

एवं गच्छन्स्त्रियं क्षामां मघां मूलञ्च वर्जयेत्" — इति ।

क्षामां लघ्वाहारादिना कृशामित्यर्थः । अतएव वृहस्पतिरपि स्त्रीपुंसोराहार-विशेषं सनिमित्तमाह, —

"स्त्रियाः शुक्रेऽधिके स्त्री स्यात् पुमान् पुंसोऽधिके भवेत् ।
तस्मात् शुक्रविवृद्ध्यर्थं स्निग्धं हृद्यञ्च भक्षयेत्* ।
लघ्वाहारां स्त्रियं कुर्य्यादेवं सञ्जनयेत् सुतम्" — इति ।

---

स्निग्धमन्नञ्च भक्षयेत्, — इति मु० पुस्तके पाठः ।

मनुरपि, —

"पुमान् पुंसोऽधिके शुक्रे स्त्री भवत्यधिके स्त्रियाः।
समेऽपुमान् पुंस्त्रियोर्वा क्षीणेऽल्पे च ां विपर्य्ययः"—इति।

अपुमानिति छेदः। संक्रान्तिश्च पञ्चपर्वान्तःपातित्वाद्वर्ज्जनीया। तदुक्तं विष्णुपुराणे, —

"चतुर्द्दश्यष्टमीचैव अमावास्या च पूर्णिमा।
पर्वाण्येतानि राजेन्द्र, रविसंक्रान्तिरेव च॥
तैल-स्त्री-मांस-योगी च ा पर्वस्वेतेषु वै पुमान्।
विण्मूत्रभोजनं नाम प्रयाति नरकं नृप" — इति।

देशाश्च वर्ज्यास्तत्रैव दर्शिताः,—

"चैत्य-चत्वर-सौधेषु नचैव च चतुष्पथे।
नैव श्मशानोपवनसलिलेषु महीपते॥
गच्छेद्व्यवायं मतिमान्मूत्रोच्चार-प्रपीड़ितः" — इति।

स्वदारनिरतः, इत्यनेन मनसाऽपि परदारगमनं निषिद्धतया विवक्षितम्। एतदपि तत्रैव दर्शितम्, —

"परदारान्न गच्छेन्तु मनसाऽपि कथञ्चन।
पर-दार-रतिः पुंसामुभयत्रापि भीतिदा॥
इति मत्वा स्वदारेषु ऋतुमत्सु व्रजेद्बुधः" — इति।

---

ां क्षीणत्वे च, — इति मुः पुस्तके पाठः।

ा स्त्री तैल मांस संयोगी, — इत्यन्यत्र पाठः॥

अन्यदपि वर्ज्यं तत्रैव दर्शितम्, —

"न स्नातां तु स्त्रियं गच्छेन्नातुरां न रजस्वलाम्।
नानिष्टां न प्रकुपितां नाप्रशस्तां न रोगिणीम्॥
नादक्षिणां नान्यकामां नाकामं नान्ययोषितम्।
क्षुत्क्षामां नातिभुक्तां वा स्वयं चैतैर्गुणैर्युतः॥
स्नातः स्रग्गन्धधृक् प्रीतो व्यावायं पुरुषो व्रजेत्" — इति।

तदव्रतः, — इत्यनेन श्रौतं वरं स्मारयति। तथा च श्रुतिः। "स स्त्रीषंसादमुपासीददस्यै ब्रह्महत्यायै तृतीयं प्रतिगृह्णीतेति, ताअब्रुवन् वरं वृणावहा* ऋत्वियात् प्रजां विन्दामहै काममाविजनितेः सम्भवामहै तस्मादृत्वियाः स्त्रियः प्रजां विन्दन्ते काममाविजनितेः सम्भवन्ति वरे। वृतं ह्यासां तृतीयं ब्रह्महत्यायै प्रत्यगृह्णत् सा मलवद्वासाभवत्" — इति।

अयमर्थः। इन्द्रः किल विश्वरूपनाम्नः पुरोहितस्य वधात् ब्रह्महत्यामुपागतामञ्जलिना स्वीकृत्य संवत्सरं धृत्वा लोकापवादाद्भीतस्तां त्रेधा विभज्य प्रथमभागं पृथिव्यै द्वितीयभागं वनष्पतिभ्यो वरपूर्वकं दत्वा तृतीयभागमादाय स्त्रीसमूहमुपागमत् ताश्च वरमयाचन्त, ऋतुकालगमनात् प्रजां लभेमहि आप्रसवमनृतावपि यथेच्छं सम्भवामेति वरं लब्ध्वा तृतीयभागं प्रत्यगृह्णन्। स च भागो रजोरूपेण परिणतः, ततः प्रभृति मासि मासि योषिन्मलवद्वासा सम्पन्नेति। याज्ञवल्क्योऽपि, —

यथाकामी भवेद्वाऽपि स्त्रीणां वरमनुस्मरन्।
स्वदार-निरतश्चैव स्त्रियो रक्ष्यायतः स्मृताः" — इति।

---

* वृणीमहा, — इति मु० पुस्तके पाठः।
† वाचै, — इति मु० पुस्तके पाठः।

वृहस्पतिरपि, —

"ऋतुकालाभिगमनं पुसा कार्य्यं प्रयत्नतः।
सदैव वा पर्ववर्ज्जं स्त्रीणामभिमतं हि तत्" — इति।

ऋतुकालाभिगमनमित्यत्र केचिदेवमाचक्षते, अजात-पुत्रस्यैवैष नियमो न तु जात-पुत्रस्य, — इति। उपपादयन्ति च। तत्र कूर्म-पुराणे, —

"ऋतुकालाभिगामी स्याद यावत् पुत्रोऽभिजायते" — इति।

ऋणापाकरणार्थं हि पुत्रोत्पादनम्। तथा च श्रुतिः। जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवान् जायते ब्रह्मचर्य्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्य एष वा अनृणो यः पुत्रो यज्वा ब्रह्मचारिवासी" — इति। मन्त्रवर्णोऽपि, —

"ऋणमस्मिन् सन्नयति ह्यमृतत्वञ्च गच्छति।
पिता पुत्रस्य जातस्य पश्येच्चेज्जीवतो मुखम्" — इति।

तदेतदृणापाकरणमेकपुत्रोत्पादनेन सम्पद्यते, तावतापि पुत्रित्व-सिद्धेः। तथाच मनुः, —

ज्येष्ठेन जातमात्रेण पुत्री भवति मानवः।
पितृणामनृणश्चैव स तस्मात् सर्वमर्हति॥
यस्मिन्नृणं सन्नयति येन चानन्त्यमश्नुते।
स एव धर्मजः पुत्रः कामजानितरान् विदुः" — इति॥

ननु, वहुपुत्रत्वमपि क्वचित् श्रूयते, — "इमां त्वमिन्द्रमीढ्वः सुपुत्रां सुभगां कृणु। दशास्यां पुत्रानाधेहि पतिमेकादशंकृधि" — इति। "क्रीड़न्तौ पुत्रैः" — इति। "रयिं च पुत्रांश्चादात्" — इति च।

सत्यम। नायं विधिः, किन्तु वह्वपत्य-प्रशंसा। तस्मादजात-पुत्रस्यैवायं ऋतुगमन-नियमः, इति।

तदपरे न क्षमन्ते। यद्यपि पुत्रित्वमानृण्यं चैकेनैव पुत्रेण सम्पद्यते, तथाप्यस्ति वहुपुत्रत्वविधिः। "एतमु एवाहमभ्यगाशिषं तस्मान्मम त्वमेकोऽसीति ह कौषीतकिः पुत्रमुवाच, रश्मींस्त्वं पर्य्यावर्त्तयाद्वहवोवै ते भविष्यन्ति" — इति छन्दोगैराम्नानात्। तस्य चायमर्थः। कौषीतकिर्नाम मुनिः स्वयमादित्यमण्डलमेवोपासीन-उद्‌गानं कृत्वा तत्‌फलत्वेन पुत्रमेकं प्रयिलभ्य तमुवाच, अहमेत-मेकमेवादित्यं ध्यायन् गानमकार्षं, तस्माद्दोषान्मम त्वमेक एव पुत्रोऽसि एकपुत्रत्वं च न प्रशस्तम्, अतस्त्वं वहुपुत्रतायै रश्मीन् बह्वनुपास्तिवेत्ययामावर्त्तयेति। महाभारतेऽपि, —

"अपत्यन्तु मनेवैकं कुले महति भारत।
अपुत्रञ्चैकपुत्रत्वमित्याहुर्घर्मवादिनः॥
चक्षुरेकञ्च पुत्रश्च अस्ति नास्तीति भारत।
चक्षुर्नाशे तनोर्नाशः पुत्रनाशे कुलक्षयः॥
अनित्यताञ्च मर्त्यानां मत्वा शोचामि पुत्रक।
सन्तानस्याविनाशन्तु कामये भद्रमस्तु ते" — इति।

ननु, ज्येष्टेनैव पुत्रेणानृण्य-सिद्धेर्निरर्थकं पुत्रान्तरोत्पादनम्। तन्न, सर्वेषां पुत्राणामानृण्य-हेतुत्वात्। न हि पुत्र-जननमात्रेण पितुरानृण्यं, किन्तर्हि, सम्यगनुशिष्टेन पुत्रेण शास्त्रीयेषु कर्म-स्वनुष्ठितेषु पश्चादानृण्यं सम्पद्यते। अतएव वाजसनेयिब्राह्मणे पुत्रानुशासनविधिः समाम्नातः। "तस्मात् पुत्रमनुशिष्टं लोक्यमाहु-स्तस्मादेनमनुशासति यदनेन किञ्चिदक्षण्या कृतं भवति तस्मादेन-मेनसः सर्वस्मात् पुत्रो मोचयति तस्मात् पुत्रो नाम पुत्रेनैवास्मिंलोके प्रतितिष्ठति" — इति।

अस्यायमर्थः। अस्ति किञ्चित् संप्रतिपत्तिनामकं कर्म। यदा पितुर्मरणावसरो भवति, तदा पुत्रमाहूय वेदाध्ययने यज्ञे लौकिकव्यापारे च यद्यत्कर्त्तव्यजातं तस्य सर्वस्य पुत्रे सम्प्रदानं कर्त्तव्यम्। सेयं सम्प्रतिपत्तिः। तस्यां च सम्प्रतिपत्तौ यस्मादनुशिष्ट एव पुत्रोऽधिकारी, तस्मादनुशिष्टं पुत्रं परलोकहितमाहुः शास्त्रज्ञाः। अतएव पुत्रानुशासनं कुर्युः पितरः। स चानुशिष्टः पुत्रो यत्किञ्चित् सपित्रा शास्त्रीयं कर्म्म अक्ष्णया वक्रत्वेन शास्त्र वैपरीत्येन कृतं भवति, तस्मात् सर्वस्मात् पापादेनं स्वपितरं स्वयं शास्त्रीयं कर्म सम्यगनुतिष्ठन्मोचयति। तस्मात् पुन्नाम्नो नरकात् त्रायते, —इति व्युत्पत्त्या पुत्रो नाम। स च पिता स्वयं मृतः पुत्रशरीरेणैवास्मिन् लोके यथाशास्त्रं कर्म कुर्वन्ननुतिष्ठति, — इति।

एवं सति बहूनां मध्ये यथावदनुशासनं प्रज्ञा-मांद्यादि-प्रतिबन्धबाहुल्यात् कस्यचिदेव सम्पद्यते। अनुशिष्टेष्वपि बहुषु यथावदनुष्ठानं कस्यचिदेव। अतो ज्येष्ठः कनिष्ठो वा यस्तादृशः, स एवानृण्यहेतुः। अतएव पुराणेऽभिहितम्, —

"एष्टव्या बहवः पुत्राः यद्येकोऽपि गयां व्रजेत्" — इति।

"दशास्यां पुत्रानाधेहि" — इत्यादिमन्त्राश्चैवं सति बहुपुत्रत्वविधिमुपोद्वलयन्ति। यत्तु, कामजानितरानित्युदाहृतं, तदननुशिष्टविषयम्। तस्मात्, जात-पुत्रोऽप्यृतावुपेयादेव।

बहूनां पत्नीनामृतु-यौगपद्ये क्रममाह देवलः, —

"यौगपद्ये तु तीर्थानां विप्रादिक्रमशोव्रजेत्।
रक्षणार्थमपुत्रां वा ग्रहणक्रमशोऽपि वा" — इति।

तीर्थमृतुः। तद्यौगपद्ये स्त्र्यसवर्णासु वर्णक्रमेण, सवर्णासु विवाहक्रमेण गच्छेत्। यदा तु काचिदपुत्रा, पुत्रवत्य इतराः, तदा अपुत्रां

अग्रतो गच्छेत्। ऋतावपि जातिभेदेनोपगमन-काल-सङ्कोचमाह देवलः, —

"ब्राह्मण्यां द्वदशाहं स्याद्वेदोक्तमृतुधारणम्।
दशाष्टौ षट् च शेषाणां विधीयन्तेऽनुपूर्वशः" — इति।

पञ्चम-दिवसमारभ्य द्वादशाहादिसङ्ख्याऽवगन्तव्या। चतुर्थे तु दिवसे गमनं वैकल्पिकं, विहित प्रतिषिद्धत्वात्। तथाच हारीतो-विदधाति, — "चतुर्थेऽहनि स्नातायां युग्मासु वा गर्भाधानम्" — इति। व्यासो निषेधति, —

"चतुर्थे सा न गम्याऽहि गताऽल्पायुः प्रसूयते" —इति।

व्यवस्थित-विकल्पश्चायमुदितानुदितहोमवत्। रजसो निवृत्तौ चतुर्थ्यां विधिः, तदनुवृत्तौ प्रतिषेधः। तथा च मनुः, —

"रजस्युपरते साध्वी स्नानेन स्त्री रजस्वला" — इति।

साध्वी गर्भाधानादि-विहित-कर्मयोग्येत्यर्थः। दिन-विशेषेणोपगमने फल-विशेषोऽभिहितो लिङ्गपुराणे, —

"चतुर्थे सा न गम्याऽहि गताल्पायुः प्रसूयते।
विद्या-हीनं व्रतभ्रष्टं पतितं पारदारिकम्॥
दारिद्र्यार्णव-भग्नञ्च तनयं सा प्रसूयते।
कन्यार्थिनैव गन्तव्या पञ्चम्यां विधिवत् पुनः॥
षष्ठ्यां गम्या महाभाग, सत्पुत्र*—जननी भवेत्।
सप्तम्यां चैव कन्यार्थी गच्छत् सैव प्रसूयते॥

---

* छपुत्र, — इति मु॰ पुस्तके पाठः।

अष्टम्यां सर्व-सम्पन्नं तनयं सम्प्रसूयते ।
नवम्यां दारिकार्थं स्याद्दशम्यां पण्डितं तथा ।
एकादश्यां तथा नारीं जनयत्येव पूर्ववत् ॥
द्वादश्यां धर्मतत्त्वज्ञं श्रौत-स्मार्त्त-प्रवर्त्तकम् ।
त्रयोदश्यां तथा नारीं वर्ण-सङ्कर-कारिणीम् ।
जनयत्यङ्गना, तस्मान्न गच्छेत् सर्वयत्नतः ॥
चतुर्दश्यां यदा गच्छेत् सुपुत्र-जननी भवेत् ।
पञ्चदश्याञ्च धर्मज्ञां[1] षोड़श्यां ज्ञानपारगम् ॥" — इति ।

ऋतुकालानभिगमने यो दोषोऽभिहितः, तस्यापवादमाह व्यासः, —

"व्याधितो बन्धनस्थो वा प्रवासेष्वथ पर्वसु ।
ऋतुकालेऽपि नारीणां भ्रूणहत्या प्रमुच्यते ॥
वृद्धां वन्ध्यामवृत्ताञ्च मृतापत्यामपुष्पिताम् ।
कन्याञ्च बहुपुत्राञ्च वर्जयन्मुच्यते भयात् ॥" — इति ।

भ्रूण-हत्या भ्रूण-हननम् । उक्तरीत्या यस्यां वृद्धत्वादि-दोष-रहितायामृतुकालोपगमनमवश्यंभावि, यस्याञ्च वृद्धादौ नावश्यंभावि, सा सर्वापि सम्यक् पालनीया । तथा च मनुः, —

"पितृभिर्भ्रातृभिश्चैताः पतिभिर्देवरैस्तथा ।
पूज्याः भूषयितव्याश्च बहुकल्याणमीप्सुभिः ॥
यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः ।
यत्रैतास्तु न पूज्यन्ते सर्वास्तत्राफलाः क्रियाः ॥

---

[1] धर्मज्ञं,— इति मु० पुस्तके पाठः ।

शोचन्ति जामयो यत्र (१) विनश्यत्याशु तत्‌कुलम् ।
न शोचन्ति तु यत्रैता वर्द्धते तद्धि सर्वदा ॥
जामयोयानि गेहानि शपन्त्यप्रतिपूजिताः ।
तानि कृत्या-हतानीव विनश्यन्ति समन्ततः ॥
तस्मादेताः सदाभ्यचर्या भूषणाच्छादनादिभिः* ।
भूतिकामैर्नरैर्नित्यं सत्‌कारेषूत्‌सवेषु च † ॥
सन्तुष्टो भार्यया भर्त्ता भर्त्रा भार्या तथैव च ।
यस्मिन्नेव कुले नित्यं कल्याणं तत्र वै ध्रुवम् ॥" — इति ।

पूज्यत्वञ्चाबृत्ता-व्यतिरिक्तासु द्रष्टव्यम् । अबृत्तायास्तु प्राणधारण-मात्र-भोजनम् । तथा च याज्ञवल्क्यः, —

"हताधिकारां मलिनां पिण्डमात्रोपजीविनीम् ।
परिभूतामधः शय्यां वासयेद्व्यभिचारिणीम्" — इति ।

यथा विन्ना साध्वो भर्त्तव्या, तथैवाधिविन्नाऽपि (२)। तदाह स एव,—

"अधिविन्नाऽपि भर्त्तव्या, महदेनोऽन्यथा भवेत्" — इति ।

अधिवेदनं भार्य्यान्तर-परिग्रहः। अधिवेदन-निमित्तान्यपि स एवाह,—

"सुरापी व्याधिता धूर्ता वन्ध्याऽर्थघ्न्यप्रियम्बदा ।
स्त्री- प्रसूश्चाधिवेत्तव्या पुरुष-द्वेषिणी तथा" — इति ।

---

(१) जामयोभ्रातृभार्या इति केचेत् । भगिन्य इति केचित् वस्तुतस्तु "जामि स्वसृकुलस्त्रियोः" — इत्यमरोक्तं ग्रह्यम् ।

* भूषणाच्छादनाशनैः, — इति मु० पुस्तके पाठः ।

† सत्‌कारेणोत्‌सवेन च, — इति स० पुस्तके पाठः ।

(२) एकस्यां स्त्रियां विद्यमानायाम परस्त्री परिग्रहे कृते पूर्वा स्त्री अधिविन्नेत्युच्यते ।

सुरापी मद्यपीत्यर्थः। सुरापाने तु नाधिवेदनमात्रम्, अपि तु त्याग एव। "तथा महति पातके" — इति त्यागहेतुत्वेनाभिधानात् (१)।

"पतत्यर्द्धं शरीरस्य यस्य भार्य्या सुरां पिवेत्" — इति वचनाच्च। अतएव मनुः, —

"मद्यपाऽसाधु-वृत्ता च प्रतिकूला च या भवेत्।
व्याधिता चाधिवेत्तव्या हिंस्रार्थघ्नी च सर्वदा" — इति।

व्याधिना दीर्घरोगिणी। ब्रह्मपुराणेऽपि, —

"धर्म्म-विघ्न-करीं भार्य्यामसतीञ्चातिरोगिणीम्।
त्यजेद्धर्म्मस्य रक्षार्थं, तथैवाप्रियवादिनीम्।
न त्यजेदधिविन्देत न तु भोगं परित्यजेत्" (२) — इति।

---

(१) सुरामद्ययोर्भेदस्तु, "पानसं द्राक्ष माधूकं खार्ज्जूरं तालमैक्षवम्। माध्वीकं टाङ्कमाध्वीकं मैरेयं नारिकेलजम्। समानानि विजानीयात् मद्यानेकादशैव तु। द्वादशन्तु सुरामद्यं सर्व्वेषामधमं स्मृतम्" — इत्युक्तदिशाऽवसेयः। सुरा तु पैष्ट्येव मुख्या। "सुरा तु पैष्टीमुख्योक्ता न तस्यास्त्वितरे समे" — इतिस्मरणात्। पैष्टीपानञ्च त्रयाणामेव द्विजातीनां महापातकम्। "सुरावै मलमन्नानां पाप्मा च मलमुच्यते। तस्माद्ब्राह्मणराजन्यौवैश्यश्च न सुरां पिवेत्" — इति वचनात्। गौड़ीमाध्व्योरपि सुरात्वं गौणं, तत्पानमपि ब्राह्मणस्य महापातकमेव। "गौड़ी पैष्टी च माध्वी च विज्ञेया त्रिविधा सुरा। यथैवैका तथा सर्व्वा न पातव्या द्विजोत्तमैः" — इति स्मरणात्।

(२) अप्रियवादिनीं न त्यजेत् किन्तु अधिविन्देत, न पुनरप्रियवादिन्याभोगं त्यजेदित्यर्थः।

अधिवेदन-काल विशेषो मनुना दर्शितः, —

"वन्ध्याऽष्टमेऽधिवेद्याऽब्दे दशमे तु मृतप्रजा ।
एकादशे स्त्री-जननी सद्यस्त्वप्रियवादिनी" — इति ।

हितायां विशेषमाह सएव, —

"या रोगिणी स्यात्तु हिता सम्पन्ना चैव शीलतः ।
साऽनुज्ञाप्याधिवेत्तव्या नावमान्या तु कर्हिचित्" — इति ।

अधिवेदनं द्विविधं, धर्म्मार्थं कामार्थञ्च । तत्र, पुत्रोत्पत्त्यादि-धर्म्मार्थे पूर्वोक्तानि मद्यपेत्यादीनि निमित्तानि ; कामार्थे तु न तान्य-पेक्षणीयानि, किन्तु पूर्वोढ़ा तोषणीया । तथाच स्मृत्यन्तरे, —

"एकामुत्क्रम्य कामार्थमन्यां लब्धुं य इच्छति ।
समर्थस्तोषयित्वाऽर्थैः पूर्वोढ़ामपरां वहेत्" — इति ।

यद्यसौ स्वयं न तोषयेत्, तदा तत्तोषणाय राजा द्रव्यं दापयेत् । तदाह याज्ञवल्क्यः, —

"आज्ञा-सम्पादिनीं दक्षां वीरसूं प्रियवादिनीम् ।
त्यजन् दाप्यस्तृतीयांशमद्रव्योभरणं स्त्रियाः" — इति ।

सधनस्य तृतीयांश-दानं निर्द्धनस्याशनाच्छादनादिना पोषणमिति । या तूक्त-द्रव्यापरितोषणात् प्रकारान्तरेण वा निर्गच्छेत् तां प्रत्याह मनुः, —

"अधिविन्ना तु या नारी निर्गच्छेद्रुषिता गृहात् ।
सा सद्यः सन्निरोद्धव्या त्याज्या वा कुल-सन्निधौ"—इति ।

त्यागोनाम तदीय-जनक-कुल-प्रेषणम्। "पूज्या भूषयितव्याश्च"— इति यदुक्तं, तत्र बहुपत्नीकस्य पूजाक्रममाह मनुः, —

"यदि स्वाश्चावराश्चैव विन्देरन् योषितो द्विजाः।
तासां वर्ण-क्रमेण स्याज्जैष्ठ्यं पूजा च वेश्मनि॥
भर्त्तुः शरीर-शुश्रूषां धर्म्मकार्य्यञ्च नैत्यकम्।
स्वा स्वैव कुर्य्यात् शर्वेषां नान्यजातिः कथञ्चन"— इति।

बह्वीषु पत्नीषु सहधर्म्मचारिणीं निर्धारयति याज्ञवल्क्यः, —

"सत्यामन्यां सवर्णायां धर्म्मकार्य्यं न कारयेत्।
सवर्णासु विधौ धर्म्मे ज्येष्ठया न विनेतरा"— इति।

सवर्णयैव सह धर्म्मञ्चरेत् नासवर्णया। अलाभे तु सवर्णाया इतरयाऽपि सह धर्म्मञ्चरेदित्यर्थाल्लभ्यते। न चैवं सति, शूद्रयाऽपि सह धर्म्माचरणं प्रसज्येतेति वाच्यं, वसिष्ठ-वचनेन तन्निषेधात्; "कृष्णवर्णा या रमणायैव सा न धर्म्माय"— इति। सवर्णाऽनेकत्वे तु धर्म्मानुष्ठाने ज्येष्ठया विना मध्यमा कनिष्ठा च न योक्तव्ये, किन्तु ज्येष्ठया कनीयस्यो विनियोक्तव्याः। तथाच बौधायनः,— "एकैकामेव सन्नाह्य देकैकां गार्हपत्यमीक्षयेत् एकैकामाज्यमवेक्षयेत्" — इत्यादि। कात्यायनः, —

"नैकयाऽपि विना कार्य्यमाधानं भार्य्यया द्विजैः।
अकृतं तद्विजानीयात् सर्वानान्वारभन्ति यत्"— इति।

यद्यस्मात् सर्वानारभन्ते तस्मादेकया कृतमप्यकृतमेव। केचिदत्र 'ज्येष्ठया न विनेतराः'— इति वचनमन्यथा व्याचक्षते; ज्येष्ठैव सहधर्म्मचारिणी नेतराः, — इति। उदाहरन्ति च तत्र

विष्णुवचनम्,—

"अग्निहोत्रादि-यज्ञेषु न द्वितीया सहाचरेत्।
अन्यथा निष्फलं तस्य स्विष्टैः क्रतुशतैरपि" — इति।

एतद्व्याख्यानं वौधयन-कात्यायन-वचन-विरोधान्नादरणीयम्। विष्णुवचनन्त्वसवर्ण-द्वितीया-विषयम्, सत्स्वग्निषु या परिणीता तद्विषयं वा। नष्टेष्वग्निषु पुनराधाने तस्या अपि कर्त्तृत्वादग्निहोत्रादिषु सहाधिकारः। तत्रैव विशेषमाह कात्यायनः,—

"अग्निहोत्रादिशुश्रूषां वहुभार्य्यः सवर्णया।
कारयेत्तद्वहुत्वे च ज्येष्ठया गार्हिता न चेत्॥
तथावीर-सुवामासामाज्ञासम्पादिनी च या।
दक्षा प्रियम्वदा शुद्धा तामत्र विनियोजयेत्॥
दिन-क्रमेण वा कर्म्म यथा ज्यैष्ठमशक्तितः।
विभज्य सह वा कुर्य्युर्द्द यथाज्ञानमशक्तितः" — इति।

यदि ज्येष्ठा न गर्हिता, तदा तया कारयेत्। गर्हिता चेत्, कनिष्ठया वीरसुवा कारयेत्। वीरसुवोपिवहुश्चेत्, तासामपि मध्ये आज्ञा-सम्पादनादि-गुण-युक्तां विनियोजयेत्। प्रतिदिनमेका कर्त्तुमशक्ता चेत्, तदादिन-क्रमेण यथाज्येष्ठं कारयेत्। एकस्मिन्नपि दिने यद्येका कृत्स्नं कर्त्तुमशक्ता, तदा सर्वास्तत् कर्म्म यथाज्ञानं विभज्य कुर्य्युः। यत्तु कात्यायनेनैवोक्तम्,—

"प्रथमा धर्म्मपत्नी स्याद्द द्वितीया रतिवर्द्धिनी।
दृष्टमेव फलं तत्र नादृष्टमुपपद्यते" — इति।

तद्विष्णु-वचनेन समानार्थम्।

इत्थं सविशेषो विवाहो निरूपितः।

अथ सवर्णासवर्णा-विवाह-प्रसङ्गेन वृद्धव्यवहारोपयोगिसंज्ञा-प्रतिपत्त्यर्थं जाति-भेदो निरूप्यते ।

तत्र याज्ञवल्क्यः, —

"सवर्णेभ्यः सवर्णासु जायन्ते हि सजातयः ।
अनिन्द्येषु विवाहेषु पुत्राः सन्तानवर्द्धनाः" — इति ।

सजातयो मातापितृ-समान-जातीयाः । मनुरपि, —

"सर्व्ववर्णेषु तुल्यासु पत्नीष्वक्षत-योनिषु ।
आनुलोम्येन सम्भूता जात्या ज्ञेयास्तएव ते" — इति ॥

ब्राह्मण-दम्पतीभ्यामुत्पन्नो जात्या ब्राह्मणो भवेत् । एव क्षत्रियादिष्वपि । देवलोऽपि, —

"ब्राह्मण्यां ब्राह्मणाज्जातः संस्कृतो ब्राह्मणो भवेत् ।
एवं क्षत्रिय-विट्-शूद्रा ज्ञेयाः स्वेभ्यः स्वयोनिजाः" - इति ।

असवर्णास्वनुलोमजानाह मनुः, —

"स्त्रीष्वनन्तर-जातासु द्विजैरुत्पादितान् सुतान् ।
सदृशानेव तानाहुर्मातृदोषविगर्हितान्" — इति ।

ऊढायां क्षत्रियायां ब्राह्मणादुपपन्नो ब्राह्मण-सदृशो न तु मुख्य ब्राह्मणः हीनजातीय-मातृ-संवन्धात् । एवमन्यत्रापि । ते चानुलोम-जाभूर्द्धा-वसिक्तादिजातिभेदेन षड्विधाः । ते च याज्ञवल्क्येन दर्शिताः,—

"विप्रान् मूर्द्धावसिक्तो हि क्षतियायां विशःस्त्रियाम् ।
अम्बष्ठः शूद्र्यां निषादो जातः पारशवोऽपिवा ॥
* वैश्याशूद्र्योस्तुराजन्यान्माहिष्योग्रौसुतौस्मृतौ ।
वैश्यात्तुकरणः शूद्र्यां विन्नास्वेषविधिःस्मृतः" — इति ।

* व्यत्र, 'नारदोऽपि' — इत्यधिकः पाठः मु० पुस्तके ।

तत्र व्राह्मणाज्जातास्त्रयः क्षत्त्रियात्द्वौ, वैश्यादेकः। तदुक्तं मनुना,—

"विप्रस्य त्रिषु वर्णेषु नृपतेर्वर्णयोर्द्वयोः।

वैश्यस्य वर्णएकस्मिन् षड़ेतेऽपशदाःस्मृताः" — इति।

मुख्य-पितृ-जात्यभावात् अपशदाः। ननु, मूर्द्धावसक्तत्वादीनि न जात्यन्तराणि, अनुलोमजानां मातृजातीयत्वात्। तदाह विष्णुः,— "समान-वर्णासुपुत्राः समान-वर्णाभवन्ति, अनुलोमजास्तु मातृसवर्णाः* प्रतिलोमजास्त्वार्य्य-विगर्हिताः" — इति। शङ्खोऽपि, —

"क्षत्रियायां व्राह्मणेनोत्पन्नः क्षत्रिय एव भवति, क्षत्रिया —

द्वैश्यायां वैश्यएव भवति, वैश्येन शूद्रयां शूद्रएव भवति"।

नैषदोषः। अनयोर्व्वचनयोर्मातृजात्युदित-धर्म्म प्राप्त्यर्थत्वात। अन्यथा, वीजोत्कर्षवैयर्थ्यापत्तेः। यथा क्षेत्रापकर्ष उत्कृष्ट-जाति-निवारकः एवं वीजोत्कर्षोऽपनिकृष्ट-जातिं कुतो न निवारयेत्। तस्मात्, जात्यन्तराण्येव मूर्द्धावसिक्तत्वादीनि। ननु, देवलेनानु-लोम-जातयोऽन्यथा वर्णिताः ;

"व्राह्मणात् क्षत्रियायान्तु सवर्णोनाम जायते।

क्षत्रियाच्चैव वैश्यायां जातोऽम्वष्ठ इति स्मृतः" — इति।

नायं दोषं। एकस्यामेव जातौ मूर्द्धावसिक्त-सवर्ण-संज्ञयोविकल्पेन प्रवृत्तत्वात्। एवमम्बष्ठादिष्वपि। न चैकत्र संज्ञाविकल्पे दृष्टान्ता-भावः शङ्कनीयः, एकत्र निषाद-पारशव-सज्ञा-विकल्पस्य मनु-देवल

---

* अनुलोमासु मातृषु मातृवर्णाः, — इति स० पुस्तके पाठः।

याज्ञवल्क्यैरुदाहृतत्वात्। प्रतिलोमजास्तु मनुना दर्शिताः, —

"क्षत्रियाद्विप्र-कन्यायां सूतो भवति जातितः।
वैश्यान्मागधवैदेहौ राजविप्राङ्गना-सुतौ।
शूद्रादायोगवः क्षत्ता चण्डालश्चाधमो नृणाम्।
वैश्य-राजन्य-विप्रासु जायन्ते वर्णसङ्कराः॥
आयोगवश्च क्षत्ता च चण्डालश्चाधमो नृणाम्।
प्रातिलोम्येन जायन्ते शूद्रादपशदास्त्रयः।
वैश्यान्मागधवैदेहौ क्षत्रियात् सूत एव च।
प्रतीपमेते जायन्ते परेऽप्यपशदास्त्रयः" — इति।*

देवलोऽपि, —

"शूद्रादायोगवः क्षत्ता चण्डालः प्रतिलोमजाः।
वैश्यायां क्षत्रियाञ्च ब्राह्मण्याञ्च यथाक्रमम्॥
तथैव मागधो वैश्याज्जातो वैदेहकस्तथा।
ब्राह्मण्यां क्षत्रियाज्जातः सूतो जात्या न कर्म्मणा" — इति।

याज्ञवल्क्योऽपि, —

"ब्राह्मण्यां क्षत्रियात् सूतोवैश्याद्व वैदेहकस्तथा।
शूद्राज्जातस्तु चण्डालः सर्व-धर्म्म-वहिष्कृतः॥
क्षत्रिया मागधं वैश्यात् शूद्रात् क्षत्तारमेवच।
शूद्रादायोगवं वैश्या जनयामास वै सुतम्" — इति।

वर्णानामनुलोमजानां प्रतिलोमजानाञ्च परस्पर-साङ्कर्य्येणोत्पन्नाः श्वपाकपुल्कसा† कुक्कुटादयो जातिविशेषास्त्वनेकविधाः ते च

---

* श्लोकोऽयं मुद्रित पुस्तके नास्ति।

† पुक्कश इत्यन्यत्र पाठः।

तद्वृत्तयश्च१ पुराणसारे प्रपञ्चिताः। तेषु च जाति-विशेषेषूत्त-माधम-भावं विविनक्ति देवलः, —

"तेषां सवर्णजाः श्रेष्ठास्तेभ्योऽन्वगनुलोमजाः।
अन्तरालावहिर्वर्णाः पतिताः प्रतिलोमजाः" — इति।

विजातीयान्मिथुनादुत्पन्ना अन्तरालाः। ते च द्विविधाः, अनुलोमजाः, प्रतिलोमजाश्च। तत्रानुलोमजाः सवर्णजेभ्यो हीना — अपि न वर्णवाह्याः, मातृसमानवर्णत्वात्। प्रतिलोमजास्तु वर्णवाह्यत्वात् पतिता अधमाः। याज्ञवल्क्योऽपि, —

"असत्सन्तस्तु विज्ञेयाः प्रतिलोमानुलोमजाः" — इति।

क्वचिदधमजातेरप्युत्तमजाति-प्राप्तिर्भवति। तदाह स एव, —

"जात्युत्कर्षो युगे ज्ञेयः सप्तमे पञ्चमेऽपिवा" — इति।

कूटस्थ-स्त्रीपुंस-युगमारभ्य परिगणनायां पञ्चमे षष्ठे सप्तमे वाऽनुलोमेन युग्मे जातिरुत्कृष्यते। तद्यथा। पुमान् विप्रः, वधूः शूद्रा, तयोर्य्युग्मं कूटस्थं, तस्मादुत्पन्ना निषादी साऽपि विप्रेणोढ़ा तयोर्य्युग्मं द्वितीयं, एवं तदुत्पन्नायां वध्वां विप्रेणोढ़ायां तृतीयादि-युग्म-परम्परा भवति, तत्र सप्तमे युग्मे जातमपत्यं ब्राह्मण्योपेतं भवति। एवं वैश्या-विप्र-युगलं कूटस्थं युग्म, तस्मादुत्पन्नाऽम्वष्ठा, तस्याश्च विप्रस्य च युग्मं द्वितीयं, इवं तदुत्पन्नायां विप्रेणोढ़ायां षष्ठं यद्र युग्मं, तस्मादुत्पन्नस्य ब्राह्मण्यं भवति। तथा क्षत्रिया-विप्रयोर्य्युग्मं कूटस्थं, तदुत्पन्ना मूर्द्धावसिक्ता, तस्याश्च विप्रस्य च युग्मं द्वितीयं, तत्परम्मरायां पञ्चमाद्युग्मादुत्पन्नस्य ब्राह्मण्यं भवति। एतदुक्त भवति। पञ्चमे षष्ठे सप्तमे वेति

१ तदुत्पन्नाश्च, — इति ख० पुस्तके पाठः।

व्यवस्थित-विकल्पः । कूटस्थयोर्दम्पत्योः समनन्तरैकान्तर-द्व्यन्तर-जाति-योगे पञ्चमादयोऽवगन्तव्याः, — इति । तथाच सति, शूद्रा-वैश्ययोर्वैश्याक्षत्त्रिययोश्च समनन्तरत्वात् पञ्चमे, शूद्रा-क्षत्त्रिययोः षष्ठे, जातिरुत्कृष्यते । क्वचिदुत्तम-जातेरप्यधम-जाति-प्राप्तिर्भवति । तदाह सएव, —

"व्यत्यये कर्म्मणां साम्यं पूर्व्ववच्चाधरोत्तरम्" — इति ।

विप्रादीनांचतुर्णां वर्णानां मुख्यवृत्तितया विहितानि याजन — पालन-पशुपाल्य-द्विजशुश्रूषाऽऽदीनि यानि कर्म्माणि, तेषामापदि व्यत्यये विपर्य्यासे सति, यदि निवृत्तायामप्यापदि तामधम-वृत्तिं न परित्यजेत्; तथा पुत्रपौत्रादयोऽपि तां न परित्यजेयुः, तदानीं पूर्व्ववत् पञ्चम-षष्ठ-सप्तमेषु युग्मेषु जातमपत्यं तद्वृत्त्युचित-जाति-साम्यं प्रतिपद्यते, — इति । तद्यथा । ब्राह्मणः शूद्र-वृत्त्या जीवन् यदि पुत्रमुत्पादयति, सोऽपि तथैव, — इत्येवं परम्परायां सप्तमादुत्पन्नस्य शूद्रत्वं भवति । एवं क्षत्त्रियः शूद्र-वृत्त्या जीवन् षष्ठे युग्मे शूद्रं जनयति । वैश्यस्तु पञ्चमे युग्मे, — इति द्रष्टव्यम् । पूर्व्ववदित्यादेरयमर्थः । अधरोत्तरमिति भावप्रधानो निर्द्देशः । यथा वर्ण-साङ्कर्य्ये प्रातिलोम्यमधम, आनुलोम्यमुत्तमं, तथा वृत्ति-सांकर्य्येऽपि । तद्यथा । क्षत्त्रियस्यापद्यपि याजनादि-ब्राह्मण-वृत्त्युपजीवनमधमम् । "न तु कदाचिज्ज्यायसीम्" — इति वसिष्टेन निषिद्धत्वात् । पाशुपाल्यादि-वैश्य-वृत्त्युपजीवनमुत्तमम् । "अजीवन्तः स्वधर्म्मेणानन्तरां पापीयसीं वृत्तिमातिष्ठेरन्" — इति वसिष्ठेनापदि विधानादिति । पूर्व्ववच्चाधरोत्तरमित्यस्यापराव्याख्या । त्रिविधोहि सङ्करः वर्ण-सङ्करः सङ्कीर्ण-सङ्करो वर्णसङ्कीर्ण-सङ्करश्चेति । तद्यथा । उत्तमाधम-वर्ण्ययोर्दाम्पत्यं वर्णः-सङ्करः । तज्जन्ययो-र्माहिष्य-करिण्योर्दाम्पत्यं-संकीर्ण-सङ्करः । वर्ण-सङ्कीर्णयोर्दाम्पत्यं

वर्ण-सङ्कीर्ण-सङ्करः। तत्र "विप्रान्मूर्द्धावसिक्तः, — इत्यानुलोम्येन वर्ण-सङ्करजा दर्शिताः। ब्राह्मण्यां क्षत्रियात् सूतः" — इति प्रातिलोम्येन वर्ण-सङ्करजा दर्शिताः।

"माहिष्येण करण्यान्तु रथकारः प्रजायते"।

इति सङ्कीर्ण-सङ्करजा दर्शिताः। इदानीमधरोत्तरमित्यनेन वर्णसङ्कीर्ण-सङ्करजाः प्रदर्श्यन्ते। अधरे प्रतिलोमजाः। उत्तरे अनुलोमजाः। तद्यथा। मूर्द्धावसिक्तायां सङ्कीर्णायामुत्तमायां क्षत्रिय-वैश्य-शूद्रैरधमैरुत्पादिताः अधरे, निषाद्यां सङ्कीर्णायां अधमायां ब्राह्मण-क्षत्रिय-वैश्यैरुत्तमैर्वर्णैरुत्पादिताउत्तरे, अधरे चोत्तरे च अधरोत्तरम्। पूर्व्ववदिति पदेन 'असत् सन्तश्च विज्ञेयाः' — इति वचनार्थोऽतिदिश्यते। यथापूर्व्ववर्णैरुत्पादिता* वर्ण-सङ्करजाः सङ्कीर्णसङ्करजाश्च प्रतिलोमजा असन्तः अनुलोमजाश्च सन्तः, तथा वर्ण-सङ्कीर्ण-सङ्करजा अपि अनुलोमजाः सन्त प्रतिलोमजास्त्वसन्तः, — इति द्रष्टव्यम्। उक्तत्रैविध्ये वर्णसङ्करं वर्ण-सङ्कीर्ण-सङ्करं-वाऽऽश्रित्योत्पाद्यमानाः वर्णाभासाः षष्टिर्भवन्ति, संकीर्ण-सङ्करमाश्रित्योत्पद्यमाना जात्याभासा-अनन्ताः। तदुक्तं स्मृत्यन्तरे, —

"प्रातिलोम्यानुम्येन वर्णैस्तज्जैश्च वर्णतः।
षष्टिर्वाऽन्ये प्रजायन्ते तत्प्रसूतेस्त्वनन्तता" — इति।

प्रतिलोमानुलोमाभ्यां वर्णैरुत्पादिता द्वादश। षडनुलोमवर्णजाः, सूत-वैदेह-चण्डाल-मागध-क्षत्रायोगवाः प्रतिलोम-वर्णजाः, इत्थं द्वादशभिर्वर्णैः संवन्धादुत्पादिता अष्टचत्वारिंशत्। एवं षष्टिसंख्ययोपलक्षिताः अन्य वर्णाभासा जायन्ते। तद्यथा, मूर्द्धावसिक्ताम्वष्ठ-निषाद-माहिष्योग्रकरणाः षडनुलोमवर्णजाः। सूत-वैदेह चण्डाल-मागध-

---

* यथावर्णेण, — इति मु० पुस्तके पाठः।

क्षत्तायोगवाः प्रतिलोमवर्णजाः। इत्थं द्वादश। तत्र मूर्द्धावसिक्ते-नानुलोमेन क्षत्रिया-वैश्या-शूद्रासूत्पादितास्त्रयः, प्रातिलोम्येन ब्राह्मण्यामेकः; अम्बष्ठस्यानुलोम्येन द्वौ, प्रातिलोम्येन द्वौः निषाद-स्यानुलोम्येनैकः प्रतिलोम्येन त्रयः; माहिष्यस्यानुलोम्येन द्वौ, प्रातिलोम्येन द्वौ; उग्रस्यानुलोम्येनैकः, प्रातिलोम्येन त्रय; करणस्यानुलोम्येनैकः, प्रातिलोम्येन त्रयः, — इति पूर्व्वषट्कोत्पा-दिताश्चतुर्विंशतिः। एवं सूतादीनां षणां वर्णानामेकैकस्य चतुर्षु वर्णेष्वेकैकः, — इति, तेऽपि चतुर्विंशतिः। एव मिलित्वा षष्टिः सम्पद्यते। तेभ्यः संख्याकेभ्यः उत्पादितैः अपत्यैराभासानां संख्याया आनन्त्यं भवति। समाप्ता प्रासङ्गिकी जाती-भेद-कथा। विवाहानन्तर-भाविनः प्राकृताः पञ्चमहायज्ञादयः सोमसंस्थाऽन्ताः संस्कारा आह्निक-वचने षट्कर्म्मवचने च निरूपिताः, — इति नात्र पुनरुच्यन्ते।

अथावशिष्टाः गृहस्थधर्म्मा निरूप्यन्ते।

तत्रोपाकर्म्म-विधिमाह याज्ञवल्क्यः, —

"अध्यायानामुपाकर्म्म श्रावण्यां श्रवणेन वा।
हस्तेनौषधिभावे वा पञ्चम्यां श्रावणस्य तु" — इति।

'अधीयन्ते' — इत्यध्याया वेदाः। तेषामुपाकर्म्म प्रारम्भः श्रावण-मासस्य पौर्णमास्यां, अन्यस्यां वा श्रवण-नक्षत्रयुक्तायां तिथौ, हस्त नक्षत्र-युक्तायां श्रावणमासस्य पञ्चम्यां वा कर्त्तव्यः। यदा तु श्रावणमासे ओषधयो न प्रादुर्भवन्ति, तदा भाद्रपदे मासे प्रोक्त-तिथिषु कुर्य्यात्। तदाह वसिष्ठः। "अथातः स्वाध्यायोपाकर्म्म श्रावण्यां पौर्णमास्यां प्रौष्ठपद्यां वा" — इति। मनुरपि, —

"श्रावण्यां प्रौष्ठपद्यां वाऽप्युपाकृत्य यथाविधि।
युक्तश्छन्दांस्यधीयीत मासान् विप्रोऽर्द्ध पञ्चमान्" — इति।

अर्द्ध पञ्चमं येषां ते तथा, सार्द्धान् चतुरो मासानित्यर्थः। यदा पुनः श्रावण्यां पौष्ठपद्यां वा शुक्रास्तमयादि—प्रतिवन्धः, तदानीमाषाढ्यां कर्त्तव्यम्। तदुक्तं कूर्मपुराणे, —

"श्रावणस्य तु मासस्य पौर्णमांस्यां द्विजोत्तमाः।
आषाढ्यां पौष्ठपद्यां वा वेदोपाकरणं स्मृतम्" — इति।

वौधायनोऽपि। "श्रावणपौर्णमास्यामाषाढ्यां वोपाकृत्य तैष्यां माघ्यां वोऽसृजेत्" — इति। तेषु त्रिष्वपि मासेषु पूर्णिमा-श्रवण-हस्ताः शाखा-भेदेन व्यवस्थिताः। तदाह गोभिलः, —

"पर्व्वण्यौदयिके कुर्य्युः श्रावण्यां तैतिरीयकाः।
वह्वृचाः श्रवणे कुर्य्युर्ग्रह-संक्रान्ति-वर्जिते" — इति।

अत्र, औदयिके, — इति पर्व्वादिषु सर्व्वत्र संवद्धयते। पर्वणि औदयिकत्वे विशेषमाह सएव, —

"श्रावणी पौर्णमासी तु सङ्गवात्परतोयदि।
तदा त्वौदयिकी ग्राह्या नान्यथौदयिकी भवेत्" — इति।

श्रवणस्य त्वौदयिकत्वमन्वय-व्यातिरेकाभ्यां व्यासेन दर्शितम्, —

"श्रवणेन तु यत्कर्म्म ह्युत्तराषाढ़-संयुते।
संवत्सर-कृतोऽध्यायस्तत्क्षणादेव नश्यति।
धनिष्ठा-संयुते कुर्य्याच्छ्रावणं कर्म्म यद्भवेत्।
तत् कर्म्म सफलं ज्ञेयमुपाकरण-संज्ञितम्" — इति।

श्रवणे यत् कर्म्म विहितं, तदुत्तराषाढ़-संयुते न कुर्य्यात्, यदि कुर्य्यात् तदा नश्यतीति योजनीयम्। ग्रह-संक्रान्ति-वर्ज्जिते, — इति यदुक्तं, तत्र विशेषमाह गार्ग्यः, —

"अर्द्धरात्रादधस्ताच्चेत् संक्रान्तिर्ग्रहणं तथा।
उपाकर्म न कुर्वीत परतश्चेन्न दोषकृत्॥

यत्रार्द्धरात्रादर्वाक् चेद्ग्रहः संक्रम एव वा।
नोपाकर्म तदा कुर्यात् श्रावण्यां श्रवणेऽपि च ॥"— इति।

कर्कटे मासे नोपाकर्म कर्त्तव्यं। तथा च स्मृत्यन्तरे, —

"वेदोपाकरणे प्राप्ते कुलीरे संस्थिते रवौ।
उपाकर्म न कर्त्तव्यं कर्तव्य सिंह-संयुते ॥" — इति।

तदेतद्देशान्तर-विषयम्। तथा च स्मृत्यन्तरम्,—

"नर्मदोत्तरभागे तु कर्त्तव्यं सिंह-संयुते।
कर्कटे संस्थिते भानावुपाकुर्यात् तु दक्षिणे* ॥"

ननु उपाकरणं ब्रह्मचारि-धर्मः, "उपाकृत्याधीयीत" — इति तस्य ग्रहणाध्यायनाङ्गत्व-प्रतीतेः। ग्रहणाध्ययनञ्च ब्रह्मचारिण एव, "वेदमधीत्य स्नायात्" — इति स्नानात् प्राचीनत्वावगमात्। अतः, कथमिदं गृहस्थधर्मत्वेनोच्यते। नायं दोषः। गृहस्थस्यापि ग्रहणाध्ययनेऽधिकार-सम्भवात्। अतएव "अधीयीत" — इत्यनुवृत्तौ ब्रह्मचारिकल्पेन, यथान्यायमितरे जायोपेता इयेके" — इति।

अस्यार्थः। येन नियमविशेषेण युक्तो ब्रह्मचारी अधीते, तेनैव नियमेन समावृत्तोऽप्यधीयीत। समावृत्तादितरे ब्रह्मचारिणस्तु यथान्यायं स्वविध्युक्त-प्रकारेणाधीयीरन्। तथा, जायोपेतो गृहस्थोऽपि ब्रह्मचारिवन्नियमोपेतोऽधीयीतेति। न च समावृत्त-गृहस्थयोर्ग्रहणाध्ययनाधिकारे "वेदमधीत्य स्नायात्" — इति विरुद्ध्येतेति शङ्कनीयम्। तस्य वचनस्य विद्यास्नातक-विषयत्वात्। अतएव,—

"वेदं व्रतानि वा पारं नीत्वा ह्युभयमेव वा" — इति।

---

* तदेतत्, — इत्यादि दक्षिणे, — इत्यन्तं नास्ति मु० पुस्तके।

पक्षद्वयोपन्यासो दर्शितः। उपाकरणस्य गृहस्थधर्मत्वाभ्युपगमे मनु-याज्ञवल्क्य-स्मृत्योर्गृहस्थ-धर्म-प्रकरण-पाठोऽप्यनुगृहीतो भवति। उपाकरणस्येतिकर्त्तव्यता कार्ष्णाजिनिना दर्शिता, —

"उपाकर्मणि चोतसर्गे यथाकालं समेत्य च।
ऋषीन् दर्भमयान् कृत्वा पूजयेत् तर्पयेत्ततः", — इति।

बौधायनोऽपि, —

"गौतमादीनृषीन् सप्त कृत्वा दर्भमयान् पुनः।
पूजयित्वा यथाशक्ति तर्पयेद्व् वंशमुद्धरन्" — इति।

अथोत्सर्ज्जनम्।

तत्र याज्ञवल्क्यः, —

"पौषमासस्य रोहिण्यामष्टकायामयापि वा।
जलान्ते छन्दसां कुर्यादुत्सर्गं विधिवद्बहिः॥" — इति।

मनुरपि, —

"पुष्ये तु चन्दसां कुर्याद्बहिरुत्सर्जनं द्विजः।
माघशुक्लस्य वा प्राप्ते पूर्वाह्ने प्रथमेऽहनि" — इति।

यदा श्रावण्यामुपाकर्म, तदा पुष्यमासस्य शुक्लप्रतिपदि पूर्वाह्ने, यदि पौष्ठपद्यामुपाकर्म, तदा माघस्येति व्यवस्थितोऽयं विकल्पः। उत्सृष्टस्यापि पुनरध्ययनं प्रागुपाकरणात् काल-विशेषे विदधाति मनुः,

"अतः परन्तु छन्दांसि शुक्लेषु नियतः पठेत्।
अङ्गानि च रहस्यञ्च* कृष्णपक्षेषु वै पठेत्" — इति।

---

* वेदाङ्गानि रहस्यं च, — इति मु० पुस्तके पाठः।

कूर्म्मपुराणेऽपि, —

"छन्दांस्यूर्द्ध्वमतोऽभ्यस्येत् शुक्लपक्षेषु वै द्विजः ।
वेदाङ्गानि पुराणानि कृष्णपक्षेषु मानवः*" – इति ॥

यदि भावि-विघ्न भयात् सहसाऽध्येतव्यमिति बुद्धिः, तदा संवत्सरान्ते प्रागुपाकरणादुत्सृजेत । "यत् स्वाध्यायमधीतेऽब्दम्†" – इति श्रुतेः । उपाकरणोत्सर्ज्जने प्रशंसति कात्यायनः, —

"प्रत्यब्दं यदुपाकर्म सोत्सर्गं विधिवद्द्विजैः ।
क्रियते छन्दसां तेन पुनराप्यायनं भवेत् ।
अयातयामैश्छन्दोभिर्यत् कर्म्म क्रियते द्विजैः ।
क्रीड़मानैरपि सदा तत्तेषां सिद्धि-कारकम्" – इति ।

अन्येऽपि धर्म्माः कूर्म्मपुराणे दर्शिताः, —

"नाधार्म्मिकैर्वृते ग्रामे न व्याधि-वहुले भृशम् ।
न शूद्र-राज्ये निवसेन्न पाषण्डि-जनैर्वृते ।
हिमवद्विन्ध्ययोर्मध्यं पूर्वपश्चिमयोः शुभम् ।
मुक्त्वा समुद्रयोर्देशं नान्यत्र निवसेत् द्विजः ।
कृष्णो वा यत्र चरति मृगो नित्य स्वभावतः ।
पुण्यश्च षिश्रुता नद्यस्तत्र वा निवसेद्द्विजः ।
परस्त्रियं न भाषेत नायाज्यं याजयेद्बुधः ।
न देवायतनं गच्छेत् कदाचिच्चाप्रदक्षिणम् ।
न वीजयेद्वा वस्त्रेण समवायञ्च वर्ज्जयेत् ।
नैकोध्वानं प्रपद्येत नाधार्म्मिक-जनैः सह ।
न निन्द्येद्योगिनः सिद्धान् व्रतिनोवा यतींस्तथा" — इति ।

---

* वैद्विजः, — इति मु० पुस्तके पाठः ।

† मधीयीत, — इति मु० पुस्तके पाठः ।

मनुरपि, —

"देवतानां गुरोराज्ञः स्नातकाचार्य्ययो स्तया।
नाक्रामेत् कामतश्छायां वभ्रुणो दीक्षितस्य च।
क्षत्रियञ्चैव सर्वञ्च ब्राह्मणञ्च वहुश्रुतम्।
नावमन्येत वै भूष्णुः कृशानपि कदाचन।
आमृत्योः श्रियमन्विच्छेन्नैनां मन्येत दुर्लभाम्।
सत्यं बूयात् प्रियं ब्रूयात् न ब्रूयात् सत्यमाप्रियम्।
प्रियञ्च नानृतं ब्रूयादेष धर्म्मः सनातनः।
नातिकल्यं नातिसायं नातिमध्यं गते रवौ।
नाज्ञातेन समं गच्छेन्नैको न वृषलैः सह।
हीनाङ्गानतिरिक्ताङ्गान् विद्याहीनान् वयोऽधिकान्।
रूप-द्रविण-हीनांश्च* जाति-हीनांश्च नाक्षिपेत्।
वैरिणं नोपसेवेत सहायञ्चैव वैरिणः।
अधार्म्मिकं तस्करञ्च परस्यैव तु योषितम्" — इति।

मार्कण्डेयोऽपि, —

"असदालापमनृतं वाक्पारुष्यं विवर्ज्जयेत्।
असच्छास्त्रमसद्वादमसत्सेवाञ्च पुत्रक।
न म्लेच्छ-भाषां शिक्षेत न पश्येदात्मनः शकृत्।
नाधितिष्टेच्छकृन्मूत्रं केश भस्म-कपालिकाः।
तुषाङ्गारास्थिशीर्षाणि रज्जु-वस्त्रादिकानि च।
वर्ज्जयेन्मार्ज्जनी-रेणुं नापेयञ्च पिवेद्विजः"।

---

* रूपद्रविणसम्पन्नान्, — इति मु० पुस्तके पाठः।

सामान्येन च धर्म्मं संक्षिप्याह मनुः, —

"येनास्य पितरो याताः येन याताः पितामहाः।
तेन यायात् सतां मार्गं तेन गच्छन्न रिष्यति*।
यत् कर्म्म कुर्व्वतोऽप्यस्य परितोषोऽन्तरात्मनः।
तत् प्रयत्नेन कुर्व्वीत विपरीतन्तु वर्जयेत्" — इति।

इत्य ब्रह्मचारि-गृहस्थाश्रम-धर्म्मौ निरूपितौ।

अथ वानप्रस्थाश्रमौ निरूप्यते।

ननु, केचिद्गार्हस्थ्य-व्यतिरिक्तमाश्रमान्तरं नेच्छन्ति, उदाहरन्ति च तत्र गौतमस्मृतिम्। "एकाश्रम्यन्त्वाचार्य्याः प्रत्यक्ष-विधानाद्गार्हस्थ्यस्येति आचार्य्यास्तु गार्हस्थ्यमेक एवाश्रमो नान्यः कश्चिदस्तीति मन्यन्ते; हेतुं चाचक्षते, गार्हस्थस्य प्रत्यक्ष-श्रुतिषु विधानादितरस्य तदभावात्, — इति। तथाहि। वह्वृचाः, 'अग्निमीले', — इत्यारभ्य मन्त्र-ब्राह्मणात्मके कृत्स्नेऽपि वेदे होतृ-कर्त्तव्यमेवामनन्ति। यजुर्वेदिनश्च, 'इषे त्वा' — इत्यादिना अध्वर्य्यु-कर्त्तव्यम्। सामगा अपि, 'अग्न आयाहि' — इत्यादिनोद्गातृ कर्त्तव्यम्। होत्रादयश्च गृहस्था एव। तथाचाधीयमानेषु प्रत्यक्ष-वेदेषु गृहस्थ-कर्त्तव्याभिधानेन तदाश्रमविधिः परिकल्प्यते, न त्वेवमितराश्रम विधि-कल्पकं किञ्चित् † पश्यामः। अतएव, "याज्जीवमग्निहोत्रं जुहोति" — इति श्रुतिः कृत्स्नं पुरुषायुषं गृहि-कर्म्मस्वेव विनियुङ्क्ते। श्रुत्यन्तरञ्च "एतद्वै जरा-मर्य्यं सत्रं यदग्निहोत्रं, जरया वा ह्येवास्मान्मुच्यते मृत्युना वा" — इति। न चैवं सति कथं ब्रह्मचर्य्याश्रमाङ्गीकारः, — इति शङ्कनीयम्।

---

* दुष्यति, — इति मु० पुस्तके पाठः।

† विधिं कञ्चित्, — इति स० सो० पुस्तकयो पाठः।

नैष्ठिकस्य पक्ष-कोटि-निःक्षिप्तत्वादुपकुर्व्वाणकस्य प्रतिपत्तृत्वेन-† आश्रमित्वाभावात्। यदा, कर्म्मित्वेनाभिमतयो ब्रह्मचारि-वनस्थयो-रीदृशी गतिः तदा, कैव कथा कृत्स्न-कर्म्म-त्यागिनो यतेः। तस्माद्, गार्हस्थ्यमेक एवाश्रमः, — इत्याचार्य्याणां पक्षः।

अत्रोच्यते। अस्ति हि चतुर्णां आश्रमाणां प्रत्यक्ष-श्रुति-विधानम्। तथाच, जावाला आमनन्ति। "ब्रह्मचर्य्यं समाप्य गृही भवेत्, गृहाद्वनी भूत्वा प्रव्रजेत्" — इति। आचार्य्यास्तु, रागिण-मभिप्रेत्य तस्योर्द्ध रेतःसु नैष्ठिक-ब्रह्मचर्य्यादिषु त्रिष्वाश्रमेष्वनधिकार मन्यमानाः, गार्ह्यस्थ्यमेव वर्णयामासुः। यत्तु कृतस्नेऽपि वेदे गृहस्थ-धर्म्मस्यैवाम्नानमित्युक्तम्। तदयुक्तम्। वानप्रस्थस्यापि सदारस्याग्निहोत्रादि-सम्भवात्। नैष्ठिक-ब्रह्मचारि-धर्म्मस्तु छन्दोगै पठ्यते। "ब्रह्मचार्य्याचार्य्यकुल-वासी तृतीयोऽत्यन्तमात्मान-माचार्य्यकुलेऽवसादयन्" — इति। उपकुर्व्वाणक-धर्म्माः सर्व्व-शाखासूपनयन-प्रकरणेषु प्रसिद्धाः। यति-धर्म्माश्चोपनिषद्भागे। अतो यावज्जीवादि-श्रुतेः कामि-विषयत्वेनाश्रमान्तराणि न तया प्रलपितुं शक्यन्ते। साधिताश्चोत्तरमीमांसायां चत्वार आश्रमाः। तस्मात्, क्रम-प्राप्तो वानप्रस्थाश्रमः प्रस्तूयते। तत्र, याज्ञवल्क्यस्तं विधत्ते, —

"सुत-विन्यस्त पत्नीकस्तया वाऽनुगतो वनम्।
वानप्रस्थो ब्रह्मचारी साग्निः सोपासनो व्रजेत्" — इति।

वानप्रस्थो वुभूषुः स्वस्य ब्रह्मचर्य्य-नियमेन पत्न्या अनपयोगात्तां रक्षणीयत्वेन पुत्रेषु निःक्षिप्य वनं व्रजेत्। यदा साऽपि नियता सती पति-शुश्रूषां कामयते, तदा तया सह वनं ब्रजेत्। तस्मिन् पक्षे

† प्रतिषिद्धत्वेन, — इति स० सो० पुस्तकयो पाठः।

वैतानिक-गृह्याभ्यामग्निभ्यां सह गच्छेत्। सुत निक्षेप-पक्षे त्वात्मनि अग्नीन् समारोप्य प्रव्रजेत्। तदाह छागलेयः, —

"अपत्नीकः समारोप्य ब्राह्मणः प्रव्रजेद गृहात्" — इति।

तादृशोऽरण्यं गत्वा वैखानस-सूत्रोक्त-मार्गेणाग्निमादध्यात्। तदाह वसिष्ठः। "वानप्रस्थो जटिलश्चीराजिनवासान फाल-कृष्टमधितिष्टे † दकृष्ट-मूल-फलं सञ्चिन्वीतोर्द्ध रेताः क्षपाशयो दद्यादेव नप्रतिगृह्णीयात् ऊर्द्धं पञ्चभ्यो मासेभ्यः श्रावणकेनाग्नि ‡ मादध्यादाहिताग्निर्वृक्षमूलिको दद्याद्र देवर्षिपितृमनुष्येभ्यः स गच्छेत् स्वर्गमानन्त्यम्" — इति। श्रावणकं तपस्वि-धर्म्म-प्रतिपादकं वैखानस-सूत्रम्। अकृष्टमूलमाहारत्वेन ब्रुवन् ग्राम्यहार-परित्यागं सूचयति। अतएव मनुः, —

"सन्त्यज्य ग्राम्यमाहारं सर्वञ्चैव परिच्छदम्।
पुत्रेषु भार्य्यां निक्षिप्य वनं गच्छेत् सहैव वा" — इति।

गृहस्थस्य वनप्रवेशावसरमाह यमः, —

"द्वितीयमायुषो भागमुषित्वा तु गृहे द्विजः।
तृतीयमायुषो भागं गृहमेधी वने वसेत्॥
उत्पाद्य धर्म्मतः पुत्रानिष्ट्वा यज्ञैश्च शक्तितः।
दृष्ट्वाऽपत्यस्य चापत्यं ब्राह्मणोऽरण्यमाविशेत्" — इति॥

अत्र, ब्राह्मण-गृहणं त्रैवर्णिकोपलक्षणार्थं, 'उषित्वा तु गृहे द्विजः, — इत्युपक्रमानुसारात्। मनुरपि, —

"गृहस्थस्तु यदा पश्येद्वलीपलितमात्मनः।
अपत्यस्यैव चापत्यं तदाऽरण्यं समाश्रयेत्" — इति।

---

† मधिगच्छे, — इति मु० पुस्तके पाठः।

‡ श्रावणमासेऽग्नि, — इति मु० पुस्तके पाठः।

शङ्खलिखितावपि, — "पुत्रानुत्पाद्य संस्कृत्य वेदमध्याप्य वृत्तिं विधाय दारैः संयोज्य गुणवति पुत्रे कुटुम्बमावेश्य कृत-प्रस्थान-लिङ्गोवृत्ति-विशेषाननुक्रमेत्, क्रमशो यायावराणां वृत्तिमुपास्य वनमाश्रयेदुत्तरायणे पूर्व्वपक्षे" — इति । एतच्चाश्रम-समुच्चय-पक्षे द्रष्टव्यम् । असमुच्चयपक्षे त्वकृत-गार्हस्त्योऽपि वानप्रस्थेऽधिक्रियते । तदाह वसिष्ठः, — "चत्वार आश्रमा ब्रह्मचारि-गृहस्थ-वानप्रस्थ-परिव्राजकाः । तेषां वेदमधीत्य वेदं विदित्वा चीर्ण-ब्रह्मचर्य्यो यमिच्छेत् तमावसेत्"—इति । आपस्तम्वोऽपि,—"चत्वार आश्रमा-गार्हस्थ्यं आचार्य्यकुलं मौनं वानप्रस्थम्"—इत्युपक्रम्य, "यत्कामयेत, तदारभेत"-इत्युपसंहरति । वन-प्रतिष्ठस्य कर्त्तव्यमाह याज्ञवल्क्यः,—

"अ-फाल-कृष्टेनाग्नींश्च पितॄन् देवतिथीनपि ।
भृत्यांश्च तर्पयेच्छ्मश्रुजटा-लोम-भृदात्मवान्" — इति ॥

अ-फाल-कृष्टं शाक-मूल-नीवारादि । तथाच मनुः, —

"मुन्यन्नैर्विविधैर्मेध्यैः शाक-मूल-फलेन वा ।
एतैरेव महायज्ञान् निर्व्वपेद्विधि-पूर्व्वकम्" — इति ।

नच, ब्रह्मचारि-विधुरयोरनग्निकयोर्वनस्थयोः कथमग्नीनां तर्पणमिति वाच्यं, वैखानस-शास्त्रोक्तस्याग्नेः सद्भावात् । नचाफालकृष्ट-नीवारादिना पुरोडाश-करणे 'व्रीहिभिर्यजेत' — इति श्रुतिर्वाध्येतेति शङ्कनीयम् । व्रीहीणामप्यफालकृष्टानां सम्भवात् । तस्मादकृष्ट-पच्यैर्व्रीह्यादिभिर्वैतानिकं कर्म्म कुर्य्यात् । तथा च मनुः,—

"वैतानिकञ्च जुहुयादग्निहोत्रं यथाविधि ।
दर्शमस्कन्दयन् पर्व्व पौर्णमास्यां प्रयोगतः ।
ऋक्षेष्टयाग्रहावणं चैव चातुर्मास्यानि चाहरेत् ।
उत्तरायणञ्च* क्रमशोदक्षस्यायनमेवच ॥

* तुरायणञ्च, —इति ख० पुस्तके पाठः ।

वासन्तैः शारदैर्मेध्यैर्मुन्यन्नैः स्वयमाहृतैः ।
पुरोडाशं चरुञ्चैव निर्वपेद्विधि-पूर्व्वकम्" — इति ॥

मेध्यैर्यज्ञार्हैर्मुन्यन्नैरकृष्ट-पच्यैरित्यर्थः । संग्राह्यद्रव्यस्येयत्तामाह याज्ञवल्क्यः, —

"अह्नो मासस्य षण्णां वा तथा संवत्सरस्य वा ।
अर्थस्य सञ्चयं कुर्य्यात् कृतमाश्वयुजे त्यजेत्" — इति ॥

एकदिन-साध्यस्य कर्म्मणो यावत् पर्य्याप्तं, तावतोऽर्थस्य सञ्चयं कुर्य्यात् । एवमेक-मास-संवत्सर-पक्षेऽपि योजनीयम् । तत्र यदि किञ्चित् सञ्चितमवशिष्येत्, तत् सर्व्वमाश्वयुज्यां त्यजेत् । यदाह विष्णुः । "मास-निचयः, संवत्सर-निचयो वा, संवत्सर-निचयात् पूर्व्वं निचयमाश्वयुज्यां जह्यात्" — इति । संत्यज्य ततो नूतनं सञ्चिनुयात् । मनुरपि, —

"त्यजेदाश्वयुजे मासे मुन्यन्नं पूर्व्व-सञ्चितम् ।
जीर्णानि* चैव वासांसि शाक-मूल-फलानि च ॥
सद्यः प्रक्षालितोवा स्यान्मास-सञ्चयिकोऽपि वा ।
षण्मास-निचयोवाऽपि समा-निचयएववा" — इति ॥

तत्र वर्ज्यानाह सएव, —

"वर्ज्जयेन्मधु-मांसानि भौमानि कवकाणि च ।
भूतृणं सिग्रकं चैव श्लेष्मातक फलानि च ॥
न फाल-कृष्टमश्नीयादुत्कृष्टमपि केनचित् ।
न ग्रामजातान्यर्हाणि पुष्पानि च फलानि च" — इति ॥

---

* चोर्णानि, — इति मु० पुस्तके पाठः ।

कवकानि चत्रकानि। तपोनियममाह याज्ञवल्क्यः, —

"दान्तस्त्रिषवण-स्नायी निवृत्तश्च प्रतिग्रहात्।
स्वाध्यायवान् दान-शीलः सर्व्व-सत्त्व-हितेरतः॥
दन्तोलूखलिकः काल-पक्वाशी वाऽश्म-कुट्टकः।
श्रौतस्मार्त्त फल-स्नेहैः कर्म्म कुर्य्यात् क्रियास्तथा॥
चन्द्रायनैर्नयेत् कालं कृच्छै र्व्वा वर्त्तयेत् सदा।
पक्षे गते चाप्यश्नीयान्मासे वाऽहनि वा गते॥
स्वपेद्भूमौ शुचौ रात्रौ दिवस प्रपदैर्नयेत्।
स्थानासनविहारैर्वा योगाभ्यासेन वा तथा॥
ग्रीष्मे पञ्चाग्नि मध्यस्थो वर्षासु स्थाण्डिलेशयः।
अर्द्र वासास्तु हेमन्ते शक्त्या वाऽपि तपश्चरेत्" — इति।

दन्ताएवोलूखलं निस्तुषीकरण साधनं, तद्र यस्यास्ति स दन्तोलूखलिकः। वाह्योलूखलादि–साधन-निरपेक्षइत्यर्थः। काल-पक्वं-बदरेङ्गुद-पनस-फलादि। अश्मनाकुट्टनमवहननं यस्य, सोऽश्मकुट्टकः। फल स्नेहोलिकुच-मधूकादि-मेध्यतर-फल-जन्मानि तैलानि। क्रिया भोजनाभ्यञ्जनादयः। विष्णुरपि। "वायु-पुष्टाशी फलाशी मूलाशी शाकाशी पर्णाशी वायु-पक्वान्नयोर्वा सकृदश्नीयात्" — इति। कूर्म्मपुरोऽपि, —

"एकपादेन तिष्ठेत मरीचीन्वा पिवेत् सदा।
पञ्चाग्नि-धूमपो वा स्यादुष्मपः सोमऽथवा॥
पयः पिवेत् शुक्लपक्षे कृष्णपक्षे च गोमयम्।
शीर्ण-पर्णाशनो वा स्यात् कृच्छैर्वा वर्त्तयेत् सदा॥
अथर्वशिरसोऽध्येता वेदान्ताभ्यास-तत्परः।
यमान् सेवेत सततं नियमांश्चाप्यतन्द्रितः॥
जितेन्द्रियो जित-क्रोधस्तत्त्वज्ञान-विचिन्तकः।
ब्रह्मचारी भवन्नित्यं न पत्नीं प्रतिसंश्रयेत्॥

यस्तु पत्न्या समं गत्वा मैथुनं कामतश्चरेत्।
तद्व्रतं तस्य लुप्येत प्रायश्चित्तीयते द्विजः॥
नक्तं वाऽन्नं समश्नीयाद्‌ दिवा वाऽऽहृत्य शक्तितः।
चतुर्थकालिको वा स्यात् स्याद्वा चाष्टमकालिकः॥
चान्द्रायण-विधानैर्वा शुक्ले कृष्णे च वर्त्तयेत्।
पक्षे पक्षे समश्नीयाद्यवागूं क्वथितां सकृत्॥
पुष्पमूल-फलैर्वाऽपि केवलैर्वर्तयेत् सदा।
स्वाभाविकैः स्वयं शीर्णैर्वैखानस-मते स्थितः" — इति॥

अग्नि-परिचर्य्यायामक्षमं प्रत्याह याज्ञवल्क्यः, —
"अग्नीनप्यात्मसात् कृत्वा वृक्षावासो मिताशनः।
वानप्रस्थो गृहेष्वेव यात्रार्थं भैक्ष्यमाचरेत्॥
ग्रामादाहृत्य वै ग्रासानष्टौ भुञ्जीत वाग्यतः" — इति॥

मनुरपि, —
"अग्नीनात्मनि वैतानात् समारोप्य यथाविधि।
अनग्निरनिकेतः स्यान्मुनिर्मूलफलाशनः॥
अप्रयत्नः सुखार्थेषु ब्रह्मचारी धराशयः।
गृहमेधिषु चान्येषु द्विजेषु वनवासिषु॥
ग्रामादाहृत्य वाऽश्नीयादष्टौ ग्रासान् वने वसन्।
प्रतिगृह्य पुटेनैव पाणिना शकलेन वा॥
एताश्चान्याश्च सेवेत दीक्षाविप्रो वने वसन्।
आसां महर्षि-चर्य्याणां त्यक्त्वाऽन्यतमया तनुम्॥
वीत शोक-भयो विप्रो ब्रह्मलोके महीयते" — इति॥

ननु, अष्ट-ग्रास-विधाने, "षोड़शारण्यवासिनः" इति वचनं विरुद्धयेत। तन्न, शक्ताशक्त-विषयत्वेन व्यवस्थोपपत्तेः। सर्वानुष्ठानासमर्थ

प्रत्याह याज्ञवल्क्यः, —

"वायुभक्षः प्रागुदीचीं गच्छेदावष्म-संक्षयात्" — इति।

कूर्म्मपुराणेऽपि, —

महाप्रस्थानिकं वाऽसौ कुर्य्यादनशनन्तु वा।
अग्निप्रवेशमन्यद्वा ब्रह्मार्पण-विधौ स्थितः॥
यस्तु सम्यगिममाश्रमं शिवं
संश्रयत्यशिव-पुञ्ज-नाशनम्।
ताप-हन्तृपदमैश्वरं परं
याति यत्र जगतोऽस्य संस्थितिः" — इति।

इत्थं वानप्रस्थाश्रमो निरूपितः।

## अथ चतुर्थाश्रमो निरूप्यते।

तत्र मनुः, —

"वनेषु तु विहृत्यैवं तृतीयं भागमायुषः।
चतुर्थमायुषोभागं त्यक्त्वा सङ्गान् परिव्रजेत्" — इति।

याज्ञवल्क्योऽपि, —

वनाद्व गृहाद्वा कृत्वेष्टिं सर्व्ववेदसदक्षिणाम्।
प्राजापत्यां तदन्ते तानग्नीनारोप्य चात्मनि॥
अधीतवेदो जपकृत् पुत्रवानन्नदोऽग्निमान्।
शक्त्या च यज्ञकृन्मोक्षे मनः कुर्य्यात्तु नान्यथा" — इति॥

आश्रम-चतुष्टय-समुच्चयमभिप्रेत्य, वनान्मोक्षे मनः कुर्य्यादित्युक्तम्। आश्रम-त्रय-समुच्चयाभिप्रायेण गृहाद्वेति पक्षान्तरोपन्यासः। ननु, अत्रापि चतुष्टय-समुच्चय एवाभिप्रेयतां, पारिव्राज्यानन्तरं वानप्रस्थस्यानुष्ठातुं शक्यत्वात्। मैवम्। ब्रह्मचर्य्यादीनां चतुर्णामाश्रमाणां

आरोहस्य प्रतिनियतत्वात्। तथा च जावला आश्रमाणामारोहमामनन्ति। "ब्रह्मचर्य्यं समाप्य गृही भवेत्, गृही भूत्वा वनी भवेत्, वनी भूत्वा प्रव्रजेत्*" — इति। न त्वेवमवरोहः क्वचिदप्याम्नातः। प्रत्युतावरोहं दक्षो निषेधति, —

"त्रयाणामानुलोम्यं स्यात् प्रातिलोम्यं न विद्यते।
प्रातिलोम्येन यो याति न † तस्मात् पापकृत्तमः
यो गृहाश्रममास्थाय ब्रह्मचारी भवेत् पुनः।
न यतिर्न वनस्थश्च स सर्वाश्रम-वर्ज्जितः" — इति॥

यदि गृही कथञ्चित् प्रत्यवरुह्य ब्रह्मचारी भवेत्, तदाऽसौ सर्वाश्रम-वहिस्कृतः। आरूढ़-पतितत्वात्। अतो न वनस्थादिभिराश्रम-वासिभिः शब्दैरभिलाप्यो भवति। अयञ्चावरोहाभाव उत्तर-मीमांसायां तृतीयाध्याये वर्णितः।

वनाद्व गृहाद्वेत्यत्र ब्रह्मचर्य्याद्व वा, — इत्यपि द्रष्टव्यम्। यदा जन्मान्तरानुष्ठित-सुकृति-परिपाक-वलात् वाल्य एव वैराग्यमुपजायते, तदानीमकृतोद्वाहो ब्रह्मचर्य्यादेव प्रव्रजेत्। तथा च जावाल श्रुतिः।

"यदि वेतरथा ब्रह्मचर्य्यादेव प्रव्रजेद्व गृहाद्वा वनाद्वा"—इति।

पूर्व्वमविरक्तं वालं प्रत्याश्रम-चतुष्टय-समुच्चयमायुर्विभागेनोपन्यस्य, विरक्तमुद्दिश्य यदि वेति पक्षान्तरोपन्यासः। इतरथेति वाल्य-एवावगत-वैराग्य इत्यर्थः। अकृतोद्वाहस्य संन्यासो नृसिंहपुराणे दर्शितः, —

"यस्यैतानि सुगुप्तानि जिह्वोपस्थोदरं शिरः
स न्यसेदकृतोद्वाहो ब्राह्मणो ब्रह्मचर्य्यवान्" — इति॥

---

* गृहाद्वनी भूत्वा प्रव्रजेत्, — इति मु० पुस्तके पाठः।

† स, — इति स० पुस्तके पाठः।

अङ्गिराअप्याह, —

"संसारमेव,* निःसारं दृष्ट्वा सार-दिदृक्षया ।
प्रव्रजत्यकृतोद्वाहः परं वैराग्यमाश्रितः ॥
प्रव्रजेद् ब्रह्मचर्य्येण प्रव्रजेच्च गृहादपि ।
वनाद्वा प्रव्रजेद्विद्वानातुरो वाऽथ दुःखितः" — इति ॥

दुःखितो व्याधितश्चौरव्याघ्राद्युपद्रुतः । आतुरो मुमूर्षुः । तत्र महाभारतम्, —

"उत्पन्ने सङ्कटे घोरे चौरव्याघ्रादि-सङ्कटे ।
भय-भीतस्य संन्यासमङ्गिरामुनिरब्रवीत् ॥
आतुराणाञ्च संन्यासे न विधिर्नैव च क्रिया ।
पैषमात्रं समुच्चार्य्य संन्यासं तत्र पूरयेत्" — इति ॥

ननु, ब्रह्मचर्य्यादेव प्रव्रज्याऽङ्गीकारे मनु-वचनानि विरुद्ध्येरन्, —

"ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत् ।
अनपाकृत्य मोक्षन्तु सेवमानो व्रजत्यधः ॥
अधीत्य विधिवद्वेदान् पुत्रानुत्पाद्य धर्मतः ।
इष्ट्वा च शक्तितो यज्ञैर्मनो मोक्षे निवेशयेत् ॥
अनधीत्य गुरोर्वेदाननुत्पाद्य तथात्मजान् ।
अनिष्ट्वा चैव यज्ञैश्च मोक्षमिच्छन् व्रजत्यधः ॥" — इति ।

ऋणत्रयं श्रुत्या दर्शितम् । "जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवान् जायते, ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः, एष वा अनृणोयः पुत्री यज्वा ब्रह्मचारी वासि" — इति । यदा स्वर्गप्रापकः पितृयाणमार्गोऽप्यृणापाकरणमन्तरेण न सम्भवति, तदा कैव कथा मोक्षमार्गे । अतएव मन्त्रवर्णः, —

"अनृणा अथोस्मिन्ननृणाः परस्मिन्
तृतोये लोके अनृणास्याम ।

* संसारमेव, — इति मु० पुस्तके पाठः ।

ये देवयाना उत पितृयाणाः
सर्वान् पथो अनृणा अक्षियेम" — इति ॥

ब्राह्मणमपि । "सर्वान् लोकान् अनृणोऽनुसञ्चरति" — इति । मैवम् । अविरक्तविषयत्वादेतेषां वचनानाम् । अतएव विरक्तस्य प्रव्रज्यायां कालविलम्बं निषेधयति जावालश्रुतिः । "यदहरेव विरजेत् तदहरेव प्रव्रजेत्" — इति ।

ननु, उक्तरीत्या ब्रह्मचर्यादिषु आश्रमेषु यथावद्धर्मानुष्ठायिनां तदाश्रमात् प्रव्रजेदिति प्रतीयते । तथा सति, स्नातक-विधुरादीनामनाश्रमिणामाश्रमिणाञ्च केषाञ्चित् केनचित् प्रतिबन्धेन विदितधर्मानुष्ठायिनां सत्यपि वैराग्ये सन्न्यासो न प्राप्नुयात् । मैवम् । तेषां प्रत्यक्ष-श्रुत्यैव तद्विधानात् । "अन्य पुनरव्रती वा व्रती वा स्नातकोत्-सन्नाग्निरनग्निको वा यदहरेव विरजेत तदहरेव प्रव्रजेत्" — इति । यमोऽपि, —

"पुनर्दारक्रियाभावे मृतभार्यः परिव्रजेत् ।
वनस्थो धूतपापो वा परं पन्थानमाश्रयेत् ॥" — इति ॥

स्नातक-विधुरादीनामन्तरालवर्त्तिनामाश्रम-निरपक्षे-जपोपवास-तीर्थयात्रादिकर्मभिश्चित्तशुद्धि-सम्भवेन मोक्षाश्रमेऽधिकारोऽस्तीति तृतीयाध्याये मीमांसितम् । धर्म-लोपेऽप्यनुतापवतस्तत्-प्रायश्चित्तत्वेन संन्यासः सम्भवति । तथा च स्मृत्यन्तरम्, —

"ये च सन्तानजादोषा ये च स्युः कर्म-सम्भवाः ।
संन्यासस्तान् दहेत् सर्वांस्तुषाग्निरिव काञ्चनम् ॥—इति ॥

मनुरपि, —

"मृत्तोयैः शुद्ध्यते शोध्यं नदी वेगेन शुद्ध्यति ।
रजसा स्त्री मनोदुष्टा संन्यासेन द्विजोत्तमः" ॥ — इति ॥

अत्र केचित्, ब्राह्मणस्यैव संन्यासाधिकारो न क्षत्रिय-वैश्ययोः, — इत्याहुः। उदाहरन्ति च श्रुति-स्मृती। तत्र वाजसनेयक-ब्राह्मणम्। "एतं वै तमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यञ्चरन्ति" — इति। मनुरप्युपक्रमोपसंहारयोर्ब्राह्मणशब्दं प्रयुङ्क्ते, —

"आत्मन्यग्नीन् समारोप्य ब्राह्मणः प्रव्रजेद्द गृहात्"।

इत्युपक्रमः।

"एष वोऽभिदितो धर्मो ब्राह्मणस्य चतुर्विधः"।

इत्युपसंहारः। नारदोऽपि, —

"प्रथमादाश्रमाद्व वापि विरक्तो भव-सागरात्।
ब्राह्मणो मोक्षमन्विच्छंस्त्यक्त्वा सङ्गान् परिव्रजेत्॥"— इति॥

योगियाज्ञवल्क्योऽपि, —

"चत्वारो ब्राह्मणस्योक्ता आश्रमाः श्रुति-चोदिताः।
क्षत्रियस्य त्रयः प्रोक्ता द्वावेको वैश्य-शूद्रयोः॥" — इति॥

वामनपुराणेऽपि, —

"चत्वार आश्रमाश्चैते ब्राह्मणस्य प्रकोर्त्तिताः।
गार्हस्थ्यं ब्रह्मचर्यञ्च वानप्रस्थं त्रयोऽऽश्रमाः॥
क्षत्रियस्यापि कथिता य आचारा द्विजस्य हि।
ब्रह्मचर्यञ्च गार्हस्थ्यमाश्रम-द्वितयं विशः॥
गार्हस्थमुचितन्त्वेकं शूद्रस्य क्षणदाचर॥" — इति॥

ननु, शूद्रस्याश्रम एव नास्ति,

"चत्वार अश्रमास्तात, तेषु शूद्रस्तु नार्हति" — इति॥

निषेधात्। ततः कथं तस्य गार्हस्थ्याङ्गीकारः। उच्यते। समन्त्रक एव विवाहो निषिध्यते, न त्वमन्त्रकः। अन्यथा, विवाह-प्रकरणोदाहृतानि शूद्रविषयाणि वचनानि, पञ्च-महायज्ञादि-गृहस्थधर्मेषु शूद्राधिकारवचनानि* विरुध्येरन्। तस्मादस्ति शूद्रस्य गार्हस्थ्यम्। सन्यासस्तूक्त-रीत्या विप्रस्यैव। अतएव स्मृत्यन्तरे, कषाय-दण्डादि-लिङ्ग-धारणं क्षत्रिय-वैश्ययोर्निषिद्धम्,—

"मुखजानामयं धर्मो यद्विष्णोर्लिङ्गधारणम्।
बाहुजातोरुजातानां नायं धर्मो विधीयते" — इति॥

अपरे पुनः, संन्यासं त्रैवर्णिकाधिकारमिच्छन्ति। अधीत-वेदस्य द्विजातिमात्रस्य समुच्चय-विकल्पाभ्यामाश्रम-चतुष्टयस्य बहुस्मृतिषु विधानात्। अतएव याज्ञवल्क्येन संन्यास-प्रकरणे द्विजशब्दः प्रयुक्तः,

"सन्निरुद्धचेन्द्रिय-ग्रामं राग-द्वेषौ प्रहाय च।
भयं हत्वा च भूतानाममृती भवति द्विजः" — इति॥

स्मृत्यन्तरन्तु शुश्रग्राहिकतयैव वर्ण-त्रयस्य संन्यासं विदधाति,—

"ऋण-त्रयमपाकृत्य निर्ममो निरहंकृतिः।
ब्राह्मणः क्षत्रियो वाऽथ वैश्यो वा प्रव्रजेद्गृहात्" — इति॥

कूर्मपुराणेऽपि द्विज-ग्रहणं कृतम्, —

"अग्नीनात्मनि संस्थाप्य द्विजः प्रव्रजितो भवेत्।
योगाभ्यासरतः शान्तो ब्रह्मविद्यापरायणः" — इति॥

---

* अत्र, 'वचनानि च' — इति पाठो भवितुं युक्तः।

यानि पूर्व्वोदाहृत-वचनानि, तानि क्षत्रिय-वैश्ययोः काषायदण्ड-निषेध-पराणि। तथाच, मुखजानामिति वचनमुदाहृतम्। बौधायनोऽपि, —

"ब्राह्मणानामयं धर्मो यद्विष्णोर्लिङ्ग-धारणम्।
राजन्य-वैश्ययोर्नेति तत्रात्रेय-मुनेर्वचः" — इति॥

परिव्राड् बुभूषुः सर्वस्वदक्षिणां प्राजापत्यामिष्टिं निर्व्वपेत्। तदाह मनुः, —

"प्राजापत्यां निरूप्येष्टिं सर्व्ववेदसदक्षिणाम्।
आत्मन्यग्नीन् समारोप्य ब्राह्मणः प्रव्रजेद् गृहात्" — इति॥

यद्वा। आग्नेयीमिष्टिं कुर्य्यात्। तदुक्तं श्रुत्या। "अथैके प्रजापत्यामिष्टिं कुर्व्वन्ति, तथा न कुर्य्यात् आग्नेयीमेव कुर्य्यादग्निर्हि प्राणः प्राणमेवैतया करोति" — इति। कूर्म्मपुराणेऽपि, —

"प्रजापत्यां निरूप्येष्टिमाग्नेयीमथवा पुनः।
अन्तः पक्वकषायोऽसौ ब्रह्माश्रममुपाश्रयेत्" — इति*॥

प्राजापत्येष्टिराहिताग्निविषया, 'अग्नीन् समारोप्य' — इत्यग्निबहुत्वाभिधानात्। आग्नेयी त्वनाहिताग्निविषया, तद्वाक्यशेषे 'अग्निमाजिघ्रेत्, — इत्येकाग्न्यभिधानात्। सा चेष्टिः श्राद्धादिपुरःसरं प्रकर्त्तव्या। तथाच नृसिंहपुराणम्, —

"एवं वनाश्रमे तिष्ठन् तपसादग्धकिल्विषः।
चतुर्थमाश्रमं गच्छेत् सन्न्यस्य विधिना द्विजः॥

* कूर्म्मपुराणेऽपि, — इत्यारभ्य, एतदन्तो ग्रन्थोनास्ति मु० पुस्तके।

दिव्यपितृभ्यो* देवेभ्यः स्वपितृभ्योऽपि यत्नतः।
दत्वा श्राद्धमृषिभ्यश्च मनुष्येभ्यस्तथाऽऽत्मने।
इष्टिं वैश्वानरीं कृत्वा प्राजापत्यामथापि वा॥
अग्निं स्वात्मनि संस्थाप्य मन्त्रवत् प्रव्रजेत् पुनः"— इति।

श्राद्धानि चाष्टौ दैवादीनि। तथाचाह बौधायनः,—

"दैवमार्षं तथादिव्यं पित्र्यं मातृक-मानुषे।
भौतिकं चात्मनश्चान्ते अष्टौ श्राद्धानि निर्वपेत्"—इति॥

उक्त-श्राद्धादौ योग्यता, कृच्छ्रैः सम्पादनीया। तदाह कात्यायनः,—

"कृच्छ्रांस्तु चतुरः कृत्वा पावनार्थमनाश्रमी।
आश्रमी चेत्ततः कृच्छ्रं† तेनासौ योग्यतां व्रजेत्" — इति॥

श्राद्धानन्तरभाविनीमिष्टेः प्राचीनाभितिकर्त्तव्यतामाह बौधायनः,—

"कृत्वा श्राद्धानि सर्व्वाणि पित्रादिभ्योऽष्टकं पृथक्।
वापयित्वा च केशादीन्मार्जयेत् मातृका इमाः॥
त्रीन् दण्डानङ्गुलोस्थूलान वैणवान्मूर्द्धसम्मितान्।
एकादश-नव-द्वि-त्रि-चतुः-सप्तान्यपर्व्वकान्॥
सत्वक्कानव्रणान् सोम्यान् समसन्नत-पर्व्वकान्।
वेष्टितान् कृष्ण-गोवाल-रज्वा तु चतुरङ्गुलान्॥
एकोवा तादृशो दण्डो गोवाल-सहितो भवेत्।
कुश-कार्पास-सूत्रैर्व्वा क्षौम-सूत्रैरथापि वा।
कुशलैर्ग्रथितं शिक्यं पद्माकारसमन्वितम्।
षट्पादं पञ्चपादं वा मुष्टि-द्वय-विदारितम्॥

* देवपितृभ्यो,—इति स० पुस्तके, देयं पितृभ्यो,—इति मु० पुस्तके पाठः।

† चैत्तप्रकृच्छ्रं,— इति स० पुस्तके पाठः।

विकेशं सित* मस्पष्टमुभयद्वादशाङ्गुलम् ।
द्विगुणं त्रिगुणं वाऽपि सर्व्वतोऽष्टाङ्गुलन्तु वा ॥
प्रादेशमात्रं वा सूत्रं कार्पासैः ततमव्रणम् ।
चण्डालाद्यहतं † चैतत् स्मृतं जलपवित्रकम् ।
गृहीतं मन्त्रवत्तद्वत्सशिक्यञ्च कमण्डलुम् ।
दारवं वैणवं वापि मृदलावुमयन्तु वा ॥
पात्रं शिलामयं ताम्रं पर्णादिमयमेव वा ।
चतुरस्रं वर्त्तुलं वाऽप्यासनं दारवं शुभम् ॥
कौपीनाच्छादनं वासः कन्थां शीतनिवारणीम् ।
पादुके चापि शौचार्थं दशमात्रा उदाहृताः ॥
छत्रं पवित्रं सूत्रं च त्रिविष्टब्धं तथाऽजिनम् ।
पक्षाणि चाक्षसूत्रञ्च मृत्खनित्री कृपाणिका ‡ ॥
योगपट्टं वहिर्व्वास इत्येता एकविंशतिः ।
तासां पञ्चाधिका § नित्या दश वा सर्व्वशोऽपि वा ॥
गृहीत्वेमा अथागत्य देवागारेऽग्निवेश्मनि ।
ग्रामान्ते ग्रामसीमान्ते यद्वा शुचिमनोहरे ।
आज्यं पयोदधीत्येतत्त्रिवृद्वा जलमेव वा ॥
ॐ भूरित्यादिना प्राश्य रात्रिं चोपवसेत्ततः ।
एतावतैव विधिना भिक्षुः स्यादापदि द्विजः ॥
अथादित्यस्यास्तमयात् पूर्व्वमग्नीन् विहृत्य ¶ सः ।
आज्यञ्च गार्हपत्ये तु संस्कृत्यैतेन च स्रुचा ॥

* चीव, — इति मु॰ पुस्तके पाठः ।
† चण्डालाद्यकृतं, — इति मु॰ पुस्तके पाठः ।
‡ कपालिकाः, — इति मु॰ पुस्तके पाठः ।
§ पञ्चादिका, — इति मु॰ पुस्तके पाठः ।
¶ विहृत्य, — इति मु॰ पुस्तके पाठः ।

पूर्णमाहवनीये तु जुहुयात् प्रणवेन तत् ।
*वह्नन्वाधानमेतत् स्यादग्निहोत्रे हुते ततः ॥
स्थित्वा तु गार्हपत्यस्य दर्भानुत्तरतोऽत्र तु ।
पात्राणि सादयित्वाऽथ ब्रह्मायतन एव तु ॥
स्तीर्णेषु दर्भेष्वासीत त्वजिनान्तरितेषु वा ।
जागृयाद्रात्रिमेतान्तु यावद्ब्राह्मो मुहूर्त्तकः ।
एतामवस्थां सम्प्राप्य मृतोऽप्यानन्त्यमश्नुते ॥
अग्निहोत्रं सकाले च हुत्वा प्रातस्तनं ततः ।
इष्टिं वैश्वानरीं कुर्य्यात् प्राजापत्यामथापि वा" — इति ॥

आज्यादि-प्राशनानन्तरमग्नि-विहरणात् पूर्व्वं सावित्री-प्रवेशं कुर्य्यात् । तदुक्तं बौधायनधर्म्मे । "ॐ भूः सावित्रीं प्रविशामि तत्सवितुर्व्वरेण्यं ॐ भुवः सावित्रीं प्रविशामि भर्गो देवस्य धीमहि, ॐ सुवः सावित्रीं प्रविशामि धियो योनः प्रचोदयादिति अर्द्धर्च्चशः समस्तया वा" — इति । इष्टिं† परिसमाप्याग्नींश्चात्मनि समारोप्य प्रैषमुच्चारयेत् । तदाह कात्यायनः, —

"आत्मन्यग्नीन् समारोप्य वेदिमध्ये स्थितो हरिम् ।
ध्यात्वा हृदि त्वनुज्ञातो गुरुणा प्रैषमीरयेत्" — इति ।

अथ प्रैषमुच्चार्य्याभयदानं कुर्य्यात् । तदुक्तं कापिलमते, —

"विधिवत् प्रैषमुच्चार्य्य त्रिरुपांशु त्रिरुच्चकैः ।
अभयं सर्व्वभूतेभ्यो मम स्वाहेत्यपो भुवि ।
निर्णीय दण्ड-शिक्यादि गृहीत्वाऽथ वहिर्व्रजेत्" — इति ॥

---

* एतत् पूर्व्वं मह्या' — इत्यधिकः पाठः मु० पुस्तके ।

† हविरिष्टि, — इति मु० पुस्तके पाठः ।

दण्डादीनां मन्त्रानाह वौधायनः, —

"सखा मेत्यादिना दण्डं गृहीयाद्र गुरुणाऽर्पितम् ।
येन देवाः पवित्रेणेत्युक्त्वा जलपवित्रकम् ॥
यदस्य पारे रजसः शुक्रमित्यपि शिक्यकम् ।
व्याहृतीभिस्तथा पात्रमथ कौपीनमित्यृचा ॥
युवा सुवासा इत्येवं तच्छंयोरुपवीतकम् ।
एतद्र गृहीत्वा निष्क्रम्य स्वग्रामं वान्धवांस्त्यजेत् ॥
निःस्पृहोऽन्यत्र गत्वैव व्रतैः स्वैर्व्वर्त्तयेत् सदा" — इति ।

एतच्च जलपवित्रादिकं चतुर्विधेषु भिक्षुषु प्रथम-द्वितीय-विषयम् ।
चातुर्विध्यन्तु भिक्षूणां हारीत आह, —

"चतुर्विधा भिक्षवस्तु प्रोक्ताः सामान्यलिङ्गिनः ॥
तेषां पृथक् पृथक् ज्ञानं वृत्तिभेदात् कृतं च तत् ।
कूटीचरो* वहूदको हंसश्चैव तृतीयकः ॥
चतुर्थः परमोहंसो यो यः पश्चात् स उत्तमः" । — इति ।

पितामहोऽपि, —

"चतुर्विधा भिक्षवस्तु प्रख्याता ब्रह्मणो मुखात् ।
कूटीचरो बहूदको हंसश्चैव तृतीयकः ।
चतुर्थः परहंसश्च संज्ञाभेदैः प्रकीर्त्तिताः" —इति ।

तत्राधिकार-विशेषः पुराणे दर्शितः, —

"विरक्तिर्द्विविधा प्रोक्ता तीव्रा तीव्रतरेति च ॥
सत्यामेव तु तीव्रायां न्यसेद्र योगी कुठिचरः ।
शक्तो वहुदके तीव्रतरायां हंस-संज्ञिते ॥
मुमुक्षुः परमे हंसे साक्षाद्विज्ञान-साधने" — इति ।

---

* कुटीचक, — इति मु० पुस्तके पाठः । एवं परत्र सर्व्वत्र

तत्र कुटीचरस्य वृत्तिविशेषमाह प्रजापतिः। "कुटीचरो नाम स्वगृहे वर्त्तमानः सुचिरकलुषः अहिताग्निषु भिक्षां भुञ्जानोऽपगतकाम-क्रोध-लोभ-मोहोऽहङ्कारवर्जित आत्माऽनुग्रहं कुरुते"। वृद्धपराशरोऽपि। "कुटीचरो नाम पुत्त्रादिभिः कुटीं कारयित्वा काम-क्रोध-लोभ-मोह-मद-मात्सर्य्यादीन् हित्वा विधिवत् सन्न्यासंकृत्वा त्रिदण्ड-जल-पवित्र-काषायवस्त्र-धारिणः शौचाचमन*जपस्वाध्याय-ब्रह्मचर्य्य-ध्यान † तत्पराः पुत्त्रादेरेव ‡ भिक्षाकालेऽन्नयाच्ञामात्रमुपभुञ्जाना § स्तस्यां कुटयां नित्यं वसन्तआत्मानं मोक्षयन्ति" — इति। स्कन्दपुराणेऽपि, —

"कूटीचरस्तु सन्न्यस्य स्वे स्वे सद्मनि नित्यशः।
भिक्षामादाय भुञ्जीत स्ववन्धूनां गृहेऽथवा॥
शिखी यज्ञोपविती स्यात् त्रिदण्डी सकमण्डलुः" — इति।

कुटीचरस्याशक्त-विषयत्वाद्युक्तो गृहवासादिः। तदुक्तं वौधायनेन, —

"कूटोचराः परिव्रज्य स्वे स्वे वेश्मनि नित्यशः।
भिक्षां वन्धुभ्य आदाय भुञ्जते शक्ति-संक्षयात्" — इति॥

बहूदकस्य वृत्ति-विशेषमाह स्कन्दः, —

"बहूदकस्तु सन्न्यस्य बन्धु-पुत्रादिवर्जितः।
सप्तागारं चरेद्भैक्षमेकान्नञ्च परित्यजेत्॥
गोवाल-रज्जु-संबन्धं त्रिदण्डं शिक्यमुद्धृतम्।
जलपात्रं पवित्रञ्च खनित्रञ्च कृपाणिकाम्॥
शिखां यज्ञोपवीतञ्च देवताराधनञ्चरेत्।" — इति।

---

* स्नानशौचाचमन, — इति मु० पुस्तके पाठः।
† ब्रह्मचर्य्याध्ययन, — इति मु० पुस्तके पाठः।
‡ पुत्रादेव, — इति मु० पुस्तके पाठः।
§ युञ्जाना, — इति मु० पुस्तके पाठः।

वृद्धपराशरोऽपि। "तत्र बहूदको नाम त्रिदण्ड-कमण्डलु-पवित्र*-पात्र-काषायवस्त्रधारिणो वेदान्तार्थविवोधकाः साधुवृत्तेषु ब्राह्मण-गृहेषु भैक्षचर्यां चरन्त आत्मानं मोक्षयन्ति" — इति। पितामहोऽपि, —

"बहूदकः स विज्ञेयः सर्व-सङ्ग-विवर्जितः।
बन्धुवर्गे न भिक्षेत स्वभूमौ नैव संवसेत्॥
निश्चलः स्थाणुभूतश्च सदा मोक्ष-परायणः।
न कुट्यां नोदके सङ्गं कुर्याद्वि वस्त्रे च चेतसा॥
नागरे नासने नान्ने नास्तरे नात्रिदण्डके।
स्वमात्रायां न कुर्याद्वै रागं दण्डादिके यतिः"॥ — इति॥

हंस-वृत्तिः स्कन्दपुराणे दर्शिता, —

"हंसः कमण्डलुं शिक्य भिक्षापात्रं तथैव च।
कन्थां कौपीनमाच्छाद्यमङ्गवस्त्रं वहिःपटम्॥
एकन्तु वैणवं दण्डं धारयेन्नित्यमादरात्।
देवतानामभेदेन कुर्याद्ध्यानं समर्चयेत्"॥ — इति॥

विष्णुरपि, —

"यज्ञोपवीतं दण्डञ्च वस्त्रं जन्तु-निवारणम्।
तावन् परिग्रहः प्रोक्तो नान्यो हंस-परिग्रहः॥" — इति॥

पितामहोऽपि, —

'हंसस्तृतीयो विज्ञेयो भिक्षुर्मोक्ष-परायणः।
नित्यं त्रिषवणस्नायी त्वार्द्रवासा भवेत् सदा॥

---

* पद्मपवित्र, — इति मु० पुस्तके पाठः।

चान्द्रायणेन वर्त्तेत यति-धर्मानुशासनात् ।
वृक्षमूले वसेन्नित्यं गुहायां वा सरित्-तटे ॥" — इति ॥

बौधायनोऽपि, —

"हंसाः कमण्डलुं शिक्यं दण्डपात्राणि बिभ्रतः ।
ग्राम-तीर्थैकरात्राश्च नगरे पञ्चरात्रकाः ॥
त्रि-षड्रात्रोपवासाश्च पक्ष-मासोपवसिनः ।
कृच्छ्र-सान्तपनाद्यैश्च यज्ञैः कृशवपुर्धराः ॥" — इति ॥

परमहंस-वृत्तिः स्कन्दपुराणे दर्शिता, —

"कौपीनाच्छादनं वस्त्रं कन्थां शीत-निवारिणीम् ।
अक्षमालाञ्च गृह्णीयात् वैणवं दण्डमव्रणम् ॥
माधूकर*मथैकान्नं परहंसः समाचरेत् ।
परहंसस्त्रिदण्डञ्च रज्जुं गोवाल-निर्मिताम् ॥
शिखां यज्ञोपवीतञ्च नित्यं कर्म परित्यजेत्" । — इति ॥

अत्र केचिच्छ्रद्धा-जाड्येन सन्ध्यावन्दन-गायत्री-शिखा-यज्ञोपवीत-त्यागमसहमानाः यथावर्णितं पारमहंस्यं विद्विषन्ति । उदाहरन्ति च कानिचिद् वचनानि । तत्र हारीतः, —

"चत्वार आश्रमा ह्येते सन्ध्यावन्दन-वर्जिताः ।
ब्राह्मण्यादेव हीवन्ते यद्यप्युग्रतपोधनाः ॥" — इति ।

बौधायनोऽपि, —

"अनागतान्तु ये पूर्वामनतीतान्तु पश्चिमाम् ।
सन्ध्यां नोपासते विप्राः कथन्ते ब्राह्मणाः स्मृताः ॥" — इति ॥

---

* नधूकर, — इति स० पुस्तके पाठः ।

स्मृत्यन्तरेऽपि, —

"सायं प्रातः सदा सन्ध्यां ये विप्रा नो उपासते ।
कामं तान् धार्मिको राजा शूद्र-कर्मसु योजयेत् ॥ — इति ॥

मनुरपि, —

"सावित्री-पतिता व्रात्या भवन्त्यार्य-विगर्हिताः ।" — इति ॥

अत्रिरपि, —

"यज्ञोपवीतं सर्वेषां द्विजानां मुक्ति-साधनम् ।
परित्यजन्ति ये मोहान्नरा निरयगामिनः ॥" — इति ॥

पद्मपुराणे, —

"शिखा-यज्ञोपवीतेन त्यक्तेनासौ कथं द्विजः ।" — इति ॥

मैवं । एतेषां वचनानां परमहंस-व्यतिरिक्त-विषत्वेनाप्युपपत्तेः । पारमहंस्यन्तु बहुषु प्रत्यक्षश्रुतिषूपलभ्यमानं केन प्रद्वेष्टुं शक्यम् । तथा च जावालश्रुतिः । "तत्र परमहंसा नाम संवर्त्तकारुणिक श्वेतकेतुदुर्वासर्भूनिदाघजड़भरतदत्तात्रेयरैवतकप्रभृतयो व्यक्तलिङ्गा अव्यक्ताचारा अनुन्मत्ता उन्मत्तवदाचरन्ति" — इति । तेषाञ्च शिखादित्याग आत्मज्ञानादिधर्म्माश्च तत्रैव श्रुताः । "दण्डं कमण्डलुं शिक्यं पात्रं जलपवित्रकम्, शिखां यज्ञोपवीतं चेत्येतत् सर्व्वं भूः स्वाहेत्यप्सु परित्यज्यात्मानमन्विच्छन् यथारूपधरो निर्द्वन्द्वो निष्परिग्रहः तत्त्वब्रह्ममार्गे सम्यक् सम्पन्नः शुद्धमानसः प्राणसन्धारणार्थं यथोक्तकाले विमुक्तो भैक्षमाचरन् करपात्रेण* लाभालाभयोः समो भूत्वा, शून्यागार-देवगृह-तृणकूट-वल्मीक-वृक्षमूल कुलालशालाऽग्निहोत्र-नदीपुलिन-गिरिकुहर-कन्दर-कोटर — निर्झर-

---

* उदरपात्रेण, — इति मु० पुस्तके पाठः ।

स्थण्डिलेष्वनिकोतवानप्रयत्नो निर्ममः शुक्लध्यानपरायणोऽध्यात्म-निष्ठोऽशुद्धकर्म्म-निर्मूलन-परः संन्यासेन देहत्यागं करोति स परमहंसो नाम" — इति।

तस्यामेव च श्रुतौ जनक-याज्ञवल्क्य-संवाद-रूपेण यज्ञोपवीत-त्यागमाक्षिप्य समाहितम्। "पृच्छामि त्वां याज्ञवल्क्य नायज्ञोपवीती कथं ब्राह्मण इति। स होवाच याज्ञवल्क्यः इदमेवास्य यज्ञोपवीतं यः आत्मेति" — इति। आरुणिश्रुतावपि पारमहंस्यं प्रपञ्चितम्। "आरुणिः प्रजापतेर्लोकं जगाम तं गत्वोवाच केन भगवन् कर्म्माण्य-शेषतो विसृजानीति। तं होवाच प्रजापतिः तव पुत्रान् भ्रातॄन् बन्ध्वादीन् शिखायज्ञोपवीते यागं सूत्रं स्वाध्यायञ्च भूर्लोकं भुवर्लोकं स्वर्लोकं महोलोकं जनलोकं तपोलोकं सत्यलोकं चातल-वितल-सुतल-तलातल-महातल-रसातल-पातालं ब्रह्माण्डञ्च विसर्जयेत्। दण्डमाच्छादनं कौपीनं परिगृहेत्, शेषं विसृजेत्। ब्रह्मचारी गृहस्थो वानप्रस्थो वा लौकिकाग्नीनुदराग्नौ समारोपयेत्। गायत्रीं च शरीराग्नौ * समारोपयेत्। उपवीतं भूमौ वाप्सु वा विसृजेत्। † दण्डान् लोकाग्नीन् विसृजेदिति होवाच। अत ऊर्द्धममन्त्रवदाचरे-दूर्द्धगमनं विसृजेत्त्रिसन्ध्यादौ स्नानमाचरेत्। सर्व्वेषु देवेष्वाचरण-मावर्त्तयेदुपनिषदमावर्त्तयेत्" — इति। मैत्रावरुणश्रुतवपि। "इन्द्रस्य वज्रोऽसीति त्रीन्वैणवान् दण्डान् दक्षिणपाणौ धारयेदेकं वा, यद्येकं तदा सशिखं वपनं कृत्वा विसृज्य यज्ञोपवीतम्" — इति। पिप्पलाद शाखायामपि, —

"सशिखं वपनं कृत्वा वहिःसूत्रं त्यजेद् बुधः।
यदक्षरं परं ब्रह्म तत्सूत्रमिति धारयेत्॥

---

* स्वभावाचाग्नौ, — इति मु० पुस्तके पाठः।

† कुटीचको ब्रह्मचारी कुटुम्बं विसृजेत् विप्रत्वं विसृजेत् पात्रं विसृजेत्, — इत्यधिकः पाठः मु० पुस्तके।

सूचनात् सूत्रमित्याहुः सूत्रं नाम परंपदम् ।
तत्सूत्रं विहितं येन स विप्रो वेदपारगः ॥
येन सर्व्वमिदं प्रोतं सूत्रे मणिगणा इव ।
तत्सूत्रं धारयेद्योगी योगवित्तत्त्वदर्शिवान् ॥
वहिः सूत्रं त्यजेद्विद्वान् योगसूत्रं समास्थितः ।
ब्रह्मभावमिदं सूत्रं धारयेद्यः स चेतनः ॥
धारणादस्य सूत्रस्य नोच्छिष्टो नाशुचिर्भवेत् ।
सूत्रमन्तर्गतं येषां ज्ञानयज्ञोपवीतिनाम् ॥
ते वै सूत्रविदो लोके ते च यज्ञोपवीतिनः ।
ज्ञानशिखाज्ञाननिष्ठाज्ञानयज्ञोपवीतिनः ॥
ज्ञानमेव परं तेषां पवित्रं ज्ञानमुच्यते ।
अग्नेरिव शिखा नान्या यस्य ज्ञानमयी शिखा ॥
स शिखीत्युच्यते विद्वान्नेतरैः केशधारणैः ।
कर्मण्यधिकृता ये तु वैदिके ब्राह्मणादयः ।
एभिर्धार्य्यमिदं सूत्रं क्रियाङ्गं तद्धि वै स्मृतम् ।
शिखा ज्ञानमयी यस्य उपवीतं च तन्मयम् ॥
ब्राह्मण्यं सकलं तस्य इति ब्रह्मविदो विदुः ।
इदं यज्ञोपवीतन्तु परमं यत्परायणम् ॥
विद्वान् यज्ञोपवीती स्यात् यज्ञास्तं यज्वनं विदुः" — इति ।

व्यासस्मृतावपि, —

"यज्ञोपवीतं कर्म्माङ्गं वदन्त्युत्तमबुद्धयः ।
उपकुर्व्वाणकात् पूर्व्वं यतो लोके न दृश्यते ॥
यावत् कर्म्माणि कुरुते तावदेवास्य धारणम् ।
तस्मादस्य परित्यागः क्रियते कर्म्मभिः सह ॥

अग्निहोत्र-विनाशे तु जुह्वादीनि यथा त्यजेत् ॥
यथा च मेखलादीनि गृहस्थाश्रम-वाञ्छया ।
पत्नी योक्त्रं यथेष्टचान्ते सोमान्ते च यथा ग्रहान् ॥
तद्वद्यज्ञोपवीतस्य त्यागमिच्छन्ति योगिनः" — इति ।

विश्वामित्रोऽपि, — "अथापरं परिव्राजकलिङ्गं सर्व्वतः परिमोक्षमेकें सत्यानृते सुखदुःखे वेदानिमं लोकममुं च परित्यज्यात्मानमन्विच्छेत् शिखा-यज्ञोपवीत-कमण्डलु-कपालानां त्यागो"—इति। बौधायनोऽपि। "अतऊर्द्ध्वं यज्ञोपवीतं मन्त्रमाच्छादनं यष्टयः शिक्यं जलपवित्रं कमण्डलुं पात्रमित्येतानि वर्जयित्वा वैणवं दण्डमादत्ते सखामगोपाय" — इति । स्मृत्यन्तरेऽपि, —

"यदा तु विदितं तत् स्यात् * परंब्रह्म सनातनम् ।
तदैकदण्डं संगृह्य उपवीतं शिखां त्यजेत्" — इति ।

अत्र केचिदाहुः । उपवीत-त्यागवचनानि पुरातन-यज्ञोपवीत-विषयाणि । तथा च स्मृतिः । "नखानि निकृत्य, पुराणं वस्त्रं यज्ञोपवीतं कमण्डलुं त्यक्त्वा नवानि गृहीत्वा ग्रामं प्रविशेत्"—इति। यदाऽऽचमनाङ्गं यज्ञोपवीतं न स्यात् तदा ब्राह्मणादेव हीयते। तस्मादस्ति परमहंसस्यापि यज्ञोपवीतम्,— इति ।

तदयुक्तम्, उदाहृतस्मृतेर्बहूदकादि-विषयत्वात् । "न यज्ञोपवीतं नाच्छादनञ्चरति परमहंसः"— इति श्रुतेः । "अयज्ञोपवीती शौचनिष्ठः काममेकं वैणवं दण्डमादधीत" — इति श्रुत्यन्तराच्च । न च ब्राह्योपवीतमन्तरेणाचमनाद्यसम्भवः, कौषीतकिब्राह्मणे प्रश्नोत्तराभ्यां तदुपपादनात् । "किमस्य यज्ञोपवीतं का शिखा

---

* तत्त्वात्,—इति मु० पुस्तके पाठः ।

कथञ्चास्योपस्पर्शनम्” — इति प्रश्नः। “इदमेवास्य यज्ञोपवीतं यदात्मध्यानं विद्या शिखा” — इत्याद्युत्तरम्। ब्राह्मण्यन्तु विज्ञानमय-शिखायज्ञोपवीतिन एव पुष्कलम्, — इति पिप्पलादश्रुतावुदाहृतम्।

केचिन्तु परमहंसस्यापि त्रिदण्डमिच्छन्ति, उदाहरन्ति च वचनानि। तत्र दक्षः, सर्व्वेषामाश्रमिणां क्रमेण लक्षणमभिदधानः “त्रिदण्डनयतिश्चैव” — इति यतेर्लक्षणमभिधाय, त्रिदण्डरहितस्य यतित्वं निषेधति, —

“यस्यैतल्लक्षणं नास्ति प्रायश्चित्ती न चाश्रमी” — इति।

हारीत-दत्तात्रेय-पितामहाः कुटीचरादीन् चतुरोऽप्युपन्यस्य सर्व्वेषां त्रिदण्डमेव विदधते, —

“वृत्तिभेदेन भिन्नाश्च नैव लिङ्गेन ते द्विजाः।
लिङ्गन्तु वैणवं तेषां त्रिदण्डं सपवित्रकम्” — इति।

अत्रिरपि, —

“शिखिनस्तु श्रुताः केचित् केचिन्मुण्डाश्च भिक्षुकाः।
चतुर्द्धा भिक्षुकाः प्रोक्ताः सर्व्वे चैव त्रिदण्डिनः” — इति।

एकदण्ड-वचनानि तु त्रिदण्डालाभ-विषयाणि। तदाह मेधातिथिः, —

“यावन्न स्युस्त्रिदण्डास्तु तावदेकेन पर्य्यटेत्” — इति।

हारीतोऽपि, —

“नष्टे जलपवित्रे वा त्रिदण्डे वा प्रमादतः।
एकन्तु वैणवं दण्डं पालाशं वैल्वमेव वा॥
गृहीत्वा विचरेत्तावद्यावल्लभ्येत् त्रिदण्डकम्” — इति।

अत्रोच्यते। परमहंसस्यैकदण्ड-निराकरणे वह्वागम-विरोधः स्यात् उदाहृताश्च परमहंसस्यैक-दण्ड*प्रतिपादकाः श्रुति-स्मृतयः। एवं सति मेधातिथि-हारीताभ्यां यदेकदण्डस्यानुकल्पत्वमुक्तं, तद्बह्वदकादि-विषयं भविष्यति। परमहंसस्य तु नैकदण्डोऽनुकल्पः। यतो व्यास आह, —

"त्रिदण्डस्य परित्याग एकदण्डस्य धारणम्।
एकस्मिन् दृश्यते वाक्ये तस्मादस्य प्रधानता" ॥ — इति ॥

यत्त, "सर्वे चैव त्रिदण्डिनः" — इति, तद्वाग्दण्डादिविषयं न तु यष्टि-त्रयाभिप्रायम्। तथा च मनुः, —

"वाग्दण्डोऽथ मनोदण्डः कर्मदण्डस्त्रथैव च।
यस्यैते नियता वुद्धौ त्रिदण्डीति स उच्यते ॥
त्रिदण्डमेतत् निःक्षिप्य सर्वभूतेषु मानवः।
कामक्रोधौ तु संयम्य ततः सिद्धिं निगच्छति ॥" — इति ॥

दक्षोऽपि, —

"वाग्दण्डोऽथ मनोदण्डः कर्मदण्डस्तथैव च।
यस्यैते नियता दण्डा स्त्रिदण्डीति स उच्यते ॥" — इति ॥

एतेषां च त्रयाणां दण्डानां स्वरूपं स एवाह, —

"वाग्दण्डो मौनता प्रोक्ता कर्मदण्डस्त्वनोहता †।
मानसस्य तु दण्डस्य प्राणायामो विधीयते ॥" — इति ॥

यदपि पितामहेनोक्तं, —

„परः परमहंसस्तु तुर्याख्यः श्रुतिरब्रवीत्।
यमैश्चनियमैर्युक्तो विष्णुरूपी त्रिदण्डभृत्।" — इति ॥

---

* प्रतिपदिका, — इति पाठो भवितुं युक्तः।

† वग्दण्डो मौनमातिष्ठेत् कर्मदण्डे त्वनीहताम्, — इति स० शा० पुस्तकेषु पाठः।

तदप्युक्तरीत्या वाग्दण्डाद्यभिप्रायम् । यदपि, —

"लिङ्गन्तु वैणवं तेषां त्रिदण्डं सपवित्रकम्"

— इति यष्टि-त्रयाभिधानं, तदपि वहूदक-विषयत्वेनोपपन्नम् । योहि वहूदक एव सन् ग्रामैकरात्रादिकां* हंसवृत्तिमाचरति, स वृत्तितो हंसो भवति । वेदान्त-श्रवणादिकां परमहंसवृत्तिं चेदाश्रयति, तदा वृत्तितः परमहंसो भवति । तेषां हंसादीनां त्रिदण्डमेव लिङ्गम् । अनेनैवाभिप्रायेण, —

"वृत्तिभेदेन भिन्नाश्च नैव लिङ्गेन ते द्विजाः" — इति ।

अन्यथा मुख्ययोर्हंसयोरेकदण्ड-विधायकान्युदहृतानि वचनानि निर्विषयाणि स्युः । तस्मादेक एव दण्डः परमहंसस्य । ननु परमहंसोपनिषदि एकदण्डोऽप्यमुख्येनैव श्रूयते । "कौपीनं दण्ड-माच्छादनञ्च स्वशरीरोपभोगार्थाय च लोकस्योपकारार्थाय च परिग्रहेत्, तच्च† न मुख्योऽस्ति, को मुख्य इति चेदयं मुख्यो न दण्डं न शिक्यं नाच्छादनं चरति परमहंसः" — इति । वाढम् । नास्त्येव विद्वत्-परमहंसस्य वाह्ययष्ट्युपयोगः । अतएव वाक्यशेषे ज्ञानमेव तस्य दण्डः, — इत्युक्तम्, —

"ज्ञानदण्डोधृतो येन एकदण्डी स उच्यते" — इति ।

यष्टि-धारणन्तु विविदिषोः परमहंसस्य । न च विद्वद्-विविदिषु-भेदेन पारमहंस्य-द्वैविध्ये मानाभावः शङ्कनीयः । वाजसनेयिब्राह्मणे तदुपलम्भात् । "एतं वै तमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति" — इति विद्वत्संन्यासे प्रमाणम । एतमेव विदित्वा मुनिर्भवत्येतमेव

* ग्रामैकरात्रिकां, — इति मु० पुस्तके पाठः ।

† तस्य, — इति मु० पुस्तके पाठः ।

प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति" — इति चान्यस्मिन्। एतद्वाक्ये विद्वद्विविदिषुसंन्यासौ उभावपि विस्पष्टमवगम्येते। "एतत् सर्वं भूः स्वाहेत्यप्सु परित्यज्यात्मानमन्विच्छेत्" — इति जावालवाक्ये त्रिदण्डादि-परित्यागात्मकं विविदिषु-पारमहंस्यमाम्नातम्। श्रुति। "न्यास इति ब्रह्म ब्रह्म हि परः परो हि ब्रह्म तानि वा एतान्यः पराणि तपांसि न्यास एवात्यरेचयत्" — इत्यग्निहोत्रयज्ञ-दानादि-तपो-निन्दापुःसरं पारमहंस्यं विधाय तस्य परमहंसस्य विविदिषोरात्मविद्याधिकारं दर्शयति, "ओमित्येतमात्मानं युञ्जीत" — इति। तस्माद् द्वैविध्य-सद्भावाद् दण्डादिनिवारणमशेष-कर्मशून्य-विद्वद्-पारमहंस-विषयम्। विदुषः कर्त्तव्द-शून्यतां भगवानाह, —

"यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः।
आत्यन्येव च सन्तुष्टस्तस्य कार्यं न विद्यते" — इति।

दक्षोऽपि, —

"नाध्येतव्यं न वक्तव्यं न श्रोतव्यं कदाचन।
एतैः सर्वैः सुनिष्पन्नो यतिर्भवति नान्यदा" — इति।

स्मृत्यन्तरेऽपि, —

"ज्ञानामृतेन तृप्तस्य कृतकृत्यस्य योगिनः।
नैवास्ति किञ्चित् कर्त्तव्यमस्ति चेन्न स सर्ववित्" — इति।

वह्वृचब्राह्मणेऽपि। "एतद्ध स्म वै तद्विद्वांस आहुः कौषेयाः किमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामहे" — इति। विविदिषोस्तु श्रवण–मननादि-कर्त्तव्यसद्भावात् तदुपकारित्वेन दण्डधारणादि-नियम उपपद्यते। ननु-ज्ञान-रहितस्यापि दण्डप्रतिषेध आम्नायते,

"काष्ठदण्डो धृतो येन सर्वाशी ज्ञान-वर्जितः।
स याति नरकान् घोरान् महारौरव-संज्ञितान्"॥

नायं दोषः। विद्यां विविदिषाञ्च विना जीवनार्थमेव केवलमेकदण्डं यो धत्ते तद्विषयत्वात् प्रतिषेधस्य। अतएव सर्वाशीति विशेषितम्। स्मृत्तावपि, —

"एकदण्डं समाश्रित्य जीवन्ति वहवो नराः।
नरके रौरवे घोरे कर्म्म-त्यागात् पतन्ति ते" — इति।

युक्तश्च नरक-पातः, सत्यपि व्राह्मदण्डे पाप-निवर्त्तकानामान्तरदन्डानामभावात्। पाप-निवर्त्तकत्वञ्च कालिकापुरणे दर्शितम्, —

"वैणवा ये स्मृता दन्डा लिङ्गमात्र-प्रवोधकाः।
लिङ्गव्यक्तौ हि धार्य्यास्ते न पुनर्धर्म्म-हेतवः।
कायजा ये बुधैर्नित्यं नृणां पाप-विमोक्षणात्।
जितेन्द्रियैर्जितक्रोधै धर्य्यार्य्या वै तत्त्वदर्शिभिः" — इति।

ये कायजास्त्रयोदन्डास्ते पाप-विमोक्षणाय धार्य्याः — इत्यन्वयः। नन्वेकदन्ड-त्रिदन्डयोर्विकल्पः क्कचित् स्मर्य्यते। तत्र, विष्णु-वौधायनौ, —

"एकदण्डी भवेद्वाऽपि त्रिदण्डो वा मुनिर्भवेत्" — इति।

व्यासः, —

"त्रिदण्डमेकदण्डं वा व्रतमास्थाय तत्त्ववित्।
पर्य्यटेत् पृथिवीं नित्यं वर्षाकाले स्थिरोभवेत्" — इति।

शौनकोऽपि। "अथ कषायवासाः सखा मा गोपायेति त्रिदण्डमेकदण्डं वा गृह्णाति" — इति। आश्वमेधिके भगवद्वचनम्, —

"एकदण्डो त्रिदण्डी वा शिखो मुन्डित एव वा।
काषायमात्रसारोऽपि यतिः पूज्यो युधिष्ठिर" — इति।

वाढ़म। उक्तरीत्या तयोर्व्यवस्था द्रष्टव्या। तत्र, कूटीचर-वहद-कयोस्त्रिदन्डः, हंस-परमहंसयोरेकदन्डः। तथा सति तत्र तत्रो-दाहृतानि वचनानि उपपद्यन्ते।

तदेवं चतुर्विधः संन्यासो निरुपितः।

## अथ तद्धर्मा निरूप्यन्ते।

तत्र वौधायनः, —

"ऊषःकाले समुत्थाय शौचं कृत्वा यथाविधि।
दन्तान् विमृज्य चाचम्य पर्व्ववर्ज्ज यथाविधि।
स्नात्वा चाचम्य विधिवत्तिष्ठन्नासीन एव वा॥
विभ्रज्जलपवित्रं वाऽप्यक्षसूत्रं करद्वये।
तद्वत् पवित्रेगोवालैः कृते दुष्कृतनाशने।
उदये विधिवत् सन्ध्यामुपास्य त्रिकजप्यवान्।
मित्रस्य चर्षणीत्याद्यैरुपस्थाय परि त्रिभिः*।
पूर्व्ववत् तर्पयित्वाऽथ जपेत् सम्यक् समाहितः" — इति।

मनुरपि, —

"एकएव चरेन्नित्यं सिद्धचर्थमसहायकः।
सिद्धिमेकस्य संपश्यन् न जहाति न हीयते" — इति॥

एकस्यासहायस्य विचरतो रागद्वेषादि-प्रतिवन्धाभावात् ज्ञानलक्षणां सिद्धिं निश्चिन्वन् तां सिद्धिं न जहाति, तस्यां सिद्धावप्रत्यूहेन

---

* पवित्रिभिः, — इति पाठान्तरम्।

प्रवर्त्तते, प्रवृत्तश्च तस्याः सिद्धेर्न हीयते किन्तु पारं गच्छति। यदा तु द्वितीय-तृतीय-पुरुष-सहायवान् विचरेत्तदा रागद्वेष-सम्भवादुक्त-सिद्धेर्हीयते। अतएव दक्षः, —

"एकोभिक्षुर्यथोक्तस्तु द्वावेव मिथुनं स्मृतम्।
त्रयोग्रामः समाख्याताऊर्द्धन्तु नगरायते॥
नगरन्तु न कर्त्तव्यं ग्रामोऽपि मिथुनं तथा।
एतत्त्रयं प्रकुर्व्वाणः स्वधर्म्मात् च्यवते यतिः॥
राजवार्त्ता हि तेषाञ्च भिक्षा-वार्त्ता परस्परम्।
स्नेह-पैशुन्य-मात्सर्य्यं सन्निकर्षान्न संशयः"॥

यदा तु श्रवणादि-सम्पत्त्यभावादात्मज्ञान-सिद्धौ स्वयमशक्तः स्यात्, तदा तत्र शक्तेन द्वितीयेन सह विचरेत्। यथा श्रुतिः। "वर्षासु ध्रुवशोलोऽष्टौ मासानेकाकी यतिश्चरेत् द्वौ वा चरेत्"। चरेता-मित्त्वर्थः। एकाकी विचरेत् सर्व्वभूतेभ्यो हितमाचरेत्। तदाह याज्ञवल्क्यः, —

सर्व्वभूत-हितः शान्तः त्रिनण्डी सकमण्डलुः।
एकारामः परिव्रज्य भिक्षार्थं ग्राममाविशेत्" — इति।

हिताचरणं नाम हिंसाऽननुष्ठानमात्रं न पुनरुपकारेषु प्रवृत्तिः। "हिंसाऽनुग्रयोरनारम्भः" — इति गोतमस्मरणात्। अतएवाहिंसा-दीनाहात्रिः, —

"अहिंसा सत्यमस्तेयं ब्रह्मचर्य्यापरिग्रहौ।
भावशुद्धिर्हरेर्भक्तिः सन्तोषः शौचमार्जवम्॥
आस्यिक्यं ब्रह्मसंस्पर्शः स्वाध्यायः समदर्शनम्।
अनौद्धत्यमदोनत्वं प्रसादः स्थैर्य्य-मार्दवे॥
सस्नेहो गुरुशुश्रूषा श्रद्धा क्षान्तिर्दमः शमः।
उपेक्षा धैर्य्य-माधुर्ये तितिक्षा करुणा तथा॥

ह्यास्तपोज्ञान-विज्ञाने योगो लघ्वशनं धृतिः ।
स्नानं सुरार्चनं ध्यानं प्राणायामो वलिः स्तुतिः ॥
भिक्षाटनं जपः सन्ध्या त्यागः कर्मफलस्य च ।
एष स्वधर्मो विख्यातो यतीनां नियतात्मनाम् ॥" — इति ।

प्रव्रज्यां कृत्वापि गुरोः समीपे ब्रह्मज्ञानपर्यन्तं निवसेत् । तदुक्तं लिङ्गपुराणे, —

"आश्रमत्रयमुक्तस्य* प्राप्तस्य परमाश्रमम् ।
ततः संवत्सरस्यान्ते प्राप्य ज्ञानमनुत्तमम् ।
अनुज्ञाप्य गुरुञ्चैव चरेद्धि पृथिवीमिमाम् ।
त्यक्तसङ्गो जितक्रोधो लघ्वाहारो जितेन्द्रियः ॥
पिधाय बुद्ध्या द्वाराणि ध्यानेनैकमना भवेत् ।" — इति ।

मत्स्यपुराणेऽपि, —

"गुरोरपि हिते युक्तः स तु संवत्सरं वसेत् ।
नियमेष्वप्रमत्तस्तु यमेषु च सदा भवेत् ॥
प्राप्य चान्ते ततश्चैव ज्ञानयोगमनुत्तमम् ।
अविरोधेन धर्मस्य चरेत पृथिवीं यतिः ॥" — इति ।

संवत्सरमित्युपलक्षणं, यावज्ज्ञानं तावन्निवसेत् । गुरुसमीप-वासस्य ज्ञानार्थत्वात् । पृथिवी-विचरणे विशेषमाह कण्वः, —

"एकरात्रं वसेत् ग्रामे नगरे पञ्चरात्रकम् ।
वर्षाभ्योऽन्यत्र वर्षासु मासांश्च चतुरो वसेत् ॥" — इति ॥

---

* आश्रमत्रयमुत्सृज्य, — इति मु० पुस्तके पाठः ।

मत्स्यपुराणेऽपि, —

"अष्टौ मासान् विहारः स्याद्यतीनां संयतात्मनाम् ।
एकत्र चतुरो मासान् वार्षिकान् निवसेत् पुनः ॥
अविमुक्ते प्रविष्टानां विहारस्तु न विद्यते ।
न दोषो भविता तत्र दृष्टं शास्त्रं पुरातनम् ॥"— इति ।

चातुर्मास्य-निवासे प्रयोजनमाह मेधातिथिः, —

"संरक्षणार्थं जन्तूनां वसुधातलचारिणाम् ।
आषाढ़ादींश्च चतुर आ मासान् कार्त्तिकाद् यतिः ॥
धर्माढ्ये जलसम्पन्ने ग्रामान्ते निवसेच्छुचिः ।" — इति ।

अन्यानपि हेयोपादेयांश्च धर्मान् संगृह्याह स एव, —

"श्रद्धया परयोपेतः परमात्म-परायणः ।
स्थूलसूक्ष्मशरीरेभ्यो मुच्यते दशषट्कवित् ॥
त्रिदण्डं कुण्डिकां कन्थां भैक्ष-भाजनमासनम् ।
कौपीनाच्छादनं वासः षड़ेतानि परिग्रहेत् ॥
स्थावरं जङ्गमं वीजं तैजसं विषयायुधम्* ।
षड़ेतानि न गृह्णीयाद् यति र्मूत्रपुरीषवत् ॥
रसायनं क्रियावादं ज्योतिषं क्रयविक्रयम् ।
विविधानि च शिल्पानि वर्जयेत् परदारवत् ॥
भिक्षाटनं जपं स्नानं ध्यानं शौचं सुरार्चनम् ।
कर्त्तव्याणि षड़ेतानि सर्वथा नृप ! दण्डवत् ॥
नटादि-प्रेक्षणं द्यूतं प्रमदां सुहृदं तथा ।
भक्ष्यं भोज्यमुदक्यां च षण्न पश्येत् कदाचन ।
स्कन्धावारे खले सार्थे पुरे ग्रामे वसद्गृहे ॥

---

* विषमायुधम्, — इति स० पुस्तके पाठः ।

न वसेत यतिः षटसु स्थानेष्वेतेषु कहिंचित् ।
रागं द्वेषं मदं मायां दम्भं मोहं परात्मसु ॥
षड़ेतानि यतिर्नित्यं मनसापि न चिन्तयेत् ।
मञ्चकं शुक्लवस्त्रञ्च स्त्रीकथां लौल्यमेव च ॥
दिवास्वापञ्च यानञ्च यतीनां पतनानि षट् ।
संयोगंच वियोगगंच वियोगस्य च साधनम् ॥
जीवेश्वरप्रधानानां स्वरूपाणि बिचिन्तयेत् ।
आसनं पात्र-लोपश्च सञ्चयाः शिष्य-सङ्ग्रहः ॥
दिवास्वापो वृथाजल्पौ यतेर्बन्ध-कराणि षट् ।
एकहात्परतो ग्रामे पञ्चाहात् परतः पुरे ॥
वर्षाभ्योऽन्यत्र तत्-स्थान*मासनं तदुदाहृतम् ।
उक्तानां यति-पात्राणामेकस्यापि न सङ्ग्रहः ॥
भिक्षोर्भैक्षभुजश्चापि पात्र-लोपः स उच्यते ।
गृहीतस्य त्रिदण्डादेर्द्वितीयस्य परिग्रहः ॥
कालान्तरोपभोगार्थं सञ्चयः परिकीर्त्तितः ।
शुश्रूषा-लाभ-पूजार्थं यशोऽर्थं वा परिग्रहः ॥
शिष्याणां न तु कारुण्यात् सस्नेहः शिष्यसंग्रहः ।
विद्या दिवा प्रकाशत्वादविद्या रात्रिरुच्यते ॥
विद्याभ्यासे प्रमादो यः स दिवास्वाप उच्यते ।
आध्यात्मिकीं कथां मुक्त्वा भैक्षचर्यां सुरस्तुतिम् ॥
अनुग्रहप्रदप्रश्नो वृथाजल्पः स उच्यते ।
अजिह्वः षण्डकः पङ्गुरन्धो वधिर एव च ॥
मुग्धश्च मुच्यते भिक्षुः षड्भिरेतैर्न संशयः ।
इदं मृष्टमिदं नेति योऽश्नन्नपि न सज्जति ॥

---

* वद्वास, — इति ल० पुस्तके पाठः ।

हितं सत्यं मितं वक्ति तमजिह्वं प्रचक्षते ।
सद्योजातां यथा नारीं तथा षोड़शवार्षिकीम् ॥
शतवर्षाञ्च यो दृष्ट्वा निर्विकारः स षण्डकः ।
भिक्षार्थमटनं यस्य विण्मूत्रकरणाय च ॥
योजनान्न परं याति सर्वथा पङ्गुरेव सः ।
तिष्ठतो व्रजतो वापि यस्य चक्षुर्न दूरगम् ॥
चतुर्युगद्वयं त्यक्त्वा परिव्राट् सोऽन्ध उच्यते ।
हिताहितं मनोरामं वचः शोकावहं यतिः *॥
श्रुत्वा यो न शृणोतीव वधिरः स प्रकीर्त्तितः ।
सान्निध्ये विषयाणां यः समर्थोऽविकलेन्द्रियः † ॥
सुप्तवद्वर्त्तते नित्यं स भिक्षुर्मुग्ध उच्यते ॥" — इति ।

भिक्षाटनविधिमाह मनुः, —

"एककालं चरेद्भैक्षं न प्रसज्येत विस्तरे ।
भैक्षप्रसक्तोहि यतिर्विषयेष्वपि सज्जते ॥
विधूमे सन्नमुषले व्यङ्गारे भुक्तवर्जिते ।
वृत्ते सराव-संपाते भिक्षां नित्य यतिश्चरेत् ।
अलाभे न विषादी स्याल्लाभे चैव न हर्षयेत् ।
प्राणयात्रिकमात्रः स्यान्मात्रा-सङ्गाद्विनिर्गतः" ॥ — इति ।

मीयन्ते, — इति मात्रा विषयास्तेषां सङ्गाद्विनिर्गतो यतस्ततोन हर्ष-विषादौ कार्य्यौ । यमोऽपि, —

"स्नात्वा शुचिः शुचौ देशे कृतजप्यः समाहितः ।
भिक्षार्थी प्रविशेद्ग्रामं राग-द्वेष-विवर्ज्जितः ॥

---

* शोकावहन्तु यत्, — इति मु० पुस्तके पाठः ।

† विजितेन्द्रियः, — इति मु० पुस्तके पाठः ।

चरेन्माधूकरं भैक्षं यतिर्म्लेच्छ-कुलादपि ।
एकान्नं न तु भुञ्जीत वृहस्पति-समोयतिः ॥
भैध्यं भैक्षं चरैन्नित्यं सायाह्ने वाग्यतः शुचिः ।
एकवासा विशुद्धात्मा मन्दगामी युगान्तदृक् ॥
यथालब्धं तथाऽश्नीयादाज्यसंस्कार-वर्ज्जितम् ।
भैक्षं माधूकरं नाम सर्व्व-पातक-नाशनम्" — इति ।

वौधायनोऽपि, —

"विधूमे सन्न-मुसले व्यङ्गारे भुक्तवर्ज्जिते ।
कालेऽपराह्ण-भूयिष्ठे भिक्षाऽटनमथाचरेत् ॥
ऊर्द्ध जान्वोरधोनाभेः परिधायैकमम्बरम् ।
द्वितीयमान्तरं वासः पात्री दण्डी च वाग्यतः ॥
सव्ये चादाय पात्रन्तु त्रिदण्डं दक्षिणे करे ।
उपतिष्ठेत सूर्य्यन्तु ध्यात्वा चैकत्वमात्मना ॥
उक्त्वा विराजनं मन्त्रमाकृष्णेन प्रदक्षिणम् ।
कृत्वा पुनर्जपित्वा च ये ते पन्थान इत्यपि ॥
योऽसौ विष्णवाख्य आदित्ये पुरुषोऽन्तर्हृदि स्थितः ।
सोऽहं नारायणो देव इति ध्यात्वा प्रणम्य तम् ॥
भिक्षापात्रादि-शुद्धयर्थमवमुच्याप्युपानहौ ।
ततो ग्रामं व्रजेन्मन्दं युगमात्रावलोककः ॥
ध्यायन् हरिञ्च तच्चित्ते इदं च समुदीरयेत् ।
विष्णुस्तिर्य्यगधोर्द्ध्वं मे वैकुण्ठो विदिशन्दिशम् ॥
पातु मां सर्व्वतो रामो धन्वी चक्री च केशवः ।
अभिगम्य गृहाद्भिक्षां भवत्-पूर्व्वं प्रचोदयेत् ॥
गो-दोहमात्रं तिष्ठेच्च वाग्यतोऽधोमुखस्ततः ।
दृष्ट्वा भिक्षां दृष्टिपूतां दातुश्च कर-संस्थिताम् ॥

त्रिदण्डं दक्षिणे त्वङ्गे ततः सन्धाय बाहुना ।
उत्पाटयेच्च कवचं दक्षिणेन करेण सः ॥
पात्रं वामकरे क्षिप्त्वा श्लेपयेद्दक्षिणेन तु ।
प्राणायात्रिकमात्रन्तु भिक्षेत विगतस्पृहः" — इति ॥

भैक्षस्य पञ्चविधत्वमाहोशनाः, —

"माधूकरमसन्तप्तं प्राक्प्रणीतमयाचितम् ।
तात्कालिकोपपन्नञ्च भैक्षं पञ्चविधं स्मृतम् ॥
मनःसङ्कल्प-रहितान् गृहांस्त्रीन् सप्त पञ्चकान् ।
मधुवदाहरणं यत्तु माधूकरमिति स्मृतम् ॥
शयनोत्थापनात् प्राग्यत् प्रार्थितं भक्तिसंयुतैः ।
तत् प्राक्प्रणीतमित्याह भगवानुशना मुनिः ॥
भिक्षाऽटन-समुद्योगात् प्राक् केनापि निमन्त्रितम् ।
अयाचितं हि तद्भैक्षं भोक्तव्यं मनुरब्रवीत् ॥
उपस्थाने च यत्प्रोक्तं भिक्षार्थं ब्राह्मणेन ह ।
तात्कालिकमिति ख्यातं तदत्तव्यं मुमुक्षुणा ॥
सिद्धमन्नं भक्तजनैरानीतं यन्मठं प्रति ।
उपपन्नं तदित्याहुर्मुनयो मोक्षकाङ्क्षिणः" — इति ।

भिक्षान्नं प्रशंसति यमः, —

"यश्चरेत् सर्ववर्णेषु भैक्षमभ्यवहारतः ।
न स किञ्चिदुपाश्नीयादपि भैक्षमिति स्थितिः ॥
अब्बिन्दुं यः कुशाग्रेण मासि मासि त्रयं पिवेत् ।
न्यायतो यस्तु भिक्षाशी पूर्वोक्तात्तु विशिष्यते ।
तप्तकाञ्चनवर्णेन गवां मूत्रेण यावकम् ॥
पिवेत् द्वादशवर्षाणि न तद्भैक्षसमं भवेत् ।
शाकभक्षाः पयोभक्षा येऽन्ये यावकभक्षकाः ॥

सर्व्वे भैक्षभुजस्तस्य कलां नार्हन्ति षोड़शीम् ।
न भैक्षं परपाकान्नं न च भैक्षं प्रतिग्रहः ॥
सोम-पान-समं भैक्षं तस्मद्भैक्षेण वर्त्तयेत्" — इति ।

अत्र, सर्व्ववर्णेष्वित्यापद्विषयम् । अतएव वौधायनोऽपि, —
"ब्राह्मण-क्षत्रिय-विशां मेध्यानामन्नमाहरेत् ।
असम्भवे तु पूर्व्वस्याप्याददीतोत्तरोत्तरम् ॥
सर्व्वेषामप्यभावे तु भक्षद्वयमनश्नता ।
भैक्षं शूद्रादपि ग्राह्यं रक्ष्याः प्राणा विजानता" — इति ।

नच भिक्षां लब्धुमुल्कापाताद्युत्पात-कथनं ग्रहदौस्थ्यादि-कथनमन्यं वा कञ्चिदुपाधिं सम्पादयेत् । तदाह वौधायनः, —
"न चोत्पात-निमित्ताभ्यां न नक्षत्राङ्ग-विद्यया ।
नानुशासनवादाभ्यां भिक्षां लिप्सेत कर्हिचित्" — इति ।

वर्ज्यमन्नमाहात्रिः, —
हितं मितं सदाऽश्नीयाद्यत् सुखेनैव जीर्य्यति ।
धातुः प्रकुप्यते येन तदन्नं वर्जयेद्यतिः ।
उदक्या-चोदितं चान्नं द्विजान्नं शूद्र-चोदितम् ॥
प्राण्यङ्गे चापि सक्लृप्तं* तदन्नं वर्जयेद्यतिः ।
पित्रर्थं कल्पितं पूर्व्वमन्नं देवादि-कारणात् ॥
वर्जयेच्चादृशीं भिक्षां परबाधाकरीं तथा" — इति ।

परबाधा-प्रसक्तिमेवाभिप्रेत्य मनुराह, —
"न तापसैर्ब्राह्मणैर्वा वयोभिरथवा श्वभिः ।
आकीर्णं भिक्षुकैर्व्वाऽन्यैरगारमुपसंव्रजेत्" — इति ।

* प्राण्यङ्गे वाससे क्लृप्तं, — इति मु० पुस्तके पाठः ।

यस्तु भिक्षां दातुं शक्तोऽपि नास्तिक्यान्न प्रयच्छति, तद्गृहं वर्जये दित्याह वौधायनः. —

भिक्षां न दद्युः पञ्चाहं सप्ताहं वा कदाचन ।
यस्मिन् गृहे जना मोर्ख्यात्त्यजेच्चण्डाल-वेश्मवत्" — इति ।

अनिन्द्य-गृहस्य वर्ज्जने वाधमाह सएव, —

"साधुं चापतितं विप्रं यो यतिः परिवर्जयेत् ।
स तस्य सुकृतं दत्वा दुष्कृतं प्रतिपद्यते" — इति ।

यस्तु दरिद्रः श्रद्धालुतया स्वयमुपोष्यापि भिक्षां प्रयच्छति. तस्य भिक्षा न ग्राह्या । तदुक्तं स्मृत्यन्तरे, —

"आत्मानं पीड़यित्वाऽपि भिक्षां यः संप्रयच्छति ॥
सा भिक्षा हिंसिता ज्ञेया नादद्यात्तादृशीं यतिः" — इति ।

भिक्षार्थं वहुषु गृहेषु पर्य्यटितुमलसं प्रत्याह वौधायनः, —

"एकत्र लोभाद्व यो भिक्षुः पात्रपूरणमिच्छति ।
दाता स्वर्गमवाप्नोति भोक्ता भूञ्जीत किल्विषम्"— इति ।

यतिपात्रं विविनक्ति मनुः, —

"अतैजसानि पात्राणि तस्य स्युर्निर्व्रणानि च ।
तेषामद्भिः स्मृतं शौचं चमसानामिवाध्वरे ॥
अलाबुं दारुपात्रं वा मृन्मयं वैणवन्तथा ।
एतानि यति-पात्राणि मनुः स्वायम्भुवोऽब्रवीत्" — इति ।

यमोऽपि, —

"हिरण्मयानि प्रात्राणि कृष्णायसमयानि च ।
यतीनां तान्यपात्राणि वर्ज्जयेत्तानि भिक्षुकः" ।

वोधयनोऽपि, —

"स्वयमाहृतपर्णेषु स्वयं शीर्णेषु वा पुनः।
भुञ्जीत न वटाश्वत्थकरञ्जानान्तु पर्णके॥
कुम्भी तिन्दुकयोर्व्वाऽपि कोविदारार्कयोस्तथा।
आपद्यपि न कांस्ये तु मलाशी कांस्यभोजनः॥
सौवर्णे राजते ताम्रमये वा त्रपु-सीसयोः" — इति।

भोजन-नियममाह स एव। "भिक्षाचर्य्यादुपावृत्तो हस्तौ पादौ च प्रक्षाल्याचम्यादित्यस्याग्रे निवेदयन्नुदुत्यं चित्रमिति ब्रह्मयज्ञानमिति च उद्वयं तमसस्परीति च जपित्वा भुञ्जीत" — इति। नृसिंहपुराणेऽपि, —

'ततो निवर्त्य तत्पात्रं संस्थाप्याचम्य संयमी।
चतुरङ्गुलेषु प्रक्षाल्य ग्रासमात्रं समाहितः॥
सर्व्वव्यञ्जन-संयुक्तं पृथक् पात्रे निवेदयेत्।
सूर्यादिदेवभूतेभ्यो दत्त्वाऽन्नं प्रोक्ष्य वारिणा॥
भुञ्जीत पर्णपुटके पात्रे वा वाग्यतो यतिः।
भुक्त्वा पात्रं यतिर्नित्यं क्षालयेन्मन्त्रपूर्व्वकम्॥
न दुष्येत्तस्य तत्पात्रं यज्ञेषु चमसा इव।
अथाचम्य निरुद्धासु रुपतिष्ठेत भास्करम्॥
जप-ध्यान-विशेषेण दिनशेषं नयेद्बुधः।
कृतसन्ध्यस्ततो रात्रिं नयेद्देव-गृहादिषु॥
हृत्पुण्डरीकनिलये ध्यात्वाऽऽत्मानमकल्मषम्।
यतिर्धर्म्मरतः शान्तः सर्व्वभूतसमो वशी॥
प्राप्नोति परमं स्थानं यत्प्राप्य न निवर्त्तते" — इति।

कुर्म्मपुराणेऽपि, —

"आदित्ये दर्शयित्वाऽन्नं भुञ्जीत प्राङ्मुखो यतिः।
हुत्वा प्राणाहुतीः पञ्चग्रासानष्टौ समाहितः।

आचम्य देवं ब्रह्माणं ध्यायीत परमेश्वरम् ।
प्राग्रात्रेऽपररात्रे च मध्यरात्रे तथैवच ॥
सन्ध्यास्वह्नि विशेषेण चिन्तयेन्नित्यमीश्वरम्”— इति।

## अथान्येयतिधर्म्माः ।

तत्राहात्रिः, —

“अतः परं प्रक्ष्यामि आचारो यो यतेः स्मृतः ।
अभ्युत्थान-प्रियालापैर्गुरुवत्प्रतिपूजनम् ॥
यतीनां व्रतवृद्धानां स्वधर्म्ममनुवर्त्तिनाम् ।
विष्णुरूपेण वै कुर्य्यान्नमस्कारं विधानतः”— इति ॥

मनुरपि, —

”कृत्त-केश-नख-श्मश्रुः पात्री दण्डी कुसुम्भवान् ।
विचरेन्नियतो नित्यं* सर्व्वभूतान्यपीड़यन् ॥
कपालं वृक्षमूलानि कुचेलमसहायता ।
समता चैव सर्व्वस्मिन्नैतन्मुक्तस्य लक्षणम् ॥
नाभिनन्देत मरणं नाभिनन्देत जीवितम् ।
कालमेव प्रतीक्षेत निर्द्देशं भृतको यथा ॥
दृष्टिपूतं न्यसेत्पादं वस्त्रपूतं जलं पिवेत् ।
सत्यपूतां वदेद्वाचं मनःपूतं समाचरेत् ॥
अतिवादांस्तितिक्षेत नावमन्येत कञ्चन ।
न चेमन्देहमाश्रित्य वैरं कुर्व्वीत केनचित् ॥
क्रुध्यन्तं न प्रतिक्रुद्ध्येदाक्रुष्टः कुशलं वदेत् ।
सप्तद्वारावकीर्णां च न वाचमनृतां बदेत् ॥

* विचरेञ्च यतिर्नित्यं, — इति मु० पुस्तके पाठः ।

अध्यात्मरतिरासीनो निरपेक्षो निरामयः।
आत्मनैव सहायेन सुखार्थी विचरेदिह॥
संरक्षणार्थं भूतानां रात्रावहनि वा सदा।
शरीरस्यात्यये चैव समीक्ष्य वसुधां चरेत्॥
अल्पान्नाभ्यवहारेण रहः स्थानासनेव च।
ह्रियमानानि विषयैरिन्द्रियाणि निवर्त्तयेत्॥
इन्द्रियाणां निरोधेन राग-द्वेष-क्षयेण च।
अहिंसया च भूतानाममृतत्वाय कल्पते"— इति॥

दक्षोऽपि, —

"नाध्येतव्यं न वक्तव्यं न श्रोतव्यं कथञ्चन।
एतैः सर्व्वैः सुनिष्पन्नो यतिर्भवति नेतरः"— इति॥

वृहस्पतिरपि, —

"न किञ्चिद्भेषजादन्यदद्यादा दन्तधावनात्।
विना भोजनकालन्तु भक्षयेदात्मवान् यतिः॥
नैवाददीत पाथेयं यतिः किञ्चिदनापदि।
पक्वमापत्सु गृह्णीयाद्यावदन्नोपभुज्यते*॥
न तीर्थवासी नित्यं स्यान्नोपवासपरो यतिः।
न चाध्ययनशीलः स्यान्न व्याख्यानपरोभवेत्"— इति।

नाध्येतव्यमित्येतत् कर्म्मकाण्ड-विषयं, अन्यथा "उपनिषदमावर्त्तयेत्" — इति श्रुतिर्वाध्येत। न श्रोतव्यमित्येतद्ब्रह्ममीमांसा-व्यतिरिक्त-विषयम्, "श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" – इति तन्मीमांसायां

*यज्यते, — इति मु० पुस्तके पाठः।

विहितत्वात्। उपपन्नश्च तीर्थोपवासाध्ययन-व्याख्यान-तात्पर्य्य-निषेधः, निवृत्तिधर्म्म-प्रधानत्वात् कैवल्याश्रमस्य। यतः स एवाह,—

यस्मिन् वाचः प्रविष्टाः स्युः कूपे प्राप्ताः शिला इव।
न वक्तारं पुनर्यान्ति स कैवल्याश्रमे वसेत्॥
यस्मिन् कामाः प्रविशन्ति विषयेभ्योपसंहृताः।
विषया न पुनर्यान्ति स कैवल्याश्रमे वसेत्॥
यस्मिन् क्रोधः शमं याति विफलः सम्यगुत्थितः।
आकाशेऽसिर्यथा क्षिप्तः स कैवल्याश्रमे वसेत्॥
यस्मिन् क्षान्तिः शमः शौचं सत्यं सन्तोष आर्जवम्।
आकिञ्चन्यमदम्भश्च स कैवल्याश्रमे वसेत्॥
वृथा प्रलापो यो न स्यान्न लोकाराधने रतः।
नान्यविद्याऽभियुक्तश्च स कैवल्याश्रमे वसेत्॥
अतीतान्न स्मरेद्भोगांस्तथैवानागतानपि।
प्राप्तांश्च नाभिनन्देत स कैवल्याश्रमे वसेत्*॥
अन्धवन्मूकवत् पङ्गु-वधिर-क्लीववच्च यः।
आस्ते व्रजति यो नित्यं स कैवल्याश्रमे वसेत्॥

उक्तधर्म्मोपेतं यतिं प्रशंसति दक्षः,—

"सञ्चितं यद्‌ गृहस्थस्य पापमामरणान्तिकम्।
निर्दहिष्यति तत् सर्व्वमेकरात्रोषितो यतिः।
संन्यस्यन्तं द्विजं दृष्ट्वा स्थानाच्चलति भास्करः॥
एष मे मण्डलं भित्वा परं स्थानं प्रयास्यति"।

तदेवं यतिधर्म्मा निरूपिताः।

---

* नास्त्ययं श्लोकः मु० पुस्तके।

उक्तानां ब्रह्मचर्य्यादीनां संन्यासान्तानां चतुर्णामाश्रमाणां प्रत्येकमवान्तरभेदाश्चतुर्व्विधाः। तदुक्तं महाभारते,—

"ब्रह्मचारी गृहस्थश्च वानप्रस्थोऽथ भिक्षुकः।
चत्वार आश्रमाः प्रोक्ताः एकैकस्य चतुर्विधाः" — इति।

तत्र चातुर्विध्यं कात्यायन-स्मृतेर्व्याचक्षते। "ब्रह्मचारि-गृहस्थ-वानप्रस्थ-परिव्राजकाश्चत्वार आश्रमाः षोड़श-भेदा भवन्ति। तत्र ब्रह्मचारिणश्चतुर्विधा भवन्ति, गायत्रो ब्राह्मः प्राजापत्यो वृहन्निति। उपनयनादूर्द्ध त्रिरात्रमक्षारलवणाशो गायत्रीमधीते, स गायत्रः। अष्टाचत्वारिंशद्वर्षाणि वेदब्रह्मचर्य्यं चरेत, प्रतिदं द्वादश द्वादश वा, यावद्ग्रहणान्तं वा वेदस्य, स ब्राह्मः। स्वदारनिरतः ऋतुकालगामी सदापरदार-वर्ज्जितः स प्राजापत्यः। आ प्रायणाद्गुरोरपरित्यागी स नैष्ठिको वृहन्निति। गृहस्था अपि चतुर्विधा भवन्ति, वार्त्तिकवृत्तयः शालीनवृत्तयो यायावरा घोरसंन्यासिकाश्चेति। तत्र वार्त्तिकवृत्तयः, कृषि-गोरक्ष-वाणिज्यमगर्हितमुपयुञ्जानाः शतसंवत्सराभिः क्रियाभिर्यजन्त आत्मानं प्रार्थयन्ते। शालीनवृत्तयो यजन्तो न याजयन्तोऽधीयाना नाध्यापयन्तो ददतो न प्रतिगृह्णन्तः शतसंवत्सराभिः क्रियाभिर्यजन्त आत्मानं प्रर्थयन्ते। यायावरा यजन्तो याजयन्तोऽधीयाना अध्यापयन्तो ददतः प्रतिगृह्णन्तः शतसंवत्सारभिः क्रियाभिर्यजन्त आत्मानं प्रार्थयन्ते। घोरसंन्यासिका उद्धृत-परिपूताभिरद्भिः कार्य्यं कुर्वन्तः प्रतिदिवसमास्तृतोञ्छवृत्तिमुपयुञ्जानां शतसंवत्सराभिः क्रियाभिर्यजन्त आत्मानं प्रार्थयन्ते। वानप्रस्था अपि चतुर्विधाभवन्ति, वैखानसा औदुम्वरा वालखिल्याः फेनपाश्चेति। तत्र, वैखानसा अकृष्टपच्यौषधि-वनस्पतिभिर्ग्रामवहिष्कृताभिरग्निपरचरणं कृत्वा पञ्चयज्ञक्रियां निर्वर्त्तयन्त आत्मानं प्रार्थयन्ते। औदुम्वरा

वदर*नोवार-श्यामाकैरग्निपरिचरणं कृत्वा पञ्चयज्ञक्रियां निर्वर्त्तयन्त आत्मानं प्रार्थयन्ते । वालखिल्या जटाधराश्चीर-चर्म-वल्कल-परिवृताः कार्त्तिक्यां पौर्णमास्यां पुष्पफल † मुत्सृजन्तः शेषानष्टौ मासान् वृत्त्युपार्ज्जनं कृत्वाऽग्निपरिचरणं कृत्वा पञ्चमहायज्ञक्रियां निर्वर्त्तयन्त आत्मानं प्रार्थयन्ते । फेनपा जीर्ण-पर्ण-फल-भोजिनो-यत्र तत्र वा वसन्तः । परिव्राजकाअपि चतुर्विधा भवन्ति, कुटीचरा-वहूदकाः हंसाः परमहंसाश्चेति । कुटीचराः स्वपुत्र-गृहेषु भैक्षचर्य्यां चरन्त आत्मानं प्रार्थयन्ते । वहूदकास्त्रिदण्ड–कमण्डलु-जल-पवित्र-पादुकाऽऽसनशिखा-यज्ञोपवीतकाषायवेषधारिणः साधुवृत्तेषु ब्राह्मणकुलेषु भैक्षं चरन्त आत्मानं प्रार्थयन्ते । हंसा एकदण्डधराः शिखा ‡ यज्ञोपवीत-धारिणः कमण्डलुहस्ता ग्रामैकरात्रवासिनो नगरे तीर्थेषु § पञ्चरात्रं एकरात्रं द्विरात्रं ¶ कृच्छ्रचान्द्रायणादि चरन्त आत्मानं प्रार्थयन्ते । परमहंसा नाम एकदण्डधराः मुण्डाः ‖ कन्था-कौपीन-वाससो व्यक्तलिङ्गा अनुन्मत्ता उन्मत्तवदाचरन्तस्त्रिदण्ड-कमण्डलु-शिक्यपद्मजलपवित्रपादुकाऽऽसन-शिखा-यज्ञोपवीतत्यागिनः शून्यागार-देवगृह-वासिनो न तेषां धर्म्मो नाधर्म्मो वा, न सत्यं नापि चानृतं सर्वसमाः समलोष्टाश्मकाञ्चनाः, यथोपपन्न-चातुर्व्वर्णे भैक्षचर्य्याञ्चरन्त आत्मानं मोक्षयन्ते ।

"तेषामुपशमो धर्म्मोनियमो वनवासिनाम् ।
दानमेकं गृहस्थानां शुश्रूषा ब्रह्मचारिणाम्"— इति ॥

* वदर, — इति नास्ति स० शा० पुस्तकयोः ।
† पुष्पफल, — इति मु० पुस्तके पाठः ।
‡ शिखावर्ज, — इति स० शा० पुस्तकयोः पाठः ।
§ तीर्थेष्टौ च, — इति मु० पुस्तके पाठः ।
¶ एकरात्रं द्विरात्रं,— इति नास्ति स० शा० सो० पुस्तकेषु ।
‖ मुण्डाः, — इति नास्ति मु० पुस्तके ।

युक्तञ्च परिव्राजकानामात्म-मोक्षणम्, तत्त्वज्ञान-पर्य्यवसायित्वात् पारिव्राज्यस्य। एतदेवाभिप्रेत्य एवं निर्वचनं स्मृत्यन्तरे दर्शितम्,—

"परिवोधात् परिच्छेदात् परिपूर्णविलोकानात्।
परिपूर्ण-फलत्वाच्च परिव्राजक उच्यते।
परितो व्रजते नित्यं परं वा व्रजते पुनः।
हित्वा चैवापरं जन्म परिव्राजक उच्यते" — इति।

तदेवमध्यायादौ मूलवचने, "चातुर्व्वर्ण्याश्रमागतम्" — इत्याश्रमशब्देन बुद्धिस्था आश्रमचतुष्टय-धर्म्माः परिसमापिताः, — इति।

द्वितीये त्वध्याये स्फुटमभिहितोजीवनकृते —
रुपायः कृष्यादिः पुनरथ समस्ताश्रमगताः।
गरीयांसो धर्म्माः किमपि विवृताः स्वाश्रमपदा —
त्तमेवं व्याकार्षीन्महितधिषणोमाधव-विभुः* ॥

इति श्रीमहाराजाधिराज-परमेश्वर-वैदिकमार्गप्रवर्त्तक-श्रीवीरबुक्क-भूपाल-साम्राज्य-धुरन्धरस्य माधवामात्यस्य कृतौ पराशरस्मृति-व्याख्यायां माधवीयायां द्वितीयोऽध्यायः ॥

## अथ तृतीयोऽध्यायः।

— ० —

ॐ नमः शिवाय ॥

प्रथम-द्वितीयाध्यायाभ्यां चातुर्व्वर्ण्याश्रमाः साक्षात्प्रतिपादिताः, आश्रमधर्म्माश्च सूचिताः। तेषु च धर्म्मेषु शूद्रस्यैवाधिकारः,

---

* नास्त्ययं श्लोकोवङ्गीय पुस्तकेषु। क्वचित् पुस्तके तृतीयाध्यायस्यादौ श्लोकोऽयं दृश्यते।

"शुचिता कर्म्म कर्त्तव्यम्" — इति श्रुतेः। सा च शुद्धिर्यद्यपि पुरुषस्य स्वाभाविकी तथापि केनचिदागन्तुकेन शौचाख्येन दोषरूपेण पुरुषगतातिशयेन कञ्चित्कालं प्रतिबध्यते। तच्चाशौचं कालेयत्तास्नानाद्यपनोद्यं, अतस्तृतीयेऽध्याये तत्प्रतिपिपादयिषुरादौ प्रतिबन्धापगमेनोत्तम्भितां शुद्धिं प्रतिजानीते, —

अतः शुद्धिं प्रवक्ष्यामि जनने मरणे तथा। इति।

यतो जननमरणयोर्धर्म्माधिकारपरिपन्थिन्यशुद्धिः प्रोप्नोति अतस्तन्निवर्त्तकोपाय-प्रतिपादनेन शुद्धिं प्रवक्ष्यामि। जनन-मरणयोश्च अशुद्धि-प्रापकत्वं मनुना दर्शितम्, —

"दन्तजातेऽनुजाते च कृतचूले च संस्थिते।
अशुद्धा बान्धवाः सर्व्वे सूतके च तथोच्यते" — इति॥

प्रतिज्ञातां शुद्धिं वर्णानुक्रमेण दर्शयति, —

दिनत्रयेण शुद्ध्यन्ति ब्राह्मणाः प्रेतसूतके॥ १॥
क्षत्रियो द्वादशाहेन वैश्यः पञ्चदशाहकैः।
शूद्रः शुद्ध्यति मासेन पराशर-वचो यथा॥ २॥

ननु दिनत्रयेण शुद्ध्यन्ति ब्राह्मणाः, — इत्येतद्बहु-स्मृति-विरुद्धम्। तथाच दक्षः, —

"शुद्ध्येद्विप्रो दशाहेन द्वादशाहेन भूमिपः।
वैश्यः पञ्चदशाहेन शूद्रो मासेन शुद्ध्यति" — इति।

देवलोऽपि, —

"दशाहं ब्रह्मणानान्तु क्षत्रियाणां त्रिपञ्चकम्।
विंशद्रात्रं तु वैश्यानां शूद्राणां मासमेव हि" — इति॥

वसिष्ठोऽपि, —

"ब्राह्मणो दशरात्रेण पञ्चदशरात्रेण क्षत्रियः।
वैश्यो विंशतिरात्रेण शूद्रो मासेन शुद्ध्यति" — इति॥

नैषदोषः। विप्रेषु त्र्यहाशौचस्य समानोदक-विषयत्वात्। तथाच मनुः — "त्र्यहात्तूदकदायिनः" — इति। दशाहाशौच-प्रतिपदकानि दक्षादि-वचनानि सपिण्ड-विषयाणि,

"दशाहं शावमाशौचं सपिण्डेषु बिधीयते" —

इति मनुस्मरणात्। कूर्म्मपुराणेऽपि, —

"दशाहं शावमाशौचं सपिण्डेषु विपश्चितः" — इति।

बृहस्पतिरपि, —

"दशाहेन सपिण्डास्तु शुद्ध्यन्ति प्रेतसूतके।
त्रिरात्रेण सकुल्यास्तु स्नात्वा शुद्ध्यन्ति गोत्रजाः"—इति।

ननु, क्षत्रियो द्वादशाहेन, — इत्येतदप्यनेकस्मृतिविरुद्धम्। तत्र, वसिष्ठदेवलाभ्यां क्षत्रियस्य पञ्चदशाहाशौचमुक्तं, तद्वचनं चोदाहृतम्। शातातपस्त्वेकादशाहमाह, —

अत्र ६७२ पृष्ठातः ६७६ पृष्ठाया न्यूनत्वेऽपि न पाठन्यूनता आशङ्कनीयेति पाठकैरवधातव्यम् ।

"एकादशाहाद्राजन्योवैश्योद्वादशभिस्तथा ।
शूद्रोविंशतिरात्रेण शुद्ध्यते मृतसूतके"-इति ।

वृद्धपराशरोऽपि,—

"क्षत्रियस्तु दशाहेन स्वकर्म्मनिरतः शुचिः ।
तथैव द्वादशाहेन वैश्यः शुद्धिमवाप्नुयात्"—इति ॥

अत्रोच्यते । विद्यातपसोस्तारतम्येन विरोधः समाधेयः । यावद्यावद्विद्यातपसी विवर्द्धेते, तावत् तावदाशौचं संकुच्यते । अतएव याज्ञवल्क्योन्यायवर्त्तिनः शूद्रस्याप्यर्द्धमाशौचमाह,—

"क्षत्रस्य द्वादशाहानि विशः पञ्चदशैव तु ।
त्रिंशद्दिनानि शूद्रस्य तदर्द्धं न्यायवर्त्तिनः"—इति ।

देवलोऽप्येतदेवाभिप्रेत्य विप्रादीनामाशौच-तारतम्यमाह,—

"चत्वार्यधीतवेदानामहान्याशौचमिष्यते ।
वेदाग्नि-युक्त-विप्रस्य त्र्यहमाशौचमिष्यते ॥
एताभ्यां श्रुत-युक्तस्य दिनमेकं विधीयते ।
एतैः सार्कं कर्म्म-युक्तः सद्यः शुचिरसंशयः ॥
एतैर्युक्तस्य राज्ञस्तु द्वादशैकादशादश ।
वैश्यस्यैवं पञ्चदशद्वादशैकादश क्रमात् ॥
अर्द्धमासन्तु शुश्रूषोः शूद्रस्याशौचमिष्यते"—इति ।

यत्तु, क्षत्रियादेस्त्रिपञ्चकादिकं तेनैवोक्तं; तद्विद्यातपोरहितविषयम्,

"प्राकृतानां तु वर्णानामाशौचं संप्रकीर्त्तितम्"—इति

वाक्यशेषात् ।

दत्तोऽपि दश पक्षानुपन्यस्य, गुणोत्कर्षापकर्षाभ्यां व्यवस्था-माह,—

"सद्यः शौचं तथैकाहं त्र्यहश्चतुरहस्तथा ।
षड्-दश-द्वादशाहश्च पक्षोमासस्तथैवच ॥
मरणान्तं तथा चान्यत् पक्षास्तु दश सूतके ।
उपन्यास-क्रमेणैव वक्ष्याम्यहमशेषतः ॥
ग्रन्थार्थतोविजानाति वेदमङ्ग-समन्वितम् ।
सकल्पं सरहस्यं च क्रियावांश्चेन्न सूतकम् ॥
राजर्त्विग्दीक्षितानाञ्च बाले देशान्तरे तथा ।
व्रतिनां सत्रिणां चैव सद्यः शौचं विधीयते ॥
एकाहाच्छुध्यते विप्रोयोऽग्नि-वेद-समन्वितः ।
हीने हीनतरे वाऽपि त्र्यहश्चतुरहस्तथा ॥
तथा हीनतमे चैव षडहः परिकीर्त्तितः ।
ये दशाहादयः प्रोक्तावर्णानान्ते यथाक्रमम् ॥
अस्नात्वा चाप्यहुत्वा च अदत्वाऽश्नंस्तथा द्विजः ।
एवंविधस्य विप्रस्य सर्व्वदा सूतकं भवेत्"—इति ।

अत्र, 'चत्वार्यधीतवेदानाम्'—इत्यादिनोक्तोऽघ-संकोचोयुगान्तर-विषयः ।

"स्वाध्याय-वृत्त-मापेक्षमघ-संकोचनं तथा"—

इत्यनुक्रम्य,

"कलौ युगे त्विमान् धर्म्मान् वर्ज्यानाहुर्मनीषिणः"—इति स्मृत्यन्तरेऽभिधानात् ।

"दशाहएव विप्रस्य सपिण्डमरणे सति।

कल्पान्तराणि कुर्व्वाणः कलौ व्यामोहकिल्विषी"—इति

हारीत-वचनाच्च। उक्तरीत्या चत्रियवैश्येऽपि वचनान्तर-विरोधः परिहर्त्तव्यः। एवञ्च सति, विप्रस्य समानोदकेषु त्रिरात्रं सपिण्डेषु दशरात्रम्। चत्रियादीनां द्वादशाहादि यन्मूलवचनोक्तं,तदेव स्थितम्। यद्यपि चत्रिय-वैश्ययोः पञ्चदशाह-विंशतिरात्र-वचनानुसारेण द्वादशाह-पञ्चदशाहाशौच-वचनं गुणवदघ-सङ्कोच-परमिवाभाति, देवलश्च गुणवद्विषयत्वेनैवोदाजहार, तथापि शिष्टाचाराद्भूयस्त्यनुग्रहाच्च चत्रिय-वैश्ययोर्मूलवचनोक्तएव मुख्यः कल्पः। अतएव मनु-कूर्म्म-दचाः,—

"शुद्ध्येद्विप्रोदशाहेन द्वादशाहेन भूमिपः।

वैश्यः पञ्चदशाहेन शूद्रोमासेन शुद्ध्यति"—इति।

मार्कण्डेयोऽपि,—

"दशाहं ब्राह्मणस्तिष्ठेद्दानहोमादि-वर्जितः।

चत्रियोद्वादशाहन्तु वैश्योमासार्द्धमेवच॥

शूद्रस्तु माससमासीत निज-कर्म्म-विवर्जितः"—इति।

वृहस्पतिरपि,—

"चत्रियोद्वादशाहेन शुद्ध्यते मृतसूतके।

वैश्यः पञ्चदशाहेन शूद्रोमासेन शुद्ध्यति"—इति।

विष्णुरपि। "ब्राह्मणस्य सपिण्डानां जनन-मरणयोर्द्दशाहमाशौचं द्वादशाहं राजन्यस्य पञ्चदशाहं वैश्यस्य मासः शूद्रस्य"—इति। पञ्चदशाह-विंशतिरात्र-वचनं तु यावज्जीवाशौच-वाक्यमिव निन्दा-

परत्वेन युगान्तर-विषयत्वेन वा* व्याख्येयम्। 'पराशरावचोयथा'—इत्यनेन स्वमतत्वं दर्शयन् मतान्तरेष्वप्यघ-संकोच-विकाश-पराणि वचनानि सन्तीति सूचयति। तानि चास्माभिर्व्यवस्थापितानि। उक्तस्याशौचस्य कर्म्माधिकार-परिपन्थित्वात् सन्ध्याद्युपासनस्यापि निवृत्तिप्राप्तावपवादमाह,—

**उपासने तु विप्राणामङ्ग-शुद्धिश्च जायते॥२॥ इति।**

उपासनं सन्ध्यावन्दनाग्निहोत्राद्यनुष्ठानं, तस्मिन् प्रसक्ते तात्कालिकी शरीर-शुद्धिर्भवति। तदाह गोभिलः,—

"अग्निहोत्रादि-होमार्थं शुद्धिस्तात्कालिकी स्मृता।
पञ्चयज्ञान्न कुर्व्वीत ह्यशुद्धः पुनरेव सः"—इति।

यावत्कालेनाग्निहोत्रं निष्पद्यते, तावदेव शुद्धिर्न तूपरि। पुलस्त्योऽपि,—

"सन्ध्यामिष्टिं चरुं होमं यावज्जीवं समाचरेत्।
न त्यजेत् सूतके वाऽपि त्यजन् गच्छत्यधोद्विजः॥
सूतके मृतके चैव सन्ध्याकर्म्म न सन्त्यजेत्†।
मनसोच्चारयेन्मन्त्रान् प्राणायामम्टते द्विजः"—इति।

अञ्जलि-प्रक्षेपे तु वाचिकोच्चारणमभिप्रेत्य पैठीनसिराह।"सूतके सावित्र्याऽञ्जलिं प्रक्षिप्य प्रदक्षिणं कृत्वा सूर्यं ध्यायन्नमस्कुर्यात्"। मनसोच्चारणस्य मार्जनादि-मन्त्रेष्वपि सिद्धत्वादञ्जलौ विशेष-विधानं वाचिकाभिप्रायम्। यत्तु मनुनोक्तम्,—

---

* युगान्तरविषयत्वेन वा, इति मुद्रितातिरिक्तपुस्तकेषु न दृश्यते।
† समाचरेत् इति से० पुस्तके पाठः।

"उभयत्र दशाहानि कुलस्यान्नं न भुज्यते ।

दानं प्रतिग्रहोहोमः स्वाध्यायश्च निवर्त्तते"—इति ।

तत् स्मार्त्त-वैश्वदेवादि-विषयम् । तदाह जातूकर्णः,—

"पञ्चयज्ञ-विधानञ्च न कुर्यान्मृत्युजन्मनोः"—इति ।

यत्तु जावालेनोक्तम्,—

"सन्ध्यां पञ्च महायज्ञान्नैत्यिकं स्मृतिकर्म्म च ।

तन्मध्ये हापयेदेव अशौचान्ते तु तत्क्रिया"—इति ।

तद्वाचिक-सन्ध्याऽभिप्रायम् । स्मार्त्त-कर्म्म-वर्जनं स्वयं कर्तृक-विषयं, अन्येन तु कारयेदेव । तदाह वृहस्पतिः,—

"सूतके मृतके चैव ह्यशक्तौ श्राद्ध-भोजने ।

प्रवासादि-निमित्तेषु हावयेन्न तु हापयेत्" ॥

जातूकर्णोऽपि,—

"सूतके तु समुत्पन्ने स्मार्त्तं कर्म्म कथं भवेत् ।

पिण्डयज्ञं चरुं होममसगोत्रेण* कारयेत्"—इति ।

मूल-वचने विप्र-ग्रहणं क्षत्रियादीनामुपलक्षणम् । द्विविधञ्चाशुचित्वं कर्म्मानधिकार-लक्षणमस्पृश्यत्व-लक्षणञ्च । तत्राङ्गशुद्धिरित्यनेनैकस्य निवृत्तिरुक्ता, चकारेणापरस्यापि । यथाऽशौचे तात्कालिकी द्विविधाऽशुद्धिस्तथा जननेऽपि तत्प्राप्तौ विशेषमाह,—

**ब्राह्मणानां प्रसूतौ तु देहस्पर्शोविधीयते । इति ।**

जनने सपिण्डानां सार्व्वकालिकोऽङ्गस्पर्शः, न तु शावत्तात्कालिकः । अतएवापस्तम्बः,—

---

* होममन्यगोत्रेण,—इति मु० पुस्तके पाठः ।

"सूतके सूतिका-वर्ज्जं संस्पर्शेन निषिध्यते।
संस्पर्शे सूतिकायास्तु स्नानमेव विधीयते"—इति ॥

कूर्म्मेऽपि,—

"सूतके तु सपिण्डानां संस्पर्शोनैव दुष्यति"—इति।

पैठीनसिरपि,—

"जनौ सपिण्डाः शुचयोमातापित्रोस्तु सूतकम्।
सूतकं मातुरेव स्यादुपस्पृश्य पिता शुचिः"—इति।

जनने मातापितृ-व्यतिरिक्ताः सर्व्वे सपिण्डाः स्पृश्याः, मातापित्रोस्तु नास्ति स्पृश्यत्वम्। तत्रापि पिता स्नानेन स्पृश्योभवति, दशाहमस्पृश्यत्वं मातुरेव। तथा च वसिष्ठः,—

"नाशौचं विद्यते पुंसः संसर्गञ्चेन्न गच्छति।
रजस्तत्राशुचि ज्ञेयं तच्च पुंसि न विद्यते"—इति।

संवर्त्तोऽपि,—

"जाते पुत्रे पितुः स्नानं सचेलन्तु विधीयते।
माता शुद्ध्येद्दशाहेन स्नानात्तु स्पर्शनं पितुः"—इति।

मरणे वर्णानुक्रमेण शुद्धिर्दर्शिता। इदानीं जननेऽपि वर्णक्रमेण शुद्धिं दर्शयति,—

**जातौ विप्रोदशाहेन द्वादशाहेन भूमिपः ॥ ३ ॥**
**वैश्यः पञ्चदशाहेन शूद्रोमासेन शुद्ध्यति। इति।**

जातौ जनने। स्पष्टमन्यत्। इयञ्च शुद्धिः कर्म्माधिकार-विषया। समनन्तरातीतेन वचनेन स्पर्श-विषयायाः शुद्धेरुक्तत्वात्। जन्म-दिवसे तु नास्त्यशुद्धिर्दानादि-विषये। अतएव मनुः,—

"जाते कुमारे तदहः कामं कुर्य्यात् प्रतिग्रहम्।
हिरण्य-धान्य-गो-वासस्तिलानां गुड-सर्पिषाम्"—इति।

शंखलिखितौ। "कुमार-प्रसवे प्राङ्नाभिच्छेदनात्* गुड़-तिल-हिरण्य-वस्त्र-प्रावरण-गो-धान्यानां प्रतिग्रहेष्वदोषः, तदहरित्येके"। वृद्ध-याज्ञवल्क्यः,—

"कुमार-जन्म-दिवसे विप्रैः कार्य्यः प्रतिग्रहः।
हिरण्य-भू-गवाश्वाज-वासः-शय्याऽऽसनादिषु॥
तत्र सर्व्वं प्रतिग्राह्यं कृतान्नन्तु न भक्षयेत्।
भक्षयित्वा तु तन्मोहाद्द्विजश्चान्द्रायणञ्चरेत्"—इति।

बौधायनोऽपि,—

"गुड़तैल-हिरण्यानाङ्गोधान्यानाञ्च वाससाम्।
तस्मिन्नहनि दानञ्च कार्य्यं विप्रैः प्रतिग्रहः†॥
प्राङ्नाभि-च्छेदनाद् ग्राह्याण्येतानीत्यपरे जगुः"—इति।

यास्तु जन्मदाख्याः सूतिकागृहाभिमानिन्योदेवताः‡, तासां पूजायां प्रथम-षष्ठ-दशम-दिवसेष्वशुद्धिर्नास्ति। तथा च व्यासः,—

"सूतिकाऽऽवास-निलयाजन्मदानाम देवताः।
तासां याग-निमित्तन्तु शुद्धिर्जन्मनि कीर्त्तिता॥
प्रथमे दिवसे षष्ठे दशमे चैव सर्व्वदा।
त्रिष्वेतेषु न कुर्व्वीत सूतकं पुत्त्र-जन्मनि"—इति।

---

* नाभ्यामच्छिन्नायां,—इति मु० पुस्तके पाठः।

† विप्रैः कार्य्यः प्रतिग्रहः,—इति मु० पुस्तके पाठः।

‡ सूतिकाभिमानिन्योदेवताः,—इति पाठोवङ्गीयपुस्तकेषु प्रायः।

मार्कण्डेयोऽपि,—

"रक्षणीया तथा षष्ठी निशा तत्र विशेषतः।
रात्रौ जागरणं कुर्य्याज्जन्मदानां तथा वलिम्॥
पुरुषाः शस्त्र-हस्ताश्च नृत्य-गीतैश्च योषितः।
रात्रौ जागरणं कुर्य्युर्दशम्यां चैव सूतके"—इति॥

यत्त्वङ्गिरसोक्तम्,—

"नाशौचं सूतके प्रोक्तं सपिण्डानां क्रियावताम्"—इति।

तत्पूर्व्वोक्तहोमादि-विषयत्वेन वा समनन्तरोक्तजन्मदानां वलि-विषयत्वेन वा नेतव्यम्। अन्यथा 'जातौ विप्रोदशाहेन'—इत्येतद्वचनं निर्विषयं स्यात्। उक्तस्य प्रेताशौचस्य जाताशौचस्य च क्वचित् संकोचमाह,—

**एकाहाच्छुद्ध्यते विप्रोयोऽग्नि-वेद-समन्वितः॥ ४॥**
**त्र्यहात् केवलवेदस्तु द्विहीनोदशभिर्द्दिनैः। इति।**

अत्राग्निशब्देनाहवनीयादयोगृह्यन्ते। तैश्च तत्-साध्यादर्शपूर्णमासादयउपलक्ष्यन्ते। द्विहीनोद्वाभ्यामग्नि-वेदाभ्यां हीनः। अयमाशौच-संकोचः स्वाध्याय-दुर्म्मेधसोवहुतर-सपिण्डस्य संकुचितवृत्तेश्च प्रतिग्रहादौ द्रष्टव्यः, न तु सर्व्वकर्म्मसु। तथाच गौतमः। "ब्राह्मणस्य स्वाध्यायानिवृत्त्यर्थम्"—इति। अयमर्थः। ब्राह्मणस्य संपूर्णाशौचे स्वीक्रियमाणे स्वाध्यायोनिवर्त्तेत, तन्माभूदिति। स्वाध्यायानिवृत्ति-ग्रहणं प्रतिग्रहस्याप्युपलक्षणार्थम्। अन्यथा, अश्वस्तनिकादीनां संकुचितवृत्तीनां संपूर्णाशौचे स्वीक्रियमाणे जीवनमेव न स्यात्। एवञ्च सद्यैकाह-विधानमश्वस्तनिक-विषयं, त्र्यहविधानं

आह्निकविषयं, असंकुचित-वृत्तेस्तु दशाहम्,—इति व्यवस्था । एव-मुक्तरीत्या,—

"सद्यःशौचं तथैकाहं त्र्यहश्चतुरहस्तथा ।
षड्दशद्वादशाहानि पक्षोमासस्तथैवच"—इति

इत्योक्ताः पक्षाव्यवस्थापनीयाः । वृत्ति-संकोचेनाशौच-संकोचमाह संग्रहकारः,—

"शिलोञ्छायाचितैर्जीवन् सद्यः शुद्ध्येद्द्विजोत्तमः"—इति ।

ननु, विद्वद्विषयत्वेनैवायमाशौच-संकोचः सर्व्वकर्म्मसु* किन्नेष्यते, 'योऽग्नि-वेद-समन्वितः'—इति विशेषण-सामर्थ्यात् । तन्न†,

"दशाहं शावमाशौचं सपिण्डेषु विधीयते"—

इत्यविशेषेण‡ दशाहाशौच-विधानात् । न च, सामान्य-प्राप्तस्य दशाहाशौचस्य विद्वद्विषये वाधः,—इति शङ्कनीयं ; वाधस्यानुपपत्तिहेतुकत्वाद्यावत्यवाधितेऽनुपपत्तिर्न शाम्यति तावद्वाधनीयं, अत्र चाध्ययन-प्रतिग्रहादिमात्रएव दशाहाशौच-वाधेनैकाहाशौच-विधानस्य चरितार्थत्वान्न सर्व्वत्र दशाहाशौच-वाधः । अग्नि-वेद-समन्वितत्वम-श्वस्तनिकस्यैकाहाशौच-विधि-स्तुत्यर्थं, न त्वेकाहाशौचविध्यधिकारि-विशेषणम् । यत्तु,—

"उभयत्र दशाहानि कुलस्यान्नं न भुज्यते ।
दानं प्रतिग्रहोहोमः स्वाध्यायश्च निवर्त्तते—इति

---

* सर्व्वकर्म्मसु,—इति नास्ति मु० पुस्तके ।
† अत्र, 'आचार्य्यरीत्यापि'—इत्यधिकमस्ति मु० पुस्तके ।
‡ इति विशेषेण,—इति मु० पुस्तके पाठः ।

मनुना प्रतिग्रहादि-निषेधनं कृतम्, तदसंकुचितवृत्ति-विषयम्। यद्वा, उक्तापवाद-प्रतिप्रसवाभिप्रायेण वा नेयम्*। यदि वृत्ति-संकोचासंकोचावेवाशौच-संकोचासंकोचयोः कारणं, तर्ह्यत्यन्तासंकुचि-तवृत्तेर्निर्गुणस्यामरणमाशौचं प्राप्नोतीत्याशंक्याशौचावधिं दर्शयति,

**जन्म-कर्म्म-परिभ्रष्टः सन्ध्योपासन-वर्जितः।**
**नामधारक-विप्रस्तु दशाहं सूतकी भवेत्॥६॥ इति।**

जन्म-कर्म-परिभ्रष्टः गर्भाधानादि-संस्कार-रहितः, सन्ध्योपासन-वर्जितः सन्ध्योपासनादि-नित्य-नैमित्तिक-कर्म्माण्यकुर्व्वाणः। अत-एवासौ नामधारक-विप्रोभवति। तस्यापि दशाहमेवाशौचम्। नाम-धारक-विप्र-स्वरूपं दर्शयति व्यासः,—

"ब्रह्म-वीज-समुत्पन्नोमन्त्र-संस्कार-वर्जितः।
जातिमात्रोपजीवी च स भवेन्नाम-धारकः॥
गर्भाधानादिभिर्युक्तस्तथोपनयनेन च।
न कर्मवित् न वाऽधीते स भवेन्नाम-धारकः"—इति।

ननु, संस्कार-रहितस्य नामधारक-विप्रस्य मरणान्तिकमाशौचं कूर्मपुराणेऽभिहितम्,—

"क्रिया-हीनस्य मूर्खस्य महारोगिणएवच।
यथेष्टाचरणस्याऽऽमरणान्तमशौचकम्"—इति॥

दक्षोऽपि,—

---

* 'यद्वा'—इत्यादि, 'नेयम्'—इत्यन्तं नास्ति वङ्गीयपुस्तकेषु, सो० ना० पुस्तके च।

"व्याधितस्य कदर्य्यस्य ऋण-ग्रस्तस्य सर्वदा ।
क्रिया-हीनस्य मूर्खस्य स्त्री-जितस्य विशेषतः ॥
व्यसनासक्त-चित्तस्य पराधीनस्य नित्यशः ।
श्राद्ध-कर्म्म-विहीनस्य भस्मान्तं सूतकं भवेत् ॥
नासूतकं कदाचित्स्याद्यावज्जीवन्तु सूतकम्"—इति ।

तत् कथं दशाहाशौचमिति । उच्यते । निन्दार्थवादत्वादेतेषां वचनानां न यावज्जीवाशौच-विधि-परत्वम् । अन्यथा,

नामधारकविप्रस्तु दशाहं सूतकी भवेत्"—

इत्येतद्वचनं विरुध्येत । चतुर्णामपिवर्णानामाशौचमभिधायाधुनोत्तमवर्णेन हीनवर्णास्तूत्पन्नानामुत्तमवर्ण-संबन्धिनि जनने मरणे चाशौचमाह,—

**एकपिण्डास्तु दायादाः पृथग्दार-निकेतनाः ।**
**जन्मन्यपि विपत्तौ च तेषां तत्सूतकं भवेत्॥७॥ इति।**

एकः पिण्डउत्तमवर्ण-देहः उत्पादकायेषान्ते तथा। पृथग्दारा-निकेतनाः हीनवर्णाः स्त्रियः निकेतनानि उत्पत्ति-स्थानानि येषान्ते तथा। दायादाः पुत्राः । तेषामुत्तमवर्ण-संबन्धिनि जनने मरणे च सति, तत्सूतकमुत्तमवर्ण-संबन्ध्याशौचं भवेत्। तथा च मनुः,—

"सर्व्वेषूत्तम-वर्णानामाशौचं कर्य्युरादृताः ।
तद्वर्ण-विधि-दृष्टेन स्वाशौचन्तु स्व-योनिषु"—इति ॥

अयमर्थः। सर्व्वे हीनवर्णाउत्तमवर्णानां संबन्धिनि जनने मरणे वा उत्तमवर्ण-विधि-दृष्टेन दशरात्रादिकाशौचं कुर्य्युः, स्वयोनिषु जातेषु मृतेषु च स्वाशौचं कुर्युः । कौर्म्मेऽपि,—

"शूद्र-विट्-क्षत्रियाणान्तु ब्राह्मणे संस्थिते सति ।
दशरात्रेण शुद्धिः स्यादित्याह कमलोद्भवः"—इति ॥

देवलोऽपि,—

"सर्ववर्णेषु दायादाये स्युर्विप्रस्य बान्धवाः।
तेषां दशाहमाशौचं विप्राशौचे विधीयते"—इति॥

एतच्चाशौचमविभक्त-विषयम्। तथाचापस्तम्बः,—

"क्षत्र-विट्-शूद्र-जातीनां यदि स्त्रीमृत-सूतके।
तेषान्तु पैतृकाशौचं विभक्तानान्त्वपैतृकम्"—इति ॥

अपैतृकं मातृजातीयमित्यर्थः। अधमवर्ण-संबन्धिनि जननादौ उत्तमवर्णस्य यदाशौचं, तदुक्तं कूर्म्मपुराणे,—

"षड्रात्रं स्यात् त्रिरात्रं स्यादेकरात्रं क्रमेण तु।
वैश्य-क्षत्रिय-विप्राणां शूद्रेष्वाशौचमिष्यते"—इति।

विष्णुरपि। "ब्राह्मणस्य क्षत्रिय-विट्-शूद्रेषु सपिण्डेषु षड्रात्र-त्रिरात्रैकरात्रैः, क्षत्रियस्य विट्शूद्रेषु षड्रात्र-त्रिरात्राभ्यां, वैश्यस्य शूद्रेषु षड्रात्रेण"—इति। बृहस्पतिस्तु प्रकारान्तरेणाशौचमाह,—

"दशाहाच्छुध्यते विप्रोजन्म-हान्योः स्वयोनिषु।
सप्त-पञ्च-त्रिरात्रैस्तु क्षत्र-विट्-शूद्र-योनिषु"—इति ॥

अत्र, षड्रात्र-सप्तरात्रादिपक्षयोर्विकल्पः, स्नेहादिना वा व्यवस्था। उक्तस्य भिन्नजातीय-विषयस्याशौचस्य सजातीयेष्विव साप्तपुरुषत्वप्राप्तौ तदवधिमाह,—

**तावत्तत् सूतकं गोत्रे चतुर्थ-पुरुषेण तु। इति।**

तत् सूतकं भिन्नजातीय-सन्तति-विषयोक्तमाशौचं तावत्, यावत्

त्रिपुरुषं, चतुर्थपुरुषेण तु निवर्त्तते, तत्र सापिण्ड्यनिवृत्तेः ।

"सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तते ।
सजातीयेषु वर्णेषु चतुर्थे भिन्नजातिषु"—इति

वृद्धपराशर-वचनात् । शातातपोऽपि,—

"यद्येकजातावहवः पृथक्क्षेत्राः पृथग्धनाः ।
एकपिण्डाः पृथक्शौचाः पिण्डस्त्वावर्त्तते त्रिषु"—इति ।

सजातीयेषु पञ्चमादिष्वाशौच-तारतम्यं वक्तुं सापिण्ड्य-निवृत्ति-माह,—

**दायाद्विच्छेदमाप्नोति पञ्चमो वाऽऽत्म-वंशजः ॥८॥ इति ।**

दायशब्देन पिण्डो लक्ष्यते । तस्माद्विच्छेदमाप्नोति आत्मवंशजः पञ्चमः । वाशब्दात् षष्ठ-सप्तमौ वा । तत्र सापिण्ड्यं निवर्त्तते,—इति । तदुक्तं गौतमेन । "पिण्ड-निवृत्तिः पञ्चमे सप्तमे वा"—इति । वाशब्दात् षष्ठे ॥ यदर्थं सापिण्ड्य-निवृत्तिरभिहिता, तदिदानीमाह,

**चतुर्थे दशरात्रं स्यात् षण्निशाः पुंसि पञ्चमे ।
षष्ठे चतुरहाच्छुद्धिः सप्तमे तु दिनत्रयात् ॥९॥ इति ।**

पितृपक्षे कूटस्थमारभ्य गणनायां चतुर्थे दशरात्रमाशौचं, पञ्चमे षड्रात्रं, षष्ठे चतूरात्रं, सप्तमे त्रिरात्रमिति । ननु, सापिण्ड्यस्य सप्तपुरुषपर्य्यन्तत्वात् सपिण्डेषु चाविशेषेण दशाहाशौचविधानादाशौचस्य सङ्कोच-विधानमनुपपन्नम् । सापिण्ड्यस्य सप्तपुरुष-पर्य्यन्तत्वं मत्स्यपुराणेऽभिहितम्,—

"लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः ।

सप्तमः पिण्डदस्तेषां सापिण्ड्यं साप्तपुरुषम्"—इति ॥

मनुरपि,—

"सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तते ।

समानोदक-भावस्तु जन्म-नाम्नोरवेदने"—इति ॥

सत्यं, तथापि पञ्चमादिषु सापिण्ड्यनिवृत्तेर्विकल्पेन स्मृतत्वात् तदनुरोधेनाशौच-सङ्कोच-विधानं विकल्पेन युज्यते । उदाहृतञ्च गौतम-वचनं, "पिण्ड-निवृत्तिः पञ्चमे सप्तमे वा"—इति । पैठीनसिरपि "त्रीनतीत्य मातृतः, पञ्चातीत्य पितृतः"—इति ।

नन्वेवं तर्हि पञ्चमादीनां समानोदकत्वेन, 'त्र्यहात्तूदकदायिनः'—इति त्रिरात्रमाशौचं प्राप्नुयात् । अतः षड्रात्रादि-विधानमनुपपन्नमिति। सत्यं* पञ्चमादिषु त्रिरात्राशौचं प्राप्नोति, तथापि विशेष-विधानादपोद्यते । सामान्यशास्त्रस्य विशेषशास्त्र-विषयेतरविषयत्वस्य युक्तत्वात् ॥ उक्तस्य प्रेताशौचस्य क्वचिदपवादमाह,—

**भृग्वग्नि-मरणे चैव देशान्तर-मृते तथा ।**
**बाले प्रेते च सन्न्यस्ते सद्यः शौचं विधीयते ॥१०॥**

भृगुः प्रपातः, अग्निः प्रसिद्धः। भृग्वग्नि-मरणं प्रमादादिना विना दुर्म्मरणमात्रोपलक्षणम्, प्रायश्चित्तानुरोधात् । तन्निमित्ते मरणे सति तत्सम्बन्धिनां सर्व्वेषां सपिण्डानां सद्यः शौचं न तु दशाहाशौचमिति। तथा च याज्ञवल्क्यः,—

"हतानां नृप-गो-विप्रैरन्वक्षं चात्मघातिनाम्"—इति।

नृपोऽभिषिक्तः क्षत्रियः । गोशब्दः शृङ्गि-दंष्ट्रादीनां सर्व्वेषामुप-

* अथ, यद्यपि,—इति भवितुं युक्तम् ।

लक्षकः । विप्रग्रहणं चण्डालाद्युपलक्षकम् । एतैर्नृपादिभिर्हतानां विधिमन्तरेणात्मत्यागकारिणां ये संबन्धिनः सपिण्डाः, तेषामन्वक्षं यावच्छव-दर्शनमाशौचं, न तु दशाहपर्यन्तमित्यर्थः । दुर्मृतानामुदक-दानादिकमपि नास्ति । तथाच मनुः,—

"चण्डालादुदकात् सर्पाद्ब्राह्मणाद्वैद्युतादपि ।
दंष्ट्रिभ्यश्च पशुभ्यश्च मरणं पापकर्म्मणाम् ॥
उदकं पिण्डदानञ्च प्रेतेभ्योयत् प्रदीयते ।
नोपतिष्ठति तत् सर्व्वमन्तरिक्षे विनश्यति ॥
नाशौचं नोदकं नाश्रु न दाहाद्यन्तकर्म्म च ।
ब्रह्म-दण्ड-हतानाञ्च न कुर्य्यात् कट-धारणम्"--इति ॥

ब्रह्मदण्डोब्राह्मणशापः,अभिचारोवा । कटशब्देन शव-वहनोप-योगि-कटादिकमभिधीयते । आपस्तम्बोऽपि,—

"व्यापादयेद् य आत्मानं स्वयमग्न्युदकादिभिः ।
विहितं तस्य नाशौचं नापि कार्य्योदकक्रिया"—इति ॥

एतच्च बुद्धिपूर्व्वक-मरण-विषयम् । अतएव गौतमः । "गो-ब्राह्मण-हतानामन्वक्षं राजक्रोधाच्चाश्वयुद्धे प्रायोऽनाशनशस्त्राग्निविषोदको-द्बन्धनप्रपतनैश्चेच्छताम्"—इति । प्रायोमहाप्रस्थानम्, अनाशनमन-शनम्, प्रपतनं भृगुपतनम् । एतैर्बुद्धिपूर्व्वकं हतानां सपिण्डस्यान्वक्ष-माशौचमित्यर्थः । अतश्चैतदुक्तं भवति । सर्पादिना चण्डालादिना वा विग्रहं कुर्व्वन् यस्तैर्हतः, तस्यैवायं पिण्डदानादि-निषेधः । एवं दुष्ट-दंष्ट्र्यादीन् ग्रहीतुमाभिमुख्येन गच्छतोमरणेऽप्यमाशौचादिनिषेधः । एवं राज्ञः प्रातिकूल्यमाचरतोमरणे । एवं बाहुभ्यां नदी-तरणेऽपि ।

एवं सर्वत्रानुसन्धेयम्। अतएव ब्रह्मपुराणम्,—

"शृङ्गि-दंष्ट्रि-नखि-व्याल-विष-वह्नि-महाजलैः।
सुदूरात् परिहर्त्तव्यः कुर्वन् क्रीड़ां मृतस्तु यः॥
नागानां विप्रियं कुर्वन् दग्धश्चाप्यथ विद्युता।
निगृहीताश्च ये राज्ञा चौरदोषेण कुत्रचित्॥
परदारान् हरन्तश्च रोषात्तत्पतिभिर्हताः।
असमानैश्च सङ्कीर्णैश्चण्डालाद्यैश्च विग्रहम्॥
कृत्वा तैर्निहतास्तद्वच्चण्डालादीन् समाश्रिताः।
क्रोधात् प्रायं विषं वह्निं शस्त्रमुद्बन्धनं जलम्॥
गिरि-वृक्ष-प्रपातञ्च ये कुर्वन्ति नराधमाः।
महापातकिनो ये च पतितास्ते प्रकीर्त्तिताः॥
पतितानां न दाहः स्यान्नांत्येष्टिर्नास्थि-सञ्चयः।
न वाऽश्रुपातः पिण्डोऽस्य कार्य्यं श्राद्धादिकं क्वचित्"—इति॥

नन्वयं चण्डालादि-हतानामग्नि-संस्कार-निषेधोनाहिताग्नि-विषयः। आहिताग्नि-विषयत्वे, "आहिताग्निमग्निभिर्यज्ञपात्रैश्च दहेत्" —इति श्रुतिविहिताग्नियज्ञपात्रादि-प्रतिपत्ति-लोप-प्रसङ्गादिति। मैवं, स्मृत्यन्तरे चण्डालादिहताहिताग्निसंबन्धिनामग्नीनां यज्ञपात्राणां च प्रतिपत्त्यन्तर-विधानात्;

"वैतानं प्रक्षिपेदप्सु आवसथ्यन्तु चतुष्पथे।
पात्राणि तु दहेदग्नौ यजमाने वृथामृते।
आत्मनस्त्यागिनां नास्ति पतितानां तथा क्रिया॥
तेषामपि तथा गङ्गा-तोये संस्थापनं हितम्"—इति।

तस्मात् सर्वेषां दुर्मृतानामविशेषेण दाहादि-निषेधः। अयमाशौच-श्राद्धादि-निषेधो यावत् संवत्सरम्। पूर्णे तु संवत्सरे प्रेतस्य श्राद्धादि-संप्रदान-योग्यता-सिध्यर्थं नारायणबलिं कृत्वा सर्वमौर्द्धदैहिकं कार्यमेव। तदुक्तं षट्त्रिंशन्मते,—

"गो-ब्राह्मण-हतानाञ्च पतितानां तथैवच।

ऊर्द्धं संवत्सरात् कार्य्यं सर्वमेवौर्द्धदेहिकम्"—इति ॥

नारायणबलेश्च प्रेतशुद्ध्यापादकत्वं व्यासेनोक्तम्,—

"नारायणं समुद्दिश्य शिवं वा यत् प्रदीयते।

तस्य शुद्धिकरं कर्म्म तद्भवेन्नैतदन्यथा"—इति ॥

सर्प-हते त्वयं विशेषः; संवत्सरपर्यन्तं पञ्चम्यां नागपूजां कृत्वा संवत्सरानन्तरं नारायणबलिं कृत्वा सौवर्णं नागं दद्यात्, प्रत्यक्षञ्च गाम्। तदुक्तं भविष्योत्तरपुराणे,—

"सुवर्णाकारनिष्पन्नं नागं कृत्वा तथैव गाम्।

व्यासाय दत्त्वा विधिवत् पितुरानृण्यमाप्नुयात्"—इति॥

प्रमाद-मरणे त्वाशौचमस्त्येव। तथाचाङ्गिराः,—

"यदि कश्चित् प्रमादेन म्रियतेऽग्न्युदकादिभिः।

विहितं तस्य चाशौचं कार्या चैवोदक-क्रिया*"—इति ॥

ब्रह्मपुराणेऽपि,—

"प्रमादादथ निःशङ्कमकस्मात् विधि-चोदितः।

* तस्याशौचं विधातव्यं कर्त्तव्या चोदकक्रिया,-इति मु० पुस्तके पाठः।

शृङ्गि-दंष्ट्रि नखि-व्याल-विप्र * विद्युज्जलाग्निभिः॥
चण्डालैरथवा चौरैर्निहतोयत्र कुत्रचित्।
तस्य दाहादिकं कार्यं यस्मान्न पतितस्तु सः"—इति॥

विधितोभृग्वग्नि-मरणे तु विशेषः। तथा च शातातपः,—

"वृद्धः शौच-क्रिया-लुप्तः प्रत्याख्यात-भिषक्क्रियः॥
आत्मानं घातयेद्यस्तु भृग्वग्न्यनशनादिभिः।
तस्य त्रिरात्रमाशौचं द्वितीये त्वस्थि-सञ्चयः॥
तृतीये तूदकं कृत्वा चतुर्थे श्राद्धमाचरेत्"—इति।

अस्ति च भृग्वग्नि-विधिः। तथाचादित्यपुराणे,—

"दुश्चिकित्स्यैर्महारोगैः पीड़ितस्तु पुमान् यदि।
प्रविशेज्ज्वलनन्दीप्तं कुर्यादनशनं तथा॥
अगाधतोयराशिं वा भृगोः पतनमेव वा।
गच्छेन्महापथं वाऽपि तुषारगिरिमादरात्॥
प्रयागवटशाखायां देह-त्यागङ्करोति वा।
उत्तमानाप्नुयात् लोकान्नात्मघाती भवेत् क्वचित्॥
वाराणस्यां मृतोयस्तु प्रत्याख्यात-भिषक्क्रियः।
काष्ठ-पाषाण-मध्यस्थोजाह्नवी-जल-मध्यगः॥
अविमुक्तोन्मुखस्यास्य कर्ण-मूल-गतोहरः।
प्रणवन्तारकं ब्रूते नान्यथा कुत्रचित् क्वचित्"॥

ब्रह्मगर्भः,—

---

* विष,-इति मु॰ पुस्तके पाठः।

"योऽनुष्ठातुं न शक्नोति मोहाद्वाध्युपपीड़ितः ।
सोऽग्नि-वारि-महायाचां कुर्व्वन्नामुत्र दुष्यति"—इति ॥

देशान्तरमृतदति, असपिण्डे देशान्तरमृते सद्यः शौचमित्यर्थः । तदाह मनुः—

"बाले देशान्तरस्थे च पृथक्पिण्डे च संस्थिते ।
सवासाजलमाप्लुत्य सद्यएव विशुध्यति"—इति ॥

देशान्तरस्थत्वेन च सपिण्डो विशिष्यते। देशान्तर-लक्षणं वृद्धमनुनोक्तम्,—

"महानद्यन्तरं यत्र गिरिर्वा व्यवधायकः ।
वाचोयत्र विभिद्यन्ते तद्देशान्तरमुच्यते"—इति ॥

वृहस्पतिनाऽपि,—

"देशान्तरं वदन्त्येके षष्टियोजनमायतम् ।
चत्वारिंशद्वदन्त्येके अन्ये त्रिंशत्तथैव च"—इति ॥

योजन-लक्षणन्तु स्मृत्यन्तरेऽभिहितम्,—

"तिर्य्यग्यवोदराण्यष्टौ पूर्व्वावा व्रीहयस्त्रयः* ।
प्रमाणमङ्गुलस्योक्तं वितस्तिर्द्वादशाङ्गुलम् ॥
वितस्तेर्द्विगुणोऽरत्निस्तस्मात् किष्कुस्ततोधनुः ।
धनुःसहस्रे द्वे क्रोशस्तु:क्रोशन्तु योजनम्"—इति ॥

बालोऽनाकृतनामा, तस्मिन् मृते सति तत्सपिण्डानां मरणनिमित्ते सद्यः शौचमित्यर्थः ।

---

* व्रीहयस्तथा,—इति मु० पुस्तके पाठः ।

तथा च शङ्खः। "प्राङ्नाम-करणात्सद्यः शुद्धिः"—इति। कात्यायनोऽपि,—

"अनिवृत्ते दशाहे तु पञ्चत्वं यदि गच्छति॥
सद्यएव विशुद्धिः स्यात् न प्रेतं नोदकक्रिया"—इति।

मातापितृसहोदर-व्यतिरिक्त-विषयमेतत्। तथा च व्याघ्रः,—

"बाले मृते सपिण्डानां सद्यः शौचं विधीयते।
दशाहेनैव दम्पत्योः सोदराणां तथैवच"—इति॥

जातमृते मृतजाते वा सपिण्डानां सद्यः शौचम्। जन्मदिवसे शिशुमरणे मात्रादीनां दशाहेनैव शुद्धिः, दिवसान्तरमरणे तु शेषाहोभिर्विशुद्धिः। तथा च व्याघ्रः,—

"अन्तर्दशाहे जातस्य शिशोर्निष्क्रमणं यदा।
सूतकेनैव शुद्धिः स्यात्पित्रोः शातातपोऽब्रवीत्"—इति।

स्मृत्यन्तरमपि। "अन्तर्दशाहोपरतस्य यत् पित्रादीनां मरणाशौचं तत् सूतकाहोभिः"—इति। गच्छतीति शेषः। जनन-निमित्तन्त्वाशौचं सर्व्वेषामस्त्येव। तथा च हारीतः। "जातमृते मृतजाते वा सपिण्डानां दशाहः"—इति। वृहस्पतिरपि,—

"दशाहाभ्यन्तरे बाले प्रमीते तस्य बान्धवैः।
शावाशौचं न कर्त्तव्यं सूत्याशौचं समाचरेत्"—इति॥

एतच्च नाभिच्छेदादूर्द्धं वेदितव्यम्। तथा च जैमिनिः,—

"यावन्न छिद्यते नालं तावन्नाप्नोति सूतकम्।
छिन्ने नाले ततः पश्चात् सूतकन्तु विधीयते"—इति।

नाभिच्छेदात् प्राग्वृहन्मनुराह,—

"जीवन् जातोयदि ततोमृतः सूतकएव तु।

सूतकं सकलं मातुः पित्रादीनां त्रिरात्रकम्"—इति।

यत्तु वृहत्प्रचेतोवचनम्,—

"मुहूर्त्तं जीवितोबालः पञ्चत्वं यदि गच्छति।

मातुः शौचं दशाहेन सद्यः शौचास्तु गोत्रिणः"—इति॥

तदग्निहोत्राद्यनुष्ठानार्थं सद्यः शौच-प्रतिपादनपरम्। तथाच शङ्खः।

"अग्निहोत्राद्यनुष्ठानार्थं स्नात्वोपस्पर्शनात्तत्कालं शौचम्"—इति।

संन्यस्ते मृते सति तत्सपिण्डानां सद्यः शौचम्। तथाच वामनपुराणम्,—

"बाले प्रव्रजिते चैव देशान्तर-मृते तथा॥

सद्यः शौचं समाख्यातं विद्युत्पात-मृते तथा"—इति।

स्मृत्यन्तरमपि,—

"सर्व-सङ्ग-निवृत्तस्य ध्यानयोग-रतस्य च।

न तस्य दहनं कार्य्यं नाशौचं नोदक-क्रिया"—ति॥

पूर्वं समपिण्डस्य देशान्तर-गतस्य मरणश्रवणे तत्-सपिण्डानां सद्यः शौचमभिधायाधुना देशान्तर-गतस्य सपिण्डस्य संवत्सरादूर्द्ध्वं मरण-श्रवणेऽपि तत्-सपिण्डानां सद्यः शौचं विदधाति,—

**देशान्तर-मृतः कश्चित् सगोत्रः श्रूयते यदि॥ १०॥**

**न त्रिरात्रमहोरात्रं सद्यः स्नात्वा शुचिर्भवेत्*॥ इति।**

सगोत्रः सपिण्डः। तस्य देशान्तरगतस्य संवत्सरादूर्द्ध्वं मरण-श्रवणे तत्-सपिण्डानां न त्रिरात्रमहोरात्रं वाऽशौचं, किन्तु सद्यः शौचम्।

---

* सद्यः स्नानेन शुध्यति,—इति मु० पुस्तके पाठः।

दशाहादूर्द्धमर्व्वाक् त्रिपक्षात् त्रिरात्रं, षण्मासादर्व्वाक् पक्षिणी अर्व्वाक् संवत्सरादेकाहमित्यर्थः । तथाच देवलः,—

"आ त्रिपक्षात् त्रिरात्रं स्यात् षण्मासात् पक्षिणी ततः ।

परमेकाहमावर्षादूर्द्धं स्नातोविशुध्यति"—इति ॥

विष्णुरपि,—

"अर्व्वाक् त्रिपक्षात् त्रिनिशं षण्मासाच्च दिवानिशम् ।

अहः संवत्सरादर्व्वाग् देशान्तर-मृतेष्वपि"—इति ॥

अत्र दिवाशब्देनाहर्द्वयमुच्यते । "षण्मासात् पक्षिणी"—इति वचनान्तरात् । याज्ञवल्क्योऽपि,—

"प्रोषिते कालशेषः स्यात् पूर्णे दत्त्वोदकं शुचिः"—इति ।

प्रोषिते देशान्तरस्थे सपिण्डे मृते आशौचमध्ये श्रुते सति तत्कालशेषेणैव शुद्धिः, पूर्णे संवत्सरे व्यतीते तन्मरणश्रवणे स्नात्वोदकं दत्त्वा शुचिर्भवतीत्यर्थः । तथाच मनुः,—

"संवत्सरे व्यतीते तु स्पृष्ट्वैवापोविशुध्यति"—इति ।

यत्तु गौतमेनोक्तम्,—"श्रुत्वा चोर्ध्वं दशम्याः पक्षिणी"—इति । तत् त्रिपक्षादूर्ध्वमर्व्वाक् षण्मासाद्वेदितव्यम् । "षण्मासात् पक्षिणी"—इति देवलस्मरणात् । यत् पुनर्वसिष्ठवचनम्—"देशान्तरस्थे मृते ऊर्ध्वं दशाहात् श्रुत्वा एकरात्रम्"—इति । यच्च गद्यविष्णुवचनम्,—"व्यतीते त्वाशौचे संवत्सरस्यान्तस्त्वेकरात्रेण अतः परं स्नानेन"—इति । तदूर्ध्वं षण्मासादर्वाक् संवत्सराद्वेदितव्यम् । "परमेकाहमावर्षात्"—इति स्मरणात् । यदपि शङ्खवचनम्,—

"अतीते दशरात्रे तु त्रिरात्रमशुचिर्भवेत्"—इति ।

तत् त्रिपक्षादर्व्वाग् द्रष्टव्यम्। "अर्वाक् त्रिपक्षात्त्रिनिशम्"—इति विष्णुस्मरणात्। अत्र मूलवचनोक्तं सद्यःशौचविधानं ज्ञातिमात्र-विषयं, पित्रादि-विषये तु विशेषः। तथाच पैठीनसिः,—

"पितरौ चेन्मृतौ स्यातां दूरस्थोऽपि हि पुत्रकः।
श्रुत्वा तद्दिनमारभ्य दशाहं सूतकी भवेत्"—इति॥

दक्षोऽपि,—

"महागुरु-निपाते तु आर्द्रवस्त्रोपवासिना।
अतीतेऽब्देऽपि कर्त्तव्यं प्रेतकार्यं यथाविधि"—इति॥

संवत्सरादूर्ध्वमप्याशौचोदकदानादिकं कार्य्यं, न पुनः स्नानमात्रा-च्छुद्धिरित्यर्थः। पितृ-पत्न्यां मातृ-व्यतिरिक्तायां विशेषो दक्षेण दर्शितः,—

"पितृ-पत्न्यामतीतायां मातृवर्ज्जं द्विजोत्तमः।
संवत्सरे व्यतीतेऽपि त्रिरात्रमशुचिर्भवेत्"—इति॥

इदं चातिक्रान्ताशौचमुपनीतोपरम-विषयम्। तथाच व्याघ्रपादः,—

"तुल्यं वयसि सर्वेषामतिक्रान्ते तथैव च।
उपनीते तु विषमं तस्मिन्नेवातिकालजम्"—इति॥

अयमर्थः। षण्मासादिरूपे वयसि यदाशौचं "आदन्तजन्मनः सद्यः"—इत्यादिवचन-विहितं, तत्सर्वेषां ब्राह्मणादीनां तुल्यमवि-शिष्टम्। अतिक्रान्ते दशाहादिके त्रिरात्राद्याशौचं यत्, तत् सर्वेषां समानम्। उपनीते तु मृते दश-द्वादश-पञ्चदश-त्रिंशद्दिनानीत्येवं विषममाशौचं ब्राह्मणादीनाम्। अतिकालजमतिक्रान्ताशौचं तस्मिन्ने-वोपनीतोपरमएव, नानुपनीतोपरमे,—इति। जनने त्वतिक्रान्ता-शौचं नास्ति। तदाह देवलः,—

"नाशुद्धिः प्रसवाशौचे व्यतीतेषु दिनेष्वपि"—इति।

मनुरपि,—

"निर्द्दशं ज्ञाति-मरणं श्रुत्वा पुत्रस्य जन्म च।
सवासाजलमाप्लुत्य शुद्धोभवति मानवः"—इति॥

अत्र पुत्र-ग्रहणात् निर्द्दशेऽपि पितुः स्नानेन शुद्धिः, सपिण्डानान्त्वतिक्रान्ताशौचं नास्तीत्यर्थः। अन्तर्द्दशाहे तु शेषाहोभिर्विशुद्धिः। तथाच शङ्खः,—

"देशान्तरगतं श्रुत्वा कल्याणं मरणं तथा।
यच्छेषं दशरात्रस्य तावदेवाशुचिर्भवेत्"—इति।

द्विविधोहि देशान्तर-मृतः; कृतसंस्कारोऽकृतसंस्कारश्च। तत्र कृतसंस्कारस्य मरण-श्रवणे संवत्सरादर्व्वागूर्द्धं वाऽशौचं वचन-द्वयेन व्यवस्थापितम्। अकृतसंस्कारस्य मरण-श्रवणे त्वाशौचग्रहण-पिण्डदानादेः कालविशेषोविविच्यते। अकृतसंस्कारोऽपि द्विविधः, मरण-दिवस-ज्ञानाज्ञानभेदात्। यस्य हि मरण-दिवसोविज्ञातः, तस्य प्रत्याब्दिकादि-श्राद्धं तद्दिवस-एव कर्त्तव्यं, आशौचग्रहण-पिण्डोदक-दानन्त्वनिषिद्ध-नक्षत्रादिकं पर्य्यालोच्य तत्रानुष्ठेयम्, शिष्टाचारस्य तथा प्रवृत्तत्वात्। यस्य तु दिवसोन विज्ञातः, तं प्रत्येतदुच्यते,

**देशान्तरगतो विप्रः प्रयासात् कालकारितात्*॥११॥**
**देह-नाशमनुप्राप्तस्तिथिर्न ज्ञायते यदि।**
**कृष्णाष्टमी त्वमावस्या कृष्णा चैकादशी च या॥१२॥**

---

* कालचोदितात्,—इति मु० पुस्तके पाठः।

उदकं पिण्डदानञ्च तत्र श्राद्धञ्च कारयेत्*।

तीर्थ-यात्राऽऽदिना केनचिन्निमित्तेन देशान्तर-गतस्य विप्रस्य चिरकाल-बहुदेशपर्य्यटनादि-सम्पादितादायास-बाहुल्याद्यत्र क्वापि देहनाशोभवति, अतएव तन्मरण-तिथिर्न ज्ञायते मरण-वार्त्ता च यदा कदाचित् श्रुता भवति, तत्र तदीयाशौच-स्वीकारस्तिलोदकपिण्डदानोपक्रमादिकञ्चेत्येतदुभयं कृष्णाष्टम्यादिषु तिसृषु तिथिष्विच्छया कस्यांचित्तिथौ कर्त्तव्यम्। तस्यामेव तिथावाब्दिकश्राद्धञ्च कर्त्तव्यम्।

यद्यप्यस्मिन् वचने आशौच-स्वीकारः साक्षान्नोपात्तः, तथापि पूर्व्वोत्तर-वचनयोराशौच-विषयत्वेन तत्प्रकरणत्वादाशौच-स्वीकारमन्तरेण तिलोदक-पिण्डदानासम्भवाच्चाशौच-स्वीकारोऽप्यत्र विवक्षितः,—इति गम्यते। उदकादि-बहुकर्त्तव्योपन्यासेन श्राद्धप्रकरणस्य कृतस्नस्याप्यत्र सङ्ग्रहोविवक्षितः। संग्रहीतञ्च तत्प्रकरणमुपरिष्टादस्माभिः प्रपञ्चयिष्यते।

पूर्वमकृतनाम्नोबालस्य मरणे सपिण्डानां सद्यः शुद्धिरभिहिता, इदानीं कृतनाम्नोऽप्यजात-दन्तस्य बालस्य मरणे सह संस्कारेणाशौचं निषेधति,

अजातदन्ताये बालाये च गर्भाद्विनिःसृताः† ॥१३॥
न तेषामग्नि-संस्कारो नाशौचं नोदकक्रिया।

अजातदन्ताअनुत्पन्नदन्ताः कृतनामानोये बालामृताः, ये च गर्भा-

---

* एतद्वचनद्वयं मूलवचनमेवेति व्याख्यायाः पूर्व्वापरपर्य्यालोचनया प्रतीयते। मुद्रितपुस्तके तु मूलवचनतया न मुद्रितमेतत्।

† गर्भाद्विनिःसृताः,—इति सो० ना० पुस्तके पाठः।

द्विनिस्तुताः* पतिताः, तेषां तत्सपिण्डैर्नाग्नि-संस्कारादिकं कर्त्तव्य-मित्यर्थः। तथाच ब्रह्मपुराणम्,—

"स्त्रीणान्तु पतितोगर्भः सद्योयातोमृतोऽथवा।
अजातदन्तोमासैर्वा मृतः षड्भिर्गतस्तथा।
वस्त्राद्यैर्भूषितं कृत्वा न्युप्तव्यस्तु स काष्ठवत्।
खनित्वा तु शनैर्भूमिं सद्यः शौचं विधीयते"—इति॥

स्त्रीणां योगर्भः पतितः, यश्च जननक्षणएव मृतः, यश्च षण्मासात् प्राङ्मृतः, यश्च षण्मासादूर्द्ध्वमप्यजातदन्तः सन् मृतः, स काष्ठवद्भूमिं खनित्वा निक्षेप्तव्यः। मात्रादिव्यतिरिक्तैः सपिण्डैर्नाशौचादिकं कर्त्तव्यमित्यर्थः। विष्णुरपि। "अजातदन्ते वाले प्रेते सद्यएव नाग्नि संस्कारोनोदकक्रिया"—इति।

पूर्वत्र गर्भ-पाते सपिण्डानां बन्धूनां. सद्यः शुद्धिमभिधायाधुना मातुस्तन्निमित्तमाशौचमस्तीत्याह,

**यदि गर्भोविपद्येत स्रवते वाऽपि योषितः॥ १४॥**
**यावन्मासं स्थितोगर्भो दिनन्तावत्तु सूतकम्।**

यदि गर्भस्य स्राव-पातौ स्यातां, तदा यावत्सु मासेषु गर्भः स्थितस्तन्मास-सङ्ख्या-सम-दिनं योषितोमातुः सूतकं सूत्याशौच-मित्यर्थः। तथा च याज्ञवल्क्यः,—

"गर्भस्रावे मास-तुल्याः निशाः शुद्धेस्तु कारणम्"—इति।

मास-तुल्या-निशाः,—इति चतुर्थमासप्रभृत्यासप्तमाद्वेदितव्यम्। अर्व्वाक् तु यथावर्णं त्रिरात्रादयः। तथा च मरीचिः,—

* विनिःसृताः,—इति सो० ना० पुस्तके पाठः।

"गर्भ-स्रुत्यां यथामासमचिरे तूत्तमे त्र्यहम् ।
राजन्ये तु चतूरात्रं वैश्ये पञ्चाहमेव तु ॥
अष्टाहेन तु शूद्रस्य शुद्धिरेषा प्रकीर्त्तिता"–इति ।

अचिरे मासत्रये गर्भस्रावे उत्तमे ब्राह्मणे त्र्यहम् । गौतमोऽपि । "गर्भमास-समा रात्रिः स्रंसने गर्भस्य त्र्यहं वा"—इति । अत्र गर्भमाससमरात्रि-त्र्यहयोर्व्यवस्थितो विकल्पः । मासत्रयं यावत् त्र्यहं, ततः परं मास-समारात्रय इति । आदिपुराणे,—

"षण्मासाभ्यन्तरं यावद्गर्भ-स्रावो भवेद्यदि ।
तदा माससमैस्तासां दिवसैः शुद्धिरिष्यते"—इति ॥

एतच्च स्रावनिमित्ताशौचं मातुरेव । पात-निमित्तन्तु पित्रादीनामप्यस्ति । तथा च मरीचिः,—

"स्रावे मातुस्त्रिरात्रं स्यात् सपिण्डाशौच-वर्जनम् ।
पाते मातुर्यथामासं सपिण्डानां दिनत्रयम्"—इति ॥

वशिष्ठोऽपि । "ऊनद्विवर्षे प्रेते गर्भपतने वा सपिण्डानां त्रिरात्रं" इति । स्रावे पितुर्विशेषमाह वृद्धवशिष्ठः । "गर्भस्रावे मासतुल्या-रात्रयः स्त्रीणां स्नानमात्रमेव पुरुषस्य" इति ।

ननु, स्राव-पातयोरप्राप्त-प्रसवकालत्वाविशेषादनयोः कोविशेष इत्यत आह,

**आ चतुर्थाद्भवेत् स्रावः पातः पञ्चम-षष्ठयोः ॥१५॥**
**अत ऊर्द्धं प्रसूतिः स्याद्दशाहं सूतकं भवेत् ।—इति ॥**

चतुर्थमासाभ्यन्तरे गर्भनाशः स्रावः । पञ्चमषष्ठयोर्गर्भनाशः पातः ।

तत्र मासषट्कया विहितमाशौचं मातुर्भवेत्। अतऊर्द्ध्वं सप्तममास प्रभृति गर्भनिर्गमः प्रसवः। तत्र मातुः प्रसवनिमित्तमाशौचं दशाहं भवेदित्यर्थः। यत्तु चतुर्विंशतिमते उक्तम्,

"अधस्तान्नवमान्मासाच्छुद्धिः स्यात् प्रसवे कथम्?
मृते जीवति वा तस्मिन् अहोभिर्मास-सङ्ख्यया"—इति॥

अस्यायमर्थः। नवमान्मासादर्व्वाक् सप्तममासादारभ्य प्रसवे सति तन्निमित्तमाशौचं सूतिकाव्यतिरिक्तसर्व्वसपिण्डानां माससङ्ख्याकैरहोभिर्विधीयतइति। सूतिका-विषयत्वे, दशाहविधि-विरोधः प्रसज्येत। नन्वेवं तर्हि, जातौ विप्रोदशाहेन,—इति सर्वसपिण्डानां जननिमित्त-दशाहाशौच-विधायक-वचनं विरुध्येत। तन्न, तस्य नवम-दशम-मास-प्रसव-विषयत्वेनोपपत्तेः। अथ वा, एकविषयत्वेऽपि विकल्पेन व्यवस्थाऽस्तु।

बालस्याग्नि-संस्कारे सत्याशौचं दर्शयति,

**दन्तजातेऽनुजाते च कृतचूडे च संस्थिते॥१६॥**
**अग्नि-संस्करणे तेषां त्रिरात्रमशुचिर्भवेत्। इति॥**

जातादन्तायस्यासौ दन्तजातः। तदनु पश्चाज्जातोऽनुजातः, अनुत्पन्नदन्तइति यावत्। कृतं चूडाख्यं कर्म्म यस्यासौ कृतचूडः। तत्र जातदन्तस्याकृतचूडस्यानुजातस्य च सत्यग्नि-संस्कारे तृतीयवर्षकृतचूडे च संस्थिते तेषां सपिण्डस्त्रिरात्रमशुचिर्भवेदित्यर्थः*। तत्राकृतचूडस्य जातदन्तस्य दाहपक्षे त्रिरात्राशौचमङ्गिरसोक्तम्,

---

* तेषां सपिण्डानां त्रिरात्रमशुद्धिर्भवेदित्यर्थः,—इति मु० पुस्तके पाठः।

"यद्यप्यकृतचूडोवै जातदन्तस्तु संस्थितः।
दाहयित्वा तथाप्येनमाशौचं त्र्यहमाचरेत्"-इति॥

पुराणेऽपि,—

"अनतीतद्विवर्षस्तु प्रेतोयत्रापि दह्यते।
अशौचं बान्धवानान्तु त्रिरात्रन्तत्र विद्यते"—इति॥

यत्तु विष्णुवचनं, "दन्तजाते त्वकृतचूडे त्वहोरात्रेण"—इति तत् खननपक्षे वेदितव्यम्। अजातदन्तस्य कृतचूडस्य दहने त्रिरात्राशौचं षट्त्रिंशन्मतेऽभिहितम्,—

"जद्यप्यजातदन्तः स्यात् कृतचूडस्तु संस्थितः।
तथापि दाहयेदेनं त्र्यहञ्चाशौचमाचरेत्"—इति॥

यत्तु यमेनोक्तम्,*

"अजात-दन्ते तनये शिशौ गर्भच्युते तथा।
सपिण्डानान्तु सर्वेषां अहोरात्रमशौचकम्"—इति॥

तदकृतचूडविषयम्। नन्वनुजातस्य कृतचूडत्वं कथं, तस्य तृतीये विहितत्वादिति चेत्, न,

"चूडाकर्म्म द्विजातीनां सर्व्वेषामेव धर्म्मतः।
प्रथमेऽब्दे तृतीये वा कर्त्तव्यं श्रुतिचोदनात्"—इति

मनुना विकल्पेन स्मृतत्वात्। अग्निसंस्कारे,—इत्येतद्विकल्पेनाभिधानं जातदन्तानुजातयोरेव न त्रिवर्षकृतचूडे, तत्राग्निसंस्कारस्य नियतत्वात्। इतरत्राग्निसंस्कार-विकल्पोमनुना दर्शितः,—

"नात्रिवर्षस्य कर्त्तव्या बान्धवैरुदकक्रिया।

---

* मनुनोक्तम्,—इति मु० पुस्तके पाठः।

जातदन्तस्य वा कुर्यान्नाम्नि वाऽपि कृते सति"—इति ॥
उदकक्रियेति अग्निसंस्कारोपलक्षणार्थम्।

वयोऽवस्थाविशेषेणाशौचविशेषं दर्शयति,

**आ दन्तजन्मनः सद्य आ चूडान्नैशिकी स्मृता* ॥ १७॥**
**त्रिरात्रमा व्रतादेशाद् दशरात्रमतः परम्। इति ॥**

दन्तजननात् प्रागतीतस्य बालस्य संबन्धिनां सपिण्डानां सद्यः शौचम्। दन्तजननादूर्ध्वं प्राक् चूडाकरणादतीतस्य संबन्धिनां नैशिकी, निशायां भवा, अहोरात्रमशुद्धिः। व्रतादेशउपनयनम्। ततोऽर्वाक् चूडायास्तोर्ध्वमतीतस्य संबन्धिनां त्रिरात्रमशुद्धिः। ततः परं दशरात्रमित्यर्थः। तथा च संग्रहकारः,

"नाम्नोदन्तोद्भवाच्चोडादुपनीतेरधः क्रमात्।
सद्यःशौचमहस्त्र्यहो नियताग्न्युदकः परः"—इति ॥

शङ्खोऽपि,—

"अजातदन्ते तनये सद्यः शौचं विधीयते।
अहोरात्रात्तथा शुद्धिर्बाले त्वकृतचूडके ॥
तथैवानुपनीते तु त्र्यहाच्छुध्यन्ति बान्धवाः"—इति।

यत्तु काश्यपवचनं, "बालानामजातदन्तानां त्रिरात्रेण शुद्धिः"—इति। तन्मातापितृविषयम्। अतएव मनुः,—

"निरस्य तु पुमान् शुक्रमुपस्पृश्य विशुध्यति।
वैजिकादपि संबन्धादनिरुंध्यादघं त्र्यहम्"—इति ॥

---

* क्रिया,—इति मु० पुस्तके पाठः।

वैजिकसंबन्धोऽजन्यजनकभावः । यत्तु स्मृत्यन्तरम्,

"प्राङ्नामकरणात्सद्य एकाहोदन्तजन्मनः"—इति ।

तद्दहने* वेदितव्यम् । खनने तु सद्यः शुद्धिः । "अजातदन्ते बाले प्रेते सद्यएव नास्त्यग्निसंस्कारोनोदकक्रिया"—इति विष्णुस्मरणात् । यत्तु वशिष्ठवचनं, "ऊनद्विवर्षे प्रेते गर्भपतने वा सपिण्डानां त्रिरात्रम्"—इति । तज्जातदन्तस्याग्निसंस्कारे द्रष्टव्यम् । ततश्चैवं व्यवस्था । नामकरणात् प्राक् सद्यः शौचं नियतं, तदूर्ध्वं प्राक् दन्तजननादग्निसंस्कारक्रियायामेकाहः अन्यथा सद्यः शुद्धिः, तस्याप्यजातदन्तस्य चूडाकरणे त्रिरात्रं, दन्तजननादूर्ध्वमर्वाक् चूडाकरणादेकाहं खनने, अग्निसंस्कारे तु त्र्यहः, ऊर्ध्वं चूडायाः प्रागुपनयनात् त्र्यहः, उपनयनादूर्द्धं ब्राह्मणादीनां दशाहादिकमिति । इयं व्यवस्था पुमपत्यमरणे द्रष्टव्या । स्त्र्यपत्ये तु विशेषोवृद्धमनुना दर्शितः,—

"अप्रौढायान्तु कन्यायां सद्यः शौचं विधीयते ।
अहस्त्वदत्तकन्यासु दत्तासु च त्र्यहं तथा"—इति ॥

अप्रौढायां अकृतचूडायामित्यर्थः ।

"अचूडायान्तु कन्यायां सद्यः शौचं विधीयते"—

इत्यापस्तम्ब-स्मरणात् । अदत्तकन्यासु वाचाऽदत्तासु अहोरात्रं, दत्तासु वाग्दत्तासु त्र्यहम् । तथाच मरीचिः । "चूडाकरणे सद्यः शौचं प्राग्वाग्दानादेकाहः दत्तानां प्राक् परिणयनात् त्र्यहम्"—इति । ब्रह्मपुराणेऽपि,—

---

* तदखनने,—इति मु० पुस्तके पाठः ।

"आ जन्मनस्तु चौड़ान्तं कन्या यदि विपद्यते ।
सद्यः शौचं भवेत्तत्र सर्ववर्णेषु नित्यशः ॥
ततोवाग्दानपर्यन्तं यावदेकाहमेव हि ।
ततः परं प्रवृद्धायां त्रिरात्रमिति निश्चयः ॥
वाक्प्रदाने कृते तत्र ज्ञेयञ्चोभयतस्त्र्यहम् ।
पितुर्वरस्य च ततोदत्तानां भर्त्तुरेव हि ।
स्वजात्युक्तमशौचं स्यान्मृतके जातके तथा"—इति ॥

पुलस्त्योऽपि,—

"सद्यस्त्वप्रौढ़कन्यायां प्रौढायां वासराच्छुचिः ।
प्रदत्तायां त्रिरात्रेण दत्तायां पक्षिणी भवेत्"—इति ॥

प्रदत्तायां प्रक्रान्तदानायां वाचा दत्तायामिति यावत् । वाग्दानानन्तरं मृतायां त्रिरात्रम् । मनुरप्याह,—

"स्त्रीणामसंस्कृतानान्तु त्र्यहाच्छुध्यन्ति बान्धवाः ।
यथोक्तेनैव कल्पेन शुध्यन्ति तु सनाभयः"—इति ॥

बान्धवाः पतिसपिण्डाः । सनाभयः पितृसपिण्डाः । यथोक्तेन कल्पेन त्रिरात्रेण । अतएव मरीचिः,—

"अवारिपूर्वं प्रत्ता तु या नैव प्रतिपादिता ।
असंस्कृता तु सा ज्ञेया त्रिरात्रमुभयोः स्मृतम्"—इति ॥

उभयोर्वरपितृपक्षयोः । अकृतचूडायां यत् सद्यः शौचविधानं कृतचूडायां यदेकाहविधानं, तन्मातापितृव्यतिरिक्तविषयम् ।

"प्रत्ताऽप्रत्तासु योषित्सु संस्कृताऽसंस्कृतासु च ।
मातापित्रोस्त्रिरात्रं स्यादितरेषां यथाविधि"—इति ॥

"अजातदन्तासु पित्रोरेकाहम्"—इति शङ्खकार्ष्णाजिनिभ्यां विशेषस्मरणात्। अदन्तासु त्रिरात्रविधानं जातदन्तविषयम्। अजातदन्तास्वेकाहविधानात्। संस्कृतासु पित्रोस्त्रिरात्रं तद्गृहमरणे वेदितव्यम्। तथा च विष्णुः। "संस्कृतासु स्त्रीषु नाशौचं पितृपक्षे तत्प्रसवमरणे चेत् पितृगृहे स्यातां तदैकरात्रं त्रिरात्रं च"—इति। तत्र प्रसवे मरणे च बन्धुवर्गस्यैकरात्रं पित्रोस्त्रिरात्रमिति व्यवस्था। ब्रह्मपुराणेऽपि,—

"दत्ता नारी पितुर्गेहे सूयेताथ म्रियेत च।
तद्बन्धुवर्गस्त्वेकेन शुध्येत्तज्जनकस्त्रिभिः"—इति॥

पित्रोरुपरमे संस्कृतानां स्त्रीणां त्रिरात्रम्। तथाच वृद्धमनुः,—

"पित्रोरुपरमे स्त्रीणामूढानान्तु कथं भवेत्।
त्रिरात्रेणैव शुद्धिः स्यादित्याह भगवान् यमः"—इति॥

पित्रोर्मातापित्रोरुपरमे विवाहसंस्कारसंस्कृतानां दुहितॄणां त्रिरात्रेण शुद्धिरिति। दौहित्र-भगिनीसुतयोरसंस्कृतयोः पक्षिण्याशौचं संस्कृतयोस्त्रिरात्रम्। तथा च वृद्धमनुः,—

"असंस्कृते पक्षिणीं रात्रिं दौहित्रे भगिनीसुते।
संस्कृते तु त्रिरात्रं स्यादिति धर्म्मो व्यवस्थितः"—इति॥

दौहित्रे भगिनीसुते वाऽनुपनीते मृते सति पक्षिणीमागामिवर्त्तमानाहर्द्वययुक्तां रात्रिं मातामहादिः क्षपयेत्, उपनीते तु तस्मिन् मृते सति मातामहादीनां त्रिरात्रमाशौचं भवेदित्यर्थः। मातामहादीनां मरणे दौहित्रादीनां त्रिरात्रमाशौचम्। तथा च बृहस्पतिः,—

"त्र्यहं मातामहाचार्यश्रोत्रियेष्वशुचिर्भवेत्"—इति।

आचार्योऽसपिण्डः सन्नुपनयनादिकर्त्ता । श्रोत्रियस्त्वेकशाखा-ध्यायी, मैत्री प्रातिवेश्यत्वादिनोपसम्पन्नः । एतेषु मातामहादिषु मृतेषु त्रिरात्रमिति । विष्णुरपि । "आचार्य्ये मातामहे च व्यतीते त्रिरात्रेण"—इति । मनुरपि,—

"श्रोत्रिये तूपसम्पन्ने त्रिरात्रमशुचिर्भवेत्"—इति ।

एतत्त्रिरात्राशौचं परकर्तृकदहनादौ वेदितव्यम् ।

"गुरोः प्रेतस्य शिष्यस्तु पितृमेधं समाचरन् ।
प्रेताहारैः समन्तत्र दशरात्रेण शुद्ध्यति"—इति

स्वकर्तृकदाहादौ मनुना विशेषस्मरणात् । मातृष्वस्रादिषु त्रिरात्र-माशौचम् । तदाह प्रचेताः,—

"मातृष्वसृमातुलयोः श्वश्रूश्वशुरयोर्गुरोः ।
मृते चर्त्विजि याज्ये च त्रिरात्रेण विशुद्ध्यति"—इति ।

गुरुराचार्य्यः । ऋत्विक्कुलपरम्पराऽऽयातः । याज्योऽपि तथाविधः । यत्तु याज्ञवल्क्यवचनम्,—

"गुर्वन्तेवास्यनूचानमातुलश्रोत्रियेषु च"—इति ।

यत्तु विष्णुवचनम्,—"आचार्य्यपत्नीपुत्रोपाध्यायमातुलश्वशुरश्वश्रू-श्वशुर्यसहाध्यायिशिष्येष्वतीतेष्वेकरात्रेण"—इति । तत्र गुरुरुपाध्यायः, अन्तेवासी अन्योपनीतशिष्यः । स्वोपनीते तु, "शिष्यसतीर्थसब्रह्म-चारिषु त्रिरात्रमहोरात्रमेकाहः"—इति बौधायनेन त्रिरात्रविधा-नात् । मातुलः अनुपकारी विदेशस्थो वा । श्रोत्रियोऽनुपसम्पन्नः । श्वश्रूश्वशुरावप्यनुपकारिणौ विदेशस्थौ वा । एकस्मिन् गुरुकुलेऽल्प-कालं सहाध्यायी । एतेष्वेकरात्रमिति व्यवस्था । यत्तु मनुनोक्तम्,—

"मातुले पक्षिणीं रात्रिं शिष्यर्त्विग्बान्धवेषु च"—इति ।

तस्यायमर्थः । स्वल्पोपकारके मातुले । शिष्योऽन्योपनीतसाङ्गवेदाध्यायी । ऋत्विक् आधानप्रभृतियावज्जीवमार्त्विज्यकारी । बान्धवाः मातृपितृबान्धवाः । एतेषु पक्षिण्याशौचमिति । अनौरसपुत्रादिषु त्रिरात्रमाशौचम् । तदाह विष्णुः,—

"अनौरसेषु पुत्रेषु जातेषु च मृतेषु च ।
परपूर्व्वासु भार्यासु प्रसूतासु मृतासु च"—इति ॥

त्रिरात्रमित्यनुवर्त्तते । हारीतोऽपि,—

"परपूर्व्वासु भार्यासु पुत्रेषु कृतकेषु च ।
मातामहे त्रिरात्रं स्यादेकाहन्तु सपिण्डतः"—इति ॥

शङ्खोऽपि,—

"अनौरसेषु पुत्रेषु भार्यास्वन्यगतासु च ।
परपूर्व्वासु च स्वासु त्रिरात्राच्छुद्धिरिष्यते"—इति ।

अनौरसाः क्षेत्रजादयः । परपूर्व्वाः पुनर्भुवः । अन्यगताः स्वैरिण्यः । एतेष्वनौरसादिषु यत्प्रतियोगिकं भार्यात्वं पुत्रत्वञ्च तस्यैवेदं त्रिरात्रमाशौचमित्यर्थः । यत्त्वेकाहविधानम्,—

"अनौरसेषु पुत्रेषु भार्यास्वन्यगतासु च"—इति ।

तदसन्निधिविषयम् । सन्निधावपि पितृसपिण्डानामेकाहएव । तथाच मरीचिः,—

"एकाहस्तु सपिण्डानां त्रिरात्रं यत्र वै पितुः"—इति ।

यत्तु प्रजापतिनोक्तम्,—

"अन्याश्रितेषु दारेषु परपत्नीसुतेषु च ।

गोत्रिणः स्नानशुद्धाः स्युस्त्रिरात्रेणैव तत्पिता"—इति॥

स्नानादेव शुद्धिरिति यत्, तत्समानोदकविषयं असन्निधिविषयं वा। एकस्यां मातरि पितृद्वयोत्पादितयोर्भ्रात्रोरन्यतरस्मिन्मृतेऽन्यतरस्य त्रिरात्रमाशौचं भवति। तथा च मरीचिः,—

"मात्रैकया द्विपितृकौ भ्रातरावन्यगोत्रकौ।
एकाहं सूतकं तत्र त्रिरात्रं मृतके तयोः"—इति॥

असपिण्डयोनिसंबन्धिमरणे पक्षिण्याशौचम्। तदाह गौतमः,—

"पक्षिणीमसपिण्डे योनिसम्बन्धे सहाध्यायिनि वा"—इति।

अयमर्थः। असपिण्डः स्ववेश्मनि मृतः। योनिसंबन्धा मातृष्वस्रीय-पितृष्वस्रीयादयः। सहाध्यायी गुरुकुले सह कृत्स्नवेदाध्यायी। चकारा-द्गुर्वङ्गनादयोऽपि संगृह्यन्ते। तेषु पक्षिणीं तत्संबन्धप्रतियोगी क्षप-येदिति। तथा च वृद्धमनुः,—

"मातुले श्वशुरे मित्रे गुरौ गुर्वंगनासु च।
आशौचं पक्षिणीं रात्रिं मृता मातामही यदि॥
श्वशुरयोर्भगिन्याञ्च मातुलान्याञ्च मातुले।
पित्रोः स्वसरि तद्वच्च पक्षिणीं क्षपयेन्निशाम्"—इति॥

यत्तु विष्णुनोक्तम्। "असपिण्डे स्ववेश्मनि मृते एकरात्रम्"—इति। तदप्रधानगृहमरणे वेदितव्यम्। यदप्यङ्गिरसोक्तम्,—

"गृहे यस्य मृतः कश्चिदसपिण्डः कथञ्चन।
तस्याप्यशौचं विज्ञेयं त्रिरात्रं नात्र संशयः"—इति॥

तदसपिण्डश्रोत्रियविषयम्। यत्तु वृद्धमनुनैवोक्तम्,—

"भगिन्यां संस्थितायान्तु भ्रातर्यपि च संस्थित।

मित्रे जामातरि प्रेते दौहित्रे भगिनीसुते ॥
श्यालके तत्सुते चैव सद्यः स्नानेन शुध्यति"—इति ।

तत्र भगिन्यादौ सद्यःशुद्ध्यभिधानं देशान्तरमरणविषयम्। जामातृश्यालकसुतयोः सन्निधावेव सद्यःशुद्धिरिति। निवासराजन्यहनि मृतेऽहराशौचं, रात्रौ चेद्रात्रिमात्रमिति। अतएव मनुः,—

"प्रेते राजनि सज्योतिर्यस्य स्याद्विषये स्थितः"—इति ।

ज्योतिषा सौरेण नाक्षत्रेण वा सह वर्त्तते यदाशौचं,तत् सज्योतिः। अहनि चेद्यावत्सूर्यदर्शनं, रात्रौ चेद्यावन्नक्षत्रदर्शनमित्यर्थः। ग्राममध्ये शवे स्थिते ग्रामस्य तावदाशौचम् । तदाह वृद्धमनुः,—

"ग्राममध्यगतोयावच्छवस्तिष्ठति कस्यचित् ।
ग्रामस्य तावदाशौचं निर्गते शुचितामियात्"—इति॥

ग्रामेश्वरादावपि सज्योतिराशौचम् । तदाह सएव,—

"ग्रामेश्वरे कुलपतौ श्रोत्रिये च तपस्विनि।
शिष्ये पञ्चत्वमापन्ने शुद्धिर्नक्षत्रदर्शनात्"—इति ॥

कुलपतिः समूहपतिः। श्रोत्रियोदेशान्तरस्थः ।

उक्तस्याशौचस्याग्निहोत्रिब्रह्मचारिणोरपवादमाह,—

**ब्रह्मचारी गृहे येषां हूयते च हुताशनः ॥१८॥**
**सम्पर्कं न च कुर्व्वन्ति न तेषां सूतकं भवेत्। इति॥**

ब्रह्मचारी उपकुर्व्वाणकोनैष्ठिकस्य, येषाङ्गृहे हुताशनो हूयते अग्निहोत्रमनुष्ठीयते, तेषामग्निहोत्रानुष्ठानकाले नास्त्याशौचं; यदि ते सूतकिभिः सह संसर्गं न कुर्युः। तदुक्तं कूर्म्मे,—

"नैष्ठिकानां वनस्थानां यतीनां ब्रह्मचारिणाम्।
नाशौचं कीर्त्तितं सद्भिः पतिते च तथा मृते"—इति॥

देवलोऽपि,—

"नैष्ठिकानां वनस्थानां यतीनां ब्रह्मचारिणाम्।
नाशौचं सूतके प्रोक्तं शावे वापि तथैव च"—इति॥

बृहस्पतिरपि,—

"स्वाध्यायः क्रियते यत्र होमश्चोभयकालिकः।
सायंप्रातर्वैश्वदेवं न तेषां सूतकं भवेत्"—इति॥

संसर्गस्यास्पृश्यत्वकर्म्मानधिकारलक्षणाशौचापादकत्वमन्वयव्यतिरेकाभ्यामुपपादयति,—

**सम्पर्काद्दुष्यते विप्रो जनने मरणे तथा॥१९॥**
**सम्पर्काच्च निवृत्तस्य न प्रेतं नैव सूतकम्। इति॥**

स्पष्टार्थमेतत्॥ किञ्च,

**शिल्पिनः कारुका वैद्या दासी दासाश्च नापिताः॥२०**
**राजानः श्रोत्रियाश्चैव सद्यःशौचाः प्रकीर्त्तिताः॥**
**सव्रतः सत्रपूतश्च आहिताग्निश्च यो द्विजः॥२१॥**
**राज्ञश्च सूतकं नास्ति यस्य चेच्छति पार्थिवः॥**
**उद्यतो निधने दाने आर्त्तो विप्रो निमन्त्रितः॥२२॥**
**तदैव ऋषिभिर्दृष्टं यथा कालेन शुध्यति। इति॥**

शिल्पिनश्चित्रकाराद्याः। कारुकाः सूपकारप्रभृतयः। वैद्याश्चिकित्सकाः। श्रोत्रियाः सद्यः प्रक्षालिकाः। व्रतेन चान्द्रायणादिनियमेन

सह वर्त्तते इति सव्रतः। सत्रपूतो गवामयनाद्यधिकृतः। एते स्वस्वकर्मणि सद्यःशौचाः। राज्ञः, राजसंबन्धिनो मान्यस्य, यस्य च पुरोहितस्या-न्यसाध्यमन्त्राभिचारादिकर्म्मसिध्यर्थमाशौचाभावमिच्छति, तयोरपि तत्तत्कर्म्मणि सूतकं नास्ति। निधनशब्देन तत्साधनभूतः सङ्ग्रामोलक्ष्यते। तत्रान्नादिदाने चोद्यतः कृतोपक्रमः, आर्त्तः आपदं प्राप्तः, श्राद्धादौ निमन्त्रितोविप्रस्च, तदैव सद्यएव शुध्यतीति ऋषिभिर्दृष्टम्। यथा कालेन द्वादशरात्रादिना, तथेत्यर्थः। तथा चादिपुराणे,—

"शिल्पिनश्चित्रकाराद्याः कर्म्म यत्साधयन्त्यलम्।
तत्कर्म्म नान्यो जानाति तस्माच्छुद्धाः स्वकर्मणि॥
सूपकारेण यत्कर्म्म करणीयं नरेष्विह।
तदन्यो नैव जानाति तस्माच्छुद्धः स सूपकृत्॥
चिकित्सकोयत्कुरुते तदन्येन न शक्यते।
तस्माच्चिकित्सकः स्पर्शे शुद्धो भवति नित्यशः॥
दास्योदासास्च यत्किञ्चित् कुर्वन्त्यपि च लीलया।
तदन्यो न क्षमः कर्त्तुं तस्मात्ते शुचयः सदा॥
राजा करोति यत्कर्म्म स्वप्नेऽप्यन्यस्य तत् कथम्।
एवं सति नृपः शुद्धः संस्पर्शे मृतसूतके॥
यत्कर्म्म राजभृत्यानां हस्त्यश्वगमनादिकम्।
तन्नास्ति यस्मादन्यस्य तस्मात्ते शुचयः स्मृताः"—इति॥

विष्णुरपि। "अशौचं न राज्ञां राजकर्म्मणि न व्रतिनां व्रते न सत्रिणां सत्रे न कारूणां कारुकर्म्मणि न राजाज्ञाकारिणां तदि-च्छायाम्"—इति। प्रचेताअपि,—

"कारवः शिल्पिनो वैद्याः दासी दासास्तथैव च।
राजानो राजभृत्याश्च सद्यःशौचाः प्रकीर्त्तिताः"—इति॥

वृद्धपराशरोऽपि,—

"राज्ञां तु सूतकं नास्ति व्रतिनां न च सत्रिणाम्।
दीक्षितानाञ्च सर्वेषां यस्य चेच्छति पार्थिवः॥
तपोदानप्रवृत्तेषु नाशौचं मृतसूतके"—इति।

स्मृत्यन्तरमपि,—

"नित्यमन्नप्रदस्यापि कृच्छ्रचान्द्रायणादिषु।
प्रवृत्ते कृच्छ्रहोमादौ ब्राह्मणादिषु भोजने॥
गृहीतनियमस्यापि न स्यादन्यस्य कस्यचित्।
निमन्त्रितेषु विप्रेषु प्रारब्धे श्राद्धकर्म्मणि॥
निमन्त्रितस्य विप्रस्य स्वाध्यायनिरतस्य च।
देहे पितृषु तिष्ठत्सु नाशौचं विद्यते क्वचित्॥
प्रायश्चित्तप्रवृत्तानां दातृब्रह्मविदां तथा"—इति।

मनुरपि,—

"न राज्ञामघदोषोऽस्ति व्रतिनां न च सत्रिणाम्।
ऐन्द्रं स्थानमुपासीना ब्रह्मभूता हि ते सदा॥
राज्ञोमाहात्मिके स्थाने सद्यःशौचं विधीयते।
प्रजानां परिरक्षार्थमासनं तत्र कारणम्"—इति॥

याज्ञवल्क्योऽपि,—

"ऋत्विजां दीक्षितानाञ्च यज्ञीयं कर्म्म कुर्वताम्।
सत्रि-व्रति-ब्रह्मचारि-दातृ-ब्रह्मविदां तथा॥

दाने विवाहे यज्ञे च संग्रामे देशविप्लवे ।
आपद्यपि च कष्टायां सद्यःशौचं विधीयते"—इति ॥

हारीतोऽपि,—

"संग्रामस्थश्च राजन्यो वैश्यो मध्ये गवां स्थितः ।
सत्री च ब्राह्मणो नित्यं ब्रह्मचारी च वै शुचिः"—इति ॥

पैठीनसिरपि,—

"विवाहयज्ञदुर्गेषु यात्रायां तीर्थकर्म्मणि ।
न तत्र सूतकं तद्वत् कर्म्म यज्ञादि कारयेत्"—इति ॥

ब्रह्मपुराणेऽपि,—

"अथ देवप्रतिष्ठायां गणयागादिकर्म्मणि ।
श्राद्धादौ पितृयज्ञे च कन्यादाने च नो भवेत्"—इति ॥

अङ्गिरा अपि,—

"जनने मरणे चैव त्रिष्वाशौचं न विद्यते ।
यज्ञे विवाहकाले च देवयागे तथैव च"—इति ॥

अत्र विवाहादौ सद्यःशौचमुपक्रान्तविवाहादिविषयम् । अथ नृपादीनामसाधारणकृत्यव्यतिरिक्तविषयेष्वाशौचमस्त्येव । तथाच ब्राह्मे पुराणे,—

"राज्यनाशस्तु येन स्याद्दिना राज्ञा स्वमण्डले ।
प्रयास्यतश्च संग्रामे होमे प्रास्थानिके सति ॥
मन्त्रादितर्पणैर्व्वाऽपि प्रजानां शान्तिकर्म्मणि ।
गोमङ्गलादौ वैश्यानां कृषिकालात्ययेष्वपि ॥
आशौचं न भवेल्लोके सर्व्वत्रान्यत्र विद्यते"—इति ।

किञ्च,

**प्रसवे गृहमेधी तु न कुर्य्यात् सङ्करं यदि ॥२३॥**
**दशाहाच्छुध्यते माता त्ववगाह्य पिता शुचिः। इति॥**

प्रसवे जनने गृहमेधी गृहस्थः पिता सूतिकया सह यदि संसर्गं न कुर्यात्, तदा स्नानेन शुद्धोभवति, माता तु दशाहेन शुद्धा भवतीत्यर्थः।

नन्वेवं तर्हि पितुः कर्म्मानधिकारलक्षणमप्याशौचं न स्यादित्यतआह,—

**सर्वेषां शावमाशौचं मातापित्रोस्तु सूतकम् ॥२४॥**
**सूतकं मातुरेव स्यात् उपस्पृश्य पिता शुचिः। इति ॥**

यथा सपिण्डानां कर्म्मानधिकारलक्षणमाशौचं सम्पूर्णं, तद्वत्पितुरपि। मातापित्रोस्तु सूतकमस्पृश्यत्वलक्षणमाशौचं, तत्रापि दशाहमस्पृश्यत्वं मातुरेव पितुस्तु स्नानपर्यन्तमेवेत्यर्थः। तथा च पैठीनसिः,—

"जनौ सपिण्डाः शुचयो मातापित्रोस्तु सूतकम्।
सूतकं मातुरेव स्यादुपस्पृश्य पिता शुचिः"—इति॥

अयमर्थः। जनने मातापितृव्यतिरिक्ताः सर्वे सपिण्डाः स्पृश्याः, मातापित्रोस्तु नास्ति स्पृश्यत्वं, तत्रापि पिता स्नानेन स्पृश्योभवति, दशाहन्त्वस्पृश्यत्वं मातुरेव। तथा च वसिष्ठः,—

"नाशौचं विद्यते पुंसः संसर्गं चेन्न गच्छति।
रजस्तत्राशुचि ज्ञेयं तच्च पुंसि न विद्यते"—इति॥

सम्वर्त्तोऽपि,—

"जाते पुत्रे पितुः स्नानं सचेलन्तु विधीयते।
माता शुद्ध्येद्दशाहेन स्नानात्तु स्पर्शनं पितुः"—इति ॥

वृहस्पतिरपि,—

"शावाशौचं तु सर्व्वेषां सूतकं मातुरेव च ।
स्नानं प्रकुर्यात्तु पिता ज्ञातयो न सचेलिनः"—इति ॥

गौतमोऽपि,—

"मातापित्रोस्तु सूतकमुपस्पृश्य पिता शुचिः"—इति ।

आदिपुराणेऽपि,—

"सूतकी* तु मुखं दृष्ट्वा जातस्य जनकस्ततः ।
कृत्वा सचेलं स्नानन्तु शुद्धो भवति तत्क्षणात्"—इति ॥

सूतिकया सह संसर्गकरणे तन्निमित्तमस्पृश्यत्वं दशाहमस्तीत्याह,

**यदि पत्न्यां प्रसूतायां सम्पर्कं कुरुते द्विजः ॥२५॥**
**सूतकन्तु भवेत्तस्य यदि विप्रः षड़ङ्गवित् । इति ॥**

सूतिकया पत्न्या सह पतिः संसर्गं यदि कुर्यात्तदा विद्याकर्म्मयुक्तस्य विप्रस्याप्यस्पृश्यत्वलक्षणं सूतकं भवेत्, किमुतान्यस्येत्यर्थः । तथा च सुमन्तुः । "मातुरेव सूतकं तां स्पृशतश्च नेतरेषाम्"—इति । सूतिकां स्पृशतोजनकस्यास्पृश्यत्वलक्षणं सूतकं भवति, नान्येषामित्यर्थः ।

ननु जननिमित्तमेवास्पृश्यत्वं भर्त्तुः स्नानानन्तरमपि किं न स्यादत आह,—

**सम्पर्काज्जायते दोषो नान्यो दोषोऽस्ति वै द्विजे ॥२६॥**

---

* सूतके इति, मु० पुस्तके पाठः ।

तस्मात्सर्वप्रयत्नेन सम्पर्कं वर्जयेद्बुधः। इति॥

स्नानानन्तरं भर्त्तुः संसर्गनिमित्तकएव दोषोऽस्पृश्यत्वापादको जायते, न जननिमित्तको दोषोऽस्ति, तस्माद्विद्वान् सम्पर्कं सह शयनाशनभोजनादिकं वर्जयेदित्यर्थः। तथा च वृहस्पतिः,—

"यस्तैः सहाशपिण्डोऽपि प्रकुर्याच्छयनाशनम्।
बान्धवो वा परोवापि स दशाहेन शुध्यति"—इति॥

विष्णुरपि। "ब्राह्मणादीनामाशौचे यः सकृदेवान्नमश्नीयात्तस्य तावदाशौचं यावत्तेषामाशौचव्यपगमः"—इति। अत्रिरपि,—

"सम्पर्काज्जायते दोषः पारक्ये मृतजन्मनि।
तद्वर्जनात्पितुरपि सद्यःशौचं विधीयते"—इति॥

प्रारब्धे यज्ञादौ कर्त्तुः शुद्धिरुक्ता, इदानीं कल्पितद्रव्यस्यापि शुद्धिरस्तीत्याह,

विवाहोत्सवयज्ञेषु त्वन्तरा मृतसूतके॥२७॥
पूर्वसङ्कल्पितं द्रव्यं दीयमानं न दुष्यति। इति॥

अत्र विवाहग्रहणं पूर्वप्रवृत्तचौड़ोपनयनादिसंस्कारकर्म्मोपलक्षणार्थम्। उत्सवोदेवतोत्सवः, तेन च देवप्रतिष्ठादिकमुपलक्ष्यते। यज्ञो ज्योतिष्टोमादिः। तेषु प्रारब्धेषु अन्तरा मध्ये यदि मृतसूतके मरणजनने स्यातां, तदा पूर्वसङ्कल्पितं द्रव्यं देवतायै ब्राह्मणेभ्यो दीयमानं न दुष्यतीत्यर्थः। तथाच क्रतुः,—

"पूर्वसङ्कल्पितं द्रव्यं दीयमानं न दुष्यति"—इति।

पक्के तु विशेषः स्मृत्यन्तरे दर्शितः,—

"विवाहोत्सवयज्ञादिष्वन्तरा मृतसूतके ।
शृतमन्नं* परैर्देयं दातॄन् भोक्तॄंश्च न स्पृशेत्"—इति ॥

कृतान्नमसूतकिभिर्देयं, सूतकी तु दातॄन् भोक्तॄंश्च न स्पृशेदित्यर्थः । यत्तु स्मृत्यन्तरम्,—

"द्रव्याणि स्वामिसंबन्धादघानि लशुचीनि च ।
स्वामिशुध्यैव शुध्यन्ति वारिणा प्रोक्षितान्यपि"—इति ॥

तदसङ्कल्पितद्रव्यविषयम् । कानिचिदसङ्कल्पितान्यपि द्रव्याणि सर्व्वदा शुद्धानि । तथा च मरीचिः,—

"लवणे मधुमांसे च पुष्पमूलफलेषु च ।
शाककाष्ठतृणेष्वप्सु दधिसर्पिःपयःसु च ॥
तैलौषध्यजिने चैव पक्वापक्वे स्वयं ग्रहः ।
पण्येषु चैव सर्व्वेषु नाशौचं मृतसूतके"—इति ॥

अनेकाशौचनिमित्तसन्निपाते प्रतिनिमित्तं नैमित्तिकावृत्तौ तां निवारयति,

**अन्तरा तु दशाहस्य पुनर्मरणजन्मनी ॥२८॥**
**तावत्स्यादशुचिर्विप्रो यावत्तत्स्यादनिर्दशम् । इति ॥**

यदा दशाहाशौचकालमध्ये तत्तुल्यस्य ततोऽल्पस्य वाऽऽशौचस्य निमित्ते [redacted]नमरणे स्यातां, तदा पूर्व्वप्रवृत्तं तदाशौचं यावदनिर्दशमनिर्गतदशाहं स्यात् विप्रस्तावदेवाशुचिर्भवति न पुनर्मध्योत्पन्नमरणादिनिमित्तकदशाहाद्याशौचवानित्यर्थः । तथा च मनुः,—

---

*- शेषमन्नं,—इति पाठान्तरम् ।

"अन्तर्द्दशाहे स्यातान्चेत् पुनर्मरणजन्मनी।
तावत्स्यादशुचिर्विप्रो यावत्तत्स्यादनिर्द्दशम्"—इति॥

याज्ञवल्क्योऽपि,—

"अन्तरा जन्ममरणे शेषाहोभिर्विशुध्यति"—इति।

विष्णुरपि। "जननाशौचमध्ये यद्यपरं जननं स्यात्तत्र पूर्व्वाशौच-व्यपगमे शुद्धिः मरणाशौचमध्ये ज्ञातिमरणेऽप्येवम्"—इति। अपि-शब्दाज्जननेऽपि मरणाशौचकालेनैव शुद्धिरित्यर्थः। यदा जनननि-मित्तदशाहाशौचमध्ये मरणमापतति, तदा मरणादारभ्य दशाहं कार्यम्। तथा चाङ्गिराः,—

"सूतके मृतकं चेत्स्यान्मृतके त्वथ सूतकम्।
तत्राधिकृत्य मृतकं शौचं कुर्य्यान्न सूतकम्"—इति॥

षट्त्रिंशन्मतेऽपि,—

"शावाशौचे समुत्पन्ने सूतकन्तु यदा भवेत्।
शावेन शुध्यते सूतिर्न्न सूतिः शावशोधनी"—इति॥

चतुर्विंशतिमतेऽपि,—

"मृतजातकयोर्योगे या शुद्धिः सा तु कथ्यते।
मृतेन शुद्ध्यते जातं न मृतं जातकेन तु"—इति।

अल्पाशौचमध्ये दीर्घकालाशौचप्राप्तौ न पूर्व्वेण शुद्धिः। तदुक्त-मुशनसा,—

"स्वल्पाशौचस्य मध्ये तु दीर्घाशौचं भवेद्यदि।
न पूर्व्वेण विशुद्धिः स्यात् स्वकालेनैव शुध्यति"—इति॥

यमेनापि,—

"अघवृद्धिमदाशौचं पश्चिमेन समापयेत् ।
यथा त्रिरात्रे प्रक्रान्ते दशाहं प्रविशेद्यदि ॥
आशौचं पुनरागच्छेत् तत्समाप्य विशुध्यति"—इति ।

प्रथमप्रवृत्ताशौचकालापेक्षया दीर्घकालानुवर्त्तनेन विवृद्धाघवदाशौचं यदि मध्ये समुत्पद्यते, तदा पश्चिमेन स्वकालेनैव समापयेदित्यर्थः । शङ्खोऽपि,—

"समानाशौचसम्पाते प्रथमेन समापयेत् ।
असमानं द्वितीयेन धर्म्मराजवचोयथा"—इति ॥

असमानं दीर्घकालाशौचमित्यर्थः । हारीतोऽपि,—

"शावान्तः शावआयाते पूर्व्वाशौचेन शुध्यति ।
गुरुणा लघु शुध्येत्तु लघुना नैव तद्गुरु ॥
अघानां यौगपद्ये तु ज्ञेया शुद्धिर्गरीयसा" ।

गुरुलघुत्वे तु समानजातीययोः कालापेक्षया, विजातीययोः स्वरूपेणैव । तदुक्तं तेनैव,—

'मरणोत्पत्तियोगे तु गरीयोमरणं भवेत्"—इति ।

क्वचित्कालापेक्षया लघ्वाशौचमध्यवर्त्तिनो गुर्व्वाशौचस्य पूर्व्वाशौचकालेनापगमोऽस्ति । तदाह देवलः,—

"परतः परतोऽशुद्धिरघवृद्धौ विधीयते ।
स्याच्चेत्पञ्चतमादह्नः पूर्व्वेणैवात्र शिष्यते"—इति ॥

वर्त्तमानाशौचमध्यवर्त्तिनि जननादौ यदाऽघवृद्धिर्दीर्घकालमाशौचं, तदा परतः प्राप्तं जननादिकमारभ्याशुद्धिर्व्विधीयते । तद्यदि पूर्व्वप्रवृत्तमाशौचं पञ्चमदिनात्परतोऽप्यनुवर्त्तते, तदा पूर्व्वेणैव पूर्व्वा-

शौचकालेनैव दशाहाशौचस्यापि शुद्धिर्विशिष्यते विधीयते। एतदुक्तं भवति। अन्तरा पतितस्याशौचस्य दीर्घकालत्वेऽपि यदि पूर्व्वप्रवृत्त-माशौचमुत्तराशौचकालादर्द्धाधिककालं स्यात्, तदा पूर्व्वप्रवृत्ता-शौचकालेनैवोत्तरस्यापि शुद्धिर्भवति। तद्यथा। गर्भपातनिमित्त-षडहाशौचमध्ये यदि दशाहाशौचमापतेत्, तदा षडहाशौचशेषेणैव दशाहाशौचस्यापि निवृत्तिरिति। एवमन्यत्रापि अर्द्धाधिककाला-शौचशेषेणैवाधिककालाशौचस्यापि निवृत्तिरवगन्तव्या।

अन्तरा पतितस्याशौचस्य शेषेण शुद्धिरित्यत्र विशेषो गौतमे-नोक्तः। "रात्रिशेषे द्वाभ्यां प्रभाते तिसृभिः"—इति। रात्रिशब्देना-होरात्रं लक्ष्यते। रात्रिः शेषोयस्याशौचस्य, तस्मिन्विद्यमाने यदा-ऽशौचान्तरमापतेत्, तदा पूर्व्वाशौचकालानन्तरं द्वाभ्यां रात्रिभ्यां शुद्धिः। प्रभाते तस्यारात्रेश्चरमे यामे पुरा सूर्य्योदयादाशौचसन्नि-पाते तिसृभीरात्रिभिः शुद्धिर्न तु पूर्व्वाशौचकालशेषेणेति। तथा शङ्खलिखिताभ्यामपि। "अथ चेदन्तरा प्रमीयेत जायेत वा शिष्टै-रेव दिवसैः शुध्येदहःशेषे द्वाभ्यां प्रभाते तिसृभिः"—इति।

शातातपेनापि।

"रात्रिशेषे द्व्यहाच्छुद्धिर्यामशेषे त्र्यहाच्छुचिः"—इति।

बौधायनेनापि। "अथ यदि दशरात्रसन्निपाते यदाद्यं दश-रात्रसमाशौचमानवमाद्दिवसात्"—इति। अस्यार्थः। यावन्नवमदि-वसपरिसमाप्तिस्तावत् न पूर्व्वाशौचकालशेषेणोत्तराशौचस्य निवृत्ति-रिति। नवमशब्देनोपान्त्यदिवसउपलक्ष्यते। ततश्च क्षत्रियादीनाम-प्यन्त्यदिवसाशौचसन्निपाते द्विरात्रं प्रभाते त्रिरात्रमित्यवगन्तव्यम्।

देवलेनापि,—

"पुनः पाते दशाहात्प्राक् पूर्व्वेण सह गच्छति ।
दशमेऽह्नि पतेद्यस्य द्व्यहतः स विशुध्यति ॥
प्रभाते तु त्रिरात्रेण दशरात्रेष्वयं विधिः"—इति ।

दशाहात्प्रागित्यत्र दशाहशब्दोऽन्त्यदिवसोपलक्षकः । दशरात्रेष्विव्येतदपि द्वादशरात्राद्युपलक्षणम् । समानाशौचयोः सन्निपाते पूर्व्वशेषेण शुद्धिरित्यस्य क्वचिदपवादः शङ्खेन दर्शितः,—

"मातर्य्यग्रे प्रमीतायामशुद्धौ म्रियते पिता ।
पितुः शेषेण शुद्धिः स्यान्मातुः कुर्य्यात्तु पक्षिणीम्"—इति ॥

मातरि पूर्व्वं मृतायां यदि तन्निमित्ताशौचमध्ये पिता म्रियेत, तदा न पूर्व्वाशौचशेषेण शुद्धिः, किं तु पित्राशौचकालेनैव शुद्धिः । तथा, पूर्व्वं पितरि मृते तन्निमित्ताशौचमध्ये मातरि प्रमीतायामपि न पित्राशौचकाल-शेषेण शुद्धिः, किं तु पित्राशौचं समाप्य पक्षिणीं कुर्य्यादित्यर्थः ।

उक्तस्य दशाहाद्याशौचस्य विषयान्तरेऽप्यपवादमाह,—

**ब्राह्मणार्थे विपन्नानां बन्दीगोग्रहणे तथा ॥२९॥**
**आहवेषु विपन्नानामेकरात्रमशौचकम् । इति॥**

ब्राह्मणप्राणरक्षणार्थं हतानां, बन्दीग्रहणे गोग्रहे च सति तद्विमोचनार्थं हतानां, आहवेष्वाभिमुख्येन हतानां, ये सपिण्डास्तेषामेकरात्रमेवाशौचं न दशरात्रादिकमित्यर्थः । यत्तु सद्यःशौचमित्यनुवृत्तौ मनुनोक्तम्,—

"डिम्भाहवहतानाञ्च विद्युता पार्थिवेन च।
गोब्राह्मणस्य चैवार्थे यस्य चेच्छति भूमिपः"—इति॥

तदसन्निधिविषयम्।

रणहतसपिण्डानामेकाहाशौचविधिशेषतया नवभिः श्लोकैराहवे हतं प्रशंसति। तत्र प्रथमं परिव्राजकदृष्टान्तेनादित्यमण्डलभेदित्वं दर्शयन्नर्थाद्ब्रह्मलोकप्राप्तिं दर्शयति,—

**द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ ॥३०॥**
**परिव्राड्योगयुक्तश्च रणे चाभिमुखो हतः। इति॥**

योगाभ्यासेनेश्वरमुपासीनः परिव्राजकोऽर्चिरादिमार्गेण ब्रह्मलोकं गच्छन् मार्गमध्ये वाय्वादित्यचन्द्राणां मण्डलानि क्रमेण भित्त्वा तत्र तेभ्य उत्तरतोत्तराधिकेभ्यः छिद्रेभ्यो निर्गत्य क्रमेण विद्युदादिलोकान् सञ्चरन् ब्रह्मलोकं प्राप्नोति। छिद्रनिर्गमणं वाजसनेयिब्राह्मणे श्रुतम्। "स वायुमागच्छति तस्मै स तत्र विजिहीते यथा रथचक्रस्य खं तेन स ऊर्ध्वमाक्रमते स आदित्यमागच्छति तस्मै स तत्र विजिहीते यथा उदुम्बरस्य खं तेन स ऊर्ध्वमाक्रमते स चन्द्रमसमागच्छति तस्मै स तत्र विजिहीते यथा दुन्दुभेः खं तेन स ऊर्ध्वमाक्रमते"—इति।

तत्र चिरकालं महता प्रयासेन योगमभ्यस्यता परिव्राजकेन तह समानगतित्वं रणहतस्यायुक्तं तस्मादल्पकालप्रयासत्वादित्याशङ्क्य, कालाल्पत्वेऽपि धैर्यातिशयेन प्रयाससाम्यं सूचयितुमभिमुखइत्युक्तम्। तमेव सूचितमर्थं विशदीकरोति.—

**यत्र यत्र हतः शूरः शत्रुभिः परिवेष्टितः ॥३१॥**
**अक्षयान् लभते लोकान् यदि क्लीबं न भाषते। इति ॥**

लोके शस्त्रधारिणमेकमपि दृष्ट्वा महती प्राणभीतिर्जायते। युद्धकाले तु प्रतिसैन्यगताः सर्वेऽपि शत्रवः शस्त्रधारिणोमारणोद्यताएनं परिवेष्टयन्ति। तदानीमुत्पद्यमानायाभीतेरियत्तैव नास्ति, तादृशीं भीतिं सोढ्वा प्रतिभटाभिमुख्यं गच्छतः शूरस्य धैर्यं योगिधैर्यादप्यधिकम्। नहि योगिनो यमनियमादिषु क्वचित्प्राणभीतिः सम्भाविता। ततो यथा जागरणे बहुषु वत्सरेषु अनुभवनीयस्य भोगस्य मुहूर्त्तमात्रवर्त्तिनि स्वप्ने साकल्यं दृश्यते, तथा चिरकालभावियोगसाम्यं रणे धैर्यवतः किं न स्यात्। धैर्यातिशयेन साम्यमत्र विवक्षितमिति दर्शयितुं, यदि क्लीबं न भाषते,—इत्युक्तम्। क्लीबं नपुंसकत्वं विकलता, तत्सूचकं भीत्याविष्कारकवाक्यं यदि न भाषेत, तदानीं योगिसाम्यादक्षयान् ब्रह्मलोकावान्तरविशेषान् सालोक्यादीन् लभते।

परिव्राजकदृष्टान्ते सूर्यमण्डलभेदित्वं सम्भावयति,

**संन्यस्तं ब्राह्मणं दृष्ट्वा स्थानाच्चलति भास्करः ॥३२॥**
**एष मे मण्डलं भित्त्वा परं स्थानं प्रयास्यति। इति ॥**

यद्यपि मण्डलस्याचेतनरश्मिसमूहरूपत्वात्तद्भेदेऽपि नास्ति काचिदादित्यस्य वेदना, तथापि पूर्व्वमत्यन्तनीचपदे वर्त्तमानस्येदानीमुच्चपदप्राप्तिश्चित्तक्लेशहेतुर्भवति। अतएव, भित्त्वा परं स्थानं प्रयास्यतीत्युक्तम्। एतदेवाभिप्रेत्य व्यासआह,—

"क्रियावद्भिर्हि कौन्तेय, देवलोकः समावृतः।
न चैतदिष्टं देवानां मर्त्यैरुपरि वर्त्तनम्"—इति।

मुमुक्षुपरिव्राजकदर्शनमात्रेण* निष्पन्नस्य भास्करचलनस्योपन्यासाद्योगिनो यथोक्तफलं दृढीकृतं भवति।

रणे चाभिमुखोहतइति दार्ष्टान्तिकेऽभिहितं, तत्र हतत्वं धैर्यातिशयस्योपलक्षणं, असत्यपि स्ववधे परत्राणप्रवृत्तस्य धीरस्य यथोक्तफलसद्भावादित्याह,—

यस्तु भग्नेषु सैन्येषु विद्रवत्सु समन्ततः ॥ ३३ ॥
परित्रातुं यदा गच्छेत् स च क्रतुफलं लभेत्। इति॥

क्रतुरत्राश्वमेधः। ब्रह्मलोकप्राप्तिफलत्वात्। अश्वमेधस्य च तत्फलत्वं वाजसनेयिशाखायां भुज्युब्राह्मणे, "क्व न्वश्वमेधयाजिनो गच्छन्ति"—इत्यादिप्रश्नप्रतिवचनयोर्विस्पष्टमवगम्यते।

यः परित्राणार्थं प्रवृत्तस्तस्य प्रवृत्तिमात्रेण क्रतुफलमुक्तं, प्रवृत्तस्य गात्रच्छेदे सति हतत्वाभावेऽपि फलातिशयोऽस्तीत्याह,—

यस्य छेदक्षतं गात्रं शरमुद्गरयष्टिभिः ॥ ३४ ॥
देवकन्यास्तु तं वीरं हरन्ति रमयन्ति च। इति ॥

गात्रं शरीरं, छेदक्षतं हस्तपादाद्यवयवच्छेदेनोपद्रुतम्।

परित्राणाय प्रवृत्तस्य गात्रच्छेदे यत्फलं ततोऽप्यतिशयं मरणे दर्शयति,—

देवाङ्गनासहस्राणि शूरमायोधने हतम् ॥ ३५ ॥
त्वरमाणाः प्रधावन्ति मम भर्त्ता ममेति च। इति ॥

यद्यपि यज्ञसत्रादिकं युद्धमरणं चोभयमप्येकविधस्य फलस्य समानं

---

* मुमुक्षोः परिव्राजकदर्शनमात्रेण,—इति मु० पुस्तके पाठः।

साधनं, तथापि युद्धमरणस्यात्यन्त्यकालसाध्यत्वेन वैकल्यासम्भवा-द्युत्तमसाधनत्वमित्याह,

यं यज्ञसङ्घैस्तपसा च विप्राः
स्वर्गैषिणो वाऽत्र यथैव यान्ति ।
क्षणेन यान्त्येव हि तत्र वीराः
प्राणान् सुयुद्धेन परित्यजन्तः ॥ ३६ ॥ इति ।

विप्रशब्देन निष्कामा विवक्षिताः । तथाच स्वर्गैषिणो वेति विकल्प उपपद्यते । अत्र पुण्यलोकेषु यं लोकविशेषं यथैव येन प्रकारविशेषेण देवकन्यावरणादिना युक्ताः सन्तोयान्ति । तत्र तेषु पुण्यलोकेषु तमेव लोकविशेषन्तेनैव प्रकारेण युद्धहतावीराश्च यान्ति । क्षणेनेत्युक्तं कालाल्पत्वमेतेष्वतिशयः ।

ननु कालस्याल्पत्वेऽपि प्राणभीतेर्दुष्परिहरत्वात्पूर्व्वोक्तं युद्धधैर्यं दुर्लभमित्याशङ्क्य विचारवतः पुरुषस्य तत् सुलभमित्यभिप्रेत्य तं विचारं दर्शयति,—

जितेन लभ्यते लक्ष्मीर्मृतेनापि सुराङ्गना ।
क्षणध्वंसिनि कायेऽस्मिन् का चिन्ता मरणे रणे ॥ ३७ ॥ इति

जितेनेति कर्त्तरि निष्ठा । ततो जयेन लक्ष्मीलाभः, मरणेन सुराङ्गनालाभः । यदि कायजीवनलोभाल्लक्ष्मीदेवांगनालाभौ न पर्य्यालोच्येते, तथापि लाभपरित्यागमात्रं तस्य केवलमवशिष्यते । कायस्तु सर्वथा न चिरं जीवति, तस्य कर्म्मप्रापितायुष्यवशवर्त्तित्वेन क्षणप्रध्वंसिस्वभावत्वात् ।

अत्यन्तनिषिद्धमपि रुधिरपानं यत्र निरतिशयसुकृतत्वेन परिणमते, तत्र पुण्यलोकप्राप्तौ कोविस्मयइत्याह,—

ललाटदेशे रुधिरं स्रवच्च
यस्याहवे तु प्रविशेच्च वक्त्रम्।
तत् सोमपानेन किलास्य तुल्यं
संग्रामयज्ञे विधिवच्च दृष्टम् ॥ ३८ ॥ इति।

संग्रामयज्ञप्रतिपादके नीतिशास्त्रादौ पुरोभागे प्रहारो वीरलक्षणत्वेनोपवर्णितइति विवक्षितत्वात् विधिवद्दृष्टमित्युक्तम्।

तदेवं नवभिः श्लोकैराशौचविधिस्तावकत्वेन युद्धमरणस्य प्रशंसा कृता। यस्माद्रणहतोऽत्यन्तपुण्यात्मा, तस्मात्तन्मृतौ परिव्राजकमरणइवाधिकाशौचाभाव उपपद्यते। अथवा। तएते नवश्लोकाः प्रकरणादुत्कृष्टा राजधर्मेषु स्थापनीयाः, युद्धस्य क्षत्रियधर्मत्वात्। यथा दर्शपूर्णमासप्रकरणे श्रूयमाणो रजस्वलाव्रतकलापः प्रकरणादुत्कृष्य क्रत्वर्थपरिहारेण पुरुषार्थतयोपवर्णितस्तद्वत्।

धर्मार्थमनाथब्राह्मणशववहनादौ प्रशंसापूर्व्वकं सद्यःशौचं विदधाति;—

अनाथं ब्राह्मणं प्रेतं ये वहन्ति द्विजातयः।
पदे पदे यज्ञफलमानुपर्व्व्याल्लभन्ति ते ॥ ३९ ॥
न तेषामशुभं किञ्चित् पापं वा शुभकर्म्मणाम्।
जलावगाहनात्तेषां सद्यःशौचं विधीयते ॥४०॥ इति।

अनाथं बन्धुरहितमसपिण्डं ब्राह्मणमदृष्टार्थं ये द्विजातयोवहन्ति

स्पृशन्ति दहन्ति च, ते पदे पदे यज्ञफलानि क्रमेण प्राप्नुवन्ति, तथा तेषामशुभादिकमपि नास्ति, तेषां स्नानादेव सद्यः शुद्धिर्विधीयते इत्यर्थः । तथा च वृद्धपराशरः,—

"प्रेतस्पर्शनसंस्कारे ब्राह्मणो नैव दुष्यति ।
वोढा चैवाग्निदाता च सद्यः स्नात्वा विशुध्यति"—इति ॥

यत्तु हारीतेनोक्तम् । "प्रेतस्पृशोग्रामं न प्रविशेयुरानक्षत्रदर्शना-द्रात्रौ चेदादित्यस्य"—इति । यच्च देवलेनोक्तम्,—

"अह्नि चेद्दहनं कुर्यात् ऊर्द्धमस्तमयाद्रवेः ।
स्नात्वा गृहं विशेद्विप्रो रात्रौ चेदुदयाद्रवेः"—इति ॥

तत् स्नेहादिना करणीयनिर्हरणे वेदितव्यम् ।

किं तु प्राणायामोऽपि कर्त्तव्यइत्याह,—

**असगोत्रमबन्धुञ्च प्रेतीभूतं द्विजोत्तमम् ।**
**वहित्वा च दहित्वा च प्राणायामेन शुद्ध्यति ॥४१॥ इति॥**

असगोत्रमसपिण्डमबन्धुं बन्धुरहितं प्रेतं ब्राह्मणं ये वहन्ति दहन्ति, तेषां प्राणायामेन शुद्धिरित्यर्थः । न केवलं स्नानप्राणायामौ, अग्नि-स्पर्शोऽपि कर्त्तव्यः । तदुक्तमङ्गिरसा,—

"यः कश्चिन्निर्हरेत् प्रेतमसपिण्डं कथञ्चन ।
स्नात्वा सचेलं स्पृष्ट्वाऽग्निं तस्मिन्नेवाह्नि वै शुचिः"—इति ॥

स्नेहादिना प्रेतनिर्हरणं कुर्व्वतोऽसपिण्डस्याशौचमस्ति । तथाच मनुः,—

"असपिण्डं द्विजं प्रेतं विप्रोनिर्हृत्य बन्धुवत् ।
विशुध्यति त्रिरात्रेण मातुराप्तांश्च बान्धवान् ॥

यश्चान्नमत्ति तेषां यः स दशाहेन शुध्यति।
अनदन्नन्नमह्नैव न च तस्मिन्गृहे वसेत्"—इति॥

यस्तु प्रेतनिर्हरणं कृत्वा तद्गृहे वसति न च तदन्नमश्नाति तस्य त्रिरात्रमाशौचं, यस्तु तद्गृहे वसन् तदन्नमश्नाति तस्य दशरात्रं, यः पुनः प्रेतं निर्हृत्य तद्गृहवासं तदन्नञ्च परित्यजति तस्यैकाहमित्यर्थः। एतत्सवर्णविषयम्। असवर्णशवनिर्हारे तज्जातीयमाशौचं कार्यम्। तदाह गौतमः। "अपरश्चेद्वर्णः पूर्व्ववर्णमुपस्पृशेत्पूर्व्वोवाऽपरं तच्छवोक्तमाशौचं"—इति। उपस्पर्शनं निर्हरणम्। ब्राह्मणस्य शूद्रशवनिर्हारे मासमाशौचम्, शूद्रस्य ब्राह्मणशवनिर्हारे दशाहमाशौचं भवतीत्यर्थः। यस्त्वर्थलोभादसवर्णशवनिर्हरणं करोति तस्य द्विगुणमाशौचं भवतीति। तथाच व्याघ्रः,—

"अवरश्चेद्वरं वर्णं वरोवाऽप्यवरं यदि।
वहेच्छवं तदाशौचं दृत्यर्थे द्विगुणं भवेत्"—इति॥

असवर्णप्रेतनिर्हारे तदुक्तमाशौचं, तत्र वेतनाश्रयणे द्विगुणमाशौचं भवतीत्यर्थः। यत्तु विष्णुपुराणे,—

"योऽसवर्णं तु मूल्येन नीत्वा चैव वहेन्नरः।
आशौचं तु भवेत्तस्य प्रेतजातिसमं सदा"—इति॥

तदापदि द्रष्टव्यम्। अर्थलोभात्सवर्णशववहनादौ स्वजात्युक्तमाशौचं कार्यम्। तथाच कूर्म्मे,—

"यदि निर्हरति प्रेतं प्रलोभाक्रान्तमानसः।
दशाहेन द्विजः शुध्येद्द्वादशाहेन भूमिपः॥
अर्द्धमासेन वैश्यस्तु शूद्रोमासेन शुध्यति"—इति।

यस्तु सपिण्डएव प्रेतं निर्हरति न तस्याशौचाधिक्यं, प्रेतनिर्हरणस्य विहितत्वात्। तदाह देवलः,—

"विहितं तु सपिण्डानां प्रेतनिर्हरणादिकम्।
तेषां करोति यः कश्चित् तस्याधिक्यं न विद्यते"—इति॥

आधिक्यमाशौचाधिक्यमित्यर्थः। समानोदकप्रेतनिर्हरणे दशाहम्। तदाह सएव,—

"यः समानोदकं प्रेतं वहेद्वाऽथ दहेत वा।
तस्याशौचं दशाहं तु धर्मज्ञामुनयो विदुः"—इति॥

ब्रह्मचारिणः प्रेतवहनकरणे व्रतलोपः। तदाह देवलः,—

"ब्रह्मचारी न कुर्वीत शवदाहादिकाः* क्रियाः।
यदि कुर्याच्चरेत्कृच्छ्रं पुनः संस्कारमेव च"—इति॥

पित्रादिशववहने तु न दोषः। तथाच मनुदेवलौ,—

"आचार्यं स्वमुपाध्यायं पितरं मातरं गुरुम्।
निर्हृत्य तु व्रती प्रेतान् न व्रतेन वियुज्यते"—इति॥

वसिष्ठोऽपि। "ब्रह्मचारिणः शवकर्म्मणा व्रतनिवृत्तिरन्यत्र मातापित्रोर्गुरोर्वा"—इति। याज्ञवल्क्योऽपि,—

"आचार्यपित्रुपाध्यायं निर्हृत्याऽपि व्रती व्रती।
स तदन्नञ्चा नाश्नीयान्न च तैः सह संवसेत्"—इति॥

---

* प्रेतवाहादिकाः,—इति मु०।

† शकटाग्रस्य,—इति सो० दि०।

व्रती ब्रह्मचारी विप्रादीनां निर्हरणादिकं कृत्वा यद्याशौचिभिः सह वासं तदन्नञ्च परित्यजति, तदा व्रती व्रतचर्य्यान्न वियुज्यते इत्यर्थः। ब्रह्मपुराणेऽपि,—

"आचार्य्यं वाऽप्युपाध्यायं गुरुं वा पितरं तथा।
मातरं वा स्वयं दग्ध्वा व्रतस्थस्तत्र भोजनम्॥
कृत्वा पतति वै तस्मात् प्रेतान्नं न तु भक्षयेत्।
अन्यत्र भोजनं कुर्य्यान्न च तैः सह संवसेत्॥
एकाहमशुचिर्भूत्वा द्वितीयेऽहनि शुध्यति"—इति।

ब्राह्मणशववहनादौ शूद्रं न नियोजयेत्। तदाह मनुः,—

"न विप्रं स्वेषु तिष्ठत्सु मृतं शूद्रेण हारयेत्।
अस्वर्ग्या ह्याहुतिः सा स्याच्छूद्रसंस्पर्शदूषिता"—इति॥

अत्र स्वेषु तिष्ठत्स्वित्यविवक्षितं, अस्वर्ग्यत्वदोषश्रवणात्। विष्णुरपि। "मृतं द्विजं न शूद्रेण निर्हारयेन्न शूद्रं द्विजेन"—इति। यमोऽपि,—

"न शूद्रो यजमानं वै प्रेतीभूतं समुद्वहेत्।
यस्यानयति शूद्रोऽग्निं तृणं काष्ठं हवींषि च॥
प्रेतत्वं हि सदा तस्य स चाधर्म्मेण लिप्यते"—इति।

ब्राह्मणादिशवनिर्हारे दिङ्नियमो दर्शितो मनुना,—

"दक्षिणेन मृतं शूद्रं पुरद्वारेण निर्हरेत्।
पश्चिमोत्तरपूर्व्वैस्तु यथायोगं द्विजन्मनः"—इति॥

हारीतोऽपि। "न ग्रामाभिमुखं प्रेतं हरेयुः"—इति।

अनुगमनाशौचमाह,—

**अनुगम्येच्छया प्रेतं ज्ञातिमज्ञातिमेव वा।**
**स्नात्वा सचेलं स्पृष्ट्वाऽग्निं घृतं प्राश्य विशुध्यति। इति॥**

ज्ञातिं सपिण्डव्यतिरिक्तं बन्धुं, सपिण्डानुगमनस्य विहितत्वात्। अज्ञातिमबन्धुं वा समानोत्कृष्टजातिप्रेतं कामनयाऽनुगम्य सचेलं स्नात्वाऽग्निं स्पृष्ट्वा घृतभुक् शुध्यति इत्यर्थः। तथाच याज्ञवल्क्यः,—

"अनुगम्याम्भसि स्नात्वा स्पृष्ट्वाऽग्निं घृतभुक् शुचिः"—इति॥

कूर्म्मेऽपि,—

"प्रेतीभूतं द्विजं विप्रो योऽनुगच्छेत कामतः।
स्नात्वा सचेलं स्पृष्ट्वाऽग्निं घृतं प्राश्य विशुध्यति"—इति॥

अत्र च विशेषः कश्यपेनोक्तः,—

"अनुगम्य शवं बुध्या स्नात्वा स्पृष्ट्वा हुताशनम्।
सर्पिः प्राश्य पुनः स्नात्वा प्राणायामैर्विशुध्यति"—इति॥

न च घृतप्राशनस्य भोजनकार्य्ये विधानाद्भोजननिवृत्तिरिति वाच्यम्। तस्य प्रायश्चित्तत्वेन विधानात्। प्राणायामैरिति बहुवचनस्य कपिञ्जलन्यायेन त्रित्वे पर्य्यवसानात्, त्रिभिः प्राणायामैः शुध्यति,—इत्यर्थः।

निकृष्टजात्यनुगमनाशौचमाह,—

**क्षत्रियं मृतमज्ञानाद् ब्राह्मणो योऽनुगच्छति।**
**एकाहमशुचिर्भूत्वा पञ्चगव्येन शुध्यति॥**
**शवञ्च वैश्यमज्ञानाद्ब्राह्मणो योऽनुगच्छति।**
**कृत्वाऽऽशौचं द्विरात्रञ्च प्राणायामान् षडाचरेत्॥**

प्रेतीभूतन्तु यः शूद्रं ब्राह्मणो ज्ञानदुर्व्वलः।
अनुगच्छेन्नीयमानं त्रिरात्रमशुचिर्भवेत्॥
त्रिरात्रे तु ततः पूर्णे नदीं गत्वा समुद्रगाम्।
प्राणायामशतं कृत्वा घृतं प्राश्य विशुध्यति। इति॥

यो ब्राह्मणः अज्ञानान्मौर्ख्यात् चत्रियं प्रेतमनुगच्छति, स एकाहमाशौचं कृत्वा पञ्चगव्येन शुध्यति। ब्राह्मणोवैश्यशवानुगमनं कृत्वा द्विरात्राशौचानन्तरं षड्भिः प्राणायामैः शुध्यति। शूद्रशवानुगमनं कृत्वा त्रिरात्रमाशौचं समाप्य महानद्यां स्नात्वा शतं प्राणायामान् कृत्वा घृतप्राशनेन शुध्यति। उपक्रमोपसंहारपर्य्यालोचनया चत्रियादिशवानुगमनेऽपि सचेलस्नानाग्निस्पर्शघृतप्राशनान्यनुसन्धेयानि। एवञ्च सति चत्रियस्य वैश्यशवानुगमने एकाहं शूद्रशवानुगमने द्व्यहं, वैश्यस्य शूद्रशवानुगमने एकाहमाशौचमित्यूहनीयम्। तथाच कूर्म्मे,—

"एकाहात् चत्रिये शुद्धिर्वैश्ये स्यात्सा द्व्यहेन तु।
शूद्रे दिनत्रयं प्रोक्तं प्राणायामशतं पुनः"—इति॥

द्विजानां शूद्रशवानुगमननिषेधे कदा तैः शूद्रा अनुसर्त्तव्या-इत्यतआह,—

विनिर्वर्त्य यदा शूद्रा उदकान्तमुपस्थिताः।
द्विजैस्तदाऽनुगन्तव्या एष धर्म्मः सनातनः। इति॥

उदकशब्देनोदकक्रियोच्यते। तस्या अन्तः समाप्तिः। तां निर्वर्त्य आशौचं परिसमाप्य यदा स्थिताः, तदा द्विजैरगन्तुतव्याः अनुसर्त्तव्याः,—इति।

एवं, ब्राह्मणस्यातुरक्षत्रियवैश्यानुमरणं क्षत्रियस्याप्यातुरवैश्यानुमरणमाशौचानन्तरमेवेत्यूहनीयम्। आशौचमध्ये आतुरव्यञ्जने नाशौचमस्ति। तत्र ब्राह्मणमरणविषयातुरव्यञ्जने पारस्करः,—

"अस्थिसञ्चयनादर्वागुदित्वा स्नानमाचरेत्।
अन्तर्दशाहे विप्रस्य ऊर्द्धमाचमनं स्मृतम्—इति॥

विप्रस्य मृतस्य दशाहाभ्यन्तरेऽस्थिसञ्चयनादर्वाग्ब्राह्मणः क्षत्रियादिर्वाऽऽतुरव्यञ्जनं कृत्वा स्नानमाचरेत्। ततऊर्द्धमाचमनमाचरेदिति। क्षत्रियमरणविषयातुरव्यञ्जने क्षत्रियादीनां, वैश्यमरणविषयातुरव्यञ्जने वैश्यशूद्रयोश्च प्रागस्थिसञ्चयनात् सचेलं स्नानं, ततऊर्द्धं स्नानमाचमेव। तत्सर्व्वं ब्रह्मपुराणेऽभिहितम्,—

"मृतस्य यावदस्थीनि ब्राह्मणस्याहृतानि तु।
तावद्योऽबान्धवस्तत्र रौति तद्बान्धवैः सह॥
तस्य स्नानाद्भवेच्छुद्धिस्ततश्चाचमनं स्मृतम्।
सचेलं स्नानमन्येषां अकृते त्वस्थिसञ्चये॥
कृते तु केवलं स्नानं क्षत्रविट्शूद्रजन्मनाम्"—इति।

ब्राह्मणस्य क्षत्रियवैश्यमरणविषयातुरव्यञ्जने अस्थिसञ्चयनादर्वागेकाहमाशौचं सचेलं स्नानञ्च, ततऊर्द्धं सचेलं स्नानमात्रम्। तथाच ब्रह्मपुराणम्,—

"अस्थिसञ्चयने विप्रो रौति चेत् क्षत्रवैश्ययोः।
तदा स्नातः सचेलस्तु द्वितीयेऽहनि शुध्यति॥
कृते तु सञ्चये विप्रः स्नानेनैव शुचिर्भवेत्"—इति।

क्षत्रियस्य वैश्यमरणविषयातुरव्यञ्जने विशेषाश्रवणेऽपि ब्राह्मणस्य

समनन्तरक्षत्रियमरणविषयातुरव्यञ्जने यदाशौचं विवक्षितं तदेवात्रेति न्यायतोऽत्रावगम्यते। शूद्रमरणविषयातुरव्यञ्जनेऽस्थिसञ्चयनात् प्राक् ब्राह्मणस्य त्रिरात्रमाशौचं, क्षत्रियवैश्ययोर्द्विरात्रं, ततऊर्द्धं द्विजातीनामेकरात्रमेव। शूद्रस्पर्शं विनाऽऽतुरव्यञ्जनेऽस्थिसञ्चयनादर्वागेकरात्रमाशौचं, ततऊर्द्धं सज्योतिराशौचमिति। तथाच पारस्करः,—

"अस्थिसञ्चयनादर्वाग्यदि विप्रोऽश्रु पातयेत्।
मृते शूद्रे गृहं गत्वा त्रिरात्रेण विशुध्यति॥
अस्थिसञ्चयनादूर्ध्वं मासं यावद्द्विजातयः।
अहोरात्रेण शुध्यन्ति वाससः क्षालनेन च॥
सजातेर्दिवसेनैव द्व्यहात् क्षत्रियवैश्ययोः।
स्पर्शं विनाऽनुगमने शूद्रो नक्तेन शुध्यति"—इति॥

अत्राश्रुपात आतुरव्यञ्जनमात्रोपलक्षणार्थः। सजातेः शूद्रस्यास्थिसञ्चयनादर्वाक् स्पर्शं विनाऽनुगमने आतुरव्यञ्जने दिवसेनाहोरात्रेण शुद्धिः, ततऊर्ध्वं नक्तेन रात्रौ चेद्रात्र्याऽहनि चेदह्ना शुद्धिरिति। एवञ्च शवनिर्हरणानुगमनसहातुरव्यञ्जनादिनिमित्तमाशौचमसपिण्डानां, सपिण्डानान्तु विहितत्वात् नास्ति। तथाच हारीतः,—

"विहितं हि सपिण्डस्य प्रेतनिर्हरणादिकम्।
दोषः स्यात्त्वसपिण्डस्य तच्चानाथक्रियां विना"—इति॥

प्रेतनिर्हरणादिकमित्यत्रादिशब्देन दाहोदकदानादिकमुच्यते। अनुगमादिविधिर्याज्ञवल्क्येन दर्शितः,—

"आ श्मशानादनुव्रज्य इतरो ज्ञातिभिर्मृतः।
यमसूक्तं तथा गाथां जपद्भिर्लौकिकाग्निना॥

सद्यःशौचादुपेतश्चेदाहिताग्निर्यथार्थवत्"—इति।

ऊनद्विवर्षादितरः सम्पूर्णद्विवर्षान्मृतोज्ञातिभिः सपिण्डैः श्मशान-भूमिं यावदनुगन्तव्यः। तथा, यमसूक्तं परेयुवांसमिति षोडशर्चं तथा यमदैवत्यां गाथाञ्च जपद्भिर्लौकिकाग्निना स दग्धव्यः। उपेत-उपनीतश्चेन्मृतः, तदा आहिताग्निसंस्कारप्रकारेणार्थवत् प्रयोजनवद्यथा भवति तथा दग्धव्यः। अयमभिप्रायः। येषां भूशोधनप्रोक्षणादी-नामाहिताग्निविहितसंस्काराणां करणमर्थवत्, दारकार्यरूपं प्रयोजन-मस्ति, तान्यनुष्ठेयानि। यानि तु लुप्तार्थानि पात्रप्रयोजनादीनि तान्यननुष्ठेयानि। यथा कृष्णलेष्वतिदेशप्राप्तेष्ववघातप्रोक्षणादिषु दार-लोपादवघातादीनामननुष्ठानं प्रोक्षणादीनान्त्वनुष्ठानमिति। अत्र लौकिकाग्निग्रहणं जातारणेरभावे, तत्सद्भावे तु तस्मिन्मथितोऽग्नि-र्ग्राह्यः न तु लौकिकाग्निः तस्याग्निसम्पाद्यकार्यमात्रार्थत्वेनोत्पत्तेः। लौकिकाग्निःचण्डालाग्न्यादिव्यतिरिक्तोग्राह्यः, तेषां निषिद्धत्वात्। तथाच देवलः,—

"चण्डालाग्निरमेध्याग्निः सूतकाग्निश्च कर्हिचित्।
पतिताग्निश्चिताग्निश्च न शिष्टग्रहणोचिताः"—इति॥

आहिताग्निस्तु श्रौताग्निना दग्धव्यः, अनाहिताग्निर्गृह्याग्निना, इतरो लौकिकेन। तदाह वृद्धयाज्ञवल्क्यः,—

"आहिताग्निर्यथान्यायं दग्धव्यस्त्रिभिरग्निभिः।
अनाहिताग्निरेकेन लौकिकेनेतरोजनः"—इति॥

एकेन गृह्याग्निना दाहश्च स्नपनाद्यनन्तरं कर्त्तव्यः। तथाच कात्यायनः,—

"दुर्ब्बलं स्नापयित्वा च शुद्धचेलाभिसंवृतम्।
दक्षिणाशिरसम्भूमौ बर्हिष्मत्यां निवेशयेत्॥
घृतेनाभ्यक्तमाप्लुत्य सवस्त्रञ्चोपवीतिनम्।
चन्दनोक्षितसर्व्वाङ्गं सुमनोभिर्विभूषयेत्॥
हिरण्यशकलान्यस्य क्षिप्त्वा छिद्रेषु सप्तसु।
मुखे वस्त्रं निधायैनं निर्हरेयुः सुतादयः॥
आमपात्रेऽन्नमादाय प्रेतमग्निपुरःसरम्।
एकोऽनुगच्छन् तस्यार्द्धमर्द्धं पथ्युत्सृजेद्भुवि॥
अर्द्धमादहनं प्राप्तमासीनोदक्षिणामुखः।
सव्यञ्जान्वाच्य शनकैः सतिलं पिण्डदानवत्"—इति॥

पिण्डदानविधिना आदहनं श्मशानपर्यन्तमानीतमन्नं प्रक्षिपेदित्यर्थः। दाहानन्तरं चितिमनवेक्षमाणाज्ञातयो जलसमीपं गत्वा स्नात्वोदकं सकृत् त्रिर्वा दद्युः। तथाच कात्यायनः,—

"अथानवेक्षमेत्यापः सर्व्वएव शवस्पृशः।
स्नात्वा सचेलमाचम्य दद्युरस्योदकं स्थले॥
गोत्रनामपदान्ते च तर्पयामीत्यनन्तरम्।
दक्षिणाग्रान् कुशान् कृत्वा सतिलन्तु पृथक् सकृत्"—इति॥

पैठीनसिरपि। "प्रेतं मनसा ध्यायन् दक्षिणाभिमुखस्त्रीनुदकाञ्जलीन्निनयेत्"—इति। एतच्चायुग्मतिथिषु कार्यं, "प्रथमतृतीयपञ्चमसप्तमनवमेषूदकक्रिया"—इति गौतमस्मरणात्। प्रेतोपकारविशेषापेक्षया तु यावन्त्याशौचदिनानि तावदुदकदानावृत्तिः कार्या। तथाच प्रचेताः,—

“दिने दिनेऽञ्जलीन् पूर्णान् प्रदद्यात् प्रेतकारणात् ।
तावद्वृद्धिश्च कर्त्तव्या यावत्पिण्डः समाप्यते”—इति ।

यावद्दशमः पिण्डः समाप्यते, तावदञ्जलिवृद्धिः कार्येत्यर्थः । अत्रापरोविशेषस्तेनैवोक्तः,—

“नदीकूलं ततो गत्वा शौचं कृत्वा यथार्थवत् ।
वस्त्रं संशोधयेदादौ ततः स्नानं समाचरेत् ॥
सचेलस्तु ततः स्नात्वा शुचिः प्रयतमानसः ।
पाषाणं तत आदाय विप्रे दद्यात् दशाञ्जलीन् ॥
द्वादश क्षत्रिये दद्याद्वैश्ये पञ्चदश स्मृताः ।
त्रिंशच्छूद्राय दातव्यास्ततः सम्प्रविशेद्गृहम् ॥
ततः स्नानं पुनः कार्यं गृहशौचञ्च कारयेत्”—इति ॥

आज्ञातिभिरपि क्वचित् उदकदानं कर्त्तव्यम् । तदाह याज्ञवल्क्यः,—

“एवं मातामहाचार्यप्रेतानामुदकक्रिया ।
कामोदकं सखिप्रत्तास्वस्रीयश्वशुरर्त्विजाम्”—इति ॥

प्रत्ता परिणीता दुहितृभगिन्यादिः । स्वस्रीयोभागिनेयः । अत्र प्रेतानां मातामहादीनां सपिण्डवदुदकदानं नित्यं कार्यं, सख्यादीनां तु कामतः न नित्यतया, अकरणे प्रत्यवायाभावादिति ।

उदकदानानन्तरं पिण्डदानमपि कर्त्तव्यम् । तथाच विष्णुः । “प्रेतस्योदकनिर्वपणं कृत्वा एकञ्च पिण्डं कुशेषु दद्युः”—इति । पिण्डोदकदानञ्च यावदाशौचं कार्यम् । तदाह सएव । “यावदाशौचं तावत्प्रेतस्योदकं पिण्डञ्च दद्युः”—इति । वर्णानुक्रमेण पिण्डसङ्ख्यानियमः पारस्करेणोक्तः,—

"ब्राह्मणे दश पिण्डाः स्युः क्षत्रिये द्वादश स्मृताः।
वैश्ये पञ्चदश प्रोक्ताः शूद्रे त्रिंशत्प्रकीर्त्तिताः"—इति॥

अशौचह्रासे यावदाशौचमिति विष्णुवचनात् पिण्डसङ्कोचप्राप्तौ शातातपः,—

"आशौचस्य च ह्रासेऽपि पिण्डान् दद्यात् दशैव तु"—इति।

त्रिरात्राशौचपक्षे दशपिण्डदानप्रकारः पारस्करेण दर्शितः,—

"प्रथमे दिवसे देयास्त्रयः पिण्डाः समाहितैः।
द्वितीये चतुरो दद्यादस्थिसञ्चयनं तथा॥
त्रींस्तु दद्यात् तृतीयेऽह्नि वस्त्रादीन् क्षालयेत् तथा"—इति॥

उदकदानवत्पिण्डदानं न सर्व्वैः कर्त्तव्यमपि तु पुत्रेणैव, तदभावे सन्निहितेन सपिण्डेन, तदभावे मातृसपिण्डादिना। तदाह गौतमः। "पुत्राभावे सपिण्डाः मातृसपिण्डाः शिष्याश्च दद्युः तदभावे ऋत्विगाचार्यौ"—इति। पुत्रेष्वपि ज्येष्ठएव पिण्डं दद्यात्। तथाच मरीचिः,—

"सर्वैरनुमतिं कृत्वा ज्येष्ठेनैव तु यत्कृतम्।
द्रव्येण वाऽविभक्तेन सर्वैरेव कृतं भवेत्"—इति॥

यदा पुत्रासन्निधानादिनाऽन्यः पिण्डदानं करोति, तदा दशाहमध्ये पुत्रसान्निध्येऽपि सएव दशाहं पिण्डं दद्यात्। तदुक्तं गृह्यपरिशिष्टे,—

"असगोत्रः सगोत्रो वा यदि स्त्री यदि वा पुमान्।
प्रथमेऽहनि यः कुर्यात् स दशाहं समापयेत्"—इति॥

यथा दशाहं पिण्डदाने कर्तृनियमः, तथा द्रव्यनियमोऽपि। तदाह शुनःपुच्छः,—

"शालिना शक्तुभिर्व्वाऽपि शाकैर्व्वाऽप्यथ निर्व्वपेत् ।
प्रथमेऽहनि यद्द्रव्यं तदेव स्याद्दशाहिकम्"—इति ॥

यदा तु दशाहमध्ये दर्शपातस्तदा दर्शएवोत्तरं तन्त्रं पिण्डोदकदानरूपं समापयेत् । तदाह ऋष्यशृङ्गः,—

"आशौचमन्तरा दर्शो यदि स्यात्सर्व्ववर्णिनः ।
समाप्तिं प्रेततन्त्रस्य कुर्युरित्याह गौतमः"—इति ॥

भविष्यपुराणेऽपि,—

"प्रवृत्ताशौचतन्त्रस्तु यदि दर्शं प्रपद्यते ।
समाप्य चोदकं पिण्डं स्नानमात्रं समाचरेत्"—इति ॥

पैठीनसिरपि,—

"आद्येन्दावेव कर्त्तव्या प्रेतपिण्डोदकक्रिया ।
द्विरैन्दवे तु कुर्व्वाणो पुनः शावं समश्नुते"—इति ॥

मातापितृविषये तु विशेषो गालवेनोक्तः,—

"पित्रोराशौचमध्ये तु यदि दर्शः समापतेत् ।
तावदेवोत्तरं तन्त्रं पर्य्यवस्येत् त्र्यहात् परम्"—इति ॥

पित्रोराशौचमध्ये तु त्रिरात्रात्परं यदि दर्शः समापतेत्, तदैवोत्तरं तन्त्रं दर्शे समापयेत्, नार्व्वाग्दर्शपाते । यत्तु श्लोकगौतमेनोक्तम्,—

"अन्तर्दशाहे दर्शे तु तत्र सर्व्वं समापयेत् ।
पित्रोस्तु यावदाशौचं दद्यात् पिण्डान् जलाञ्जलीन्"—इति ॥

तत् त्रिरात्रादर्वाग्दर्शपाते वेदितव्यं, त्र्यहात्परमिति गालवेन विशेषितत्वात् । पिण्डोदकदानानन्तरं बान्धवैरातुराश्वासनं कार्य्यम् ।

तथाच याज्ञवल्क्यः,—

"कृतोदकान्समुत्तीर्णान्मृदुशाद्वलसंस्थितान्।

स्नातानपवदेयुस्तानितिहासैः पुरातनैः"—इति।

इतिहासस्तु तेनैव दर्शितः,—

"मानुष्ये कदलीस्तम्भे निःसारे सारमार्गणम्।

करोति यः स सम्मूढ़ो जलबुद्बुदसन्निभे।

पञ्चधा संभृतः कायो यदि पञ्चत्वमागतः॥

कर्म्मभिः स्वशरीरोत्थैस्तत्र का परिदेवना।

गन्त्री वसुमती नाशमुदधिर्दैवतानि च॥

फेनप्रख्यः कथं नाम मर्त्यलोको न यास्यति"—इति॥

कात्यायनोऽपि,—

"एवं कृतोदकान् सम्यक् सर्व्वान् शाद्वलसंस्थितान्।

आप्लुतान् पुनराचान्तान्वदेयुस्तेऽनुयायिनः।

मा शोकं कुरुतानित्ये सर्व्वस्मिन् प्राणधर्म्मिणि॥

धर्म्मं कुरुत यत्नेन यो वः सह करिष्यति"—इति।

शोके दोषोऽपि याज्ञवल्क्येन दर्शितः,—

"श्लेष्माश्रु बान्धवैर्मुक्तं प्रेतोभुङ्क्ते यतोऽवशः।

अतो न रोदितव्यं हि क्रियाः कार्याः प्रयत्नतः"—इति

आतुराश्वासनानन्तरकृत्यं याज्ञवल्क्येनोक्तम्,—

"इति सञ्चिन्त्य गच्छेयुर्गृहं बालपुरःसराः।

विदश्य निम्बपत्राणि नियताद्वारवेश्मनः॥

आचम्याग्न्यादि सलिलं गोमयं गौरसर्षपान्।

प्रविशेयुः समालभ्य कृत्वाऽश्मनि पदं शनैः"—इति ॥

अत्रापरोविशेषः शङ्खेन दर्शितः । "दूर्वाप्रबालमग्निं वृषभं चालभ्य गृहद्वारे प्रेताय पिण्डं दत्त्वा पश्चात् प्रविशेयुः"—इति । आशौचिनियमा मनुना दर्शिताः,—

"अक्षारलवणान्नाः स्युर्निमज्जेयुश्च तेऽन्वहम् ।
मांसाशनञ्च नाश्नीयुः शयीरंश्च पृथक् क्षितौ"—इति ॥

मार्कण्डेयेनापि,—

"क्रीतलब्धाशनाश्चैव भवेयुः सुसमाहिताः ।
न चैव मांसमश्नीयुर्व्रजेयुर्न च योषितम्"—इति ॥

गौतमेनापि । "अधःशय्यासना ब्रह्मचारिणः सर्वे समासीरन्मांसं न भक्षयेयुराप्रदानात् प्रथमतृतीयसप्तमनवमेषूदककर्म नवमे वाससां त्यागः अन्त्ये त्वन्त्यानाम्"—इति । प्रदानं प्रेतैकोद्दिष्टश्राद्धं, वाससां त्यागस्तु प्रक्षालनार्थं रजकार्पणं, अन्त्यं दशमम् अहः, तत्रान्त्यानामत्यन्तपरित्याज्यानां वाससां त्याग इत्यर्थः । प्रथमेऽहनि प्रेतमुद्दिश्य जलं क्षीरं चाकाशे शिक्यादौ पात्रद्वये स्थापनीयम् । तदाह याज्ञवल्क्यः,—

"जलमेकाहमाकाशे स्थाप्यं क्षीरञ्च मृण्मये"—इति ।

प्रथमतृतीयसप्तमनवमदिवसानामन्यतमस्मिन्नस्थिसञ्चयनं कार्यम् । तदाह संवर्त्तः,—

"प्रथमेऽह्नि तृतीये वा सप्तमे नवमे तथा* ।
अस्थिसञ्चयनं कार्यं दिने तद्गोत्रजैः सह"—इति ॥

---

* प्रथमेऽथवा,—इति मु० ।

चतुर्थे दिवसेऽस्थिसञ्चयनमाह विष्णुः। "चतुर्थे दिवसेऽस्थि-सञ्चयनं कुर्युः तेषां गङ्गाम्भसि प्रक्षेपः"—इति। अस्थिसञ्चयने तिथिवारनक्षत्रनिषेधो यमेनोक्तः,—

"भौमार्कमन्दवारेषु तिथियुग्मेषु वर्जयेत्।
वर्जयेदेकपादृक्षे द्विपादृक्षेऽस्थिसञ्चयम्॥
प्रदातृजन्मनक्षत्रे त्रिपादृक्षे विशेषतः"—इति।

वृद्धमनुः,—

"वसन्ताद्धादितः पञ्चनक्षत्रेषु त्रिजन्मसु।
द्वित्रिपादृक्षयोश्चैव नन्दायां च विशेषतः॥
अजचरणाद्द्वितीये ह्याषाढाद्वयमेव च।
पुष्ये च हस्तनक्षत्रे फल्गुनीद्वयमेव च॥
भानुभौमार्किभृगुषु अयुग्मतिथिसन्ध्ययोः।
चतुर्दश्यां त्रयोदश्यां नैधने च विवर्ज्जयेत्॥
अस्थिसञ्चयनं कार्यं कुलक्षयकरं भवेत्"—इति*।

वापनं† दशमेऽहनि कार्यम्। तदाह देवलः,—

"दशमेऽहनि सम्प्राप्ते स्नानं ग्रामाद्बहिर्भवेत्।
तत्र त्याज्यानि वासांसि केशश्मश्रुनखानि च"—इति॥

स्वल्पान्तरे तु एकादशाहादर्वागनियमेन वापनं कार्यमित्युक्तम्,—

"द्वितीयेऽहनि कर्त्तव्यं क्षुरकर्म प्रयत्नतः।

---

* वृद्धमनुः,—इत्यारभ्य एतदन्तो ग्रन्थो नास्ति मुद्रितातिरिक्तपुस्तकेषु।
† वपनं,—इति मु०। एवं परत्र।

तृतीये पञ्चमे वाऽपि सप्तमे वाऽऽप्रदानतः"—इति ॥

प्रदानमेकादशाहिकं श्राद्धम्। आप्रदानतः इति वचनात् अनियमोऽवगम्यते । बौधायनेनापि,—

"अलुप्तकेशोयः पूर्व्वं सोऽत्र केशान् प्रवापयेत् ।
द्वितीयेऽह्नि तृतीयेऽह्नि पञ्चमे सप्तमेऽपि वा ॥
यावच्छ्राद्धं प्रदीयेत तावदित्यपरं मतम्"—इति ।

वापनञ्च पुत्राणां कनिष्ठभ्रातृणाञ्च। तथा चापस्तम्बः। "अनुभाविनाञ्च परिवापनम्"—इति। अनु पश्चाद्भवन्ति जायन्ते इति पुत्राः कनिष्ठभ्रातरश्च । अथवा। अनुभाविन इति पुत्राएव निर्दिश्यन्ते,—

"गङ्गायां भास्करक्षेत्रे मातापित्रोर्गुरोर्मृतौ ।
आधानकाले सोमे च वपनं सप्तसु स्मृतम् ॥"

इत्यत्र मातापित्रोर्मृतौ इति विशेषेणोपादानात् । एवं नियतः सन् सर्व्वोऽपि स्वाशौचान्ते पिण्डोदकदानं समापयेत् । तदेकोद्दिष्टन्तु श्राद्धमेकादशेऽह्नि कुर्यात् । तथाच मरीचिः,—

"आशौचान्ते ततः सम्यक् पिण्डदानं समाप्यते ।
ततः श्राद्धं प्रदातव्यं सर्व्ववर्णेष्वयं विधिः"—इति ॥

तत आशौचानन्तरमेकादशेऽह्नि ब्राह्मण एकोद्दिष्टश्राद्धं कुर्यात् । एकोद्दिष्टमेकादशेऽहनि कुर्यादित्ययं विधिः सर्व्ववर्णेषु क्षत्रियादिषु समानइत्यर्थः ।

नन्वाशौचसमाप्त्यनन्तरमेवैकोद्दिष्टविधिः सर्व्वेष्वपि वर्णेषु किं न स्यात् । एकादशेऽह्नि अधिककालाशौचिनां क्षत्रियादीनां शुद्ध्यभावात् । "शुद्धेन कर्म्म कर्त्तव्यम्"—इति शुद्धेः कर्म्माङ्गत्वेन

विधानात्। "अथाशौचापगमे"—इति साधारण्येनोपक्रम्यैकोद्दिष्टस्य विष्णुना विहितत्वाच्च।

"आद्यश्राद्धमशुद्धोऽपि कुर्यादेकादशेऽहनि।
कर्त्तुस्तात्कालिकी शुद्धिरशुद्धः पुनरेव सः"—इति

शङ्खवचनेनाशौचमध्ये एकादशेऽह्नि एकोद्दिष्टविधानान्नैवमिति चेत्। न। मातर्य्यग्रे प्रमीतायां तदाशौचमध्ये यदि पिता म्रियेत, ततो मातुरेकोद्दिष्टश्राद्धमेकादशेऽह्नि अशुद्धोऽपि कुर्यादिति विषयान्तरसम्भवात्। यत्तु,—

"एकादशेऽह्नि यच्छ्राद्धं तत्सामान्यमुदाहृतम्।
चतुर्णामपि वर्णानां सूतकन्तु पृथक् पृथक्"—इति

पैठीनसिवचनं, तस्यायमर्थः। आशौचानन्तरदिने यच्छ्राद्धं विहितं, तच्चतुर्णामपि वर्णानां साधारणं न ब्राह्मणस्यैवेति। कथं तर्ह्येकादशाह-शब्दस्योपपत्तिरिति चेत्। न। लक्षणया तस्याशौचानन्तरदिनपरत्वेनोपपत्तेः।

अत्रोच्यते। एकादशाहकालविशिष्टमेकोद्दिष्टश्राद्धं चतुर्णां वर्णानां विधीयते। "न विधौ परः शब्दार्थः"—इति न्यायेनैकादशाहशब्दस्य लक्षणयाऽऽशौचानन्तरदिनपरत्वानुपपत्तेः। सति मुख्ये वृत्त्यन्तरकल्पनाया अन्याय्यत्वाच्च, एकादशाहएव क्षत्रियादिभिरप्येकोद्दिष्टश्राद्धं कर्त्तव्यम्। नन्वेकादशेऽह्नि क्षत्रियादीनां शुद्ध्यभावाच्छ्राद्धेऽधिकारो नास्ति इत्युक्तमिति चेत्। न। कर्त्तुस्तात्कालिकी शुद्धिरिति वचनात्तात्कालिक्याः शुद्धेः सत्त्वात्। यत्तु शङ्खवचनस्याशौचमध्ये आशौचान्तरप्राप्तावेकोद्दिष्टमेकादशेऽह्नि अशुद्धोऽपि कुर्यादिति विषय-

विशेषे तात्पर्यमुक्तम्। तन्न। तत्रापि शुद्धभावादित्यस्य चोद्यस्य समानत्वात्। सामान्येन प्रवृत्तस्य शङ्खवचनस्य विना कारणं विशेषपरत्वेन सङ्कोचायोगाच्च। यत्तूक्तं, अथाशौचापगमइति सामान्येनोपक्रम्य विष्णुनैकोद्दिष्टविधानादाशौचानन्तरमेव सर्वैरेकोद्दिष्टं कर्त्तव्यमिति। तन्न। विष्णुवचनस्य दशाहाशौचिब्राह्मणविषयत्वेनोपपत्तेः। तस्मादेकादशाहएव क्षत्रियादिभिरप्येकोद्दिष्टं कर्त्तव्यमिति सुष्ठूक्तम्।

## अथ संगृहीतश्राद्धनिर्णयः प्रपञ्च्यते।

प्रेतोद्देशेन श्रद्धया द्रव्यत्यागः श्राद्धम्। तदुक्तं ब्रह्मपुराणे,—

"देशे काले च पात्रे च श्रद्धया विधिना च यत्।
पितॄनुद्दिश्य विप्रेभ्यो दत्तं श्राद्धमुदाहृतम्"—इति॥

तच्च पार्व्वणैकोद्दिष्टभेदेन द्विविधम्। पुरुषत्रयमुद्दिश्य यत् क्रियते, तत् पार्व्वणम्। एकपुरुषोद्देशेन यत् क्रियते, तदेकोद्दिष्टम्। एवं द्विविधमपि श्राद्धं नित्यनैमित्तिककाम्यभेदेन त्रिधा भिद्यते। तत्र जीवनोपाधौ चोदितं नित्यम्। यथा अमावस्यादौ चोदितं श्राद्धम्। अनियतनिमित्तकं नैमित्तकम्। यथोपरागादौ। कामनोपाधिकं काम्यम्। यथा तिथिनक्षत्रादिषु। यत्तु विश्वामित्रेण द्वादशविधत्वमुक्तम्,—

"नित्यं नैमित्तिकं काम्यं वृद्धिश्राद्धं सपिण्डनम्।
पार्व्वणं चेति विज्ञेयं गोष्ठ्यां शुद्ध्यर्थमष्टमम्॥
कर्म्माङ्गं नवमं प्रोक्तं दैविकं दशमं स्मृतम्।
यात्रास्वेकादशं प्रोक्तं पुष्ट्यर्थं द्वादशं मतम्"—इति॥

तन्नित्यनैमित्तिककाम्यावान्तरभेदविवक्षयैव, न तु ततः पार्थक्य-

विवक्षया। तथाहि। तत्र नित्यमित्यहरहः श्राद्धमुच्यते। नैमित्तिकमित्येकोद्दिष्टम्। तदाह पारस्करः,—

"अहन्यहनि यच्छ्राद्धं तन्नित्यमिति कीर्त्तितम्।
वैश्वदेवविहीनन्तु अशक्तावुदकेन तु॥
एकोद्दिष्टन्तु यच्छ्राद्धं तन्नैमित्तिकमुच्यते।
तदप्यदैवं कर्त्तव्यमयुग्मानाशयेद् द्विजान्"—इति॥

काम्यमित्यभिमतार्थसिद्ध्यर्थम्। वृद्धिश्राद्धमिति पुत्रजन्मविवाहादौ क्रियमाणम्। सपिण्डनं सपिण्डीकरणम्। पार्व्वणमिति प्रति पर्व्व क्रियमाणम्। गोष्ठ्यामिति गोष्ठ्यां क्रियमाणं श्राद्धम्। तदाह वृद्धवसिष्ठः,—

"अभिप्रेतार्थसिद्ध्यर्थं काम्यं पार्व्वणवत् स्मृतम्।
पुत्रजन्मविवाहादौ वृद्धिश्राद्धमुदाहृतम्।
नवा*नीतार्घपात्रञ्च पिण्डश्च परिकीर्यते॥
पितृपात्रेषु पिण्डेषु सपिण्डीकरणन्तु तत्।
प्रति पर्व भवेद्यस्मात् प्रोच्यते पार्वणन्तु तत्॥
गोष्ठ्यां यत्क्रियते श्राद्धं गोष्ठीश्राद्धं तदुच्यते।
बहूनां विदुषां प्राप्तौ सुखार्थं पितृतृप्तये"—इति॥

शुद्ध्यर्थमिति शुद्धये क्रियमाणम्। तदाह प्रचेताः,—

"क्रियते शुद्धये यत्तु ब्राह्मणानान्तु भोजनम्।
शुद्ध्यर्थमिति तत् प्रोक्तं श्राद्धं पार्व्वणवत् स्मृतम्"॥

* सदा,—इति मु०।

कर्म्माङ्गमिति यागादौ क्रियमाणम्। दैविकमिति देवानुद्दिश्य क्रियमाणम्। यात्राश्राद्धमिति प्रवेशनिर्गमयोः क्रियमाणम्।

तदाह पारस्करः,—

"निषेककाले सोमे च सीमन्तोन्नयने तथा।
ज्ञेयं पुंसवने श्राद्धं कर्म्माङ्गं वृद्धिवत्कृतम्॥
देवानुद्दिश्य क्रियते यत्तद्दैविकमुच्यते।
तन्नित्यश्राद्धवत्कुर्य्यात् द्वादश्यादिषु यत्नतः॥
गच्छन् देशान्तरं यद्धि श्राद्धं कुर्य्यात्तु सर्पिषा।
तद्यात्रार्थमिति प्रोक्तं प्रवेशे च न संशयः"—इति॥

अत्र कर्म्माङ्गमिति वचनमकरणे कर्म्मवैगुण्यज्ञापनार्थम्। सर्पिषा सर्पिःप्रधानकेनेत्यर्थः। अन्वर्थे केवलेन तृप्तेरसम्भवात्*।

## अथ देशकथनम्।

श्राद्धञ्च दक्षिणाप्रवणे गोमयाद्युपलिप्ते देशे कार्य्यम्। तथाच विष्णुधर्म्मोत्तरे,—

"दक्षिणाप्रवणे देशे तीर्थादौ वा गृहेऽपि वा।
भूसंस्कारादिसंयुक्ते श्राद्धं कुर्यात्प्रयत्नतः"—इति॥

तीर्थं देवर्षिसेवितं कुलम्†। आदिशब्देन पुण्याश्रमादि गृह्यते। भूसंस्कारो गोमयादिनोपलेपः। आदिशब्देनाशुद्धिद्रव्यापसारणम्। याज्ञवल्क्योऽपि,—

* अत्र,—इत्यारभ्य एतदन्तोग्रन्थोनास्ति सो० ना० पु०।
† जलम्,—इति मु०।

"परिश्रिते* शुचौ देशे दक्षिणाप्रवणे तथा"—इति।

परिश्रिते परितः प्रच्छादिते, शुचौ गोमयादिनोपलिप्ते दक्षिणाप्रवणे दक्षिणोपनते देशे, श्राद्धं कुर्यादित्यर्थः। स्वतोदक्षिणाप्रवणत्वासम्भवे देशस्य यत्नतोदक्षिणाप्रवणत्वं कार्यम्। तथाच मनुः,—

"शुचिं देशं विविक्तन्तु गोमयेनोपलेपयेत्।
दक्षिणाप्रवणञ्चैव प्रयत्नेनोपपादयेत्"—इति॥

क्रिमिकीटाद्युपहतं देशं श्राद्धे विवर्जयेत्। तदाह यमः,—

"रूक्षं क्रिमिहतं क्लिन्नं सङ्कीर्णानिष्टगन्धिकम्।
देशन्त्वनिष्टशब्दञ्च वर्जयेच्छ्राद्धकर्म्मणि"—इति॥

क्लिन्नं सपङ्कम्। सङ्कीर्णमन्यैः सङ्कीर्णम्। मार्कण्डेयोऽपि,—

"वर्ज्या जन्तुमयी रूक्षा क्षितिः प्लुष्टा तथाऽग्निना।
अनिष्टदुष्टशब्दोग्रा दुर्गन्धिः श्राद्धकर्म्मणि"—इति॥

कृत्रिमादिदेशेष्वपि श्राद्धं न कार्यम्। तदाह शङ्खः,—

"गोगजाश्वाजवृष्टेषु कृत्रिमायां तथा भुवि।
न कुर्याच्छ्राद्धमेतेषु पारक्याशुचिभूमिषु"—इति॥

कृत्रिमायां वेदिकादौ। पारक्यासु परपरिगृहीतासु। ताश्च गृहगोष्ठारामादयः। न पुनस्तीर्थादिस्थानानि। तथाचादिपुराणम्,—

"अटवी पर्वताः पुण्या नदीतीराणि यानि च।
सर्वाण्यस्वामिकान्याहुर्न हि तेषु परिग्रहः॥
वनानि गिरयो नद्यस्तीर्थान्यायतनानि च।
देवखातश्च गर्त्ताश्च न स्वामी तेषु विद्यते"—इति॥

---

* परिच्छिते,—इति सो० ना०। एवं परत्र।

तीर्थक्षेत्रविशेषेषु कृतं श्राद्धमतिशयफलप्रदं भवति । तदाह देवलः,—

"श्राद्धस्य पूजितो देशो गया गङ्गा सरस्वती ।
कुरुक्षेत्रं प्रयागश्च नैमिषं पुष्कराणि च ॥
नदीतटेषु तीर्थेषु शैलेषु पुलिनेषु च ।
विविक्तेष्वेव तुष्यन्ति दत्तेनेह पितामहाः"—इति ॥

व्यासोऽपि,—

"पुष्करेष्वक्षयं श्राद्धं जपहोमतपांसि च ।
महोदधौ प्रयागे च काश्याञ्च कुरुजाङ्गले"—इति ॥

शङ्खोऽपि,—

"गङ्गायमुनयोस्तीरे पयोष्ण्यमरकण्टके* ।
नर्मदाबाहुदातीरे भृगुतुङ्गहिमालये ॥
गङ्गाद्वारे प्रयागे च नैमिषे पुष्करे तथा ।
सन्निहत्यां गयायाञ्च दत्तमक्षयतां व्रजेत्"—इति ॥

ब्रह्माण्डपुराणेऽपि,—

"नदीसमुद्रतीरे वा ह्रदे गोष्ठेऽथ पर्व्वते ।
समुद्रगानदीतीरे सिन्धुसागरसङ्गमे ॥
नद्योर्वा सङ्गमे शस्तं शालग्रामशिलान्तिके ।
पुष्करे वा कुरुक्षेत्रे प्रयागे नैमिषेऽपि वा ॥
शालग्रामे च गोकर्णे गयायाञ्च विशेषतः ।
क्षेत्रेष्वेतेषु यः श्राद्धं पितृभक्तिसमन्वितः ॥

* पयोष्ण्याममरकण्टके,—इति मु० ।

करोति विधिना मर्त्यः कृतकृत्यो विधीयते"—इति ॥

वृहस्पतिरपि,—

"कांक्षन्ति पितरः पुत्रान्नरकापातभीरवः।
गयां यास्यति यः कश्चित् सोऽस्मान् सन्तारयिष्यति॥
करिष्यति वृषोत्सर्गमिष्टापूर्त्तं तथैव च।
पालयिष्यति वृद्धत्वे श्राद्धं दास्यति चान्वहम्॥
गयायां धर्म्मपृष्ठे च सदसि ब्रह्मणस्तथा।
गयाशीर्षे वटे चैव पितॄणां दत्तमक्षयम्"—इति॥

विष्णुरपि,—

"गयाशीर्षे वटे चैव तीर्थे वामरकण्टके इति।

यत्र क्वचन नर्म्मदातीरे यमुनातीरे गङ्गायां विशेषतो गङ्गाद्वारे प्रयागे गङ्गासागरसङ्गमे कुशावर्त्ते बिल्वके नीलपर्व्वते कुब्जाम्रे भृगुतुङ्गे केदारे महालये ललिकायां सुगन्धायां शाकम्भर्य्यां फल्गुतीर्थे महागङ्गायां तंदुलिकाश्रमे कुमारधारायां प्रभासे यत्र क्वचन सरस्वत्यां विशेषतो नैमिषारण्ये वाराणस्यामगस्त्याश्रमे कण्वाश्रमे कौशिक्यां सरयूतीरे शोणस्य ज्योतीरथ्यायाश्च सङ्गमे श्रीपर्व्वते कालोदके उत्तरमानसे वड़वायां मतङ्गे विष्णुपदे स्वर्गमार्गप्रदेशे गोदावर्य्यां गोमत्यां वेत्रवत्यां विपाशायां वितस्तायां शतद्रूतीरे चन्द्रभागायामैरावत्यां सिन्धोस्तीरे दक्षिणे पञ्चनदे औजसे चैवमादिष्वथान्येषु तीर्थेषु सरिद्वरासु सङ्गमेषु प्रभवेषु पुलिनेषु प्रस्रवणेषु पर्व्वतनिकुञ्जेषु वनेषूपवनेषु च गोमयेनोपलिप्तेषु गृहेषु च इति। अत्रापि पितृगाथा भवन्ति,—

कुलेऽस्माकं स जन्तुः स्याद्यो नो दद्याज्जलाञ्जलिम्।
नदीषु बहुतोयासु शीतलासु विशेषतः॥
अपि जायेत सोऽस्माकं कुले कश्चिन्नरोत्तमः।
गयाशीर्षे वटे श्राद्धं यो नो दद्यात्समाहितः॥
एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत्।
यजेत वाऽश्वमेधेन नीलं वा वृषमुत्सृजेत्"—इति॥

गयाशीर्षप्रमाणञ्चादिपुराणेऽभिहितम्,—

"पञ्चक्रोशं गयाक्षेत्रं क्रोशमात्रं गयाशिरः।
महानद्याः पश्चिमेन यावद्गृध्रेश्वरो गिरिः॥
उत्तरे ब्रह्मयूपस्य यावद्दक्षिणमानसम्।
एतद्गयाशिरो नाम त्रिषु लोकेषु विश्रुतम्"—इति॥

श्राद्धकालास्त्वमावास्याऽष्टकादयः। तदाह याज्ञवल्क्यः,—

"अमावास्याऽष्टका वृद्धिः कृष्णपक्षोऽयनद्वयम्।
द्रव्यं ब्राह्मणसम्पत्तिर्विषुवत्सूर्यसङ्क्रमः॥
व्यतीपातो गजच्छाया ग्रहणं चन्द्रसूर्ययोः।
श्राद्धं प्रति रुचिश्चैव श्राद्धकालाः प्रकीर्त्तिताः"—इति॥

यस्मिन्दिने चन्द्रमा न दृश्यते, सा अमावास्या। तत्र श्राद्धं नित्यम्। तथाच लौगाक्षिः,—

"श्राद्धं कुर्यादवश्यन्तु प्रमीतपितृको द्विजः।
इन्दुक्षये मासि मासि वृद्धौ प्रत्यब्दमेवच"—इति॥

अष्टकास्तिस्रः मार्गशीर्षादिचतुष्टयापरपक्षाष्टम्यः। "हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणामष्टमीष्वष्टका"—इति शौनकस्मरणात्। तत्रापि

श्राद्धं नित्यम्। तदाह पितामहः,—

"अमावास्याव्यतीपातपौर्णमास्यष्टकासु च।

विद्वान् श्राद्धमकुर्वाणः प्रायश्चित्तीयते तु सः"—इति॥

वृद्धिः पुत्रजन्मादिः, तेन तद्विशिष्टः कालो लक्ष्यते। कृष्णपक्षो-ऽपरपक्षः। अयनद्वयं दक्षिणायनमुत्तरायणञ्च। द्रव्यं कृसरमांसादि, ब्राह्मणः श्रुताध्ययनसम्पन्नः, तयोः सम्पत्तिर्लाभो यस्मिन् काले स तथोक्तः। विषुवन्मेषतुलासंक्रान्ती। सूर्यसंक्रमः सूर्यस्य राशेराश्य-न्तरप्राप्तिः। सूर्यसंक्रमशब्देनैवायनविषुवतोरुपादाने सिद्धे पृथगुपा-दानं फलातिशयज्ञापनार्थम्। व्यतीपातोयोगविशेषः, महाव्यती-पातो वा।

"सिंहस्थौ गुरुभौमौ चेन्मेषस्थे च रवौ हि वा।

द्वादशी हस्तसंयुक्ता व्यतीपातो महान्हि सः॥

श्रवणाश्विधनिष्ठार्द्रानागदैवतमस्तकैः।

यद्यमा रविवारेण व्यतीपातः स उच्यते"—इति

वृद्धमनुवचनात्। नागदैवतमश्लेषानक्षत्रं, मस्तकं मृगशिरः। यद्यमा अमावास्या रविवारेण श्रवणादीनामन्यतमेन नक्षत्रेण युक्ता, स व्यतीपात इत्यर्थः। गजच्छायालक्षणं स्मृत्यन्तरे दर्शितम्,—

"यदेन्दुः पितृदैवत्ये हंसश्चैव करे स्थितः।

याम्या तिथिर्भवेत्सा हि गजच्छाया प्रकीर्त्तिता"—इति॥

पितृदैवत्यं मघानक्षत्रं, हंसः सूर्यः, करो हस्तनक्षत्रं, याम्या तिथि-स्त्रयोदशी। पुराणेऽपि,—

"हंसे हस्तस्थिते या तु मघायुक्ता त्रयोदशी।

तिथिर्वैवस्वती नाम सा छाया कुञ्जरस्य तु"—इति ॥

ग्रहणं चन्द्रसूर्ययोरिति ग्रहणमुपरागः । अत्रापि कालविशेषः श्राद्धाङ्गत्वेन स्वीकार्यः । तदाह वृद्धवशिष्ठः,—

"त्रिदशाः स्पर्शसमये तृप्यन्ति पितरस्तथा ।

मनुष्या मध्यकाले तु मोक्षकाले तु राक्षसाः"—इति ॥

श्राद्धं प्रतिरुचिरिति यदा श्राद्धं प्रतीच्छा तदैव कर्त्तव्यमिति । चकारेणान्येऽपि श्राद्धकालाः संगृह्यन्ते । अतएव यमः,—

"आषाढ्यामथ कार्त्तिक्यां माघ्यां त्रीन् पञ्च वा द्विजान् ।

तर्पयेत्पितृपूर्व्वन्तु तदस्याक्षयमुच्यते"—इति ॥

देवलोऽपि,—

"तृतीया रोहिणीयुक्ता वैशाखस्य सिता तु या ।

मघाभिः सहिता कृष्णा नभस्ये तु त्रयोदशी ॥

तथा शतभिषग्युक्ता कार्त्तिके नवमी तथा ।

इन्दुक्षयगजच्छायावेष्टतेषु युगादिषु ॥

एते कालाः समुद्दिष्टाः पितॄणां प्रीतिवर्द्धनाः"—इति ।

युगादयोऽपि श्राद्धकालाः । ते च मत्स्यपुराणे दर्शिताः,—

"वैशाखस्य तृतीया तु नवमी कार्त्तिकस्य तु ।

माघे पञ्चदशी चैव नभस्ये च त्रयोदशी ॥

युगादयः स्मृता ह्येता दत्तस्याक्षयकारकाः"—इति ।

विष्णुपुराणेऽपि,—

"वैशाखमासस्य च या तृतीया

नवम्यसौ कार्त्तिकशुक्लपक्षे ।

नभस्यमासस्य च कृष्णपक्षे
त्रयोदशी पञ्चदशी च माघे॥
पानीयमप्यत्र तिलैर्विमिश्रं
दद्यात् पितृभ्यः प्रयतो मनुष्यः।
श्राद्धं कृतं तेन समासहस्रं
रहस्यमेतत् पितरो वदन्ति"—इति॥

मन्वादयोऽपि श्राद्धकालाः। तदुक्तं मत्स्यपुराणे,—

"अश्वयुक्शुक्लनवमी कार्त्तिके द्वादशी सिता।
तृतीया चैव माघस्य सिता भाद्रपदस्य च॥
फाल्गुनस्य त्वमावास्या पौषस्यैकादशी सिता।
आषाढ़स्यापि दशमी माघमासस्य सप्तमी॥
श्रावणस्याष्टमी कृष्णा तथाऽऽषाढ़ी च पूर्णिमा।
कार्त्तिकी फाल्गुनी चैत्री ज्यैष्ठी पञ्चदशी सिता॥
मन्वन्तरादयस्त्वेते दत्तस्याक्षयकारकाः"—इति।

कृत्तिकादिनक्षत्राणि काम्यश्राद्धकालाः। तथाच याज्ञवल्क्यः,—

"स्वर्गं ह्यपत्यमोजश्च शौर्यं क्षेत्रं बलं तथा।
पुत्रं श्रैष्ठ्यञ्च सौभाग्यं समृद्धिं मुख्यतां शुभाम्॥
प्रवृत्तचक्रताञ्चैव वाणिज्यप्रभृतीनपि।
अरोगित्वं यशोवीतशोकत्वं परमाङ्गतिम्॥
धनं वेदान् भिषक्सिद्धिं कुप्यङ्गा अप्यजाविकम्।
अश्वानायुश्च विधिवद्यः श्राद्धं संप्रयच्छति॥
कृत्तिकादिभरण्यन्तं स कामानाप्नुयादिमान्"—इति।

मार्कण्डेयोऽपि,—

"कृत्तिकासु पितॄनर्च्य स्वर्गमाप्नोति मानवः ।
अपत्यकामो रोहिण्यां सौम्ये तेजस्वितां लभेत् ॥
आर्द्रायां शौर्यमाप्नोति क्षेत्रादि तु पुनर्वसौ ।
पुष्टिं पुष्ये पितॄनर्च्यन्नश्लेषासु वरान् सुतान् ॥
मघासु स्वजनश्रैष्ठ्यं सौभाग्यं फल्गुनीषु च ।
प्रदानशीलो भवति सापत्यश्चोत्तरासु च ॥
प्राप्नोति श्रेष्ठतां सत्सु हस्ते श्राद्धप्रदो नरः ।
रूपवन्ति च चित्रासु तथापत्यान्यवाप्नुयात् ॥
वाणिज्यलाभदाः स्वात्यो विशाखाः पुत्रकामदाः* ।
कुर्व्वतां चानुराधासु दद्युश्चक्रप्रवर्त्तनम् ॥
ज्येष्ठास्वर्थाधिपत्यञ्च मूले चारोग्यमुत्तमम् ।
आषाढ़ासु यशःप्राप्तिरुत्तरासु विशोकता ॥
श्रवणे च शुभाँल्लोकान् धनिष्ठासु धनं महत् ।
वेदवेत्ताऽभिजिति तु भिषक्सिद्धिञ्च वारुणे ॥
अजाविकं प्रौष्ठपदे विन्देद्गार्यां तथोत्तरे ।
रेवतीषु तथा रौप्यमश्विनीषु तुरङ्गमान् ॥
आद्धं कुर्वंस्तथाऽऽप्नोति भरणीष्वायुरुत्तमम् ।
तस्मात्काम्यानि कुर्वीत ऋक्षेष्वेतेषु तत्त्ववित्"—इति ॥

सौम्यं सोमदैवत्यं मृगशीर्षमित्यर्थः । चक्रप्रवर्त्तनं सर्वाज्ञायाः प्रतिघाताभावेन प्रवर्त्तनम् । अभिजित् अभिजित्संज्ञकं नक्षत्रम् ।

---

* वाणिज्यपशुदा स्वाती विशाखा पुत्रकामदा,—इति मु० ।

श्रुतिः। "उपरिष्टादाषाढ़ानामधस्तात् श्रोणायाः"—इति। तत्तु वेधनिरूपणम्। भिषक्सिद्धिरौषधफलावाप्तिः। वारुणं शतभिषज्नक्षत्रम्। कुप्यं त्रपुसीसादिकम्*। विष्णुरपि। "स्वर्गं कृत्तिकास्वपत्यं रोहिणीषु ब्रह्मवर्चसं सौम्ये कर्म्मणां सिद्धिः रौद्रे भुवं पुनर्वसौ पुष्टिं पुष्ये श्रियं सार्प्ये सर्व्वान् कामान् पित्र्ये सौभाग्यं फल्गुनीषु धनमार्य्यम्णे ज्ञातिश्रैष्ठ्यं हस्ते रूपवतः सुतांस्त्वाष्ट्रे वाणिज्यवृद्धिं स्वातौ कनकं विशाखासु मित्राणि मैत्रे शाक्रे राज्यं कृषिं मूले समुद्रयानसिद्धिं सार्प्ये† सर्व्वान् कामान् वैश्वदेवे श्रैष्ठ्यमभिजिति सर्व्वान् कामाञ्छ्रवणे बलं वासवे आरोग्यं वारुणे कुप्यद्रव्यमाजे रत्नमहिर्बुध्न्ये गाः पौष्णे तुरङ्गममश्विने जीवितं याम्ये"—इति।

आदित्यादिवाराश्च काम्यश्राद्धकालाः। तदाह विष्णुः। "सततमादित्येऽह्नि श्राद्धं कुर्व्वन्नारोग्यमाप्नोति सौभाग्यं चान्द्रे समरविजयं कौजे सर्व्वान् कामान् बौधे विद्यामभीष्टां जैवे धनं शौक्रे जीवितं शनैश्चरे"। कूर्म्मपुराणेऽपि,—

"आदित्यवारे त्वारोग्यं चन्द्रे सौभाग्यमेव च।
कुजे सर्व्वत्र विजयं सर्व्वान् कामान् बुधस्य तु॥
विद्यां विशिष्टाश्च गुरौ धनं वै भार्गवे पुनः।
शनैश्चरे भवेदायुरारोग्यञ्च सुदुर्लभम्"—इति॥

विष्णुधर्म्मोत्तरे,—

"अतः काम्यानि वक्ष्यामि श्राद्धानि तव पार्थिव।

---

* अभिजित्,—इत्यारभ्य एतदन्तोग्रन्थो नास्ति मुद्रितातिरिक्तपुस्तकेषु।

† साप्ये,—इति मु०।

आरोग्यमथ सौभाग्यं समरे विजयं तथा ॥
सर्वकामांस्तथा विद्यां धनं जीवितमेवच ।
आदित्यादिदिनेष्वेवं श्राद्धं कुर्व्वन् सदा नरः ॥
क्रमेणैतान्यवाप्नोति नात्र कार्या विचारणा"—इति ॥

प्रतिपदादितिथयोऽपि काम्यश्राद्धकालाः । तदाह मनुः,—

"कुर्वन् प्रतिपदि श्राद्धं सुरूपान्विन्दते सुतान् ।
कन्यकान्तु द्वितीयायां तृतीयायान्तु वन्दिनः* ॥
पशून् क्षुद्रांश्चतुर्थ्यान्तु पञ्चम्यां शोभनान् सुतान् ।
षष्ठ्यां द्यूतं† कृषिञ्चैव सप्तम्यां लभते नरः ॥
अष्टम्यामपि वाणिज्यं लभते श्राद्धदः सदा ।
स्यान्नवम्यामेकखुरं दशम्यां द्विखुरं बहु ॥
एकादश्यां तथा रूप्यं ब्रह्मवर्चस्विनः सुतान् ।
द्वादश्यां जातरूपन्तु रजतं रूप्यमेवच ॥
ज्ञातिश्रैष्ठ्यं त्रयोदश्यां चतुर्द्दश्यान्तु सुप्रजाः ।
प्रीयन्ते पितरस्तास्य ये शस्त्रेण रणे हताः ॥
श्राद्धदः पञ्चदश्यान्तु सर्व्वान् कामान् समश्नुते"—इति ।

याज्ञवल्क्योऽपि,—

"कन्यां कन्यावेदिनश्च पशून् क्षुद्रान् सुतानपि‡ ।
द्यूतं कृषिञ्च वाणिज्यं तथैकद्विशफानपि§ ॥

---

* सम्पदः,—इति मु० ।

† घृतं,—इति सो० ना० पु० । एवं परत्र ।

‡ पशून् वै सत्सुतानपि,—इति मु० ।

§ द्विशफैकशफांस्तथा,—इति मु० ।

ब्रह्मवर्चस्विनः पुत्रान् स्वर्णरूप्ये सकुप्यके।
ज्ञातिश्रैष्ठ्यं सर्वकामानाप्नोति श्राद्धदः सदा॥
प्रतिपत्प्रभृति ह्येकां वर्जयित्वा चतुर्द्दशीम्।
शस्त्रेण तु हता ये वै तेभ्यस्तत्र प्रदीयते"—इति॥

कन्यावेदिनो जामातरः। एतानि फलानि कृष्णपक्षप्रतिपत्प्रभृतिष्वमावास्यापर्यन्तासु तिथिषु श्राद्धदः क्रमेण प्राप्नोति। अतएव कात्यायनः। "स्त्रियः प्रतिरूपाः प्रतिपदि द्वितीयायां तृतीयायां चतुर्थ्यां क्षुद्रपशवः पुत्राः पञ्चम्यां द्यूतं षष्ठ्यां कृषिः सप्तम्यां वाणिज्यमष्टम्यामेकशफं नवम्यां दशम्याङ्गावः परिचारका एकादश्यां द्वादश्यां धनधान्यरूप्यं ज्ञातिश्रैष्ठ्यं हिरण्यानि त्रयोदश्यां पुत्रास्तत्र* म्रियन्ते शस्त्रहतांश्चतुर्द्दश्याममावास्यायां सर्व्वम्"—इति। अयञ्च कृष्णपक्षप्रतिपदादितिथिषु श्राद्धविधिः सर्व्वेष्वेवापरपक्षेषु, न भाद्रपदापरपक्षएव। अतएव शौनकः। "प्रौष्ठपद्या अपरपक्षे मासि मासि चैवम्"—इति। आपस्तम्बोऽपि। "सर्व्वेष्वेवापरपक्षस्याहःसु क्रियमाणे पितॄन् प्रीणाति कर्त्तुस्तु कालनियमात्फलविशेषः प्रथमेऽहनि क्रियमाणे स्त्रीप्रायमपत्यं जायते द्वितीये स्तेनास्तृतीये ब्रह्मवर्चस्विनः चतुर्थे पशुमान् पञ्चमे पुमांसो बह्वपत्यो न चापत्यः प्रमीयते†षष्ठे द्विशीलोऽक्षशीलश्च सप्तमे कर्षे राद्धिः अष्टमे पुष्टिः नवमे एकखुराः दशमे व्यवहारे राद्धिः एकादशे कृष्णायसं त्रपु सीसं द्वादशे पशुमान् त्रयोदशे बहुपुत्रो बहुमित्रो दर्शनीयापत्यो-

---

* युवानस्तत्र,—इति मु०।

† प्रजायते,—इति मु०।

सुवर्णादिलाभस्तु भवन्ति चतुर्दशे आयुधे राद्धिः पञ्चदशे पुष्टिः"—
इति । भाद्रपदापरपक्षविषये मार्कण्डेयः,—

"कन्यागते सवितरि दिनानि दश पञ्च च ।
पार्व्वणेनैव विधिना तत्र श्राद्धं विधीयते ॥
प्रतिपद्धनलाभाय द्वितीया द्विप्रजाप्रदा ।
वरार्थिनां तृतीया च चतुर्थी शत्रुनाशनी ॥
श्रियं प्राप्नोति पञ्चम्यां षष्ठ्यां पूज्यो भवेन्नरः ।
गणाधिपत्यं सप्तम्यामष्टम्यां बुद्धिमुत्तमाम् ॥
स्त्रियो नवम्यां प्राप्नोति दशम्यां पूर्णकामताम् ।
वेदांस्तथाऽऽप्नुयात्सर्व्वानेकादश्यां क्रियापरः ॥
द्वादश्यां हेमलाभञ्च प्राप्नोति पितृपूजकः ।
प्रजां मेधां पशुं पुष्टिं स्वातन्त्र्यं वृद्धिमुत्तमाम ॥
दीर्घमायुरथैश्वर्यं कुर्व्वाणस्तु त्रयोदशीम् ।
अवाप्नोति न सन्देहः श्राद्धं श्रद्धापरो नरः ॥
युवानः पितरो यस्य मृताः शस्त्रेण वै हताः ।
तेन कार्यश्चतुर्दश्यां तेषामृद्धिमभीप्सता ॥
श्राद्धं कुर्वन्नमावास्यामन्नेन पुरुषः शुचिः ।
सर्व्वान् कामानवाप्नोति स्वर्गवासं समश्नुते"—इति ॥

नभस्य कृष्णपक्षप्रतिपत्प्रभृतिदशपञ्चदिनानि कृत्स्नोऽपरपक्षः सवितरि कन्यागते सति महालय इति प्रोक्तः । तत्र पार्वणेनैव विधिना श्राद्धं कुर्यात् । तदाह वृद्धमनुः,—

"नभस्यस्यापरः पक्षो यत्र कन्यां व्रजेद्रविः ।

स महालयसंज्ञः स्याद्गजच्छायाऽऽह्वयस्तथा"—इति ॥

यत्तु शाट्यायनिनोक्तम्*,—

"नभस्यस्यापरे पक्षे तिथिषोड़शकन्तु यत् ।

कन्यास्थार्कान्वितं चेत् स्यात् स कालः श्राद्धकर्मणः"—इति ॥

तत्तिथिवृद्धावधिकदिवसेऽपि श्राद्धं कुर्यान्न तु पञ्चदशदिनेष्वेवे-त्यनेनाभिप्रायेण । अथवा । अश्वयुजः शुक्लप्रतिपदा सह नभस्या-परपक्षस्य षोड़शदिनात्मकत्वं, तस्या अपि क्षीणचन्द्रत्वाविशेषेणापर-पक्षानुप्रवेशसम्भवात् । तदाह देवलः,—

"अहःषोड़शकं यत्तु शुक्लप्रतिपदा सह ।

चन्द्रक्षयाविशेषेण साऽपि दर्शात्मिका स्मृता"—इति ॥

नन्वेतस्मिन्पक्षे, दिनानि दश पञ्च चेति वचनस्य का गतिः ? उच्यते । द्वादशसु कपालेष्वष्टाकपालवत् षोड़शसु दिवसेषु पञ्चदश-दिनवचनमवयुत्यानुवादो भविष्यति(१) । अथवा । पञ्चदशदिवस-

* कात्यायनेनोक्तम्,—इति मु० ।

(१) अस्ति जातेष्टिः "वैश्वानरं द्वादशकपालं निर्व्वपेत् पुत्रे जाते"—इत्यनेन विहिता । तत्रेदमाम्नायते । "यदष्टाकपालोभवति गायत्र्यैवैनं ब्रह्मवर्चसेन पुनाति, यन्नवकपालस्त्रिवृतैवास्मिंस्तेजोदधाति, यद्दश-कपालोविराजैवास्मिन्नन्नाद्यं दधाति, यदेकादशकपालस्त्रिष्टुभैवा-स्मिन्निन्द्रियं दधाति, यद्द्वादशकपालो भवति जगत्यैवास्मिन् पशून् दधाति, यस्मिन् जातएतामिष्टिं निर्व्वपति पूतएव स तेजस्व्यन्नाद-इन्द्रियावी पशुमान् भवति"—इति । तत्र वाक्यभेदभयादष्टाकपाला-देर्व्विध्यन्तराणि न सन्ति, किन्तु द्वादशकपालान्तर्व्वर्त्तिनामष्टा-कपालादीनामवयुत्यानुवादेन तत्र तत्र फलवादकीर्त्तनद्वारेण प्रकृता-द्वादशकपाला वैश्वानरेष्टिरेवैवं स्तूयते इति मीमांसाप्रथमाध्याय-चतुर्थपादगतैकादशाधिकरणे सिद्धान्तितम् । तद्वदत्राप्यवगन्तव्य-मिति भावः ।

षोड़शदिवसविध्योर्व्रीहियववदिकल्पोऽस्तु। नभस्यापरपक्षस्य कन्यास्थार्कान्वितत्वेन प्रशस्ततरतोच्यते, तदभावेऽपि तस्य प्रशस्तत्वात्।

तदाह जावालिः,—

"अगतेऽपि रवौ कन्यां श्राद्धं कुर्व्वीत सर्व्वथा।
आषाढ्याः पञ्चमः पक्षः प्रशस्तः पितृकर्म्मसु॥
पुत्रानायुस्तथाऽऽरोग्यमैश्वर्य्यमतुलं तथा।
प्राप्नोति पञ्चमे दत्त्वा श्राद्धं कामांस्तथाऽपरान्"—इति॥

वृहन्मनुरपि,—

"आषाढ़ीमवधिं कृत्वा पञ्चमं पक्षमाश्रिताः।
काङ्क्षन्ति पितरः क्लिष्टा अन्नमप्यन्वहं जलम्॥
तस्मात्तत्रैव दातव्यं दत्तमन्यत्र निष्फलम्।
आषाढ़ीमवधिं कृत्वा यः पक्षः पञ्चमो भवेत्॥
तत्र श्राद्धं प्रकुर्व्वीत कन्यास्थोऽर्को भवेन्न वा"—इति॥

अस्य पक्षस्य रवेः कन्यागतत्वेन प्रशस्ततरत्वं ब्राह्मपुराणे दर्शितम्,—

"पक्षान्तरेऽपि कन्यास्थे रवौ श्राद्धं प्रशस्यते।
कन्यागते पञ्चमे तु विशेषेणैव कारयेत्"—इति॥

श्लोकगौतमोऽपि,—

"कन्यागते सवितरि यान्यहानि तु षोड़श।
क्रतुभिस्तानि तुल्यानि सम्पूर्णवरदक्षिणैः"—इति॥

शाट्यायनिरपि,—

"पुण्यः कन्यागतः सूर्य्यः पुण्यः पक्षश्च पञ्चमः।
कन्यास्थार्कान्वितः पक्षः सोऽत्यन्तं पुण्यउच्यते"—इति॥

आदिमध्यावसानेषु यत्र क्वचन कन्यार्काञ्चितत्वेन कृत्स्नः पक्षः पूज्य इत्यर्थः। अतएव कार्ष्णाजिनिः,—

"आदौ मध्येऽवसाने वा यत्र कन्यां व्रजेद्रविः।

स पक्षः सकलः पूज्यः श्राद्धषोड़शकं प्रति"—इति॥

प्रतिपदादिदर्शान्तं श्राद्धं कर्त्तुमसमर्थश्चेत्, पञ्चम्यादिदर्शान्तमष्टम्यादिदर्शान्तं वा यथाशक्ति श्राद्धं कुर्यात्। तदाह गौतमः। "अपरपक्षे श्राद्धं पितृभ्योदद्यात् पञ्चम्यादिदर्शान्तमष्टम्यादि दशम्यादि सर्व्वस्मिन् वा"—इति। ब्रह्माण्डपुराणेऽपि,—

"नभस्यस्यापरपक्षे तु श्राद्धं कुर्याद्दिने दिने।

त्रिभागहीनपक्षं वा त्रिभागं त्वर्द्धमेव वा"—इति॥

अत्र प्रतिपदादिदर्शान्तमित्यस्मिन्पक्षे नन्दाऽऽदिकं न वर्ज्यम्। तदाह कार्ष्णाजिनिः,—

"नभस्यस्यापरे पक्षे श्राद्धं कुर्याद्दिने दिने।

नैव नन्दाऽऽदि वर्ज्यं स्यान्नैव वर्ज्या चतुर्द्दशी"—इति॥

नन्वेतत्

"प्रतिपत्प्रभृतिष्वेकां वर्जयित्वा चतुर्द्दशीम्"—इति

याज्ञवल्क्यवचनेन विरुध्येत इति चेत्। न। तस्य वचनस्य पञ्चम्यादिपक्षविषयत्वेनोपपत्तेः। अन्यथा, कार्ष्णाजिनिवचनस्यानर्थक्यं प्रसज्येत। अतएव कात्यायनः। "अपरपक्षे श्राद्धं कुर्व्वीत ऊर्द्ध्वं चतुर्थ्या यदहः सम्पद्यते सप्तम्या ऊर्द्ध्वं यदहः सम्पद्यते वर्जयित्वा चतुर्द्दशीं, एकेनाप्यपरपक्षं नातिक्रामेत्"—इति। मनुरपि,—

"कृष्णपक्षे दशम्यादौ वर्जयित्वा चतुर्द्दशीम्।

श्राद्धे प्रशस्तास्तिथयो यथैता न तथेतराः"—इति॥

तत्राप्यसामर्थ्ये पञ्चमपक्षस्य पञ्चमीमारभ्यानन्तरपक्षपञ्चमीपर्य्यन्तासु तिथिष्वनिषिद्धायामेकस्यान्तिथौ यथासम्भवं गृही श्राद्धं कुर्यात् । तदाह यमः,—

"हंसे वर्षासु कन्यास्थे शाकेनापि गृहे वसन् ।
पञ्चम्योरन्तरे दद्यात् उभयोरपि पक्षयोः"—इति ॥

अशक्त्यादिना पञ्चमपक्षे श्राद्धाकरणे यावत् कन्याराशौ सूर्य्यस्तिष्ठति यावच्छ्राद्धं दद्यात्, तत्राप्यकरणे यावद् वृश्चिकदर्शनमिति । तदाह सुमन्तुः,—

"कन्याराशौ महाराज, यावत्तिष्ठेद्विभावसुः ।
तस्मात्कालाद्भवेद्देयं वृश्चिकं यावदागतम्"—इति ॥

पुराणेऽपि,—

"कन्यागते सवितरि पितरो यान्ति वै सुतान् ।
शून्या प्रेतपुरी सर्व्वा यावद्वृश्चिकदर्शनम् ॥
ततो वृश्चिकसंप्राप्तौ निराशाः पितरो गताः ।
पुनः स्वभवनं यान्ति शापं दत्त्वा सुदारुणम् ॥
सूर्य्ये कन्यागते श्राद्धं यो न कुर्य्याद्गृहाश्रमी ।
धनं पुत्राः कुतस्तस्य पितृनिश्वासपीड़नात् ॥
वृश्चिके समतिक्रान्ते पितरो दैवतैः सह ।
निश्वस्य प्रतिगच्छन्ति शापं दत्त्वा सुदारुणम्"—इति ॥

आदिपुराणेऽपि,—

"प्रावृड्तौ यमः प्रेतान् पितृंश्चाथ यमालयात् ।
विसर्ज्जयित्वा मानुष्ये कृत्वा शून्यं स्वकं पुरम् ॥

क्षुधार्त्ताः कीर्त्तयन्तश्च दुष्कृतञ्च स्वयं कृतम्।
काङ्क्षन्तः पुत्रपौत्त्रेभ्यः पायसं मधुसंयुतम्॥
तस्मात्तांस्तत्र विधिना तर्पयेत्पायसेन तु।
मध्वाज्यतिलमिश्रेण तथा शीतेन चाम्भसा॥
ग्रासमात्रं परगृहादन्नं यः प्राप्नुयान्नरः।
भिक्षामात्रेण यः प्राणान् सन्धारयति वा स्वयम्॥
यो वा संवर्द्धते देहं प्रत्यहं स्वात्मविक्रयात्।
श्राद्धन्तेनापि कर्त्तव्यं तैस्तैर्द्रव्यैः सुसञ्चितैः"—इति॥

यमालयाद्विसर्जयित्वा स्वकं पुरं शून्यं कृत्वा मनुष्यलोके पितॄन्-वासयतीत्यध्याहृत्य योजना। पायसं काङ्क्षतः पितरस्तिष्ठन्तीत्यध्याहारः। तत्र वर्ज्यानाह गार्ग्यः,—

"नन्दायां भार्गवदिने त्रयोदश्यां त्रिजन्मनि।
एषु श्राद्धं न कुर्व्वीत गृही पुत्रधनक्षयात्"—इति॥

वृद्धगार्ग्योऽपि,—

"प्राजापत्ये तु पौष्णे च पित्र्यर्क्षे भार्गवे तथा।
यस्तु श्राद्धं प्रकुर्व्वीत तस्य पुत्रो विनश्यति"—इति॥

प्राजापत्यं रोहिणी, पौष्णं रेवती, पित्र्यर्क्षं मघा। अङ्गिरा अपि,—

"त्रयोदश्यां कृष्णपक्षे यः श्राद्धं कुरुते नरः।
पञ्चत्वं तस्य जानीयात् ज्येष्ठपुत्रस्य निश्चितम्॥
मघासु कुर्व्वतः श्राद्धं ज्येष्ठः पुत्रो विनश्यति"—इति।

अत्र मघात्रयोदश्यां श्राद्धनिषेधः केवलपितृवर्गविषयः। ननु केवलपितृवर्गोद्देशेन श्राद्धप्राप्तौ सत्यां तन्निषेधो युक्तः,—

"पितरो यत्र पूज्यन्ते तत्र मातामहा ध्रुवम्।
अविशेषेण कर्त्तव्यं विशेषान्नरकं व्रजेत्"—इति

धौम्यवचनेन केवलैकवर्गोद्देशश्राद्धनिषेधात्प्राप्तिरेव नास्ति, अतो नैवं व्यवस्था विवच्यते इति। नैवं, सत्यामपि धौम्यस्मृतौ व्यामोहादेव प्राप्तस्यैकवर्गश्राद्धस्य निषेधात्। यथा रागप्राप्तस्य कलञ्जभक्षणस्य, "न कलञ्जं भक्षयेत्"—इति निषेधस्तद्वत्। अतएव कार्ष्णाजिनिः,—

"श्राद्धन्तु नैकवर्गस्य त्रयोदश्यामुपक्रमेत्।
अष्टप्रस्तत्र यस्य स्युः प्रजां हिंषन्ति तत्र ते"—इति॥

स्मृत्यन्तरमपि,—

"इच्छेत् त्रयोदशीश्राद्धं पुत्रवान् यः सुतायुषोः।
एकस्यैव तु नो दद्यात्पार्व्वणन्तु समाचरेत्"—इति॥

यः पुत्रवान् सुतायुषोरभिवृद्धिमिच्छेत्, स एकस्यैकवर्गस्यैव श्राद्धं नो दद्यात्, अपि तु मातामहवर्गोद्देशेनापि पार्व्वणं समाचरे-दित्यर्थः। तस्मादेकवर्गोद्देशेनैव मघात्रयोदश्यां श्राद्धनिषेधो न तु श्राद्धस्यैव, तत्र श्राद्धस्य प्रशस्तत्वात्। तथाच शङ्खः,—

"प्रोष्ठपद्यामतीतायां माघायुक्तां त्रयोदशीम्।
प्राप्य श्राद्धन्तु कर्त्तव्यं मधुना पायसेन च॥
प्रजामिष्टां यशः स्वर्गं आरोग्यञ्च धनं तथा।
नृणां श्राद्धे सदा प्रीताः प्रयच्छन्ति पितामहाः"—इति॥

महाभारतेऽपि,—

"ज्ञातीनान्तूत्तरेष्वेष्ठः कुर्व्वन् श्राद्धं त्रयोदशीम्।
नावश्यन्तु युवानोऽस्य प्रमीयन्ते नरा गृहे"—इति॥

अत्र मघात्रयोदश्यां श्राद्धे पिण्डनिर्वपणं न कुर्य्यात्, तस्यां युगादित्वेन पिण्डनिर्वपणनिषेधात्। तथाच पुलस्त्यः,—

"अयनद्वितये श्राद्धं विषुवद्वितये तथा।
युगादिषु च सर्व्वासु पिण्डनिर्वपणादृते"—इति॥

कर्त्तव्यमित्यध्याहारः। मघाऽन्वितत्वेनापि पिण्डनिर्वपणं नास्ति। तथाचादिपुराणे,—

"संक्रान्तावुपवासेन पारणेन च भारत।
मघायां पिण्डदानेन ज्येष्ठः पुत्रो विनश्यति"—इति॥

चतुर्द्दश्यां श्राद्धनिषेधोऽयमशस्त्रहतविषयः। अपमृत्युहतानान्तु चतुर्द्दश्यामपि श्राद्धं कार्य्यम्। तदाह मरीचिः,—

"विषशस्त्रश्वापदाहितिर्यग्ब्राह्मणघातिनाम्।
चतुर्द्दश्यां क्रिया कार्य्या अन्येषान्तु विगर्हिता"—इति॥

प्रचेता अपि,—

"वृक्षारोहणलोहादिविद्युज्जलविषादिभिः।
नखिदंष्ट्रिविपन्नानामेषां शस्ता चतुर्द्दशी"—इति॥

याज्ञवल्क्योऽपि,—

"शस्त्रेण तु हता ये वै तेभ्यस्तत्र प्रदीयते"—इति॥

अत्र चतुर्द्दश्यां शस्त्रादिहतानामेवेति नियम्यते, न पुनश्चतुर्द्दश्यामेवेति। एवञ्च सति, दिनान्तरेऽपि पितामहादितृप्तिसिद्ध्यर्थं महालयश्राद्धं कार्य्यम्। चतुर्द्दशी महालयश्राद्धस्यैकोद्दिष्टत्वेन विहितत्वात् तेनाच पितामहादितृप्तेरभावात्। तस्य चैकोद्दिष्टरूपत्वं सुमन्तुराह,—

"समत्वमागतस्यापि पितुः शस्त्रहतस्य तु।

एकोद्दिष्टं सुतैः कार्यं चतुर्द्दश्यां महालये"—इति ॥

समत्वमागतस्य सपिण्डीकृतस्य शस्त्रहतस्य पितुश्चतुर्द्दश्यां महालये सुतैरेकोद्दिष्टश्राद्धं कार्यमित्यर्थः। यस्य पितामहोऽपि शस्त्रादिना हतः, तेन द्वयोरपि चतुर्द्दश्यामेकोद्दिष्टश्राद्धं कार्यम्। तथाच स्मृत्यन्तरम्। "एकस्मिन्द्वयोर्वैकोद्दिष्टविधिः"—इति। अयमर्थः। एकस्मिन्पितरि शस्त्रादिना हते, द्वयोर्व्वा पितृपितामहयोः शस्त्रादिना हतयोश्चतुर्द्दश्यां पुत्रेण तयोः प्रत्येकमेकोद्दिष्टश्राद्धं कार्यमिति। यस्य पितृपितामहप्रपितामहास्त्रयोऽपि शस्त्रहताः, तेन चतुर्द्दश्यां पार्व्वणेनैव विधिना श्राद्धं कार्यम्। एकस्मिन्द्वयोर्वैकोद्दिष्टविधिरिति विशेषोपादानात्। इदञ्च चन्द्रिकारापरार्कयोर्मतम्। त्रिष्वपि पित्रादिषु शस्त्रहतेषु त्रयाणामपि पृथक् पृथगेकोद्दिष्टमेव कार्यमिति देवस्वामिमतम्। अत्र त्रयाणां शस्त्रहतत्वे पार्वणश्राद्धस्य साक्षाद्विधायकवचनाभावादेकस्मिन्द्वयोर्वेत्यस्योपलक्षणार्थत्वेनाप्युपपत्तेरेकोद्दिष्टत्रयमेव कार्यमिति देवस्वामिमतं युक्तमिति प्रतिभाति। शस्त्रादिहतानां दिनान्तरे पार्व्वणविधिनैव श्राद्धं कार्यम्। अतएव प्रजापतिः,—

"संक्रान्तावुपरागे च वर्षोत्सवमहालये।
निर्व्वपेत्त्रीन्पिण्डांस्त्रीनिति प्राह प्रजापतिः"—इति॥

भ्रातृभगिन्यादीनां महालयश्राद्धमेकोद्दिष्टविधानेन कार्यम्। तथाच सुमन्तुः,—

"सपिण्डीकरणादूर्ध्वं यत्र यत्र प्रदीयते।
भ्रात्रे भगिन्यै पुत्राय स्वामिने मातुलाय च॥
मित्राय गुरवे श्राद्धमेकोद्दिष्टं न पार्व्वणम्"—इति।

आपस्तम्बोऽपि,—

"अपुत्रा ये मृताः केचित् स्त्रियश्च पुरुषाश्च ये।
तेषामपि च देयं स्यादेकोद्दिष्टं न पार्व्वणम्"—इति।

स्त्रियो भगिन्यादयः, पुरुषा भ्रात्रादयः। कात्यायनोऽपि,—

"सम्बन्धिबान्धवादीनामेकोद्दिष्टन्तु सर्व्वदा"—इति।

यानि पुनरेकोद्दिष्टनिषेधकानि वाक्यानि, यथा सपिण्डीकरणं प्रकृत्य जातूकर्ण्यः,—

"अत ऊर्द्ध्वं न कर्त्तव्यमेकोद्दिष्टं कदाचन।
सपिण्डीकरणान्तञ्च तत्प्रोक्तमिति मुद्गलः।
प्रेतत्वञ्चैव निस्तीर्णः प्राप्तः पितृगणन्तु सः॥
च्यवते पितृलोकात्तु पृथक्पिण्डे नियोजितः।
सपिण्डीकरणादूर्ध्वं पृथक्त्वं नोपपद्यते॥
पृथक्त्वे तु कृते पश्चात्पुनः कार्या सपिण्डता"—इति।

कार्ष्णाजिनिरपि,—

"तत ऊर्द्ध्वं न कर्त्तव्यमेकोद्दिष्टं कदाचन।
सपिण्डीकरणान्तञ्च प्रेतस्यैतदमङ्गलम्"—इति।

यमोऽपि,—

"यः सपिण्डीकृतं प्रेतं पृथक्पिण्डे नियोजयेत्।
विधिघ्नस्तेन भवति पितृहा चोपजायते"—इति॥

पुराणेऽपि,—

"प्रदानं यत्र यत्रैषां सपिण्डीकरणात्परम्।
तत्र पार्व्वणवच्छ्राद्धमेकोद्दिष्टं त्यजेद्बुधः"—इति॥

तानि सर्व्वाण्यपि प्रतिपदोक्तैकोद्दिष्टविध्यभावे द्रष्टव्यानि । एतच्छ्राद्धं सूतकादिना मुख्यकालातिक्रमे त्वाशौचापगमानन्तरकालएव कार्यम् । तथाच ऋष्यशृङ्गः,—

"देये पितॄणां श्राद्धे तु आशौचं जायते तदा ।
आशौचे तु व्यतिक्रान्ते तेभ्यः श्राद्धं प्रदीयते"—इति ॥

यत्त्वत्रिवचनम्,—

"तदहस्त्वेत्प्रदुष्येत केनचित्सूतकादिना ।
सूतकानन्तरं कुर्यात् पुनस्तदहरेव वा"—इति ॥

सूतकानन्तरकाले वा अनन्तरे वा मासि तत्पक्षे तत्तिथौ वेति पक्षद्वयमुपन्यस्तं, तत्राद्ये पक्षे विरोधएव नास्ति, पुनस्तदहरेव वेत्ययं पक्षः सूतकव्यतिरिक्तनिमित्तान्तरेण विघ्ने समुत्पन्ने प्रतिमासं क्षयाहे विहितैकोद्दिष्टमासिकश्राद्धविषयइति ऋष्यशृङ्गवचनाविरोधाय व्यवस्थाप्यते । अतएव देवलः,—

"एकोद्दिष्टे तु संप्राप्ते यदि विघ्नः प्रजायते ।
अन्यस्मिंस्तत्तिथौ तस्मिन् श्राद्धं कुर्यात्प्रयत्नतः"—इति ॥

अन्यस्मिन्ननन्तरे मासि तत्तिथौ मृततिथौ, यस्मिन् शुक्ले कृष्णे वा मृतस्तस्मिन्पक्षे श्राद्धं विघ्नवशात्कुर्यादित्यर्थः । आशौचनिमित्तकविघ्ने तु मासिकश्राद्धमपि सूतकानन्तरमेव ऋष्यशृङ्गवचनबलादनुष्ठेयम् । देवस्वामिनाऽप्येवमेव विषयव्यवस्था कृता । एतत् ऋष्यशृङ्गवचनं सूतकाशौचविषयम् । निमित्तान्तरतस्तदहर्विघाते,

"एकोद्दिष्टे तु संप्राप्ते यदि विघ्नः प्रजायते"—

इत्यादि स्मृत्यन्तरवचनमिति । यत्तु व्यासेनोक्तम्,—

"श्राद्धविघ्ने समुत्पन्ने अन्तरा मृतसूतके।
अमावास्यां प्रकुर्व्वीत शुद्धावेके मनीषिणः"—इति॥

अन्तरा प्रयोगमध्ये पाकोपक्रमात् प्राक् मृतके सूतके वा जाते अमावास्याममावास्यायां शुद्धौ शुद्ध्यनन्तरं वा श्राद्धं प्रकुर्व्वीतेति। एतदनुमासिकसांवत्सरिकश्राद्धविषयम्। अतएवोक्तं षड्‌विंशमतेन,—

"मासिकेऽब्दे तु संप्राप्ते अन्तरा मृतसूतके।
वदन्ति शुद्धौ तत्कार्यं दर्शे वाऽपि विचक्षणाः"—इति॥

दर्शग्रहणं शुक्लकृष्णैकादश्योरुपलक्षणार्थम्। अतएव मरीचिः,—

"श्राद्धविघ्ने समुत्पन्ने अविज्ञाते मृतेऽहनि।
एकादश्यान्तु कर्त्तव्यं कृष्णपक्षे विशेषतः"—इति॥

कृष्णपक्षे या एकादशी तस्यां विशेषतः कर्त्तव्यमिति योजना। पितृकार्य्ये कृष्णपक्षस्यैव विशेषतो ग्राह्यत्वात्। कृष्णैकादशीतोऽपि अमावास्याया मुख्यत्वं पितृकार्य्ये दण्डापूपन्यायसिद्धम्। एतदुक्तं भवति। आशौचसमनन्तरकालो मुख्यकालसन्निकृष्टत्वाच्छ्रेष्ठतमः। दर्शकालस्तु मुख्यकालप्रत्यासत्त्यभावात् ततो जघन्यइति। अतएव ऋष्यशृङ्गः,—

"शुचीभूतेन दातव्यं या तिथिः प्रतिपद्यते।
सा तिथिस्तस्य कर्त्तव्या न चान्या वै कदाचन"—इति॥

शुचिना तावच्छ्राद्धं कर्त्तव्यं, तत्राशौचवशान्मुख्यकाले शुद्ध्यभावे शुद्ध्यनन्तरं या तिथिः प्रतिपद्यते लभ्यते, सा तिथिस्तस्य कर्मणोऽङ्गत्वेन स्वीकर्त्तव्या। आशौचाद्यनुपघाते तु मुख्यकालो नालस्यादिनाऽतिक्रमणीयः। तदाह सएव,—

"तिथिच्छेदो न कर्त्तव्यो विनाऽऽशौचं यदृच्छया ।
पिण्डं श्राद्धञ्च दातव्यं विच्छित्तिं नैव कारयेत्"—इति ॥

चकारेणाग्नौकरणं समुच्चिनोति । श्राद्धशब्देनात्र ब्राह्मणतर्पणमात्रं विवचितं, पिण्डदानस्य पृथगुपात्तत्वात्। विच्छित्तिं नैव कारयेदिति ब्राह्मणं कर्त्तुमसमर्थश्चेत्पिण्डप्रदानमात्रमपि कुर्यात्, सर्व्वथा पित्रर्चनस्य विच्छेदं न कुर्यादित्यर्थः । अतएव निगमः। "आहिताग्नेः पित्रर्चनं पिण्डैरेव ब्राह्मणानपि वा भोजयेत्"—इति। अत्र व्यवस्थितोविकल्पः । सति सामर्थ्ये ब्राह्मणतर्पणं पिण्डप्रदानञ्च कुर्यात्, तत्रासामर्थ्ये पिण्डप्रदानमात्रमिति । यत्तु हारीतेन श्राद्धविघ्ने समुत्पन्ने अमावास्यादिष्वामश्राद्धं विहितम्,—

"श्राद्धविघ्ने द्विजातीनामामश्राद्धं प्रकीर्त्तितम् ।
अमावास्यादिनियतं माससांवत्सरादृते"—इति ॥

मासं मासिकं, साम्वत्सरं सांवत्सरिकम् । तद्भार्यारजोदर्शनकृतविघ्नविषयम् । तथाऽऽहोशनाः,—

"अपत्नीकः प्रवासी च यस्य भार्या रजस्वला ।
सिद्धान्नं न प्रकुर्व्वीत आमन्तस्य विधीयते"—इति ॥

कात्यायनोऽपि,—

"आपद्यनग्नौ तीर्थे च प्रवासे पुत्रजन्मनि ।
आमश्राद्धं प्रकुर्व्वीत यस्य भार्या रजस्वला"—इति ॥

व्याघ्रपादोऽपि,—

"आर्त्तवे देशकालानां विप्लवे समुपस्थिते ।
आमश्राद्धं द्विजैः कार्यं शूद्रः कुर्यात्सदैव हि"—इति ॥

न च कात्यायनव्याघ्रपादवचनपर्यालोचनया मासिकप्रत्याब्दिकयोरप्यामश्राद्धं प्राप्नोतीति मन्तव्यम्। मासमास्यत्सराद्दृते,—इति विशेषवचनेनामश्राद्धस्य तद्व्यतिरिक्तविषयत्वागमात्। अतएव मरीचिः,—

"अनग्निकः प्रवासी च यस्य भार्या रजस्वला।
आमश्राद्धं द्विजः कुर्यान्न तत्कुर्यान्मृतेऽहनि"—इति॥

तदामश्राद्धं मृतेऽहनि न कुर्यात्, किन्तु पक्वान्नेनैव कुर्यादित्यर्थः। लौगाक्षिरपि,—

"पुष्पवत्स्वपि दारेषु विदेशस्थोऽप्यनग्निकः।
अन्नेनैवाब्दिकं कुर्यात् हेम्ना वाऽऽमेन वा क्वचित्"—इति॥

यत्तु स्मृत्यन्तरे भार्यायां रजस्वलायां मृतेऽहनि श्राद्धनिषेधः,—

"मृतेऽहनि तु संप्राप्ते यस्य भार्या रजस्वला।
श्राद्धं तदा न कर्त्तव्यं कर्त्तव्यं पञ्चमेऽहनि"—इति॥

तस्यायं विषयः। अपुत्रायाः पत्न्याएव पत्युर्मृताहश्राद्धेऽधिकारात्यदा स्वयमेव रजस्वला स्यात्तदा मृतेऽहनि श्राद्धं न कर्त्तव्यं, किन्तु पञ्चमेऽहनीति। तथाच श्लोकगौतमः,—

"अपुत्रा तु यदा भार्या संप्राप्ते भर्तुराब्दिके।
रजस्वला भवेत्सा तु कुर्यात् तत्पञ्चमेऽहनि"—इति॥

प्रभासखण्डेऽपि,—

"शुद्धा सा तु चतुर्थेऽह्नि स्नानान्नारी रजस्वला।
दैवे कर्म्मणि पित्र्ये च पञ्चमेऽहनि शुध्यति"—इति॥

अन्ये तु,—

"आद्धीयेऽहनि संप्राप्ते यस्य भार्या रजस्वला।
श्राद्धं तत्र न कर्त्तव्यं कर्त्तव्यं पञ्चमेऽहनि"—इति

श्लोकगौतमवचनमन्यथा पठित्वा, श्राद्धादौ कर्म्मणि भार्यया सहैवाधिकारश्रवणात्तस्यां रजोदर्शनदूषितायामधिकारनिवृत्तेर्मुख्यकालमतिक्रम्य पञ्चमेऽहनि श्राद्धं कर्त्तव्यमिति मन्यन्ते।

नन्वस्मिन्पाठेऽमावास्यादिश्राद्धस्यापि पञ्चमेऽहन्युत्कर्षः प्राप्नोति? नैवं, श्राद्धविघ्ने द्विजातीनामिति हारीतवचनेनामावास्यादिष्वामस्याग्निकार्ये सोमकार्ये पूतीकवद्विहितत्वात्। आद्धीयेऽहनीत्यस्य वचनस्य मृताहव्यतिरिक्तविषयत्वेन सार्थकत्वमस्त्विति चेत्। भवेदेतदेवं, यदि विषयान्तरं वक्तुं शक्येत। न त्वेतदस्ति, मृताहविषयत्वन्तु मृतेऽहनि तु संप्राप्ते इति स्मृत्यन्तरवचनादेवावगम्यते। तस्मादेकभार्य्येण मृताहश्राद्धं रजोदर्शनरूपविघ्नोपरमकालएव कर्त्तव्यं, भार्यान्तरयुक्तेन त्वधिकारानपगमान्मुख्यएव काले कर्त्तव्यमिति। यदत्र युक्तं तद्ग्राह्यम्।

श्राद्धे भोजनीयब्राह्मणपरीक्षा कर्त्तव्या। तत्र श्राद्धं प्रकृत्य यमः,—

"पूर्व्वमेव परीक्षेत ब्राह्मणान् वेदपारगान्।
शरीरप्रभवैर्द्दोषैर्विशुद्धांश्चरितव्रतान्॥
दूरादेव परीक्षेत ब्राह्मणान्वेदपारगान्।
दृष्टान्वा यदि वाऽनिष्टांस्तत्कालेनैवमानयेत्"—इति॥

पूर्वमिति निमन्त्रणात् पूर्वमित्यर्थः। शरीरप्रभवादोषाः कुष्ठापस्मारादयः। दूरादिति प्रपितामहादारभ्य भोजनीयब्राह्मणपर्यन्तम्। तथाच छागलेयः,—

"उक्तलक्षणसम्पन्नैर्विद्याशीलगुणान्वितैः।

पुरुषत्रयविख्यातैः सर्वं श्राद्धं प्रकल्पयेत्"—इति॥

सर्वं पार्वणैकोद्दिष्टात्मकम्। अतएव मनुनाऽपि पितुः श्रोत्रियत्वेन पुत्रस्य श्रैष्ठ्यमुक्तम्,—

"अश्रोत्रियः पिता यस्य पुत्रः स्याद्वेदपारगः।

अश्रोत्रियो वा पुत्रः स्यात् पिता स्याद्वेदपारगः॥

ज्यायांसमनयोर्विद्याद्यस्य स्याच्छ्रोत्रियः पिता"—इति॥

श्राद्धे भोजनीयान्ब्राह्मणा याज्ञवल्क्येन दर्शिताः,—

"अग्र्याः सर्वेषु वेदेषु श्रोत्रियोब्रह्मविद्युवा।

वेदार्थवित् ज्येष्ठसामा त्रिमधुस्त्रिसुपर्णकः॥

कर्म्मनिष्ठास्तपोनिष्ठाः पञ्चाग्निर्ब्रह्मचारिणः।

पितृमातृपराश्चैव ब्राह्मणाः श्राद्धसम्पदः"—इति॥

ऋग्वेदादिसर्ववेदेष्वग्र्या वर्णिताध्ययनक्रमाः। श्रोत्रियाः श्रुताध्ययनसम्पन्नाः। ब्रह्मवित् ब्रह्मज्ञानवान्। युवा मध्यमवयस्कः। युवत्वञ्च सर्वविशेषणम्। वेदार्थविद्धर्म्मज्ञानवान्। ज्येष्ठसामेति सामविशेषस्तद्व्रतं च। तद्व्रताचरणेन यस्तदधीते, स ज्येष्ठसामा। त्रिमधुः ऋग्वेदैकदेशः तद्व्रतञ्च। तद्व्रताचरणेन तदध्यायी त्रिमधुः। त्रिसुपर्णमृग्यजुषयोरेकदेशस्तद्व्रतञ्च। तदाचरणेन यस्तदधीते स त्रिसुपर्णकः। ब्राह्मणा न क्षत्रियादयः। उक्तलक्षणा एते ब्राह्मणाः श्राद्धस्याक्षयफलसम्पादकाइत्यर्थः। वृहस्पतिरपि,—

"यद्येकं भोजयेच्छ्राद्धे छन्दोगं तत्र भोजयेत्।

ऋचो यजूंषि सामानि त्रितयं तत्र विद्यते॥

अटेत पृथिवीं सर्वां सशैलवनकाननाम् ।
यदि लभ्येत पित्रर्थे साम्नामक्षरचिन्तकः ॥
ऋचा तु तृप्यति पिता यजुषा तु पितामहः ।
पितुः पितामहाः साम्ना छन्दोगोऽभ्यधिकस्ततः"—इति ॥

शातातपोऽपि,—

"भोजयेदथर्व्वाणं दैवे पित्र्ये च कर्म्मणि ।
अनन्तमक्षयञ्चैव फलं तस्येति वै श्रुतिः"—इति ॥

यमोऽपि,—

"वेदविद्याव्रतस्नाताः श्रोत्रिया वेदपारगाः ।
स्वधर्मनिरताः शान्ताः क्रियावन्तस्तपस्विनः ॥
तेभ्यो हव्यञ्च कव्यञ्च प्रसन्नेभ्यः प्रदीयते"—इति ।

मनुरपि,—

"श्रोत्रियायैव देयानि हव्यकव्यानि दातृभिः ।
अर्हत्तमाय विप्राय तस्मै दत्तं महाफलम् ॥
एकैकमपि विद्वांसं दैवे पित्र्ये च भोजयेत् ।
पुष्कलं फलमाप्नोति नामन्त्रज्ञान् बहूनपि"—इति ॥

वसिष्ठोऽपि । "यतीन् गृहस्थान् साधून् वा"— इति । भोजयेदिति शेषः । ब्रह्माण्डपुराणेऽपि,—

"शिखिभ्यो धातुरक्तेभ्यः त्रिदण्डिभ्यश्च दापयेत्"—इति ।

शिखिनो ब्रह्मचारिणः । धातुरक्ताः धातुरक्तवस्त्रधारिणो वानप्रस्थाः । त्रिदण्डिनो वाक्कायमनोदण्डैरुपेताः यतयः । अत्र परः परः श्रेष्ठः । ततएव नारदः,—

"यो वै यतीननादृत्य भोजयेदितरान् द्विजान्।
विजानन् वसतो ग्रामे कव्यं तद्याति राक्षसान्"—इति॥

ब्रह्माण्डपुराणेऽपि,—

"अलाभे ध्यानिभिक्षूणां भोजयेद्ब्रह्मचारिणम्।
तदलाभेऽप्युदासीनं गृहस्थमपि भोजयेत्"—इति॥

उदासीनो ह्यसम्बन्धः। अतएवापस्तम्बः। "ब्राह्मणान् भोजयेद्ब्रह्मविदो योनिगोत्रमन्त्रान्तेवास्यसम्बन्धान्"—इति। योनिसम्बन्धा मातुलादयः। गोत्रसम्बन्धाः सपिण्डाः। मन्त्रसम्बन्धा वेदाध्यापकादयः। अन्तेवासिसंबन्धाः शिल्पशास्त्रोपाध्यायाः। एवंविधसम्बन्धव्यतिरिक्तान् ब्राह्मणान् गृहस्थादीन् भोजयेदित्यर्थः। श्राद्धे श्रोत्रियादीनां पङ्क्तिपावनत्वेनापि पात्रविशेषतां सएवाह,—

"अपाङ्क्त्योपहता पङ्क्तिः पाव्यते यैर्द्विजोत्तमैः।
तान्निबोधत कार्त्स्न्येन द्विजाग्र्यान्पङ्क्तिपावनान्॥
अग्र्याः सर्वेषु वेदेषु सर्वप्रवचनेषु च।
श्रोत्रियान्वयजाश्चैव विज्ञेयाः पङ्क्तिपावनाः॥
त्रिणाचिकेतः पञ्चाग्निः त्रिसुपर्णः षडङ्गवित्।
ब्रह्मदेयात्मसन्तानश्छन्दोगो ज्येष्ठसामगः॥
वेदार्थवित्प्रवक्ता च ब्रह्मचारी सहस्रदः।
शतायुश्चैव विज्ञेया ब्राह्मणाः पङ्क्तिपावनाः"—इति॥

ब्रह्मदेयात्मसन्तानः ब्राह्मविवाहोढापुत्रः। सहस्रदः गवां सुवर्णस्य वा। यमोऽपि,—

"ये सोमपा विरजसो धर्मज्ञाः शान्तबुद्धयः।

बह्वृचश्च त्रिसौपर्णः त्रिमधुर्व्वाऽथ यो भवेत् ॥
त्रिनाचिकेतो विरजाश्छन्दोगो ज्येष्ठसामगः ।
अथर्वशिरसोऽध्येता सर्वे ते पङ्क्तिपावनाः ॥
शिशुरप्यग्निहोत्री च न्यायविच्च षडङ्गवित् ।
मन्त्रब्राह्मणविच्चैव यश्च स्याद्धर्म्मपाठकः ॥
ब्राह्मदेयासुतश्चैव भावशुद्धः सहस्रदः ।
चान्द्रायणव्रतचरः सत्यवादी पुराणवित् ॥
निष्णातः सर्व्वविद्यासु शान्तो विगतकल्मषः ।
गुरुवेदाग्निपूजासु प्रसक्तो ज्ञानतत्परः ॥
विमुक्तः सर्व्वदा धीरो ब्रह्मभूतो द्विजोत्तमः ।
अनमित्रो न चामित्रो मैत्र आत्मविदेव च ॥
स्नातको जप्यनिरतः सदा पुष्पबलिप्रियः ।
ऋजुर्मृदुः क्षमी दान्तः शान्तः सत्यव्रतः शुचिः
वेदज्ञः सर्व्वशास्त्रज्ञः उपवासपरायणः ।
गृहस्थो ब्रह्मचारी च चतुर्वेदविदेव च ॥
वेदविद्याव्रतस्नाताः ब्राह्मणाः पङ्क्तिपावनाः"—इति ।

पैठीनसिरपि । "अथातः पङ्क्तिपावना भवन्ति त्रिनाचिकेतस्त्रिमधुस्त्रिसुपर्णश्चीर्णव्रतश्छन्दोगो ज्येष्ठसामगो ब्रह्मदेयासुमन्तानः सहस्रदो वेदाध्यायी चतुर्वेदषडङ्गवित् अथर्वशिरसोऽध्यायी पञ्चाग्निर्वेदजापी चेति, तेषामेकैकः पुनाति पङ्क्तिं नियुक्तो मूर्धनि सहस्रैरप्युपहताम्" इति । शङ्खोऽपि,—

"ब्रह्मदेयानुसन्तानो ब्रह्मदेयाप्रदायकः ।

ब्रह्मदेयापतिश्चैव ब्राह्मणाः पङ्क्तिपावनाः॥
यजुषां पारगो यश्च साम्नां यश्चापि पारगः।
अथर्वशिरसोऽध्येता ब्राह्मणाः पङ्क्तिपावनाः॥
नित्यं योगपरो विद्वान् समलोष्टाश्मकाञ्चनः।
ध्यानशीलो यतिर्विद्वान् ब्राह्मणः पङ्क्तिपावनः"—इति॥

बोधायनोऽपि। "त्रिमधुस्त्रिनाचिकेतस्त्रिसुपर्णः पञ्चाग्निः षड़ङ्गविच्छिरोषकोऽध्येता सामगा इति पङ्क्तिपावनाः"—इति। हारीतोऽपि। "स्थितिरविच्छिन्नवेदवेदिताऽयोनिसङ्करित्वमार्षेयत्वञ्चेति कुलगुणाः, वेदाङ्गानि धर्मोऽध्यात्मविज्ञानं स्मृतिश्चेति षड्विधं श्रुतं, ब्राह्मणता देवपितृभक्तता समता सौम्यताऽपरोपतापिताऽनसूयता अनुद्धतता अपारुष्यं मित्रता प्रियवादित्वं कृतज्ञता शरण्यता प्रशान्तिश्चेति त्रयोदशविधं शीलम्,

क्षमा दमोदया दानमहिंसा गुरुपूजनम्।
शीलं स्नानं जपोहोमस्तपः स्वाध्यायएवच॥

सत्यवचनं सन्तोषो दृढव्रतत्वमुपव्रतत्वमिति षोडश गुणाः वृत्तं, तस्मात् कुलीनाः श्रुतशीलवन्तो वृत्तस्थाः सत्यवादिनोऽव्यङ्गाः पाङ्क्तेयाः। द्वादशोभयतः श्रोत्रियस्त्रिनाचिकेतस्त्रिसुपर्णस्त्रिमधुस्त्रिशीर्षको ज्येष्ठसामगः पञ्चाग्निः षडङ्गविद्रुद्रजाप्यूर्द्ध्वरेताः ऋतुकालगामी तत्त्वविच्चेति पङ्क्तिपावना भवन्ति"। स्थितिरविच्छिन्नसन्तानता। अविच्छिन्नवेदवेदितेत्यत्र हविरासादनार्थदेशविशेषवाची वेदिशब्दो हविःसाध्यं यागं लक्षयति। आर्षेयत्वं प्रवरवर्त्तिऋषिज्ञातत्वम्। धर्माधर्मशास्त्रं, विज्ञानं वैशेषिकादिशास्त्रविज्ञानम्। स्मृतिर्वेदशास्त्राविस्मरणम्।

उपपन्नत्वं दशम्यादावेकभक्तता । अत्रानुकल्पो याज्ञवल्क्येन दर्शितः,—

"स्वस्रीयर्त्विक्जामातृयाज्यश्वशुरमातुलाः ।
त्रिनाचिकेतदौहित्रशिष्यसम्बन्धिबान्धवाः"—इति ॥

अतएव मनुः,—

"अनुकल्पस्त्वयं ज्ञेयः सदा सद्भिरनुष्ठितः ।
मातामहं मातुलञ्च स्वस्रीयं श्वशुरं गुरुम् ॥
दौहित्रं विट्पतिं बन्धुमृत्विग्याज्यौ च भोजयेत्"—इति ॥

विट्पतिर्जामाता अतिथिर्वा । तदुक्तं देवस्वामिना । विट्पतिरतिथिरित्यन्ये वदन्तीति । आपस्तम्बोऽपि । "गुणवदलाभे सोदर्य्योऽपि भोजयितव्यः एतेनान्तेवासिनो व्याख्याताः"—इति । बोधायनोऽपि । "तदभावे रहस्यविदृचोयजूंषि सामानीति श्राद्धस्य महिमा तस्मादेवंविधं सपिण्डमप्याशयेत्"—इति । विष्णुपुराणेऽपि,—

"पितृव्यगुरुदौहित्रानृत्विक्स्वस्रीयमातुलान् ।
पूजयेद्धव्यकव्येन वृद्धानतिथिबान्धवान्"—इति ॥

अत्र ऋत्विक्पितृव्यसोदर्य्यसपिण्डा वैश्वदेवस्थाने नियोक्तव्याः न पित्रादिस्थाने । तथा चात्रिः,—

"पिता पितामहो भ्राता पुत्रो वाऽथ सपिण्डकः ।
न परस्परमर्घ्याः(१) स्युर्न श्राद्धे ऋत्विजस्तथा ॥
ऋत्विक्पुत्रादयो ह्येते सकुल्या ब्राह्मणा द्विजाः ।
वैश्वदेवे नियोक्तव्या यद्येते गुणवत्तराः"—इति ॥

शिष्यस्यापि वैश्वदेवस्थानएव निवेशः । सोदर्य्ये विहितस्यार्थस्य,

(१) मधुपर्कापरनामधेयोऽर्हणीयातिथ्यविशेषोऽर्घ्यमित्युच्यते ।

'एतेनान्तेवासिनो व्याख्याताः'—इत्यापस्तम्बेन शिष्येऽतिदेशात्। यत्तु मनुना कल्पान्तरमुक्तम्,—

"कामं श्राद्धेऽर्च्चयेन्मित्रं नाभिरूपमपि त्वरिम्।
द्विषता हि हविर्भुक्तं भवति प्रेत्य निष्फलम्"—इति॥

तन्न साक्षादनुकल्पाभिप्रायेण, किं त्वनुकल्पानुकल्पाभिप्रायेण। न श्राद्धे भोजयेन्मित्रमिति स्वेनैव निषिद्धस्य मित्रस्य काममर्च्चयेदिति सानुशयमेवाभ्यनुज्ञानात्। वसिष्ठोऽप्यनुकल्पानुकल्पमाह,—

"आनृशंस्यं परो धर्म्मो याचते यत् प्रदीयते।
अयाचतः सीदमानान् सर्व्वोपायैर्न्निमन्त्रयेत्"—इति॥

आनृशंस्यमुत्कृष्टो धर्म्मः, तेनायाचतः अयाचनशीलान्, अतएव सीदमानान् निर्गुणानपि सगुणानामनुकल्पानामभावे सर्व्वोपायैर्यथा ते निमन्त्रणमङ्गीकुर्व्वन्ति, तादृशैरुपायैर्न्निमन्त्रयेदिति। अयाचनशीलानामभावे याचमानाय निर्गुणाय प्रदीयते इति। एतदप्यनुकल्पो भवतीत्यर्थः। सम्भवति मुख्यकल्पे नानुकल्पोऽनुष्ठेयः। तथाऽऽह मनुः,—

"प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्त्तते।
न साम्परायिकं तस्य दुर्मतेर्विद्यते फलम्"—इति॥

साम्परायिकमुत्तरकालिकं स्वर्गादिकं फलमिति। भविष्यत्पुराणेऽपि,—

"ब्राह्मणातिक्रमो नास्ति मूर्खे वेदविवर्जिते।
ज्वलन्तमग्निमुत्सृज्य न हि भस्मनि हूयते"—इति।

वेदविवर्ज्जिते,—इति निर्गुणमात्रोपलक्षणार्थम्। अतएवोक्तं तत्रैव,—

"व्यतिक्रान्तेर्न दोषोऽस्ति निर्गुणान् प्रति कर्हिचित्।
यस्य लेकगृहे मूर्खोदूरस्थश्च गुणान्वितः।
गुणान्विताय दातव्यं नास्ति मूर्खे व्यतिक्रमः"—इति ॥

यत्तु पुराणान्तरेऽभिहितम्,—

"यस्त्वासन्नमतिक्रम्य ब्राह्मणं पतितादृते।
दूरस्थं भोजयेन्मूढोगुणाढ्यं नरकं व्रजेत् ॥
तस्मात् संपूजयेदेनं गुणं तस्य न चिन्तयेत्।
केवलं चिन्तयेज्जातिं न गुणान्विततां खग ॥
सन्निकृष्टं द्विजं यस्तु युक्तजातिं प्रियंवदम्।
मूर्खं वा पण्डितं वाऽपि वृत्तहीनमथापिवा।
नातिक्रमेन्नरोविद्वान् दारिद्र्याभिहतं तथा"—इति ॥

तद्दौहित्रजामात्रादिविषयम्। अतएव मनुः,—

"व्रतस्थमपि दौहित्रं श्राद्धे यत्नेन भोजयेत्"—इति ॥

व्रतस्थं केवलव्रतस्थमध्ययनादिरहितमित्यर्थः। गुणवत्सन्निकृष्टा-तिक्रमे तु प्रत्यवायोऽस्ति। तथाच पुराणम्,—

"सप्त पूर्व्वान् सप्त परान् पुरुषानात्मना सह।
अतिक्रम्य द्विजवरान् नरके पातयेत् खग ॥
तस्मान्नातिक्रमेद्विज्ञो ब्राह्मणान् प्रातिवेश्मिकान्।
संबन्धिनस्तथा सर्व्वान् दौहित्रं विट्पतिन्तथा ॥
भागिनेयं विशेषेण तथा बन्धुं खगाधिप।
नातिक्रमेन्नरश्चैतानमूर्खानपि गोपते ॥
अतिक्रम्य महारौद्रं रौरवं नरकं व्रजेत्"—इति ॥

अपिरेवकारार्थः। अमूर्खानेवातिक्रम्य नरकं व्रजेत्, न मूर्खानित्यभिप्रायः। श्राद्धे वर्जनीया ब्राह्मणा याज्ञवल्क्येन दर्शिताः,—

"रोगी हीनातिरिक्ताङ्गः काणः पौनर्भवस्तथा।
अवकीर्णी कुण्डगोलौ(१) कुनखी श्यावदन्तकः॥
भृतकाध्यापकः क्लीवः(२) कन्यादूष्यभिशस्तकः।
मित्रधुक् पिशुनः सोमविक्रयी परिविन्दकः॥
मातापितृगुरुत्यागी कुण्डाशी वृषलात्मजः।
परपूर्व्वापतिः स्तेनः कर्मदुष्टश्च निन्दितः"—इति॥

रोगी उन्मादादिरोगवान्। उन्मादादिरोगाश्च देवलेन वर्णिताः। "उन्मादस्त्वग्दोषोराजयक्ष्मा श्वासोमधुमेहोभगन्दरोऽश्मरीत्यष्टौ पापरोगाः"—इति। हीनं न्यूनमधिकमतिरिक्तमङ्गं यस्यासौ हीनातिरिक्ताङ्गः। एकेनाप्यक्ष्णा यो न पश्यति, असौ काणः। तेन च वधिरमूकमूर्खादयो लक्ष्यन्ते। द्विरूढ़ा पुनर्भूस्तस्यां जातः पौनर्भवः। अवकीर्णी क्षतव्रतः। कुनखी दुष्टनखः। श्यावदन्तः स्वाभाविककृष्णदन्तः। वेतनं गृहीत्वा योऽध्यापयति, स भृतकाध्यापकः। असता सता वा दोषेण कन्यां दूषयिता(३) कन्यादूषी। महापातकाभिशस्तकः। परिविन्दकः परिवेत्ता। कुण्डस्यान्नं योऽश्नाति स कुण्डाशी।

---

(१) कुण्डगोलौ,"—परस्त्रियां जातौ द्वौ सुतौ कुण्डगोलकौ। पत्यौ जीवति कुण्डः स्यान्मृते भर्त्तरि गोलकः"—इत्युक्तलक्षणौ।

(२) क्लीवः, "न मूत्रं फेनिलं यस्य विष्ठा चाप्सु निमज्जति। मेढ्रं चोन्मादशुक्राभ्यां हीनं क्लीवः स उच्यते"—इत्युक्तलक्षणः।

(३) दूषयिता,—इति तृजन्तं पदम्। अतएव कन्यामिति कर्म्मणि द्वितीया।

कुण्डशब्दोगोलकस्याप्युपलक्षकः। विहितकर्मपरित्यागी वृषलस्तत्सुतो-वृषलात्मजः। परपूर्व्वापतिः पुनर्भूपतिः। अदत्तादायी स्तेनः। कर्मदुष्टाः शास्त्रविरुद्धाचारोपेताः। एते श्राद्धे निन्दिता वर्ज्या-इत्यर्थः। मनुरपि,—

"ये स्तेनपतितक्लीवा ये च नास्तिकवृत्तयः।
तान् हव्यकव्ययोर्विप्राननर्हान् मनुरब्रवीत्॥
जटिलं चानधीयानं दुर्व्वालं कितवन्तथा।
याजयन्ति च ये पूर्व्वान् तांश्च श्राद्धे न भोजयेत्॥
चिकित्सकान् देवलकान् मांसविक्रयिणस्तथा।
यक्ष्मी च पशुपालश्च परिवेत्ता निराकृतिः॥
ब्रह्मद्विट् परिवित्तिश्च गणाभ्यन्तरएवच।
कुशीलवोऽवकीर्णी च वृषलीपतिरेवच॥
पौनर्भवश्च काणश्च यस्य चोपपतिर्गृहे।
भृतकाध्यापकोयश्च भृतकाध्यापितस्तथा॥
शूद्रशिष्योगुरुश्चैव वाग्दुष्टः कुण्डगोलकौ।
अकारणपरित्यक्ता मातापित्रोर्गुरोस्तथा॥
ब्राह्मैर्यौनैश्च संबन्धैः संयोगं पतितैर्गताः।
अगारदाही गरदः कुण्डाशी सोमविक्रयी॥
समुद्रयायी वन्दी च तैलिकः कूटकारकः।
पित्रा विवदमानश्च केकरो मद्यपस्तथा॥

केकरः तिर्य्यगदृष्टिः।

पापरोग्यभिशस्तश्च दाम्भिकोरसविक्रयी।

धनुःशराणां कर्त्ता च यश्चाग्रेदिधिषूपतिः ॥
मित्रध्रुक् द्यूतवृत्तिश्च पुत्राचार्य्यस्तथैवच ।
भ्रामरी गण्डमाली च श्वित्र्यथो पिशुनस्तथा ॥
उन्मत्तोऽन्धश्च वर्ज्याः स्युर्वेदनिन्दकएवच ।
हस्तिगोऽश्वोष्ट्रदमकोनक्षत्रैर्यश्च जीवति ।
पक्षिणां पोषको यश्च युद्धाचार्यस्तथैवच ।
स्रोतसां भेदकश्चैव तेषाञ्चावरणे रतः ॥
गृहसम्वेशको दूतो वृक्षरोपकएवच ।
श्वक्रीडी श्येनजीवी च कन्यादूषकएवच ॥
हिंस्रो वृषलपुत्रश्च गणानाञ्चैव याजकः ।
आचारहीनः क्लीवश्च नित्यं याचनकस्तथा ॥
कृषिजीवी शिल्पिजीवी सद्भिर्निन्दितएवच ।
औरभ्रिको माहिषिकः परपूर्वापतिस्तथा ॥
प्रेतनिर्यातकश्चैव वर्जनीयाः प्रयत्नतः ।
एतान्विगर्हिताचारानपाङ्क्तेयान्नराधमान् ॥
द्विजातिप्रवरो विद्वानुभयत्रापि वर्जयेत्”—इति ।

स्तेनोऽत्र ब्रह्मस्वव्यतिरिक्तद्रव्यापहारी विवक्षितः। तद्द्रव्यापहारिणः पतितशब्देनोपात्तत्वात्[१]। पारलौकिकफलदं कर्म्म नास्तीति मन्यमाना नास्तिकास्तेभ्यो वृत्तिर्जीविका येषान्ते नास्तिकवृत्तयः। जटिलो- ब्रह्मचारी। अनधीयानः,—इति जटिलविशेषणम्। अतश्चानधीयानो ब्रह्मचारी प्रतिषिध्यते। न तु ब्रह्मचारिमात्रं, तस्य श्राद्धे, ‘पञ्चाग्नि-

(१) पातित्यहेतुमहापातकमध्ये ब्रह्मस्वापहारस्य परिगणनादिति भावः।

ब्रह्मचारिणः'—इति पात्रत्वविधानात्। न चाध्ययनरहितस्य ब्रह्म-चारिणोऽश्रोत्रियत्वेन श्राद्धे प्रसक्त्यभावात् प्रतिषेधोऽनुपपन्नइति मन्तव्यम्। यतः,

"व्रतस्थमपि दौहित्रं श्राद्धे यत्नेन भोजयेत्"—

इत्यत्र दौहित्रग्रहणमविवक्षितमिति भ्रान्त्या अध्ययनरहितोऽपि ब्रह्मचारी श्राद्धे भोजनीयतया प्रसक्तः प्रतिषिध्यतइति। दुर्वालः खल्वाटः कपिलकेशो वा। तदुक्तं संग्रहकारेण,—

"खल्वाटकश्च दुर्वालः कपिलश्मश्रुएवच"—इति॥

कितवो द्यूतासक्तः। पुरयाजकाः गणयाजकाः। अत्र, श्राद्धे इति विशेषोपादानाद्दुर्वालादीनां श्राद्धएव वर्ज्यत्वं, न दैवे इत्यवगम्यते। अन्यथा, प्रकरणादेवोभयत्र निषेधावगमाद्विशेषोपादानमनर्थकं स्यात्। अतएव गौतमः। "हविःषु च दुर्वालादीन् श्राद्धएवैके"—इति। हविःषु च दैवेऽपि एवं पित्र्यवत्परीक्ष्य दुर्वालादीन्वर्जयेत्। एके मन्वादयः श्राद्धएव न भोजयेत्, दैवे तु भोजयेदित्याहुरित्यभि-प्रायः। चिकित्सकाः जीवनार्थमदृष्टार्थञ्च भेषजकारिणः। "तस्माद्-ब्राह्मणेन भेषजं न कार्यं अपूतो ह्येषोऽमेध्यो यो भिषक्"—इति अविशेषेणैव निन्दार्थवाददर्शनात्। धनार्थं संवत्सरत्रयं देवार्चको-देवलः। तदुक्तं देवलेन,—

"देवार्चनपरो नित्यं वित्तार्थी वत्सरत्रयम्।
असौ देवलको नाम हव्यकव्येषु गर्हितः॥
अपाङ्क्तेयः स विज्ञेयः सर्व्वकर्म्मसु सर्वदा"—इति।

आपद्यपि मांसविक्रयिणः। अनापदि विपणजीवित्वेनैव निषेधे

सिद्धे मांसविक्रयिणइति पुनर्विशेषोपादानस्य वैयर्थ्यात्। अनापदि वाणिज्येन जीवन्तो विपणजीविनः, न त्वापद्यपि। तत्र,

"चात्रेण कर्म्मणा जीवेद्विप्रां वाऽप्यापदि द्विजः"—

इति वाणिज्यस्यापत्कल्पतया विहितत्वात्। विहितत्यागकारणं विना श्रौतस्मार्त्ताग्निपरित्यक्ता परित्यक्ताग्निः। अल्पवृद्ध्या धनं स्वीकृत्याधिकवृद्ध्या धनप्रयोजको वार्धुषिकः। तथाच स्मृतिः,—

"समर्घं धनमुद्धृत्य महार्घं यः प्रयच्छति।
स वै वार्धुषिको नाम ब्रह्मवादिषु गर्हितः"—इति॥

यक्ष्मी क्षयरोगी। अनापदि पशुपालः। अविवाहिते ज्येष्ठे अनाहिताग्नौ वा सति यः कनीयान् कृतदारपरिग्रह आहिताग्निर्वा भवेत्, स परिवेत्ता तज्ज्येष्ठस्तु परिवित्तिः। तथाच मनुः,—

"दाराग्निहोत्रसंयोगं कुरुते योऽग्रजे स्थिते।
परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्व्वजः"—इति॥

अग्रजः सोदर्यो विवक्षितः। तथाच गर्गः,—

"सोदर्ये तिष्ठति ज्येष्ठे न कुर्याद्दारसंग्रहम्।
आवसथ्यं तथाऽऽधानं पतितस्त्वन्यथा भवेत्"—इति॥

आवसथ्यमावसथ्याधानं, आधानं गार्हपत्याद्याधानम्(१)। असोदर्ये तु न दोषः। तथाच शातातपः,—

"पितृव्यपुत्रान्सापत्न्यान् परनारीसुतांस्तथा।
दाराग्निहोत्रसंयोगे न दोषः परिवेदने"—इति॥

(१) आवसथ्योऽगृह्याग्निः स्मार्त्ताग्निरिति यावत्। गार्हपत्यादयस्तु श्रौताग्नयः। आदिग्रहणात् दक्षिणाग्न्याहवनीयाग्न्योर्ग्रहणम्।

परनारीसुताः चेत्रजा भ्रातरः। यमोऽपि,—

"पितृव्यपुत्रान्सापत्न्यान् परपुत्रांस्तथैवच।
दाराग्निहोत्रधर्म्मेषु नाधर्म्मः परिवेदने"—इति॥

परपुत्रा दत्तक्रीतादयः भ्रातरः। सोदर्यविषयेऽपि क्वचिद्दोषो-नास्ति। तथाच शातातपः,—

"क्लीवे देशान्तरस्थे च पतिते भिक्षुकेऽपि वा।
योगशास्त्राभियुक्ते च न दोषः परिवेदने"—इति॥

योगशास्त्राभियुक्तो विरक्तः। कात्यायनोऽपि,—

"देशान्तरस्थक्लीवैकवृषणानसहोदरान्।
वेश्यातिसक्तपतितशूद्रतुल्यातिरोगिणः(१)॥
जडमूकान्धवधिरकुब्जवामनखोडकान्।
अतिवृद्धानभार्यांश्च कृषिसक्तान् नृपस्य च(२)॥
धनवृद्धिप्रसक्तांश्च कामतोऽकारिणस्तथा।
कुहकोन्मत्तचोरांश्च(३) परिविन्दन् न दुष्यति"—इति॥

खोडो भग्नपादादयः। अभार्या नैष्ठिकब्रह्मचारिणः। कामतो-ऽकारिणः स्वेच्छयेव विवाहान्निवृत्ताः। देशान्तरगतादिषु कालप्रती-

---

(१) एकवृषणएकाण्डः पण्डविशेष इति रत्नाकरः। शूद्रतुल्याश्च, "गोरक्षकान् वाणिजिकान् तथा कारुकुशीलवान्। प्रेष्यान् वा-र्द्धुषिकांश्चैव विप्रान् शूद्रवदाचरेत्"—इति मनूक्तलक्षणाः।

(२) नृपस्य चेति चकारेण सक्तानित्यनुकृष्यते।

(३) कुलटोन्मत्तचोरांश्च,—इत्यन्यत्र पाठः। तत्पाठे तु, परकुलं पर-गोत्रमटति गच्छति प्राप्नोति यो दत्तकः स कुलटइत्यर्थोबोध्यः।

णामन्तरेण परिवेदने दोषोऽस्ति। तथाच वशिष्ठः। "अष्टौ दश द्वादशवर्षाणि ज्येष्ठं भ्रातरमनिर्विष्टमप्रतीक्षमाणः प्रायश्चित्ती भवति"—इति। अनिर्विष्टमकृतविवाहम्। अत्रेयं व्यवस्था। अदृष्टार्थमर्थार्थं वा द्वादशवर्षप्रतीक्षणं देशान्तरगतज्येष्ठविषयं[१], अष्टौ दशेति पक्षद्वयं कार्यान्तरार्थं देशान्तरगतविषयम्। तथा स्मृतिः,—

"द्वादशैव तु वर्षाणि ज्यायान् धर्मार्थयोर्गतः।
न्याय्यः प्रतीक्षितुं भ्राता श्रूयमाणः पुनः पुनः"—इति॥

क्लीबादयस्तु न प्रतीक्षणीयाः। तथाच स्मृतिः,—

"उन्मत्तः किल्बिषी कुष्ठी पतितः क्लीबएववा।
राजयक्ष्मामयावी च न न्याय्यः स्यात्प्रतीक्षितुम्"—इति॥

विरक्तवेश्यातिसक्तादिषु तु चिरकालानुवृत्त्या विवाहसम्भावनानिवृत्तावधिवेदनं न दोषाय, तत्र कालावधेरश्रुतत्वात्। आधानविषयेऽपि ज्येष्ठानुमत्याऽधिवेदने न दोषः। तथाच वृद्धवशिष्ठः,—

"अग्रजस्य यदाऽनग्निराधानं कथम्।
अग्रजानुमतः कुर्यादग्निहोत्रं यथाविधि"—इति॥

आधानाधिकारिणि ज्येष्ठेऽनाहिताग्नावपि कनिष्ठस्तदनुमत्याऽऽधानं कुर्यादित्यभिप्रायः। अयं न्यायः पित्रादिषु द्रष्टव्यः। तथाचोशनाः,—

"पिता पितामहो यस्य अग्रजो वाऽथ कस्यचित्।
तपोऽग्निहोत्रमन्त्रेषु न दोषः परिवेदने"—इति॥

यस्य कस्यचित् पिता पितामहो वाऽग्रजो वाऽऽहिताग्निर्न भवति,

---

(१) अदृष्टार्थमर्थार्थं वा देशान्तरगतेऽन्वयः।

तस्य तदनुमत्याऽऽधानकरणेऽपि न दोष इत्यर्थः । एवमेव कन्यापरिवेदनेऽपि दोषतदपवादौ द्रष्टव्यौ । अधीतविस्मृतवेदो निराकृतिः । तथाच देवलः,—

"अधीत्य विस्मृते वेदे भवेद्विप्रो निराकृतिः"—इति ।

नानाजातीया अनियमवृत्तयो गणास्तेषां मध्यवर्त्ती गणाभ्यन्तरः । कुशीलवो गायकादिः । वृषलीपतिस्तु रजस्वलायाः कन्यायाः पतिः । तदुक्तं देवलेन,—

"वन्ध्या तु वृषली ज्ञेया वृषली च मृतप्रजा ।
अपरा वृषली ज्ञेया कुमारी या रजस्वला ॥
यस्त्वेनामुद्वहेत् कन्यां ब्राह्मणो ज्ञानदुर्ब्बलः ।
अश्राद्धेयमपाङ्क्तेयं तं विद्याद्वृषलीपतिम्"—इति ॥

यस्य गृहे उपपतिर्जारः सदा संवसेत्, सोऽपि वर्ज्यः । तदुक्तं देवलेन,—

"परदाराभिगो मोहात् पुरुषो जार उच्यते ।
स एवोपपतिर्ज्ञेयो यः सदा संवसेद्गृहे"—इति ॥

वाग्दुष्टो निष्ठुरवाक् । पतितैर्महापातकिसंसर्गिभिः सह ब्राह्मैर्यौनैश्च सम्बन्धैर्विद्यायोनिसम्बन्धैर्यः संयोगं गतः, सोऽत्र विवक्षितः । न तु साक्षात् संसर्गी, तस्य पतितशब्देनैवोपात्तत्वात् । केकरोऽर्धदृष्टिः । अग्रेदिधिष्वाः पतिरग्रेदिधिषूपतिः । ज्येष्ठायामनूढायामूढा कनिष्ठा या, साऽग्रेदिधिषूः । तदुक्तं देवलेन,—

"ज्येष्ठायां यद्यनूढायां कन्यायामुह्यतेऽनुजा ।
सा चाग्रेदिधिषूर्ज्ञेया पूर्व्वा तु दिधिषूर्मता"—इति ॥

पुत्राचार्य्योऽध्वरपाठकः। भ्रामरी वृत्त्यर्थमेव भ्रमरवदर्थार्जकः। गृहसम्वेशको वर्धकिवृत्त्या वर्त्तमानः। उरभ्रा अवयः। तएव वृत्त्यर्थं पालनीया यस्यासावौरभ्रकः। महिष्यः पाल्यायस्यासौ माहिषकः। अथवा, व्यभिचारिणीपुत्रः। तदाह देवलः,—

"महिषीत्युच्यते भार्या सा चैव व्यभिचारिणी।
तस्यां यो जायते गर्भः स वै माहिषकः स्मृतः"—इति॥

एतान् पूर्व्वोक्तानुभयत्र दैवे पित्र्ये च वर्जयेदित्यर्थः। यमोऽपि,—

"काणाः कुब्जाश्च षंढाश्च कृतघ्ना गुरुतल्पगाः।
ब्रह्मघ्नाश्च सुरापाश्च स्तेना गोघ्नाश्चिकित्सकाः॥
राष्ट्रकामास्तथोन्मत्ताः पशुविक्रयिणश्च ये।
मानकूटास्तुलाकूटाः शिल्पिनो ग्रामयाजकाः॥
राजभृत्यान्धवधिरा मूर्खखल्वाटपङ्गवः।
वृषलीफेनपीताश्च[१] श्रेणियाजकयाजकाः॥
कालोपजीविनश्चैव ब्रह्मविक्रयिणस्तथा।
दण्डपूजाश्च* ये विप्राः ग्रामकृत्यपराश्च ये॥
आगारदाहिनश्चैव गरदा वनदाहकाः।
कुण्डाशिनो देवलकाः परदाराभिमर्शकाः॥
श्यावदन्ताः कुनखिनः शिल्पिनः कुष्ठिनश्च ये।
वणिजो मधुहर्त्तारो हस्त्यश्वदमका द्विजाः॥

---

* दण्डभूजाश्च,—इति मु०।

---

(१) वृषलीफेनपीताः शूद्रापतयः।

कन्यानां दूषकाश्चैव ब्राह्मणानाञ्च दूषकाः।
सूचकाः प्रेष्यकाश्चैव कितवाश्च कुशीलवाः॥
समयानाञ्च भेत्तारः प्रदाने ये च* बाधकाः।
अजाविका माहिषकाः सर्व्वविक्रयिणश्च ये॥
धनुःकर्त्ता द्यूतवृत्तिर्मित्रध्रुक् शस्त्रविक्रयी।
पाण्डुरोगा गण्डमाली यक्ष्मी च भ्रामरी तथा॥
पिशुनः कूटसाक्षी† च दीर्घरोगी वृथाऽऽश्रमी।
प्रव्रज्योपनिवृत्तश्च वृथा प्रव्रजितश्च यः॥
यश्च प्रव्रजिताज्जातः प्रव्रज्याऽवसितश्च यः।
तावुभौ ब्रह्मचण्डालावाह वैवस्वतो यमः॥
राज्ञः प्रेष्यकरोयश्च ग्रामस्य नगरस्य वा।
समुद्रयायी वान्ताशी केशविक्रयिणश्च ये॥
अवकीर्णी च वीरघ्नः(१) गुरुघ्नः पितृदूषकः।
गोविक्रयी च दुर्वालः पूगानां चैव याजकः॥
मद्यपश्च कदर्यश्च(२) सह पित्रा विवादकृत्।

---

* एव,—इति सो० ना०।

† कूटयाजी,—इति सो० ना०।

---

(१) वीरघ्नः अग्निपरित्यागी। "वीरहा वाएष देवानां योऽग्निमुद्वासयते"—इति श्रुतेः।

(२) "कदर्य्यः, "आत्मानं धर्म्मकृत्यञ्च पुत्रदारांश्च पीड़यन्। योलोभात् सञ्चिनोत्यर्थान स कदर्य्यइति स्मृतः"—इत्युक्तलक्षणः।

दाम्भिको वर्धकीभर्त्ता त्यक्तात्मा दारदूषकः ॥
मद्भिश्च निन्दिताचारः स्वकर्म्मपरिवर्जकः।
परिवित्तिः परिवेत्ता भृताचार्यो* निराकृतिः[१] ॥
शूद्राचार्यः सुताचार्यः शूद्रशिष्यस्तु नास्तिकः।
इष्वस्त्रदारकाचार्यो मानकृत्तैलिकस्तथा ॥
चोरा वार्धुषिका दुष्टाः परस्थानाश्च दूषकाः।
चतुराश्रमवाह्याश्च सर्वे ते पङ्क्तिदूषकाः॥
इत्येतैर्लक्षणैर्युक्तांस्तांद्विजान्न नियोजयेत्''—इति।

विद्यादिगुणयोगेऽप्येतेषां वर्जनीयत्वं ब्रह्माण्डपुराणेऽभिहितम्,—

''श्राद्धार्हगुणयोगेऽपि नैते जातु कथञ्चन।
निमन्त्रणीयाः श्राद्धेषु सम्यक् फलमभीप्सता''—इति॥

एवं ब्राह्मणान्प्रागेव सम्यक् परीक्ष्य पूर्व्वेद्युर्न्निमन्त्रयीत। तथाच हारीतः।''यत्नेनैवम्विधान् श्राद्धमाचरिष्यन् पूर्व्वेद्युर्निमन्त्रयेत्''—इति। असम्भवे परेद्युर्निमन्त्रयीत। तथाच कूर्म्मे,—

''श्वो भविष्यति मे श्राद्धं पूर्वेद्युरभिपूजयेत्।
असम्भवे परेद्युर्वा यथोक्तैर्लक्षणैर्युतान्''—इति॥

देवलोऽपि,—

''श्वः कर्त्ताऽस्मीति निश्चित्य दाता विप्रान्निमन्त्रयेत्।

---

* भृत्याचार्य्यो,—इति मु०।

(१) निराकृतिः,—''यस्त्वाधायाग्निमालस्याद्देवादीन्नैभिरिष्टवान्। निराकर्त्ताऽमरादीनां स विज्ञेयोनिराकृतिः'' इत्युक्तलक्षणः। अधीतविस्मृतवेदो वा (६९३ पृ०)।

निरामिषं सकृद्भुक्त्वा सर्व्वभुक्तजने गृहे ॥
असम्भवे परेद्युर्व्वा ब्राह्मणांस्तान्निमन्त्रयेत्"—इति ।

अत्र विशेषो मनुना दर्शितः,—
"पूर्व्वेद्युरपरेद्युर्व्वा श्राद्धकर्म्मण्युपस्थिते ।
निमन्त्रयीत त्र्यवरान् सम्यग्विप्रान् यथोदितान्"—इति ॥

वराहपुराणे,—
"वस्त्रशौचादि कर्त्तव्यं श्वः कर्त्ताऽस्मीति जानता ।
स्थानोपलेपनं भूमिं कृत्वा विप्रान्निमन्त्रयेत् ॥
दन्तकाष्ठञ्च विसृजेत् ब्रह्मचारी शुचिर्भवेत्"—इति ॥

श्राद्धभूमिं परिगृह्य गोमयादिना तत्स्थानोपलेपनं कृत्वा विप्रान् रात्रौ निमन्त्रयेदित्यर्थः(१) । तथाच ब्रह्माण्डपुराणम्,—
"पूर्व्वेऽह्नि रात्रौ विप्राग्र्यान् कृतसायन्तनाशनान् ।
गत्वा निमन्त्रयेद्देवपित्र्युद्देशसमन्वितः"—इति ॥

निमन्त्रणप्रकारः प्रचेतसा दर्शितः,—
"कृतापसव्यः पूर्व्वेद्युः पितॄन् पूर्व्वं निमन्त्रयेत् ।
भवद्भिः पितृकार्य्यन्नः सम्पाद्यञ्च प्रसीदत ॥
सव्येन वैश्वदेवार्थं प्रणिपत्य निमन्त्रयेत्(२)"—इति ।

अत्र प्रणतिपूर्व्वकं निमन्त्रणं शूद्रविषयम् । तथाच पुराणम्,—
"दक्षिणं चरणं विप्रः सव्यं वै क्षत्रियस्तथा ।

---

(१) तथाच, भूमिं,—इत्यनन्तरं परिगृह्य इत्यध्याहारइति भावः ।
(२) कृतापसव्यः प्राचीनावीती । पितॄन् उद्दिश्येति शेषः । सव्येन उपवीतिना ।

पादावादाय वैश्योद्वौ शूद्रः प्रणतिपूर्वकम्"—इति।

दक्षिणचरणस्पर्शो जानुप्रदेशे कर्त्तव्यः। तथाच मत्स्यः,—

"दक्षिणं जानुमालभ्य त्वं मयाऽत्र निमन्त्रितः"—इति।

पूर्व्वं निमन्त्रयेदित्यत्र(१) पूर्वपदस्य वैश्वदेवार्थं निमन्त्रयेदिति व्यवहितेनान्वयः। अतएव वृहस्पतिः,—

"उपवीती ततो भूत्वा देवताऽर्थे द्विजोत्तमान्।

अपसव्येन पित्र्ये च स्वयं शिष्योऽथवा सुतः(२)"—इति॥

पार्व्वणश्राद्धे ब्राह्मणसङ्ख्यामाह पैठीनसिः। "ब्राह्मणान् सप्त पञ्च द्वौ वा श्रोत्रियानामन्त्रयेत्"—इति॥

यदा पञ्च ब्राह्मणाः, तदा दैवे द्वौ पित्र्ये त्रय इति विभागः। "द्वौ दैवे पितृकार्य्ये त्रीन्"—इति मनुस्मरणात्। तस्मादयुग्मसङ्ख्या समविभागार्थं पित्र्ये त्रय इति युक्तम्। यत्तु शौनकेन पित्र्येऽपि युग्मविधानं कृतं, "एकैकस्य द्वौ द्वौ"—इति, तद्वृद्धिश्राद्धविषयम्। पित्रादिस्थानेषु सति सामर्थ्ये एकैकस्य त्रींस्त्रींन्विप्रान् भोजयेत्। तथाच शौनकः। "एकैकमेकैकस्य त्रींस्त्रीन्वा"—इति। अत्यन्तविभवे सत्येकैकस्य पञ्च सप्त वा ब्राह्मणान् भोजयेत्। तथाच गौतमः। "नवावरान् भोजयेदयुजो वा यथोत्साहम्"—इति॥

अस्यार्थः। यथोत्साहं यथाविभवं पित्रादिस्थानेषु प्रत्येकमयुजः पञ्च सप्त वा ब्राह्मणान् भोजयेदिति। वचनस्य कथं पञ्चसु सप्तसु वा ब्राह्मणेषु पर्य्यवसानम्?

---

(१) पितॄन् पूर्व्वं निमन्त्रयेदिति प्रचेतोवचने इत्यर्थः।

(२) निमन्त्रयेदिति शेषः।

"सामर्थ्येऽपि नवभ्योऽर्वाग्भोजयीत सति द्विजान् ।
नोर्ध्वं कर्त्तव्यमित्याहुः केचित्तद्दोषदर्शिनः[१]"—

इति ब्रह्माण्डपुराणवचनादिति ब्रूमः । शौनकगौतमाभ्यामुक्तोऽयं श्राद्धविस्तरो मनुना नादृतः,—

"द्वौ दैवे पितृकार्ये त्रीन् एकैकमुभयत्र वा ।
भोजयेत्सुसमृद्धोऽपि न प्रसज्येत विस्तरे ॥
सत्क्रियां देशकालौ च शौचं ब्राह्मणसम्पदम् ।
पञ्चैतान्विस्तरो हन्ति तस्मान्नेहेत विस्तरम्" ॥

इत्यकारणमेव विस्तरप्रतिषेधात् । अतएव वृद्धवृहस्पतिरपि,—

"एकैकमथवा द्वौ त्रीन् दैवे पित्र्ये च भोजयेत् ।
सत्क्रियाकालपात्रादि न सम्पद्येत विस्तरे"—इति ॥

वसिष्ठोऽपि,—

"द्वा दैवे पितृकार्ये त्रीनेकैकमुभयत्र वा ।
भोजयेत्सुसमृद्धोऽपि विस्तरन्तु विवर्जयेत्"—इति ॥

अतएव याज्ञवल्क्येनापि सङ्कोचएव पक्षो विहितः,—

"द्वौ दैवे प्राक्त्रयः पित्र्यउत वैकैकमेववा ।
मातामहानामप्येवं तन्त्रं वा वैश्वदेविकम्"—इति ॥

एकैकमुभयत्र वेति ब्राह्मणाद्यसम्भवे वेदितव्यम् । यत्तु शङ्खेनोक्तम्,—

"भोजयेदथवाऽप्येकं ब्राह्मणं पङ्क्तिपावनम्"—इति ।

तदप्यलाभविषयम् । यदाप्येकएव भोक्ता तदैवमाह वसिष्ठः,—

(१) तद्दोषदर्शिनः ब्राह्मणबाहुल्यदोषदर्शिनः । स च दोषोऽनुपदमेव वक्ष्यते ।

"यद्येकं भोजयेच्छ्राद्धे दैवं तत्र कथं भवेत्।
अन्नं पात्रे समुद्धृत्य सर्वस्य प्रकृतस्य तु॥
देवतायतने कृत्वा यथाविधि प्रवर्त्तयेत्।
प्रास्येदग्नौ तदन्नन्तु दद्याद्वा ब्रह्मचारिणे"—इति॥

निमन्त्रणे नियमान्तरमाह मत्स्यः,—

"पठन्निमन्त्र्य नियमान् श्रावयेत् पैतृकान् बुधः।
अक्रोधनैः शौचपरैः सततं ब्रह्मचारिभिः॥
भवितव्यं भवद्भिश्च मया च श्राद्धकारिणा"—इति।

निमन्त्रितैर्यत्कर्त्तव्यं तदाहात्रिः,—

"ते तन्तथेत्यविघ्नेन गतेयं रजनी यदि।
यथाश्रुतं प्रतीक्षेरन् श्राद्धकालमतन्द्रिताः"—इति॥

ते निमन्त्रिता विप्रास्तं श्राद्धकर्त्तारमविघ्नपूर्वकं तथाऽस्त्वित्युक्त्वा यथाश्रुतं विहितं नियमजातं, श्राद्धकालं श्राद्धे भुक्तं यावत् जीर्यति तावदनुतिष्ठेरन्नित्यर्थः। तथाच प्रचेताः,—

"आऽशनपरिणामात्तु ब्रह्मचर्यं द्वयोः स्मृतम्"—इति।

यमोऽपि,—

"आमन्त्रितास्तु ये विप्रा श्राद्धकालउपस्थिते।
वसेयुर्नियताहारा ब्रह्मचर्यपरायणाः॥
अहिंसा सत्यमक्रोधो दूरे चागमनक्रिया।
अभारोद्वहनञ्चेति श्राद्धस्योपासनाविधिः"—इति॥

तथाऽस्त्वित्यङ्गीकारः सति सामर्थ्ये अनिन्दितामन्त्रणविषयः। तथाच कात्यायनः। "अनिन्द्येनामन्त्रिते नातिक्रामेत्"। शक्तेन न

प्रत्याख्यानं कर्त्तव्यमिति । यस्त्वामन्त्रणमङ्गीकृत्य सत्यपि सामर्थ्ये पश्चान्निवारयति तस्य दोषोऽस्ति । तथाच मनुः,—

"केतितस्तु* यथान्यायं हव्यकव्ये द्विजोत्तमः ।
कथञ्चिदप्यतिक्रामन् पापः शूकरतां व्रजेत्"—इति ॥

केतितो निमन्त्रितः । यमोऽपि,—

"आमन्त्रितश्च यो विप्रो भोक्तुमन्यत्र गच्छति ।
नरकाणां शतं गत्वा चण्डालेष्वभिजायते"—इति ॥

निमन्त्रितब्राह्मणपरित्यागे प्रत्यवायोऽस्ति । तथाच नारायणः,—

"निकेतनं कारयित्वा निवारयति दुर्म्मतिः ।
ब्रह्महत्यामवाप्नोति शूद्रयोनौ च जायते"—इति ॥

यस्त्वामन्त्रितो विप्रस्त्वाहूतोऽपि श्राद्धकालातिक्रमं करोति तस्य प्रत्यवाय आदिपुराणेऽभिहितः,—

"आमन्त्रितश्चिरं नैव कुर्याद्विप्रः कदाचन ।
देवतानां पितॄणाञ्च दातुरन्नस्य चैव हि ॥
चिरकारी भवेद्द्रोही पच्यते नरकाग्निना"—इति ।

दातृभोक्त्रोर्ब्रह्मचर्यनियमातिक्रमे प्रत्यवायस्तु तत्र तत्रोक्तः । तत्र वृद्धमनुः,—

"ऋतुकालं† नियुक्तो वा नैव गच्छेत् स्त्रियं क्वचित् ।
तत्र गच्छन् समाप्नोति ह्यनिष्टफलमेव तु"—इति ॥

---

* केगित,—इति पाठः सो० ना० । एवं परत्र ।

† ऋतुकालं प्राप्येति शेषः । ऋतुकाले,—इति समीचीनः पाठः ।

गौतमः। "सद्यः श्राद्धी शूद्रातल्पगतस्तत्पुरीषे मासं नयेत पितॄन्"—इति। श्राद्धी श्राद्धकर्त्ता सद्यस्तत्क्षणमारभ्येत्यर्थः। मनुः,—

"आमन्त्रितस्तु यः श्राद्धे वृषल्या सह मोदते।

दातुर्यद्दुष्कृतं किञ्चित् तत्सर्व्वं प्रतिपद्यते"—इति॥

यमः,—

"आमन्त्रितस्तु यः श्राद्धे अध्वानं प्रतिपद्यते।

भवन्ति पितरस्तस्य तन्मासं पांशुभोजनाः"—इति॥

श्राद्धदिनकृत्यं प्रचेतसा दर्शितम्,—

"श्राद्धभुक् प्रातरुत्थाय प्रकुर्याद्दन्तधावनम्।

श्राद्धकर्त्ता तु कुर्व्वीत न दन्तधावनं बुध"—इति॥

देवलोऽपि,—

"तथैव यन्त्रितो दाता प्रातः स्नात्वा सहाम्बरः।

आरभेत नवैः पात्रैरन्वारम्भं सबान्धवैः॥

तिलानवकिरेत्तत्र सर्व्वतो बन्धयेदजान्।

असुरापहृतं सर्व्वं तिलैः शुध्यत्यजेन च॥

ततोऽन्नं बहुसंस्कारं नैकभाजनभक्ष्यवत्।

चोष्यपेयसमृद्धञ्च यथाशक्ति प्रकल्पयेत्"—इति॥

अत्र द्रव्याणि प्रचेताआह,—

"कृष्णमाषास्तिलाश्चैव श्रेष्ठाः स्युर्यवशालयः।

महायवा व्रीहियवास्तथैवच मधूलिकाः॥

कृष्णाः श्वेताश्च लोहाश्च ग्राह्याः स्युः श्राद्धकर्म्मणि"—इति।

यवाः सितशूकाः शालयः कलमाद्याः। महायवा व्रीहियवाश्च

यवविशेषाः। मधूलिका धान्यविशेषः। कृष्णाः स्थलजाः कृष्णवर्णव्रीहयः। लोहा रक्तशालयः। मार्कण्डेयोऽपि,—

"यवव्रीहिसगोधूमाः तिलमुद्गाः ससर्षपाः।
प्रियङ्गवः कोविदारः निष्पावा*(१)श्चात्र शोभनाः"—इति॥

अत्र गोधूमानामावश्यकत्वमभिहितम्,—

"अगोधूमञ्च यच्छ्राद्धं कृतमप्यकृतं भवेत्"—इति॥

वायुपुराणेऽपि,—

"विल्वामलकमृद्वीकापनसाम्रातदाडिमम्।
चव्यम्पालेवताचोटखर्जूराणां फलानि च(२)॥
कशेरुकोविदारश्च तालकन्दस्तथा विसम्।
कालेयं कालशाकञ्च सुनिषण्णं† सुवर्चला॥
कट्फलं किङ्किनी(३) द्राक्षा लकुचं मोचमेवच।
कर्कन्धूग्रीवकं चारु तिन्दुकं मधुसाह्वयम्॥
वैकङ्कतं नालिकेरं शृङ्गाटकपरूषकम्।
पिप्पली मरिचञ्चैव पटोलं वृहतीफलम्॥

* निष्पाता,—इति ना० ।
† सुनिष्पन्नं,—इति पाठान्तरम् ।

(१) निष्पावः शिम्बीस्तृणोदक्षिणापथे प्रसिद्ध इति कल्पतरुः ।
(२) पालेवतः काश्मीरके उ इति प्रसिद्ध इति श्राद्धचिन्तामणिः । प्राचीनामलक इति प्रकाशकारः ।
(३) किङ्किनी अम्लरसा द्राक्षेति लक्ष्मीधरः । हलायुधेन तु किङ्किनी जलजम्बूरिति व्याख्यातम् ।

सुगन्धिमत्स्यमांसञ्च कलायाः सर्व एवच।
एवमादीनि चान्यानि स्वादूनि मधुराणि च॥
नागरञ्चात्र वै देयं दीर्घमूलकमेवच"—इति।

मृद्वीका द्राक्षा। आम्रातकः कपीतनः। चव्यस्त्वविका। अक्षोटः शैलोद्भवः। कशेरु भद्रमुस्ता। कालेयकं दारुहरिद्रा। सुनिषण्णं वितुन्नशाकम्। कट्फलं श्रीपर्णिका। लकुचो लिकुचः। मोचं कदलीफलं। कर्कन्धूर्बदरी। तिन्दुकः क्षितिसारकः। शृङ्गाटकं जलजन्तिकण्टकम्। बृहतीफलं निदिग्धिकाफलम्। दीर्घमूलकन्तुण्डिकेरीफलम्। बिल्वामलकादीनि प्रसिद्धानि। पालेवतपरूषकादीन्यप्रसिद्धानि। शङ्खोऽपि,—

"आम्रान् पालेवतानिक्षून्मृद्वीकां चव्यदाडिमम्।
विदार्यांश्च भचुण्डांश्च श्राद्धकालेऽपि दापयेत्।
द्राक्षामधुयुतां दद्यात् शक्तून् शर्करया सह॥
दद्याच्छ्राद्धे प्रयत्नेन शृङ्गाटककशेरुकान्"—इति।

आदित्यपुराणेऽपि,—

"मधूकं रामठञ्चैव कर्पूरं मरिचं गुडम्।
श्राद्धकर्मणि शस्तानि सैन्धवं त्रपुषं तथा"—इति॥

अत्र विशेषो मार्कण्डेयेन दर्शितः,—

"गोधूमैरिक्षुभिर्मुद्गैः चीणकैश्चणकैरपि।
श्राद्धेषु दत्तैः प्रीयन्ते मासमेकं पितामहाः॥
विदार्याश्च भचूडैश्च बिसैः शृङ्गाटकैस्तथा।
केचुकैश्च तथा कन्दैः कर्कन्धुबदरैरपि॥
पालेवतैरातुकैश्चाप्याक्षोटः पनसैस्तथा।

काकोल्यः चीरकाकोल्यः तथा पिण्डालकैः शुभैः ॥
लाजाभिश्च मलाभिश्च त्रपुषैर्वारुचिर्भिटैः ।
सर्षपाराजशाकाभ्यामिङ्गुदैराजजम्बुभिः ॥
प्रियालामलकैर्मुख्यैः पङ्गुभिश्च तिलम्बकैः ।
वेत्राङ्कुरैस्तालकन्दैश्चक्रिकाचीरिकावचैः ॥
मोचैः समोचैर्लकुचैस्तथा वै वीजपूरकैः ।
मुञ्जातकैः पद्मफलैर्भक्ष्यभोज्यैः सुसंस्कृतैः ॥
रागषाडवचोष्यैश्च त्रिजातकसमन्वितैः ।
दत्तैस्तु मासं प्रीयन्ते श्राद्धेषु पितरो नृणाम्"—इति ॥

विदारी कृष्णवर्णभूकुष्माण्डफलम् । केचुकः कचूराख्यशाकम् । कन्दः शूरणः । उर्व्वारुः स्वादुकर्कटी । चिर्भिटस्तिक्तकर्कटी । सर्षपेति दीर्घः छान्दसः । राजशाकं कृष्णसर्षपः । इङ्गुदः तापसतरुः । प्रियालोराजादनम् । चक्रिका चिञ्चा । चीरिका फलाध्यचम् । रागषाडवाः पानविशेषाः । त्रिजातकं लवङ्गैलागन्धपत्राणि । मत्स्यपुराणेऽपि,—

"अन्नन्तु सदधिचीरं गोघृतं शर्कराऽन्वितम् ।
मासं प्रीणाति सर्वान् वै पितॄनित्याह केशवः"—इति ॥

मनुरपि,—

"तिलैर्व्रीहियवैर्माषैरद्भिर्मूलफलेन वा ।
दत्तेन मासं प्रीयन्ते विधिवत्पितरो नृणाम् ॥
द्वौ मासौ मत्स्यमांसेन त्रीन्मासान् हारिणेन तु ।
औरभ्रेणाथ चतुरः शाकुनेनेह पञ्च वै ॥

षण्मासांश्छागमांसेन पार्षतेनेह सप्त वै[१]।
अष्टावेणस्य मांसेन रौरवेण नवैव तु॥
दश मासांस्तु तृप्यन्ति वराहमहिषामिषैः।
शशकूर्म्मयोस्तु मांसेन मासानेकादशैव तु॥
संवत्सरन्तु गव्येन पयसा पायसेन वा।
वार्द्ध्रीणसस्य मांसेन तृप्तिर्द्वादशवार्षिकी॥
कालशाकं महाशल्कं खड्गं लोहामिषं मधु।
आनन्त्यायैव कल्पन्ते मुन्यन्नानि च सर्व्वशः"—इति॥

वार्द्ध्रीणसो रक्तवर्णवृद्धच्छागलः। तदुक्तं विष्णुधर्म्मोत्तरे,—

"त्रिपिवन्त्विन्द्रियक्षीणं[२] यूथस्याग्रसरं तथा।
रक्तवर्णन्तु राजेन्द्र, छागं वार्द्ध्रीणसं विदुः"—इति॥

पक्षिविशेषो वा,—

"कृष्णग्रीवो रक्तशिराः श्वेतपक्षो विहङ्गमः।
स वै वार्ध्रीणसः प्रोक्तः इत्येषा वैदिकी श्रुतिः"—इति

निगमवचनात्। कालशाकमुत्तरदेशे प्रसिद्धम्। महाशल्को मत्स्यविशेषः। खड्गः खड्गमृगः। लोहो लोहितवर्णच्छागः। मुन्यन्नानि नीवाराद्यन्नानि। श्राद्धे कोद्रवादिधान्यानि वर्जयेत्। तथाच व्यासः,—

"अश्राद्धेयानि धान्यानि कोद्रवाः पुलकास्तथा;
हिङ्गुद्रव्येषु शाकेषु कालानलशुभास्तथा"—इति॥

---

(१) पार्षतादयो मृगजातिविशेषाः।

(२) जलपानकाले यस्यास्यं नासिकाद्वयं च जले निमज्जति, सोऽयं त्रिपिव इत्युच्यते। त्रिभिर्नासिकाद्वयमुखैः पिवतीति व्युत्पत्तेः।

कोद्रवाः कोरदूषकाः। पुलकाः पुलाकाः छान्दसोऽत्र ह्रस्वः। संस्कारकद्रव्येषु हिङ्गुद्रव्यमश्राद्धेयम्। कालः कृष्णर्जुकः। अनल-श्चित्रकः। शुभा शुभाख्यः शाकविशेषः। एतानि शाकान्यश्राद्धे-यानि। ननु,—

"मधूदं रामठञ्चैव कर्पूरं मरिचं गुड़म्"—इति

आदिपुराणे हिङ्गुद्रव्यस्य श्राद्धेयत्वमुक्तं, तत्कथं तस्याश्राद्धेयत्व-मुच्यते,—इति। सत्यं, "अतिरात्रे षोडशिनं गृह्णाति नातिरात्रे षोडशिनं गृह्णाति"—इति वदत्रापि विधिप्रतिषेधदर्शनाद्विकल्पोऽस्तु। एवमेवान्यत्रापि। भारद्वाजोऽपि। "मुद्गाढकीमाषवर्जं विदलानि दद्यात्"—इति। मुद्गः कृष्णेतरः, आढकी तुवरी, माषो राजमाषः, एतैर्व्विना विदलानि दद्यादित्यर्थः। माषग्रहणं कुलत्थादीनामुप-लक्षणार्थम्। अतएव चतुर्विंशतिमतम्,—

"कोद्रवान्राजमाषांश्च कुलत्थान्वरकांस्तथा।
निष्पावांस्तु विशेषेण पञ्चैतांस्तु विवर्जयेत्॥
यावनालानपि तथा वर्जयन्ति विपश्चितः"—इति।

वरकाः वनमुद्गाः। अन्यत्प्रसिद्धम्। अत्र निष्पावनिषेधः कृष्ण-निष्पावविषयः,

"कृष्णधान्यानि सर्व्वाणि वर्जयेत् श्राद्धकर्म्मणि"—इति

स्मरणात्। "निष्पावाश्चात्र शोभनाः"—इति मार्कण्डेयपुराणं कृष्णेतरनिष्पावविषयतया व्यवस्थापितं भवति। मरीचिरपि,—

"कुलत्थाश्चणकाः श्राद्धे न देयाश्चैव कोद्रवाः।
कटुकानि च सर्व्वाणि विरसानि तथैव च"—इति॥

विष्णुपुराणेऽपि,—

"श्राद्धे न देया पालङ्क्या तथा निष्पावकोद्रवाः।
मसूरचारवास्तूककुलत्थशणशिग्रवः"—इति॥

पालङ्क्या मुकुन्दः, मसूरो मङ्गल्यकः, चारो यवचारादिः। विष्णुरपि। "भूतृणशिग्रुसर्षपसुरसार्जककुष्माण्डालावुवार्त्ताकुपालङ्क्या-तण्डुलीयककुसुम्भमहिषीचीरादि वर्जयेत्"—इति। भूस्तृणो भूतृणः छान्दसत्वात् सुडभावः। सर्षपोऽत्र राजसर्षपः। "कुसुम्भं राज-सर्षपम्"—इति स्मृत्यन्तरे विशेषितत्वात्। सुरसा निर्गुण्डा। अर्जकः श्वेतार्जकः। उशना अपि,—

"नालिकाशणच्छत्राककुसुम्भानम्बुविड्भवान्।
कुम्भीकम्बुकवृन्ताककोविदारांश्च वर्जयेत्॥
वर्जयेद्गृञ्जनं श्राद्धे काञ्चिकं पिण्डमूलकम्।
करञ्जं येऽपि चान्ये वै रसगन्धोत्कटास्तथा"—इति॥

नालिका दीर्घनालाग्रगताऽल्पपल्लवा। छत्राकं सिलिन्धुः। कुम्भी श्रीपर्णिका। कम्बुकं वृत्तालावु। गृञ्जनो हरिद्रकवर्णः पलाण्डुविशेषः। काञ्चिकं आरनालकम्। करञ्जश्चिरविल्वफलम्। पुराणेऽपि,—

"वांशङ्करीरं सुरसं सर्जकं भूतृणानि च।
अवेदोक्ताश्च निर्यासा लवणान्यौषराणि च॥
श्राद्धकर्म्मणि वर्ज्यानि याश्च नार्यो रजस्वलाः"—इति॥

वांशङ्करीरं वंशाङ्कुरः। सर्जकः पीतसारकः। अवेदोक्ता वेदे निषिद्धा निर्यासाः मसनप्रभवादयः। औषराणि लवणानि कृतलव-

णानि । रजस्वलाः दिनत्रयादूर्द्ध्वमनिवृत्तरजसः । भरद्वाजोऽपि,—

“नक्रोद्धृतन्तु यत्तोयं पल्वलाम्बु तथैवच ।
स्वल्पाम्बु कुष्माण्डफलं वज्रकन्दश्च पिप्पली ॥
तण्डूलीयकशाकञ्च माहिषञ्च पयोदधि ।
शिम्बिकानि करीराणि कोविदारगवेधुकम् ॥
कुलत्थशणजम्बीरकरम्भाणि तथैवच ।
अजादन्यद्रक्तपुष्पं शिग्रुः चारं तथैवच ॥
नीरसान्यपि सर्व्वाणि भक्ष्यभोज्यानि यानि च ।
एतानि नैव देयानि सर्व्वस्मिन् श्राद्धकर्मणि ॥
आविकं मार्गमौष्ट्रञ्च सर्वमैकशफञ्च यत् ।
माहिषञ्चामरञ्चैव पयो वर्ज्यं विजानता”—इति ॥

आविकमवीनां पयः । मार्गं मृगीणां पयः । औष्ट्रमुष्ट्रीनां पयः । ऐकशफं वडवापयः । माहिषं महिषीपयः । चामरं चमरीपयः । ब्रह्माण्डपुराणेऽपि,—

“द्विःस्विन्नं परिदग्धञ्च तथैवाग्रावलेहितम् ।
शर्क्कराकीटपाषाणैः केशैर्य्यच्चाप्युपद्रुतम् ॥
पिण्याकं मथितञ्चैव तथातिलवणञ्च यत् ।
दधि शाकं तथा भक्ष्यमुष्णञ्चोषविवर्ज्जितम् ॥
वर्ज्जयेच्च तथा चान्यान् सर्वानभिमतानपि ।
सिद्धाः कृतास्च ये भक्षाः प्रत्यक्षलवणीकृताः ॥
वाग्भावदुष्टास्च तथा दुष्टैश्चोपहतास्तथा ।
वाससा चोपधूतानि वर्ज्यानि श्राद्धकर्म्मणि”—इति ॥

द्विःखिन्नं द्विःपक्वम्[१]। परिदग्धमविदग्धम्। अग्रावलेहितं पूर्व्वमेवान्येनास्वादितम्। मथितं विलोलितं निर्जलं दधि। सिद्धा भक्ता आमलकादयः, प्रत्यक्षलवणेन मिश्रिताः। शङ्खोऽपि,—

"कृष्णाजाजीं विडञ्चैव सीतपाकीं तथैव च।
वर्जयेल्लवणं सर्वं तथा जम्बूफलानि च॥
अवक्षुतावरुदितं तथा श्राद्धेषु वर्जयेत्"—इति।

कृष्णाजाजी कृष्णजीरकः। विडम्बिडालाख्यम्। लवणं कृतलवणम्। श्राद्धे कुष्माण्डादिनिषिद्धद्रव्योपादाने प्रत्यवायोऽस्ति। तथाच स्मृत्यन्तरम्,—

"कुष्माण्डं महिषीक्षीरं आढक्योराजसर्षपाः।
चणकाराजमाषाश्च घ्नन्ति श्राद्धमसंशयः॥
पिण्डालुकश्च शुण्ठीं च करमर्दांश्च नालिकाम्।
कुष्माण्डं बहुबीजानि श्राद्धे दत्वा प्रयात्यधः"—इति॥

करमर्दः सुषेणः। बहुबीजानि बीजपूरादीनि। नित्यभोजने प्रतिषिद्धमपि श्राद्धे न देयम्। अतएवोक्तं षड्त्रिंशन्मते,—

"क्षीरादि महिषीवर्ज्यं अभक्ष्यं यच्च कीर्त्तितम्"—इति।

नित्यभोजने वर्ज्यानि शाकानि पैठीनसिनोक्तानि। "वृन्ताकनालिकापोतकुसुंभाश्मन्तकाश्चेति शाकानामभक्ष्याश्च"—इति। पोतं पोतिका। वृन्ताकनिषेधस्तु श्वेतवृन्ताकविषयः। अतएव देवलः,—

---

(१) द्विःपक्वं च तदेव, यत् सूपकारशास्त्रापेक्षितपाकनिष्पत्त्यनन्तरं शैत्यादिनिवृत्तये पुनः पाकान्तरयुक्तम्। न त्वर्द्धपाकानन्तरं तत्शास्त्रोक्तसम्भारसम्पन्नपाकान्तरसिद्धं व्यञ्जनादि। अतीतार्थनिष्ठानिर्देशात्।

"कण्डूरं श्वेतवृन्ताकं कुम्भाण्डञ्च विवर्जयेत्"—इति ।

कण्डूराप्यात्मगुप्ता कपिकच्छूः कण्डूरा, तस्याः फलं कण्डूरम् । कुम्भवृन्तवद्वर्त्तुलं वृत्तालाबुसदृशं कुम्भाण्डम् । भविष्यत्पुराणेऽपि,—

"लशुनं गृञ्जनञ्चैव पलाण्डुकवकानि च ।
वृन्ताकनालिकालाबु जानीयाज्जातिदूषितम्"—इति ॥

लशुनं श्वेतकन्दः पलाण्डुविशेषः,—

"लशुनं दीर्घपत्रञ्च पिच्छगन्धो महौषधम् ।
परण्डश्च पलाण्डुश्च लतार्कश्च परारिका ॥
गृञ्जनं यवनेष्टश्च पलाण्डोर्दश जातयः"—इति

सुश्रुतेनोक्तत्वात् । कवकं छत्राकम् । हारीतोऽपि । "न वटप्लक्षो-डुम्बरदधित्थनीपमातुलङ्गानि वा भक्षयेत्"—इति । मनुरपि,—

"लोहितान् वृक्षनिर्यासान् व्रश्चनप्रभवांस्तथा ।
शेलुं गव्यञ्च पीयूषं प्रयत्नेन विवर्जयेत्"—इति ॥

लोहिता वृक्षनिर्यासा लाक्षादयः । लोहितग्रहणात् निर्यासत्वेऽपि पाटलश्वेतवर्णहिङ्गुकर्पूरादेरप्रतिषेधः । शेलुः श्लेष्मातकः । पीयूषोऽभि-नवप्पयः । ब्रह्मपुराणे,—

"घृतात्फेनं घृतान्मण्डं पीयूषमथ चार्द्रगोः ।
न गुडं मरिचाक्तन्तु तथा पर्युषितं दधि ॥
दीर्णं तक्रमपेयञ्च नष्टस्वादु च फेनवत्"—इति ।

घृतादुद्धृत्य तत्फेनमात्रं न पेयम् । घृतादुद्धृत्य मण्डं तदग्रञ्च न पेयम् । आर्द्रगोः प्रसवप्रभृत्यनिवृत्तरजस्कायागोः पीयूषं न पेयम् । गुडं मरिचोपगतं पर्युषितं दधि च, दीर्णं स्फुटितं तक्रं

दीर्घकालस्थित्या नष्टत्वाद् च फेनवच्च न पेयम्। याज्ञवल्क्योऽपि,—

"सन्धिन्यनिर्दशाऽवत्सगोः पयः परिवर्जयेत्।
औष्ट्रमैकशफं स्त्रैणमारण्यकमथाविकम्"—इति॥

या वृषेण सन्धीयते सा सन्धिनी, अनिर्दशा अनिर्गतदशराचा, अवत्सा वत्सरहिता। एतासां गवां पयः परिवर्जयेत्। आरण्यकपयोनिषेधश्चारण्यकमहिषीव्यतिरिक्तविषयः। तदाह मनुः,—

"अनिर्दशाया गोः क्षीरमौष्ट्रमैकशफं तथा।
आविकं सन्धिनीक्षीरं विवत्सायाश्च गोः पयः॥
आरण्यानाञ्च सर्वेषां मृगाणां महिषीं विना"—इति।

वसिष्ठोऽपि। "गोमहिष्यजकानामनिर्दशाहानां पयो न पेयम्"—इति। गौतमोऽपि। "स्यन्दिनीयमसूसन्धिनीनाञ्च"—इति। क्षीरं न पेयमिति शेषः। स्यन्दिनी स्तनएव स्रवत्पयःस्तनी। यमसूर्यमलप्रसूः। बोधायनोऽपि। "क्षीरमपेयं विवत्साया अन्यवत्सायाश्च"—इति। आपस्तम्बोऽपि,—

"क्षत्रियश्चैव वृत्तस्थो वैश्यः शूद्रोऽथवा पुनः।
यः पिबेत्कापिलं क्षीरं न ततोऽन्योऽस्त्यपुण्यकृत्"—इति॥

जात्या विशुद्धमपि केशकीटादिसंसर्गदुष्टमात्रं संवर्जयेत्। तथाच देवलः,—

"विशुद्धमपि चाहारं मक्षिकाकृमिजन्तुभिः।
केशरोमनखैर्वाऽपि दूषितं परिवर्जयेत्"—इति॥

अत्र मक्षिकाकृमिजन्तवो मृताः विवक्षिताः। एतैः केशरोमादिभिश्च दूषितं सति सम्भवे वर्जयेत्, असम्भवे तु केशादिकमुद्धृत्य

सम्प्रोक्ष्य हिरण्यस्पर्शं कृत्वा भुञ्जीत। तथाच सुमन्तुः। "केशकीट-क्षुतवचोपहतं श्वभिराघ्रातं लेहितं वा अदधि पर्युषितं पुनः सिद्धं चण्डालाद्यवेक्षितं अभोज्यं अन्यत्र हिरण्योदकैः स्पृष्ट्वा"—इति। क्षुतवचः क्षुतवाग्जातो ध्वनिः। आपद्यपि श्वादिभिरवलीढं न भुञ्जीत। तथाच देवलः,—

"अवलीढं श्वमार्जारध्वांक्षकुक्कुटमूषकैः।
भोजने नोपभुञ्जीत तदमेध्यं हि सर्व्वतः"—इति॥

भविष्यत्पुराणेऽपि,—

"सुरालशुनसंस्पृष्टं पीयूषादिसमन्वितम्।
संसर्गाद्दुष्यते तद्धि शूद्रोच्छिष्टवदाचरेत्"—इति॥

अन्नादिशब्देन कन्नाकादिदुष्टद्रव्यं परिगृह्यते। स्मृत्यन्तरे वर्ज्यान्तरमुक्तम्,—

"नापणीयं समश्नीयान्न द्विःपक्वं न पर्युषितम्।
घृतं वा यदि वा तैलं विप्रो नाद्यात् नखच्युतम्।
यमस्तदशुचि प्राह तुल्यं गोमांसभक्षणैः॥
हस्तदत्तास्तु ये स्नेहा लवणव्यञ्जनानि च।
दातारन्नोपतिष्ठन्ति भोक्ता भुञ्जीत किल्विषम्॥
एकेन पाणिना दत्तं शूद्राद्दत्तं न भक्षयेत्"—इति।

आपणस्थान्नप्रतिषेधोऽन्नापूपादिव्यतिरिक्तविषयः। तदाह शङ्खः,—

"अपूपाः सक्तवोधानास्तक्रं दधि घृतं मधु।
एतत् पण्येषु भोक्तव्यं भाण्डलेपि न चेत्स्रवेत्"—इति॥

पर्य्युषितनिषेधोऽपि वटकादिव्यतिरिक्तविषयः। तदाह यमः,—

"अपूपाश्च करम्भाश्च धानावटकसक्तवः।
शाकं मांसमपक्वञ्च* सूपं कृसरमेव च॥
यवागूः पायसञ्चैव यच्चान्यत्स्नेहसंयुतम्।
सर्व्वं पर्य्युषितं भोज्यं शुक्तं चेत्परिवर्जयेत्"—इति॥

देवलोऽपि,—

"अभोज्यं प्राकृताहारं शुक्तं पर्य्युषितञ्च यत्।
अपूपा यवगोधूमविकारा वटकादयः"—इति॥

वटका माषादिपिष्टमया प्रसिद्धाः। पुनरपूपग्रहणं व्रीह्यादिपिष्टविकारोपादानार्थम्। कृसरं घृततिलचूर्णसंयुतमोदनम्। अन्यदोदनादिकं स्नेहसंयुतं घृतेन दध्ना वाऽभिघारितम्। एतत्सर्व्वं पर्य्युषितमशुक्तं भोज्यम्। शुक्तस्वरूपं बृहस्पतिनोक्तम्,—

"अत्यम्लं शुक्तमाख्यातं निन्दितं ब्रह्मवादिभिः"—इति॥

अनत्यम्लमीषदम्लं वा यद्वस्तु कालान्तरेण वा द्रव्यान्तरसंसर्गेण वाऽत्यम्लं भवति तच्छुक्तं, न तु स्वभावतोऽत्यम्लम्। यदग्निपक्वं सद्रात्र्यन्तरितं, तत्पर्य्युषितम्। शुक्तप्रतिषेधो दध्यादिव्यतिरिक्तविषयः। तदाह शङ्खः,—

"दधि भक्ष्यञ्च शुक्तेषु सर्व्वञ्च दधिसम्भवम्।
सजीषपक्वं† भक्ष्यं स्यात् सर्पिर्युक्तमिति स्थितिः"—इति॥

अनग्निकदम्मा सजीषं‡, तेन पक्वं शुक्तं पर्य्युषितञ्चापदि प्रक्षालितं भोज्यम्। तदाह यमः,—

* मांसं मसूरश्च,—इति मु०।
† तुषीसपक्वं,—इति सो० ना०।
‡ तुषीसं,—इति सो० ना०।

"शुक्तानि हि द्विजोऽन्नानि न भुञ्जीत कदाचन।
प्रक्षालितानि निर्द्दोषाण्यापद्धर्म्मोऽथवा भवेत्॥
मसूरमाषसंयुक्तं तथा पर्युषितञ्च यत्।
तत्तु प्रक्षालितं कृत्वा भुञ्जीत ह्यभिघारितम्"—इति।

आश्रयदुष्टमपि न भुञ्जीत। तथाच याज्ञवल्क्यः,—

"कदर्यबद्धचोराणां क्लीवरङ्गावतारिणाम्।
वैणाभिशस्तवार्धुष्यगणिकागणदीक्षिणाम्॥
चिकित्सकातुरक्रुद्धपुंश्चलीमत्तविद्विषाम्।
क्रूरोग्रपतितव्रात्यदाम्भिकोच्छिष्टभोजिनाम्॥
अवीरास्त्रीस्वर्णकारस्त्रीजितग्रामयाजिनाम्।
शस्त्रविक्रयिकर्म्मारतन्तुवायश्ववृत्तिनाम्॥
नृशंसराजरजककृतघ्नवधजीविनाम्।
चेलधावसुराजीवसहोपपतिवेश्मनाम्॥
एषामन्नं न भोक्तव्यं सोमविक्रयिणस्तथा"—इति।

कदर्य्यो लुब्धकः। तथाच स्मृत्यन्तरम्,—

"आत्मानं धर्म्मकृत्यञ्च पुत्त्रदारांश्च पीड़येत्।
लोभाद्यः पितरौ भृत्यान् स कदर्य इति स्मृतः"—इति॥

बद्धः शृङ्खलितः। रङ्गावतारी नटः। वैणो वीणावादनोपजीवी। दीक्षी दीक्षासंस्कारवान्। तस्य चाभोज्यान्नत्वमग्नीषोमीयपशुवपाहोमपर्यन्तम्। "असंस्थितेऽग्नीषोमीये यजमानस्य गृहे नाशितव्यम्"—इति श्रुतेः। आतुरः पापरोगग्रस्तः। क्रुद्धो दृढ़तरान्तरकोपः। मत्तो धनादिना गर्वितः। क्रूरो निष्कृपः। उग्रः परदुः-

रङ्गकारी। रजको वस्त्ररागकारी। चेलधावो वस्त्रप्रक्षालकः। एषां कदर्यादिसोमविक्रयिपर्यन्तानां त्रैवर्णिकानामन्नं न भोक्तव्यमित्यर्थः। यमोऽपि,—

"चक्रोपजीवी गान्धर्वः कितवस्तस्करस्तथा।
ध्वजी दारोपजीवी च शूद्राध्यापकयाजकौ॥
कुलालश्चित्रकर्म्मा च वार्धुषी चर्मविक्रयी"—इति।

चक्रोपजीवी शकटोपजीवी। गान्धर्व्वो गायकः। ध्वजी मद्यविक्रयी। इतरे प्रसिद्धाः। एते अभोज्यान्ना इत्यर्थः। आपस्तम्बोऽपि,—

"द्वावेवाश्रमिणौ भोज्यौ ब्रह्मचारी गृही तथा।
मुनेरन्नमभोज्यं स्यात् सर्व्वेषां लिङ्गिनां तथा"—इति॥

मुनिशब्देन यतिवानप्रस्थौ गृह्येते। लिङ्गिनः पाशुपतादयः। अङ्गिराश्च्पि,—

"षण्मासान् यो द्विजो भुङ्क्ते शूद्रस्यान्नं विगर्हितम्।
स तु जीवन् भवेच्छूद्रो मृतः श्वा चाभिजायते"—इति॥

यत्तु सुमन्तुनोक्तम्,—

"गोरसञ्चैव सक्तूंश्च तैलं पिण्याकमेवच।
अपूपान् भक्षयेच्छूद्राद्यच्चान्यत्पयसा कृतम्"—इति॥

यच्च विष्णुपुराणेऽभिहितम्,—

सम्प्रोक्ष्य विप्रो गृह्णीयाच्छूद्रान्नं गृहमागतम्"—इति।

तदापद्विषयम्। अतएव याज्ञवल्क्यः,—

"अदत्तान्यग्निहीनस्य नान्नमद्यादनापदि"—इति।

अग्निहीनः शूद्रः। मांसेष्वपि यद्वर्ज्यं तदाह मनुः,—

"क्रव्यादान् शकुनीन्सर्व्वांस्तथा ग्रामनिवासिनः।
अनिर्द्दिष्टांश्चैकशफांष्टिट्टिभञ्चैव वर्जयेत्॥
कलविङ्कं प्लवं हंसं चक्राङ्कं ग्रामकुक्कुटम्।
सारसं रज्जुवालञ्च दात्यूहं शुकसारिके॥
प्रतुदान् जालपादांश्च कोयष्टिनखविष्किरान्।
निमज्जतश्च मत्स्यादान् शौनं वल्लूरमेवच॥
वकञ्चैव वलाकाञ्च काकोलं खञ्जरीटकान्।
मत्स्यादान् विड्वराहांश्च मत्स्यानेव च सर्व्वशः"—इति॥

क्रव्यादाः शकुनयो गृध्रादयः। ग्रामनिवासिनः शकुनयः पारावतादयः। अनिर्दिष्टा अपरिज्ञातजातिविशेषा मृगपक्षिणः। एकशफा अश्वादयः। टिट्टिभः निष्ठुरशब्दभाषी पक्षिविशेषः। कलविङ्कश्चटकः। प्लवो जलकुक्कुटः। चक्राङ्कश्चक्रवाकः। सारसः पुष्कराक्षः। रज्जुवालको-रज्ज्वत्पुच्छकः*। दात्यूहः कालकण्टकः। प्रतुदः श्येनः। जालपादाः जालाकारपादाः। कोयष्टिः पक्षिविशेषः। नखविष्किराश्चकोरादयः। निमज्जन्तोमत्स्यादा निमज्ज्य मत्स्यभक्षकाः पक्षिविशेषाः। शौनं शुनोद्भवमांसम्†। वल्लूरं शुष्कमांसम्। काकोलो गिरिकाकः। खञ्जरीटः खञ्जनः। मत्स्यादा अनिमज्जन्तो मत्स्यादा विवक्षिताः। विड्वराहा ग्राम्यशूकराः। अत्र मत्स्यनिषेधो राजीवसिंहतुण्डकादिव्यतिरिक्तविषयः। अतएवोक्तन्तेनैव,—

* वृक्षकुट्टकः,—इति मु०।

† शूनायां भवं मांसम्,—इति मु०।

"राजीवाः सिंहतुण्डाश्च सशल्काश्चैव सर्व्वशः"—इति।

राजीवाः पद्मवर्णाः मत्स्याः। सिंहतुण्डाः सिंहमुखाः। शल्कैः शुक्त्याकारावयवैः पृष्ठभागगतैः सह वर्त्तन्ते इति सशल्काः। एते सर्वशः श्राद्धे नित्यभोजने च भक्ष्या इत्यर्थः। देवलोऽपि,—

"उलूककुररश्येनगृध्रकुक्कुटवायसाः।
चकोरः कोकिलो रज्जुदालकश्चाषमद्गुकौ॥
पारावतकपोतौ च न भक्ष्याः पक्षिणः स्मृताः।
अभक्ष्याः पशुजातीनां गोखरोष्ट्राश्वकुञ्जराः॥
सिंहव्याघ्रर्क्षशरभाः सर्पाजगरकास्तथा।
आखुमूषकमार्जारनकुलग्रामशूकराः॥
श्वशृगालवृकद्वीपिगोलाङ्गूलकमर्क्कटाः"—इति।

कुररः उत्क्रोशः। मद्गुर्जलकाकः। द्वीपिशब्दो व्याघ्रविशेषपरः। गोलाङ्गूलो वानरविशेषः। मर्क्कटग्रहणं सर्व्वेषां पञ्चनखानामुपलक्षणार्थम्। अतएव मनुः। "सर्व्वान्पञ्चनखांस्तथा"—इति। न भक्षयेदिति योजना। अत्र पञ्चनखानां भक्ष्यत्वनिषेधो गोधादिपञ्चकव्यतिरिक्तविषयः। तथाच देवलः,—

"पञ्च पञ्चनखा भक्ष्या धर्म्मतः परिकीर्त्तिताः।
गोधा कूर्म्मः शशः श्वाविट् शल्यकश्चेति ते स्मृताः"—इति॥

धर्म्मत इति हिंसामकृत्वा क्रयादिप्राप्ता भक्ष्या इत्यर्थः। न चायमपूर्व्वविधिः, रागप्राप्तत्वात्तद्भक्षणस्य। नापि नियमः, पक्षप्राप्त्यभावात्। अतो गोधादिपञ्चनखपञ्चकव्यतिरिक्ता न भक्ष्या इति परिसङ्ख्यैव परिशिष्यते। एवञ्च सति विशेषनिषेधबलात्तन्मांसभक्षणे प्रत्यवायो-

नेतरत्रेत्यवगम्यते। अतएवोक्तं मनुना,—

"न मांसभक्षणे दोषो न मद्ये न च मैथुने।

प्रवृत्तिरेषा भूतानां निवृत्तिस्तु महाफला"—इति॥

यत्तु तेनैवोक्तम्,—

"नाकृत्वा प्राणिनां हिंसां मांसमुत्पद्यते क्वचित्।

न च प्राणिवधः स्वर्ग्यस्तस्मान्मांसं विवर्जयेत्॥

समुत्पत्तिञ्च मांसस्य वधबन्धौ च देहिनाम्।

प्रसमीक्ष्य निवर्त्तेत सर्व्वमांसस्य भक्षणात्"—इति॥

यच्च याज्ञवल्क्येनापि,—

"वसेत्स नरके घोरे दिनानि पशुलोमभिः।

संमितानि दुराचारो यो हन्त्यविधिना पशून्"—इति॥

तन्निषिद्धप्राणिहिंसापूर्व्वकमांसभक्षणविषयं, न तु क्रयादिप्राप्तमांसभक्षणविषयं, प्राणिवधनिन्दापूर्व्वकमेव मांसनिषेधस्मरणात्। यच्च मनुनैवोक्तम्,—

"फलमूलाशनैर्मेध्यैर्मुन्यन्नानाञ्च भोजनैः।

न तत्फलमवाप्नोति यन्मांसपरिवर्जनात्"—इति॥

तत्र मांसवर्जनस्य महाफलसाधनत्वं प्रोक्षितादिव्यतिरिक्तविषयम्। अतएवोक्तन्तेनैव,—

"प्रोक्षितं भक्षयेन्मांसं ब्राह्मणस्य च काम्यया।

यथाविधि नियुक्तस्तु प्राणानामेव चात्यये"—इति॥

प्रोक्षितमिष्टशिष्टं मांसं, ब्राह्मणस्य काम्यया ब्राह्मणकामनया च,*

---

* ब्राह्मणकामनायां च,—इति सो० ना०।

यथाविधि नियुक्तः श्राद्धे निमन्त्रितश्च, प्राणात्यये तन्निमित्ते व्याधि-निमित्ते वा, मांसं भक्षयेदित्यलं प्रसक्तानुप्रसक्त्या।

निमन्त्रितेभ्यो ब्राह्मणेभ्यो यद्देयं तदाह कात्यायनः,—

"तैलमुद्वर्त्तनं स्नानं दन्तधावनमेव च।
कृत्तरोमनखेभ्यस्तु दद्यात्तेभ्योऽपरेऽहनि"—इति॥

स्नानं स्नानसाधनम्। दन्तधावनं दन्तधावनसाधनं काष्ठादि, दद्या-दित्यर्थः। एतत्तैलादिदानमनिषिद्धतिथिविषयम्। निषिद्धतिथिषु तिलतैलप्रतिनिधित्वेनामलकोदकं दद्यात्। तथाच मार्कण्डेयः,—

"अह्नः षट्सु मुहूर्त्तेषु गतेषु च यतान्* द्विजान्।
प्रत्येकं प्रेषयेत् प्रेष्यान् प्रदायामलकोदकम्"—इति॥

आमलकोदकदानमप्यमावास्याव्यतिरिक्तविषयम्। "धात्रीफलै-रमावास्यायां न स्नायात्"—इति स्मृत्यन्तरे निषेधात्। तैलादिदाने विशेषो देवलेन दर्शितः,—

तैलमुद्वर्त्तनं स्नानं स्नानीयञ्च पृथग्विधम्।
पात्रैरौदुम्बरैर्दद्याद्वैश्वदेविकपूर्वकम्"—इति॥

औदुम्बरं ताम्रपात्रम्। यत्तु प्रचेतसोक्तम्,—

"श्राद्धभुग्यो नखश्मश्रुच्छेदनं न तु कारयेत्"—इति।

तन्निषिद्धतिथिविषयम्। श्राद्धदेशे प्रकल्प्यानि द्रव्याणि पुराणे-ऽभिहितानि,—

"उपमूलं समालूनान् कुशांस्तत्रोपकल्पयेत्।
यवांस्तिलान् व्रीहीः कांस्यमापः शुद्धाः समाहृताः॥

* गतेष्वथ च तान्,—इति मु०।

पार्थराजतताम्राणि पात्राणि स्यात्स्विन्मधु।
पुष्पधूपसुगन्धादि चौमसूत्रञ्च मेचणम्''—इति॥

तिला जर्त्तिला ग्राह्यास्तदसम्भवे ग्राम्याः। जर्त्तिललक्षणमुक्तं सत्यव्रतेन,—

''जर्त्तिलास्तु तिलाः प्रोक्ता कृष्णवर्णा वनेभवाः''—इति।

तेषां प्रशस्तत्वमापस्तम्ब आह,—

''अटव्यां ये समुत्पन्ना अकृष्टफलितास्तथा।
ते वै श्राद्धे पवित्रास्तु तिलास्ते न तिलास्तिलाः*''—इति॥

निमन्त्रितब्राह्मणानामुपवेशनार्थमासनं कुशी। तत्र विशेषो मनुनोक्तः। ''कुतपञ्चासने दद्यात्''—इति। कुतपो नेपालदेशप्रभवमेषादिरोमनिर्म्मितकम्बलः। तदुक्तं स्मृत्यन्तरे,—

''मध्याह्नः खड्गपात्रञ्च तथा नेपालकम्बलः।
रूप्यं दर्भास्तिला गावो दौहित्रश्चाष्टमः स्मृतः॥
पापं कुत्सितमित्याहुस्तस्य सन्तापकारणम्।
अष्टावेते यतस्तस्मात् कुतपा इति विश्रुताः''—इति॥

कांस्यपार्थराजतताम्रपात्राणि भोजनार्थमर्घार्थं चोपकल्प्यानि। अत्र भोजनार्थं पलाशपत्रपात्राण्येवोपकल्प्यानि न त्वन्यपर्णपात्राणि। तथाचात्रिः,—

''न मृण्मयानि कुर्वीत भोजने दैवपित्र्ययोः।
पालाशेभ्यो विना न स्युः पर्णपात्राणि भोजने''—इति॥

---

* ते वै श्राद्धेषु देयाः स्युस्तिलास्ते जर्त्तिलाः स्मृताः,—इति मु०।

अर्घ्यार्थं त्वन्यपर्णपात्राण्यनिषिद्धानि। अतएव वैजावापः,—

"खादिरौडुम्बराण्यर्घ्यपात्राणि श्राद्धकर्म्मणि।

अश्मश्मन्तकमयानि स्युरपि पर्णपुटास्तथा"—इति॥

अत्रोपकल्पनीयं पुष्पं ब्रह्माण्डपुराणे दर्शितम्,—

"शुक्लाः सुमनसः श्रेष्ठास्तथा पद्मोत्पलानि च।

गन्धरूपोपपन्नानि यानि चान्यानि कृत्स्नशः"—इति॥

मार्कण्डेयपुराणेऽपि*,—

"जात्यश्च सर्व्वा दातव्या मल्लिकाः श्वेतयूथिकाः।

जलोद्भवानि सर्व्वाणि कुसुमानि च चम्पकम्"—इति॥

यत्त्वङ्गिरसोक्तम्। "न जातीकुसुमानि न कदलीपत्रम्"—इति। क्रतुरपि,—

"असुराणां कुले जाता जाती पूर्वपरिग्रहे।

तस्या दर्शनमात्रेण निराशाः पितरो गताः"—इति॥

अत्र जातीकुसुमनिषेधो वैकल्पिकः। अत्र वर्ज्यानि कुसुमानि मत्स्येनोक्तानि†,—

"पद्मबिल्वार्कधुस्तूरपारिभद्राटरूषकाः‡।

न देयाः पितृकार्य्येषु पयश्चैवाविकं तथा"—इति॥

पारिभद्रो मन्दारः, आटरूषो वासकः। शङ्खोऽपि,—

* नास्त्येतत् मु० पुस्तके।

† तेनैवोक्तानि,—इति मु०।

‡ रूष्करः,—इति सो० ना०।

"उग्रगन्धीन्यगन्धीनि चैत्यवृक्षोद्भवानि च[१]।
पुष्पाणि वर्जनीयानि रक्तवर्णानि यानि च"—इति॥

अत्र रक्तवर्णनिषेधो जलोद्भवव्यतिरिक्तविषयः। अतएवोक्तन्तेनैव,—

"जलोद्भवानि देयानि रक्तान्यपि विशेषतः"—इति।

विष्णुरपि। "वर्जयेदुग्रगन्धीनि* कण्टकिजातानि रक्तानि पुष्पाणि च, सितानि सुगन्धीनि कण्टकिजातान्यपि दद्यात्"—इति।

धूपद्रव्यमपि विष्णुधर्म्मोत्तरे दर्शितम्,—

"धूपो गुग्गुलको देयस्तथा चन्दनसारजः।
अगरुश्च सकर्पूरस्तुरुष्कस्त्वक् तथैवच"—इति॥

तुरुष्कः सल्लकीवृक्षः, त्वक् लवङ्गम्। मरीचिरपि,—

"चन्दनागरुणी चोभे तमालोषीरपद्मकम्"—इति।

वर्जनीयधूपद्रव्यं विष्णुराह। "जीवजञ्च सर्वं न धूपार्थम्"—इति। (जीवजं कस्तूर्यादि।) "चन्दनकुङ्कुमकर्पूरागरुपद्मकान्यनुलेपनार्थे"—इति।

दीपार्थस्नेहद्रव्यमाह मरीचिः,—

"घृताद्वा तिलतैलाद्वा नान्यद्रव्यात्तु दीपकम्"—इति।

अत्र चान्यद्रव्यनिषेधो वसामेदोरूपद्रव्यविषयो[२] न पुनः कौसुम्भादितैलविषयः। अतएव,—

---

* वर्जयेदुग्रगन्धीन्यगन्धीनि,—इति मु०।

---

(१) चैत्यवृक्षः पूज्यत्वेन ख्यातोवृक्षः।
(२) हृन्मेदस्तु वपा वसा,—इत्यमरः।

"घृतेन दीपो दातव्यस्त्वथवाऽन्यौषधीरसैः।
वसामेदोद्भवं दीपं प्रयत्नेन विवर्जयेत्"—इति॥

क्षौमसूत्रोपकल्पनं वस्त्रालाभविषयं, सति सम्भवे क्षौमं वस्त्रमुपकल्पनीयम्। अतएव स्मृत्यन्तरम्,—

"कौशेयं क्षौमकार्पासं दुकूलमहतं तथा।
श्राद्धेष्वेतानि यो दद्यात्कामानाप्नोति पुष्कलान्"—इति॥

कौशेयं कृमिकोशोत्थतन्तुजम्। क्षौममतसीत्वक्सम्भवतन्तुसम्भवम्। दुकूलमिति सूक्ष्मवस्त्रम्। अहतम्,—

"ईषद्धौतं नवं श्वेतं सदशं यन्न धारितम्।
अहतं तद्विजानीयात् सर्व्वकर्म्मसु पावनम्"—इति[१]॥

एवं दर्भादिमेक्षणान्तं द्रव्यमुपकल्प्य स्नात्वा शुक्लं वासः परिदध्यात्। तथाच स्मृतिः,—

"स्नात्वाऽधिकारी भवति दैवे पित्र्ये च कर्म्मणि"—इति।
"श्राद्धकृच्छुक्लवासाः स्यात्"—इति।

स्नानानन्तरं यत्कर्त्तव्यं तदाह यमः,—

"ततः स्नात्वा निवृत्तेभ्यः प्रत्युत्थाय कृताञ्जलिः।
पाद्यमाचमनीयञ्च सम्प्रयच्छेद्यथाक्रमम्"—इति॥

कृताञ्जलिः स्वागतमित्युक्त्वा अध्वक्लतोपद्दतिशुद्ध्यर्थं पादप्रक्षालनार्थमाचमनीयञ्चोदकं क्रमेण प्रयच्छेदित्यर्थः। तदनन्तरं गृहाङ्गणे मण्डलद्वयं कार्यम्। तथाच मत्स्यः,—

---

(१) कौशेयं कृमीत्याद्यारभ्य एतदन्तोग्रन्थो नास्ति मुद्रितातिरिक्तपुस्तकेषु।

"भवनस्याग्रतोभूमौ[१] ———

गोमयेनानुलिप्तायां गोमूत्रेण तु मण्डले"—इति।

गोमयसहितेन गोमूत्रेण मण्डले कार्य्ये इति शेषः। अत्र विशेषमाह शम्भुः,—

"उदक्प्लवमुदीच्यं* स्याद्दक्षिणं दक्षिणाप्लवम्"—इति।

उदीच्यं वैश्वदेविकं मण्डलमुदक्प्रवणं, दक्षिणं पित्र्यं मण्डलं दक्षिणाप्रवणं कुर्यात्। तत्र मण्डलकरणप्रभृत्याश्राद्धपरिसमाप्तेर्वैश्वदेविकं कर्म्म प्रदक्षिणं यज्ञोपवीतिना कार्य्यं पित्र्यमपसव्यं प्राचीनावीतिना[२] कार्य्यम्। तथाच मनुः,—

"प्राचीनावीतिना सम्यगपसव्यमतन्द्रिणा।

पित्र्यमानिधनात्कार्य्यं विधिवद्दर्भपाणिना"—इति॥

अत्रैव विशेषान्तरमाह कात्यायनः,—

"दक्षिणं पातयेत् जानु देवान्परिचरन् सदा।

पातयेदितरज्जानु पितॄन्परिचरन् सदा"—इति॥

शातातपोऽपि,—

"उदङ्मुखस्तु देवानां पितॄणां दक्षिणामुखः"—इति।

बोधायनोऽपि,—

---

* उदङ्मुखमुदीच्यं—इति सो० पु०।

---

(१) सर्व्वेष्वेवादर्शपुस्तकेषु श्लोकस्यास्य द्वितीयपादो न दृश्यते।

(२) यज्ञोपवीतिप्राचीनावीतिनौ, "उपवीतं यज्ञसूत्रं प्राकृते दक्षिणे करे प्राचीनावीतमन्यस्मिन्"—इत्यनेनोन्वेयौ। अपसव्यं पितृतीर्थ, "तर्ज्जन्यङ्गुष्ठयोरन्तरा अपसव्यमवसजवि तेन पितृभ्यो दद्यात्"—इत्युक्तेः।

"प्रदक्षिणन्तु देवानां पितॄणामप्रदक्षिणम्।
देवानामृजवो दर्भाः पितॄणां द्विगुणाः स्मृताः"—इति॥

मण्डलकरणानन्तरकर्त्तव्यमाह शम्भुः,—

"उत्तरेऽक्षतसंयुक्तान्पूर्व्वाग्रान् विन्यसेत् कुशान्।
दक्षिणे दक्षिणाग्रांस्तु सतिलान्विन्यसेद्बुधः"—इति॥

मत्स्यपुराणेऽपि,—

"अक्षताभिः सपुष्पाभिस्तदभ्यर्च्यापसव्यवत्।
विप्राणां क्षालयेत्पादानभिनन्द्य पुनः पुनः"—इति॥

अपसव्यवत् पूर्व्वमुदीच्यमण्डलं पश्चाद्दक्षिणमण्डलमभ्यर्च्चेत्यर्थः' दैवपूर्वकं विप्राणां पादप्रक्षालनं कुर्य्यात्। अतएव ब्रह्मनिरुक्तम्,—

"पाद्यञ्चैव तथैवार्घ्यं दैवमादौ प्रयोजयेत्।
शन्नोदेवीति मन्त्रेण पाद्यञ्चैव प्रदापयेत्"—इति॥

पाद्यादिदानं नामगोत्रोच्चारणपूर्व्वकं कर्त्तव्यम्। तदुक्तं मत्स्यपुराणे,—

"नामगोत्रं पितॄणान्तु प्रापकं हव्यकव्ययोः"—इति।

पादप्रक्षालनानन्तरं यत् कर्त्तव्यं तदाह सुमन्तुः,—

"दर्भपाणिर्द्विराचम्य लघुवासा जितेन्द्रियः।
परिश्रिते शुचौ देशे गोमयेनोपलेपिते॥
दक्षिणाप्रवणे सम्यगाचान्तान् प्रयतान् शुचीन्।
आसनेषु सदर्भेषु विविक्तेषूपवेशयेत्"—इति॥

विविक्तेषु परस्परमसंस्पृष्टेष्वित्यर्थः। मनुरपि,—

"आसनेषु तु क्लृप्तेषु बर्हिष्मत्सु पृथक् पृथक्।

उपस्पृष्टोदकान् सम्यग्विप्रांस्तानुपवेशयेत्"—इति ॥

उपवेशनप्रकारो यमेन दर्शितः । "आसनं संस्पृशन् सव्येन पाणिना दक्षिणेन ब्राह्मणमुपसंगृह्य समाध्वमिति चोक्त्वोपवेशयेत्"—इति । धर्मेऽपि,—

"जान्वालभ्य ततो देवानुपवेश्य ततः पितॄन् ।
समस्ताभिर्व्याहृतिभिरासनेषूपवेशयेत्"—इति ॥

आदिपुराणेऽपि*,—

"विप्रौ तु प्राङ्मुखौ तेभ्यो द्वौ तु पूर्वं निवेशयेत् ।
शन्नोदेवीतिमन्त्रेण पाद्यं चैव प्रदापयेत्† ।
उत्तराभिमुखान्विप्रांस्त्रीन् पितृभ्यश्च सर्व्वदा"—इति ॥

याज्ञवल्क्योऽपि,—

"द्वौ दैवे प्राक् त्रयः पित्र्यउदगेकैकमेव वा ।
मातामहानामप्येवं तन्त्रं वा वैश्वदैविकम्"—इति ॥

मातामहानामप्येवमिति संख्यादिङ्नियमयोरतिदेशः । वैश्वदैविकं कर्म्म श्राद्धद्वयार्थमावृत्त्याऽनुष्ठेयं तन्त्रेण वेत्यभिप्रेत्य तन्त्रं वा वैश्वदैविकमित्युक्तम् । अतएव मरीचिः,—

"तथा मातामहश्राद्धं वैश्वदेवसमन्वितम् ।
कुर्व्वीत भक्तिसम्पन्नस्तन्त्रं वा वैश्वदैविकम्"—इति ॥

अत्र द्वयोरपि श्राद्धयोर्वैश्वदैविककर्म्मणः तन्त्रावृत्तिविधानादेक-

---

* आदित्यपुराणेऽपि,—इति मु० ।

† नास्तीदमर्द्धं मुद्रितातिरिक्तपुस्तकेषु ।

प्रयोगविधिप्रयोज्यत्वं भिन्नप्रयोगविधिप्रयोज्यत्वञ्च प्राप्तम्। ततश्चैकाधिकारपूर्व्वसाधनत्वं भिन्नाधिकारपूर्व्वसाधनत्वञ्चावगम्यते*।

उपविष्टब्राह्मणनियमाः स्मृत्यन्तरे दर्शिताः,—

"पवित्रपाणयः सर्व्वे ते च मौनव्रतान्विताः।
उच्छिष्टोच्छिष्टसंस्पर्शं वर्जयन्तः परस्परम्"—इति॥

मौनित्वञ्च ब्रह्मोद्यकथाव्यतिरिक्तविषयम्। अतएव यमः,—

"ब्रह्मोद्याश्च कथाः कुर्युः पितॄणामेतदीप्सितम्"—इति।

उपविष्टेष्वपि ब्राह्मणेषु यतिर्ब्रह्मचारी वा यद्यागच्छति, तदा सोऽपि श्राद्धे भोजयितव्यः। तदाह यमः,—

"भिक्षुको ब्रह्मचारी वा भोजनार्थमुपस्थितः।
उपविष्टेष्वनुप्राप्तः काममन्नमपि भोजयेत्"—इति॥

छागलेयोऽपि,—

"पूजयेत् श्राद्धकालेऽपि यतिं च ब्रह्मचारिणम्।
विप्रानुद्धरते पापात् पितृमातृगणानपि"—इति॥

मनुरपि,—

"ब्राह्मणं भिक्षुकं वाऽपि भोजनार्थमुपस्थितम्।
ब्राह्मणैरभ्यनुज्ञातः शक्तितः प्रतिपूजयेत्"—इति॥

ब्राह्मणोपवेशनानन्तरं कृत्यं पुराणेऽभिहितम्,—

"श्राद्धभूमौ गयां ध्यात्वा ध्यात्वा देवं गदाधरम्।
ताभ्याञ्चैव नमस्कृत्य ततः श्राद्धं प्रवर्त्तयेत्"—इति॥

---

* ततश्चैकाधिकारात् पूर्व्वसाधकत्वं भिन्नाधिकारात् पूर्व्वसाधकत्वञ्चावगम्यते,—इति सो०पु०। ०धिकारापूर्व्वसाधनत्वमिति त्वस्माकं प्रतिभाति।

श्राद्धं करिष्यइत्येवमुपविष्टान् ब्राह्मणान् पृच्छेदित्यर्थः। अतएवोक्तं तत्रैव,—

"उभौ हस्तौ समौ कृत्वा जानुभ्यामन्तरे स्थितौ।
सप्रश्रयश्चोपविष्टान् सर्व्वान् पृच्छेत् द्विजोत्तमान्"—इति॥

कुरुष्वेति तैः अनुज्ञातो देवताभ्यः पितृभ्यश्चेति मन्त्रं त्रिः पठेत्। तदुक्तं ब्रह्माण्डपुराणे,—

"देवताभ्यः पितृभ्यश्च महायोगिभ्यएवच।
नमः स्वधायै स्वाहायै नित्यमेव नमो नमः॥
आद्येऽवसाने श्राद्धस्य त्रिरावृत्तं जपेत्सदा"—इति।

अनन्तरं सर्व्वतस्तिलान्विकिरेत्। तदुक्तं निगमे। "अपहता इति तिलान्विकिरेत्"—इति। तिलान्विकीर्य दर्भासनं दद्यात्। तदुक्तं पुराणे,—

"कुरुष्वेति स तैरुक्तो दद्याद्दर्भासनं ततः"—इति।

दर्भासनदानस्य ब्राह्मणहस्ते उदकदानपूर्व्वकं कार्य्यम्। अतएव याज्ञवल्क्यः,—

"पाणिप्रक्षालनं दत्त्वा विष्टरार्थान् कुशानपि"—इति॥

विष्टरार्थानासनार्थान् कुशानासनेषु दत्त्वेत्यर्थः। तदुक्तं पुराणे,—

"आसने चासनं दद्याद्वामे वा दक्षिणेऽपि वा"—इति।

वामे वा दक्षिणेऽपि वेत्ययं विकल्पः पित्रर्थदेवार्थब्राह्मणासनदानविषयतया व्यवस्थितो द्रष्टव्यः। अतएवोक्तं तत्रैव,—

"पितृकर्म्मणि वामे वै दैवे कर्म्मणि दक्षिणे"—इति।

दैवे कर्म्मण्यासनदाने विशेषः काठकेऽभिहितः। "देवानां यवा-

दर्भाः"—इति। आसनं दत्त्वा पुनर्निमन्त्रयीत। तदाह संग्रहकारः। "ततः पुनरपो दत्त्वा निमन्त्रयेत्। दैवे चणः क्रियतां, ततः ओम् तथेति विप्रो ब्रूयात्। प्राप्नोतु भवानिति कर्त्ता पुनर्ब्रूयात्, प्राप्नवानिति विप्रः पुनर्ब्रूयात्"—इति। निमन्त्रणञ्च निरङ्गुष्ठं हस्तं गृहीत्वा कर्त्तव्यम्। तदुक्तं पुराणे,—

"निरङ्गुष्ठं गृहीत्वा तु विश्वान् देवान् समाह्वयेत्"—इति।

अङ्गुष्ठव्यतिरिक्तं हस्तं गृहीत्वा निमन्त्र्य विश्वान् देवान् समाह्वयेदित्यर्थः। आवाहनेतिकर्त्तव्यतामाह यमः,—

"यवहस्तस्ततो देवान् विज्ञाप्यावाहनं प्रति।
आवाहयेदनुज्ञातो विश्वेदेवास इत्यृचा॥
विश्वेदेवाः शृणुतेति मन्त्रं जप्त्वा ततोऽक्षतान्।
ओषधयेति[१] मन्त्रेण विकिरेत्तु प्रदक्षिणम्"—इति॥

प्रदक्षिणं दक्षिणपादादिमस्तकान्तमक्षतान्विकिरेत् आरोपयेदित्यर्थः। विश्वेदेवास्तु दश बृहस्पतिना दर्शिताः,—

"क्रतुर्दक्षो वसुः सत्यः कालः कामस्तथैवच।
धुनिश्च रोचनश्चैव * तथा चैव पुरूरवाः॥
आर्द्रवास† दशैते तु विश्वेदेवाः प्रकीर्त्तिताः"—इति॥

* धुरी विलोचनश्चैव,—इति मु०। धुरिश्च लोचनश्चैव,—इत्यन्यत्र पाठः।

† माद्रवास,—इत्यन्यत्र पाठः।

(१) ओषधयेति,—इत्यत्र विसर्गलोपे सन्धिरार्षः। ओषधय इति,—इति क्वचित् पाठः।

तेषां मध्ये पुरूरवार्द्रवसंज्ञका विश्वेदेवा अचावाह्याः, पार्व्वण-श्राद्धत्वात्। अतएव शङ्खः,—

"इष्टिश्राद्धे क्रतुर्दक्षः संकीर्त्त्यौ वैश्वदैविके।
नान्दीमुखे सत्यवसू काम्ये च धुनिरोचनौ॥
पुरूरवार्द्रवौ चैव पार्वणे समुदाहृतौ।
नैमित्तिके कालकामावेव सर्व्वत्र कीर्त्तयेत्"—इति॥

इष्टिश्राद्धं कर्म्माङ्गश्राद्धम्। तच्च पारस्करेण दर्शितम्,—

"निषेककाले सोमे च सीमन्तोन्नयने तथा।
ज्ञेयं पुंसवने श्राद्धं कर्म्माङ्गं वृद्धिवत्कृतम्[१]"—इति॥

वृद्धिवदित्यनेन वृद्धिश्राद्धात् कर्म्माङ्गश्राद्धमन्यदिति गम्यते। नान्दीमुखं वृद्धिश्राद्धम्। तत्स्वरूपं वृद्धवसिष्ठ आह,—

"पुत्त्रजन्मविवाहादौ वृद्धिश्राद्धमुदाहृतम्"—इति।

आदिशब्देनान्नप्राशनचूड़ाकरणादिसंस्कारा गृह्यन्ते न तु गर्भाधानपुंसवनसीमन्तोन्नयनानि, तत्र क्रियमाणस्य कर्म्माङ्गश्राद्धत्वात्[२]। काम्यं फलकामनोपाधिकम्[३]। पार्व्वणममावास्याश्राद्धम्[४]। नैमित्तिकं सपिण्डीकरणम्। ननु,

---

(१) निषेककालो गर्भाधानकालः। सोमः सोमयागः। सीमन्तोन्नयन-पुंसवने गर्भावस्थाकर्त्तव्यसंस्कारविशेषौ।

(२) एकमेव वृद्धिश्राद्धं तत्र तत्र तत्तद्विश्वदेवानां लाभार्थं कर्म्माङ्गत्वेन वृद्धिश्राद्धत्वेन च परिभाषितमित्यनुसन्धेयम्।

(३) "कामाय तु हितं काम्यमभिप्रेतार्थसिद्धये"—इति पुराणेषु स्मर्य्यते।

(४) "अमावास्यां यत् क्रियते तत् पार्व्वणमुदाहृतम्"—इति स्मरणा-दिति भावः।

"एकोद्दिष्टन्तु यत् श्राद्धं तन्नैमित्तिकमुच्यते"—

इति नैमित्तिकशब्द एकोद्दिष्टे रूढ़त्वात्कथं सपिण्डीकरणे प्रयुज्यते इति। सत्यं, तथापि 'तदप्यदैवं कर्त्तव्यम्'—इत्येकोद्दिष्टस्य दैवहीनत्वेन कामकालसंज्ञकानां विश्वेषां देवानामभ्यनुपपन्ने एकोद्दिष्टयुक्तं सपिण्डीकरणं नैमित्तिकशब्देन लक्षणयोच्यते। विश्वान् देवानावाह्यार्घ्य पात्रासादनादि कुर्यात्। तथाच याज्ञवल्क्यः,—

"यवैरन्ववकीर्याथ भाजने सपवित्रके।

शन्नो देव्या पयः क्षिप्त्वा यवोऽसीति यवांस्तथा"—इति॥

मत्स्यपुराणेऽपि,—

"विश्वान् देवान् यवैः पुष्पैरभ्यर्च्यासनपूर्व्वकम्।

पूरयेत्पात्रयुग्मन्तु स्थाप्य दर्भपवित्रके"—इति॥

प्रचेता अपि,—

"एकैकस्य तु विप्रस्य अर्घ्यं पात्रे विनिक्षिपेत्।

यवोऽसीति यवान् कीर्त्त्वा[१] गन्धपुष्पैः सुपूजितम्"—इति॥

अर्घ्यपात्राणि सौवर्णराजतादीनि। तदाह कात्यायनः। "सौवर्णराजतौदुम्बरखड्गमणिमयानां पात्राणामन्यतमेषु, यानि वा विद्यन्ते, पत्रपुटकेषु वा"—इति। यानि वा तैजसानि कांस्यादीनि, तेषु वेत्यर्थः। राजतं पात्रं पित्र्ये विनियुज्यते, न दैवे। तदाह राजतं पात्रमधिकृत्य,—

(१) कीर्त्वा विक्षिप्य। "कॄ विक्षेपे"—इति स्मरणात्।

"शिवनेत्रोद्भवं(१) यस्मादतस्तत् पितृवल्लभम्।
अमङ्गल्यं तत् यत्नेन देवकार्येषु वर्जितम्"—इति ॥

अर्घ्यपवित्रकं प्रतिपात्रं भेदेन कार्यम्। तदुक्तं चतुर्विंशतिमते,—

"द्वे द्वे शलाके देवानां पात्रे कृत्वा पयः क्षिपेत्"।

पवित्रकरणेतिकर्त्तव्यतामाह याज्ञवल्क्यः,—

"पवित्रे स्थ इति मन्त्रेण द्वे पवित्रे च कारयेत्।
अन्तर्दर्भे कुशच्छिन्ने कौशे प्रादेशसम्मिते"—इति ॥

कुशच्छिन्नइति कुशमन्तरे कृत्वा छिन्ने। अतएव यज्ञपार्श्वः,—

"ओषधीमन्तरे कृत्वा अङ्गुष्ठाङ्गुलिपर्व्वणोः।
छिन्द्यात् प्रादेशमात्रन्तु पवित्रं विष्णुरब्रवीत् ॥
न नखेन न काष्ठेन न लोहेन न मृण्मयात्"—इति।

अनन्तरं, स्वाहार्घ्या इति मन्त्रेण देवतार्थं ब्राह्मणसमीपेऽर्घ्यपात्रं स्थापयेत्। तथाच गार्ग्यः,—

"स्वाहेति चैव देवानां होमकर्म्मण्युदाहरेत्"—इति।

देवानां होमकर्मण्यर्घ्यदाने कर्म्मण्युपस्थिते पात्रं स्थापयितुं स्वाहार्घ्या इति मन्त्रमुच्चारयेदिति प्रकरणादेव गम्यते। अर्घ्यपात्रं स्थापयित्वा विप्रहस्तेऽर्घ्यं दद्यात्। तदाह याज्ञवल्क्यः,—

"या दिव्या इति मन्त्रेण हस्तेष्वर्घ्यं विनिक्षिपेत्।"

अर्घ्यदाने विशेषमाह गार्ग्यः,—

"दत्त्वा हस्ते पवित्रन्तु संपूज्यार्घ्यं विनिक्षिपेत्"—इति।

---

(१) "सोऽरोदीत्, यदरोदीत् तत् रुद्रस्य रुद्रत्वं तस्य यदश्रु अशीर्य्यत तद्रजतमभवत्"—इति ब्राह्मणवाक्यमत्रानुसन्धेयम्।

इस्तेष्विति बहुवचनमुपक्रमगतैकवचनानुरोधादविवक्षितम्। तदनन्तरमुदकपूर्व्वकं गन्धादि देयम्। तथा च याज्ञवल्क्यः,—

"दत्त्वोदकं गन्धमाल्यं धूपदानं प्रदीपकम्"—इति।

गन्धादिदानमाच्छादनस्याप्युपलक्षणं, तदन्तर्गतत्वात्। एवमासन-प्रभृत्याच्छादनपर्यन्तं वैश्वदेविकार्चनं काण्डानुसमयेन(१) कृत्वा आस-नाद्याच्छादनपर्यन्तं पित्रर्चनं प्राचीनावीत्यप्रदक्षिणं कुर्यात्। तदाह याज्ञवल्क्यः,—

"अपसव्यन्ततः कृत्वा पितॄणामप्रदक्षिणम्"—इति।

ननु दैवे पित्र्ये च आसनाद्याच्छादनपर्यन्तानां पदार्थानामपि पदार्थानुसमयेनैवानुष्ठानं न्याय्यं न तु काण्डानुसमयेन। पदार्थानु-समये हि तेषां प्रधानप्रत्यासत्तिर्भवति अवैषम्यं च, अन्यथा केषाञ्चित् प्रधानप्रत्यासत्तिः केषाञ्चिन्नेति वैषम्यमापद्येत। सत्यम्, आसनादि-पदार्थेषु वचनबलात्काण्डानुसमयएव स्वीक्रियते। वाचनिकत्वञ्च, 'अपसव्यं ततः कृत्वा'—इति वैश्वदेविकासनादिपदार्थकाण्डादूर्द्धं पित्रर्च्चनविधानात्। आसनादिदानप्रकारमाह मनुः,—

"द्विगुणांस्तु कुशान् दत्वा ह्युशन्तस्त्वेत्यृचा सह।
आवाह्य तदनुज्ञातो जपेदायान्तु न स्ततः॥
यवार्थास्तु तिलैः कार्याः कुर्यादर्घ्यादि पूर्व्ववत्।
दत्वाऽर्घ्यं संस्रवांस्तेषां पात्रे कृत्वा विधानतः॥

(१) दैवे एकैकं काण्डं कृत्वा पित्र्ये तत् कर्त्तव्यमिति काण्डानुसमयः। दैवे एकैकं पदार्थं कृत्वा पित्र्ये स पदार्थः कर्त्तव्य इति पदार्थानुसमयः। पदार्थसमूहः काण्डम्। तथाच दैवे आसनप्रभृत्याच्छादनान्तकाण्ड-समापनानन्तरं पित्र्ये तत्काण्डोपदेशआरम्भ काण्डानुसमयः।

पितृभ्यः स्थानमसीति न्युब्जं पात्रं करोत्यधः"—इति ॥

द्विगुणान् द्विगुणभुग्नान् सतिलान् कुशानासनार्थं दद्यात्। तदुक्तं काठके। "पितॄणां द्विगुणांस्तिलैः" इति ।

आसनदानात्पूर्व्वं पश्चाच्चोदकं दद्यात्। तथा चाश्वलायनः। "अपः प्रदाय दर्भान् द्विगुणभुग्नानासनं प्रदाय"। अपः प्रदायेति श्राद्धे चणः क्रियतामिति पूर्व्ववत् जलं दत्त्वा। पितॄनावाहयिष्ये इति ब्राह्मणान् स्पृष्ट्वा आवाहयेति तैरनुज्ञातः उशन्तस्त्वेति मन्त्रेणावाह्य नमो वः पितर इति तिलान् मस्तकादिदक्षिणपादान्तमवकीर्य्या-यान्तु नः पितर इति मन्त्रेणोपतिष्ठते। तथाच प्रचेताः—

"शिरःप्रभृति पादान्तं नमो व इति पैतृके"—इति ।

उपस्थानानन्तरकृत्यमुक्तं पुराणे,—

"जपेदायान्तु नः इति मन्त्रं सम्यगशेषतः ।
रक्षार्थं पितृसत्रस्य त्रिःकृत्वः सर्व्वतो दिशम्
तिलांस्तु प्रक्षिपेन्मन्त्रमुच्चार्यापहता इति" ॥

अर्घ्याद्याच्छादनान्तं पूर्व्ववत् कुर्यात्। अत्रार्घ्यपात्रासनादौ विशेषोविष्णुना दर्शितः। "दक्षिणाग्रेषु दक्षिणापवर्गेषु चमसेषु त्रिष्वपआसिञ्चेच्छन्नोदेवीरिति"। अयमर्थः। दक्षिणाग्रेषु दर्भेषु दक्षिणापवर्गतयाऽऽसादितेषु पवित्रान्तर्हितेषु चमसेषु त्रिष्वर्घ्यपात्रेषु शन्नोदेवीरभिष्टयइति मन्त्रेण प्रतिपात्रमप आसिञ्चेदिति। शौनकोऽपि। "पात्रेषु दर्भान्तर्हितेष्वपः प्रदाय शन्नोदेवीरभिष्टय-इत्यनुमन्त्रितासु तिलानावपति, तिलोऽसि सोमदेवत्यो गोसवो देवनिर्म्मितः। प्रत्नमद्भिः प्रत्नस्वधया पितॄनिमाँल्लोकान्प्रीणयाहि नः

स्वधानम इति"। अत्र च पित्रादीनां त्रयाणामेकैकस्यानेकब्राह्मणनिमन्त्रणे सर्व्वेषामेकब्राह्मणनिमन्त्रणेऽपि त्रीण्येवार्घ्यपात्राणि न तु ब्राह्मणसङ्ख्यया। अतएव वैजवापः,—

"स्तीर्त्वा पितॄणां त्रीण्येव कुर्यात्पात्राणि धर्म्मवित्।

एकस्मिन्वा बहुषु वा ब्राह्मणेषु यथाविधि"॥

स्तीर्त्वा तिलानर्घ्योदकेषु क्षिप्त्वेत्यर्थः। अर्घ्यपवित्रञ्चायुग्मसङ्ख्यया कर्त्तव्यम्। तदुक्तं चतुर्विंशतिमते,—

"तिस्रस्तिस्रः शलाकाः स्युः पितृपात्रेषु पार्व्वणे"—इति।

तिलप्रक्षेपानन्तरं गन्धपुष्पाणि प्रक्षिपेत्। तदुक्तं ब्रह्मपुराणे,—

"अर्घ्याः पुष्पैश्च गन्धैश्च ताः प्रपूज्याश्च शास्त्रवत्"—इति।

या अर्घ्यार्थास्ता आपस्ता गन्धादिभिः पूज्या इत्यर्थः। अनन्तरकर्त्तव्यमाह शौनकः,—"ताः प्रतिग्राहयिष्यन् स्वधार्घ्या इति"। ता-अपो ब्राह्मणैः प्रतिग्राहयिष्यन् स्वधार्घ्या इति मन्त्रेण स्थापयेदित्यर्थः। ततः पवित्रान्तर्हितेषूदकपूर्व्वकं या दिव्या इति मन्त्रेणार्घ्योदकं दद्यात्। तथाच पैठीनसिः। "ततो ब्राह्मणहस्तेषूदकपूर्व्वं दर्भान्प्रदायोदकपूर्व्वकमर्घोदकं ददाति या दिव्या इत्युक्काऽसावेतत्ते अर्घोदकमित्यप उपस्पृश्यैवमेवेतरयोः"—इति। अत्र विशेषमाह धर्म्मः। "या दिव्या आप इति पात्रं पाणिभ्यामुद्धृत्य नाम गोत्रञ्च गृहीत्वा सपवित्रहस्तेऽर्घ्यं दद्यात्"—इति। यत्तु पैठीनसिवचने हस्तेष्विति बहुवचनम्, तत् त्रींस्त्रीनेकैकत्रेति विहितब्राह्मणसङ्ख्यापक्षे। ब्राह्मणहस्तेषूदकपूर्व्वं दर्भान्प्रदायेति पित्रर्थब्राह्मणार्चनएव बहुवचनप्रयोगात्। अन्यथा, एवमितरयोरिति पितामहप्रपितामहार्थब्राह्मणा-

चनस्य पृथग्विधानं न स्यात् । (१)एवमर्घ्यं दत्वा तेषामर्घोदकानां संस्रवान् विप्रहस्तेभ्यः पात्रेषु गलितान् पितृपात्रे संगृह्य तत्पात्रं न्युब्जमधोमुखं "पितृभ्यः स्थानमसि"—इत्यधः कुर्यात् भूमौ निदध्यात् इत्यर्थः । न्युब्जकरणानन्तरकर्त्तव्यमाह वैजावापः,—

"तस्योपरि कुशान्दत्वा प्रदद्याद्दैवपूर्व्वकम् ।
गन्धपुष्पाणि धूपञ्च दीपवस्त्रोपवीतकम्"—इति ॥

दैवपूर्व्वकमित्ययं पदार्थानुसमयो याज्ञवल्क्योक्तकाण्डानुसमयेन सह विकल्पते इत्यविरोधः । एवं गन्धपुष्पादिभिर्ब्राह्मणानभ्यर्च्याग्नौकरणाख्यं कर्म्म कुर्यात् । तदाह कात्यायनः,—

"गन्धान्ब्राह्मणसात्कृत्वा पुष्पाण्यृतुभवानि च ।
धूपं चैवानुपूर्व्वेण अग्नौ कुर्यादतः परम्"—इति ॥

अग्नौ करणप्रकारमाह याज्ञवल्क्यः,—

"अग्नौ करिष्यन्नादाय पृच्छत्यन्नं घृतप्लुतम् ।
कुरुष्वेत्यभ्यनुज्ञातो हुत्वाऽग्नौ पितृयज्ञवत् ॥
हुतशेषं प्रदद्यात्तु भाजनेषु समाहितः ।
यथालाभोपपन्नेषु रौप्येषु तु विशेषतः"—इति ॥

अग्नौ करिष्यन् घृतप्लुतमन्नमादाय "अग्नौ करिष्ये"—इति ब्राह्मणान् पृच्छेत् । घृतशब्देन शाकादेर्निरासः । ततः कुरुष्वेति तैरनुज्ञातः, "सान्निध्यमुपसमाधाय* मेचणेनावदाय सोमाय पितृमते स्वधा-

* सन्निधावुपसमाधाय,—इति मु० ।

(१) दत्त्वाऽर्घ्यं संस्रवांस्तेषां (७२४।६) इति याज्ञवल्क्यवचनं व्याचष्टे एवमर्घ्यं दत्त्वेत्यादिना ।

नमोऽग्नये कव्यवाहनाय स्वधानमः"—इति पिण्डपितृयज्ञविधानेनाग्नौ जुहुयात्। ततोमेक्षणं हुत्वा हुतशेषं यथालाभोपपन्नेषु पित्रादिभाजनेषु* दद्यात् न वैश्वदेवभाजनेषु। तदुक्तं पुराणे,—

"अग्नौकरणशेषन्तु न दद्याद्वैश्वदैविके"—इति।

अग्नौकरणञ्च प्राचीनावीत्युपवीती वा कुर्य्यात्। तत्प्रकृतिभूतस्य पिण्डपितृयज्ञस्य दैविकत्वपैतृकत्वाभ्यामुभयविधत्वेन विकल्पितोभयधर्मकत्वात्, तद्विकृतिभूताग्नौकरणहोमेऽपि प्राचीनावीतित्वोपवीतित्वयोर्विकल्पोऽवगम्यते। अत्र च यथाशाखं व्यवस्था द्रष्टव्या। अग्नौकरणञ्च स्मार्त्तत्वेन विवाहाग्नौ कर्त्तव्यम्। यदा तु सर्वाधानेनौपासनाग्निर्नास्ति, तदा दक्षिणाग्नौ जुहुयात्, तदसन्निधाने लौकिकाग्नौ। तथा च वायुपुराणम्,—

"आहृत्य दक्षिणाग्निन्तु होमार्थं वै प्रयत्नतः।
अग्न्यर्थं लौकिकं वाऽपि जुहुयात्कर्मसिद्धये"—इति।

अग्न्यर्थमौपासनाग्निकार्य्यसिद्ध्यर्थम्। दक्षिणाग्न्यसन्निधाने पाणौ होमः कर्त्तव्यः। तथा च स्मृत्यन्तरम्,—

"हस्तेऽग्नौकरणं कुर्य्यादग्नौ वा साग्निको द्विजः"—इति।

साग्निकः सर्वाधानेनाहिताग्निर्दक्षिणाग्न्यसन्निधाने हस्ते लौकिकेऽग्नौ वाऽग्नौकरणं कुर्य्यादित्यर्थः। यदा त्वर्धाधानेनाहिताग्निरप्यग्निमान्† तदौपासनाग्नावग्नौकरणं कुर्य्यात्, तदभावे द्विजपाणावप्सु वा। तथाच मार्कण्डेयः,। "अनाहिताग्निस्त्वौपासनाग्न्यभावे

* पित्रादिभोजनपात्रेषु,—इति मु०।

† यदा त्वर्द्धाधानेनाहिताग्निरनाहिताग्निर्वाऽग्निमान्,—इति मु०।

विजेऽप्सु वा"—इति। अनाहिताग्निशब्देनाधानेनाहिताग्निर्ग्रृह्यते। अग्नौकरणं जलसमीपे श्राद्धकरणे वेदितव्यम्।

तदाह कात्यायनः,—

"विष्णुधर्मोत्तरे वाऽप्सु मार्कण्डेयनयः स्मृतः।

स यदाऽपां समीपे स्याच्छ्राद्धं ज्ञेयो विधिस्तदा"—इति।

यत्तु मनुनोक्तम्,—

"अग्न्यभावे तु विप्रस्य पाणावेवोपपादयेत्"—इति।

तद्ब्रह्मचारिविषयम्। तदाह जातूकर्ण्यः,—

"अग्न्यभावे तु विप्रस्य पाणौ दद्यात्तु दक्षिणे।

अग्न्यभावः स्मृतस्तावद्यावद्भार्य्यां न विन्दति"—इति।

विद्यमानेऽप्यग्नौ काम्यादिषु चतुर्षु श्राद्धेषु ब्राह्मणपाणावेव होमः। तदाङ्गर्ह्यकाराः,—

"अन्वष्टक्यं च पूर्वेद्युर्मासिमासि च पार्व्वणम्।

काम्यमभ्युदयेऽष्टम्यामेकोद्दिष्टमथाष्टमम्॥

चतुर्ष्वाद्येषु साग्नीनामग्नौ होमो विधीयते।

पित्र्यब्राह्मणहस्ते स्यादुत्तरेषु चतुर्ष्वपि"—इति।

"हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणामष्टम्योऽष्टकाः"—इति विहितान्यष्टकाश्राद्धानि। तचाष्टकाश्राद्धानामुत्तरदिने नवम्यां क्रियमाणं श्राद्धमन्वष्टक्यम्। पूर्व्वेद्युः सप्तम्यां क्रियमाणं श्राद्धं 'पूर्व्वेद्युः'—इति पदेन लक्षणयोक्तम्। प्रतिमासं क्रियमाणमापरपक्षिकं श्राद्धं 'मासिमासि'—इत्यनेनोक्तम्। पार्व्वणं सर्व्वश्राद्धप्रकृतीभूतममावस्याश्राद्धम्। काम्यं पुत्रादिफलकामनया क्रियमाणं श्राद्धम्। चाभ्यु-

दयिकश्राद्धमभ्युदय इति पदेनोक्तम्। अष्टकाख्यश्राद्धमष्टम्यामिति पदेनोक्तम्। एकोद्दिष्टपदेन सपिण्डीकरणं लक्षणयोक्तं, सपिण्डीकरणे एकोद्दिष्टस्यापि सद्भावात्। एषां मध्ये आद्येषु चतुर्षु साग्निकानाम-ग्नावेवाग्नौकरणहोमः, उत्तरेषु साग्नीनां पित्र्यब्राह्मणहस्तएवेति*। पाणौ होमे तु विशेषः कात्यायनेन दर्शितः,—

"पित्र्ये यः पङ्क्तिमूर्द्धन्यस्तस्य पाणावनग्निकः।

कृत्वा मन्त्रवदन्येषां तूष्णीं पात्रेषु निक्षिपेत्"—इति।

यत्तु यमेनोक्तम्,—

"दैवविप्रकरेऽनग्निः कृत्वाऽग्नौकरणं द्विजः"—इति।

तत्र विकल्पेन व्यवस्था द्रष्टव्या। दैविकब्राह्मणपाणौ होम-पक्षेऽपि पित्र्यब्राह्मणपात्रेष्वेव शेषं निक्षिपेत्। अतएव वायु-पुराणम्,—

"कृत्वा दैवकरेऽनग्निः शेषं पित्र्ये निवेदयेत्।

न हि स्मृताः शेषभाजो विश्वेदेवाः पुराणगैः"—इति।

पाणौ होमे यत्कर्त्तव्यं तदाह शौनकः। "अनग्निश्चेदाद्यं गृहीत्वा भवत्स्वेवाग्नौकरणम्—इति पूर्ववत्तथाऽस्त्विति"। अयमर्थः। आद्यं घृतप्लुतमन्नं गृहीत्वा "भवत्स्वेवाग्नौकरणहोमं करिष्ये"—इति पूर्ववत् पृष्ट्वा तथाऽस्त्विति तैरनुज्ञातोजुहुयात्,—इति। यमोऽपि,—

"अग्नौकरणवत्तत्र होमोदैवकरे भवेत्।

पर्य्यस्तदर्भानास्तीर्य्य यतो ह्यग्निसमो हि सः"—इति।

पर्य्यस्तदर्भाः परिस्तरणयोग्यदर्भाः। दैवकरग्रहणेन पित्र्यब्राह्मण-

---

* हेमन्तशिशिरयोरित्यारभ्य एतदन्तोग्रन्थो नास्ति सा० पुस्तके।

करोऽप्युपलक्ष्यते। उभयत्रापि विकल्पेनाग्नौकरणस्य विधानात्। पाणितले हुतस्यान्नस्य विनियोगमाह गृह्यपरिशिष्टकारः,—

"यच्च पाणितले दत्तं यच्चान्यदुपकल्पितम्।
एकीभावेन भोक्तव्यं पृथग्भावो न विद्यते॥
अन्नं पाणितले दत्तं पूर्वमश्नन्त्यबुद्धयः।
पितरस्तेन तृप्यन्ति शेषान्नं न लभन्ति ते"—इति।

यदा दैवविप्रकरे होमस्तदा पितृमातामहश्राद्धद्वयार्थं सकृदेवानुष्ठेयः। वैश्वदेवभेदेऽपि तत्राधिकरणकारकस्य संप्रतिपन्नत्वात्। यदा पित्र्यब्राह्मणकरे होमस्तदा मातामहब्राह्मणकरेऽपि पृथगनुष्ठेयः, वैश्वदेविकतन्त्रत्वेऽपि तत्राधिकरणकारकस्यासंप्रतिपन्नत्वात्[१]।

तथा च कात्यायनः,—

(१) दैवब्राह्मणहस्ते होमविधानपक्षे दैवब्राह्मणहस्तएवाग्नौकरणहोमस्याधारइति सएव तस्याधिकरणकारकं, आधारस्यैवाधिकरणकारकतया स्मरणात्। वैश्वदेवभेदेऽपि एकस्मिन् वैश्वदेवब्राह्मणहस्ते अग्नौकरणहोमे कृतेऽपि शास्त्रोक्तएवाधारे स कृतोभवतीति नास्य पुनरावृत्तिः। पित्र्यब्राह्मणहस्ते होमपक्षे हि पितृब्राह्मणहस्तएव होमस्याधिकरणकारकं भवति। मातामहपक्षे तु न पितृब्राह्मणो वर्त्तते किन्त्वन्यएव। पित्र्यब्राह्मणहस्ते होमविधिस्तु पितृपक्षएव प्रवर्त्तते। तस्य च 'मातामहानामप्येवं'—इत्याद्यतिदेशबलान्मातामहपक्षे प्राप्तिः। एवञ्च पितृब्राह्मणस्थाने मातामहब्राह्मणवत् पितृब्राह्मणहस्तस्थाने मातामहब्राह्मणहस्तोऽपि तत्पक्षीयाग्नौकरणहोमाधारतया अतिदेशेन प्राप्यते इति व्यक्तमधिकरणकारकस्य भिन्नत्वम्। तथाचाधिकरणकारकभेदात् होमोऽपि भेदेनैव कर्त्तव्य इति भावः।

"मातामहस्य भेदेऽपि कुर्यात्तन्त्रे च* साग्निकः"—इति।

वैश्वदेविकस्य भेदे तन्त्रे च मातामहस्य मातामहार्थब्राह्मणस्यापि पाणौ होमं साग्निकः कुर्यादित्यर्थः। पात्राणि द्विः प्रक्षालयेत्। तथा च ब्रह्माण्डपुराणम्,—

"प्रक्षाल्य हस्तपात्रादि पश्चादद्भिर्द्विधाभवत्।
प्रक्षालनं जलं दर्भैस्तिलमिश्रं क्षिपेच्छुचौ"—इति।

हस्तेन निर्म्मृष्टं पात्रादीति मध्यमपदलोपी समासः। आदिशब्देन घृतादिधारणार्थं गृह्यते। एवं प्रक्षालितेषु पात्रेषु कृतशेषं प्राचीनावीती पितृपात्रेषु निधाय सम्पादितान् पदार्थान् परिवेषयेत्। तथा च शौनकः,—

"कृत्वाऽग्नौ परिशिष्टन्तु पितृपात्रेष्वनन्तरम्।
निवेद्यैवापसव्येन परिवेषणमाचरेत्"—इति।

अपसव्येनेति कृतशेषनिवेदनेनान्वेति न परिवेषणेन। अतएव कार्ष्णाजिनिः,—

"अपसव्येन कर्त्तव्यं पित्र्यं कृत्यं विशेषतः।
अन्नदानादृते सर्व्वमेवं मातामहेष्वपि"—इति।

परिवेषणप्रकारो मनुना दर्शितः,—

"पाणिभ्यामुपसंगृह्य स्वयमन्नस्य वर्द्धितम्।
विप्रान्तिके पितॄन् ध्यायन् शनकैरुपनिक्षिपेत्"—इति।

अन्नस्य वर्द्धितमन्नेन पूर्णं परिवेषणपात्रं विप्रान्तिके भोजनार्थ-

* कुर्य्यात्तन्नैव,—इति मा० पु०।

पात्रे । स्वयमिति वचनात् स्वयं परिवेषणं मुख्यम् । अतएव वायु-पुराणम्,—

"फलस्यानन्तता प्रोक्ता स्वयं तु परिवेषणात्"—इति ।

यत्तु तत्रैवोक्तम्,—

"परिवेषणं प्रशस्तं हि भार्य्यया पितृतृप्तये ।

पितृदेवमनुष्याणां स्त्रीसहायोयतः स्मृतः"—इति ।

तदितरापेक्षया वेदितव्यम् । भार्य्ययाऽपि सवर्णयैव परिवेषणं कार्य्यम् । तथा च नारायणः,—

"यद्द्रव्यं यत्पवित्रञ्च यत्पित्र्यं यत्सुखावहम् ।

द्विजातिभ्यः सवर्णाया हस्तेनैव तु दीयते"—इति ।

हस्तेन हस्तद्वयेनेत्यर्थः । *हस्तेनापि न साक्षाद् देयं, अपि तु दर्व्यादिद्वारा । अतएव वृद्धशातातपः,—

"उभाभ्यामपि हस्ताभ्यामाहृत्य परिवेषयेत्"—इति ।

मत्स्येनोक्तम्,—

"हस्तदत्तास्तु ये स्नेहा लवणव्यञ्जनादयः ।

दातारन्नोपतिष्ठन्ति भोक्ता भुञ्जीत किल्विषम्"—इति ।

विष्णुपुराणेऽपि,—

"नापवित्रेण हस्तेन नैकेन न विना कुशम् ।

नायसेनैव पात्रेण श्राद्धेषु परिवेषयेत्"—इति ।

आयसेन अयोमयपात्रेण नैव परिवेषयेत् । परिवेषणे कानि

* हस्तेन,—इत्यादिः एतदन्तोग्रन्थो नास्ति ना० पुस्तके ।

पात्राणि प्रशस्तानीत्यपेक्षिते विष्णुः। "घृतादिदाने तैजसानि पात्राणि वा फल्गुपात्राणि वा प्रशस्तानि। अत्र च पितृगाथा भवति,—

सौवर्णराजताभ्याञ्च खड्गेनौदुम्बरेण च।

दत्तमक्षयतां यान्ति फल्गुपात्रेण वाऽप्यथ"—इति।

खड्गेन खड्गमृगशृङ्गकृतदर्व्यादिना। फल्गुपात्रेण काकोदुम्बरिकाख्यवृक्षदारुकृतदर्व्यादिना*। अन्यान्यपि परिवेषणीयान्याह मनुः,—

"भक्ष्यं भोज्यञ्च विविधं मूलानि च फलानि च।

हृद्यानि चैव मांसानि पानानि सुरभीणि च॥

उपनीयं तु तत्सर्वं शनकैः सुसमाहितः।

परिवेषयेत्तु प्रयतः गुणान् सर्व्वान् प्रचोदयन्"—इति।

शौनकोऽपि,—

"शाकं सर्व्वमुपानीय निवेद्य च पृथक् पृथक्।

विधिना दैवपूर्व्वं तु परिवेषणमारभेत्"—इति।

सम्पादितं सर्व्वपात्रेषु प्रक्षिप्य पात्राभिमन्त्रणं कुर्य्यात्। तदाह प्रचेताः। "सर्व्वं प्रकृतं दत्वा पात्रमालभ्य जपेत्"—इति। अत्र विशेषमाह याज्ञवल्क्यः,—

"दत्वाऽन्नं पृथिवीपात्रमिति पात्राभिमन्त्रणम्।

कृत्वेदं विष्णुरित्यन्ने द्विजांगुष्ठं निवेशयेत्"—इति।

अनन्तरकर्त्तव्यमाहात्रिः,—

"हस्तेन मुक्तमन्नाद्यमिदमन्नमितीरयेत्।

स्वाहेति च ततः कुर्य्यात् स्वसत्तादिं निवर्त्तयेत्॥

* खड्गेन,—इत्यादि एतदन्तं नास्ति ना० शा० स० पुस्तकेषु।

गोत्रसंबन्धनामानि इदमन्नं ततः स्वधा।
पितॄन् क्रमाद्दीयेति स्वसत्तां विनिवर्त्तयेत्"—इति।

अयमर्थः। विश्वेभ्यो देवेभ्य इति देवतोद्देशेन शब्दोच्चारणानन्तरमिदमन्नमित्युच्चारयेत्, ततः स्वाहेति मन्त्रमुच्चारयेत्, ततो न ममेति स्वत्वपरित्यागं कुर्य्यात्। ततः पित्रादिक्रमात् संबन्धगोत्रनामोच्चारणपूर्व्वकं* देवतोद्देशं कृत्वेदमन्नमिति प्रदेयं द्रव्यं निर्दिश्य, स्वधेति कव्यदानप्रकाशकं मन्त्रमुच्चार्य्य, न ममेति स्वत्वपरित्यागं कुर्य्यात्। अनन्तरकृत्यमाह लघुयमः,—

"अन्नहीनं क्रियाहीनं मन्त्रहीनञ्च यद्भवेत्।
सर्व्वमच्छिद्रमित्युक्ता ततो यत्नेन भोजयेत्"—इति।

अच्छिद्रं जायतामित्युक्ता। अनन्तरकर्त्तव्यमाह प्रचेताः,—

"अपोशानं प्रदायाथ सावित्रीं त्रिर्जपेदथ।
मधुवाता इति त्वचं(१) मध्वित्येतत्त्रिकं तथा"—इति।

मधु इत्येतत् त्रिरावर्त्तनीयमिति चतुर्थपादस्यार्थः। सावित्रीं सव्याहृतिकां जपेत्। तथा च याज्ञवल्क्यः,—

"सव्याहृतिकां गायत्रीं मधुवाता इति त्वचम्।
जप्त्वा यथासुखं वाच्यं भुञ्जीरंस्तेऽपि वाग्यताः"—इति।

यथासुखमित्यत्र जुषध्वमित्यध्याहारः। अतएव व्यासः,—

* सम्बन्धनामगोत्रोच्चारणपूर्व्वकं,—इति मु०।

(१) त्वचं,—इत्यार्षोऽयं प्रयोगः। "ऋचि त्रेरुत्तरपदादिलोपश्च छन्दसि"—इति पाणिनिस्मरणात्।

"जुषध्वमिति ते चोक्ताः सम्यग्विष्टतभाजनाः।
कृतमौनाः समश्नीयुरपोशानादनन्तरम्"—इति।

श्राद्धभोक्ता बलिं न दद्यात्। अतएवात्रिः,—

"दत्ते वाऽप्यथवाऽदत्ते भूमौ यो निक्षिपेद्बलिम्।
तदन्नं निष्फलं याति निराशैः पितृभिर्गतम्"—इति॥

भोजनोपक्रमानन्तरकर्त्तव्यमाह कात्यायनः। "अश्नत्सु जपेद्व्याहृतिपूर्व्वां गायत्रीं सप्रणवां सकृत्त्रिर्वा रक्षोघ्नीः पित्र्यमन्त्रान् पुरुषसूक्तमप्रतिरथमन्यानि च पवित्राणि[१]"—इति। मनुरपि,—

"स्वाध्यायं श्रावयेत्पित्र्ये धर्म्मशास्त्राणि चैव हि।
आख्यानानीतिहासांश्च पुराणानि खिलानि च[२]"—इति।

अत्र सूक्तजपो यज्ञोपवीतिना कर्त्तव्यः। अतएव यमदग्निः,—

"अपसव्येन कर्त्तव्यं सर्व्वं श्राद्धं यथाविधि।
सूक्तस्तोत्रजपं मुक्त्वा विप्राणाञ्च विसर्ज्जनम्"—इति॥

दातृभोक्तृनियमानाह वृद्धशातातपः,—

"अपेक्षितं योन दद्यात् श्राद्धार्थमुपकल्पितम्।
कृपणो मन्दवुद्धिस्तु न स श्राद्धफलं लभेत्।

---

(१) ऋग्वेदीय ४।४।१० पञ्चमसूक्तगता ऋचः रक्षोघ्नाः।

(२) स्वाध्यायोवेदः। धर्म्मशास्त्राणि मानवादीनि। आख्यानानि सौपर्णमैत्रावरुणादीनि। इतिहासामहाभारतादयः। पुराणानि "सर्गश्च प्रतिसर्गश्च वंशोमन्वन्तराणि च। वंशानुचरितञ्चैव पुराणं पञ्चलक्षणम्"—इत्युक्तलक्षणानि ब्रह्मपुराणादीनि। खिलानि श्रीसूक्तशिवसङ्कल्पादीनि।

अपेक्षितं याचितव्यं श्राद्धार्थमुपकल्पितम्।
न याचते द्विजोमूढ़ः स भवेत् पितृघातकः"—इति।

ननु,

"याचते यदि दातारं ब्राह्मणो ज्ञानदुर्व्वलः।
पितरस्तस्य दुष्यन्ति दातुर्भोक्तुर्न संशयः"—इति।
"कृच्छ्रदादशरात्रेण मुच्यतेऽकर्मणस्ततः।
तस्माद्विद्वान्नैव दद्यान्न याचेन्न च दापयेत्"—इति

वायुपुराणस्मृती विरुध्येयातामिति चेत्। मैवम्। तयोरनुपकल्पितविषयत्वेनाप्युपपत्तेः। उपकल्पितवस्तुनोऽप्यत्यन्ताधिकस्य दानप्रतिग्रहौ शङ्खलिखिताभ्यां निषिद्धौ। "नात्यन्ताधिकं दद्यान्न प्रतिगृह्णीयात्"—इति। अनपेक्षितवस्तुनो निवारणप्रकारमाह निगमः,—

"नान्नपानादिकं श्राद्धे वारयेन्मुखतः क्वचित्।
अनिष्टत्वाद्बहुत्वाद्वा वारणं हस्तसंज्ञया"—इति।

वारणं याचनस्याप्युपलक्षणार्थम्। मुखतोयाचने मौनभङ्गाविशेषात्। अपेक्षितवस्तु ददामीत्युक्त्वा न देयम्। तथाच यमः,—

"यावद्धविष्यं भवति यावदिष्टं प्रदीयते।
तावदश्नन्ति पितरो यावन्नाह ददाम्यहम्"—इति।

भोजनकाले दातृनियमाः ब्रह्माण्डपुराणे दर्शिताः,—

"न चाश्रु पातयेत् कर्त्ता* नाशुद्धां गिरमीरयेत्।

---

* जातु,—इति मु०।

न चोद्वीचेत भुञ्जानान् न च कुर्वीत मत्सरम्।
न दीनोनापि वा क्रुद्धो न चैवान्यमना नरः।
एकाग्रमाधाय मनः श्राद्धं कुर्यात्सदा बुधः"—इति।

भोक्तृनियममाह सुमन्तुः,—

"अक्रोधनो रसान् सम्यगद्याद्यद्यस्य* रोचते।
आ तृप्तेर्भोजनन्तेषां कामतो† नावशेषणम्"—इति।

निगमेऽपि। "तूष्णीं भुञ्जीरन् न विलोकयमाना अनुद्धृत्य‡ पात्रम्"—इति। बोधायनोऽपि,—

"पादेन पादमाक्रम्य योभुङ्क्तेऽनापदि द्विजः।
नैवासौ भुज्यते श्राद्धे निराशाः पितरोगताः"—इति।

प्रचेता अपि,—

"पीत्वाऽऽपोशानमश्नीयात् पात्रे दत्तमगर्हितम्।
सर्वेन्द्रियाणां चापल्यं न कुर्यात्पाणिपादयोः"—इति।

मनुरपि,—

"अत्युष्णं सर्वमन्नं स्यादश्नीरंस्तेव वाग्यताः।
न च द्विजातयोब्रूयुर्दाचा पृष्टा हविर्गुणान्"—इति।

अश्नीरंस्तेवेत्येवकारः प्रमादात्परस्परसंस्पर्शेऽपि भोजनानिवृत्त्यर्थः। अतएव शङ्खः,—

---

* सम्यगादद्याद्यदि,—इति मु०।

† क्रमतो,—इति मा०।

‡ अविलोकयन्तोमेद्धृत्य,—इति मु०।

"श्राद्धपंक्तौ तु भुञ्जानो ब्राह्मणो ब्राह्मणं स्पृशेत्।
तदन्नमत्यजन् भुक्त्वा गायत्र्यष्टशतं जपेत्"—इति।

पुनः सएव,—

"हुङ्कारेणापि योब्रूयाद्धस्ताद्वाऽपि गुणान्वदेत्।
भूतलाच्चोद्धरेत्पात्रं मुञ्चेद्धस्तेन वाऽपि तत्।
प्रौढ़पादोवहिःकक्षोवहिर्जानुकरोऽथवा।
अङ्गुष्ठेन विनाऽश्नाति मुखशब्देन वा पुनः।
पीतावशिष्टन्तोयादि पुनरुद्धृत्य वा पिवेत्।
खादितार्द्धं पुनः खादेन्मोदकानि फलानि वा।
मुखेन वा धमेदन्नं निष्ठीवेद्भाजनेऽपि वा।
इत्यमश्नन् द्विजः श्राद्धं हत्वा गच्छत्यधोगतिम्"-इति।

प्रौढ़पादः आसनाद्यारूढ़पादः। वहिःकक्षउत्तरवासोवहिर्भूत-कक्षद्वितयः*। दातृनियममाह शङ्खः,—

"श्राद्धे नियुक्तान् भुञ्जानान्न पृच्छेल्लवणादिषु।
उच्छिष्टाः पितरोयान्ति पृच्छतो नात्र संशयः।
दातुः पतति वाऊर्वैं जिह्वा भोक्तुश्च भिद्यते"—इति।

अन्यानपि भोक्तृनियमानाह प्रचेताः,—

"न स्पृशेद्वामहस्तेन भुञ्जानोऽन्नं कदाचन।
न पादौ न शिरोवस्तिं न पदा भाजनं स्पृशेत्।
भोजनन्तु न निःशेषं कुर्यात् प्राज्ञः कथञ्चन।

---

* प्रौढ़पादः,—इत्यादिरेतदन्तोग्रन्थोनास्ति ना॰ पुस्तके।

अन्यच दध्नः क्षीराद्वा क्षौद्रात् सक्तुभ्य एव च”—इति।

न च, “न निन्देयुर्नावशेषयेयुः”—इति जमदग्निवचनविरोधः,—इति वाच्यं, तस्याधिकावशेषणविषयत्वात्। अतएवोक्तन्तेनैव। “अल्पं पुनरुत्सृष्टव्यन्तस्यासंस्कृतप्रमीतानां भागधेयत्वात्”—इति। उच्छिष्टस्यासंस्कृतप्रमीतादिभागधेयत्वञ्च मनुराह,

“असंस्कृतप्रमीतानां त्यागिनां कुलयोषिताम्।

उच्छिष्टभागधेयं स्याद् दर्भेषु विकिरश्च यः”—इति।

एवं नियमेन भुक्तवत्सु विप्रेषु यत् कर्त्तव्यन्तदाह प्रचेताः,—

“तृप्तान् बुद्धाऽन्नमादाय सतिलं पूर्व्ववज्जपेत्”—इति।

पूर्ववत्सव्याहृतिकाङ्गायत्रीं मधुमतीश्च जपेत्,—इति। तदाह कात्यायनः। “गायत्रीं मधुमतीं मधुमध्विति च जप्त्वा तृप्ताः स्थेति पृच्छति”—इति। प्रश्नानन्तरं व्यासः,—

“तृप्ताः स्थेति च पृष्टास्ते ब्रूयुस्तृप्ताः स्म इत्यथ”—इति।

अनन्तरकर्त्तव्यमाह मनुः,—

“सार्ववर्णिकमन्नाद्यं संनीयाप्लाव्य वारिणा।

समुत्सृजेद्भुक्तवतामग्रतो विकिरन्भुवि”—इति।

सर्ववर्णा व्यञ्जनविशेषा यस्मिंस्तत्सार्ववर्णिकम्। अत्र विशेषमाह प्रचेताः। “ये अग्नीति भुवि क्षिपेत्”—इति। भुवि दर्भास्तृतायामिति। अतएव मनुना, “दर्भेषु विकिरश्च यः”—इत्युक्तम्। विकिरं दत्वा आचामेत्। अतएव मरीचिः,—

“आग्नेषु विकिरं दत्वा योनाचामेन्मतिभ्रमात्।

पितरस्तस्य षण्मासमवश्युच्छिष्टभोजिनः”—इति।

अनन्तरं गण्डूषार्थमुदकं दद्यात् । तथाच मदालसावाक्यम्,—

"ततस्त्वाचमनार्थाय दद्याच्चापः सकृत्सकृत्"—इति ।

पित्र्यब्राह्मणपूर्वकं हस्तप्रक्षालनाचमनार्थमुदकं दद्यात् । तदाह-विष्णुः । "उदङ्मुखेष्वाचमनमादौ दद्यात् ततः प्राङ्मुखेषु ततस्तु प्रोक्षणम्"—इति । श्राद्धदेशं सम्प्रोक्ष्य दर्भपाणिः सर्वं कुर्यात्* । ततः पिण्डनिर्वपणं कुर्यात् । तदाह याज्ञवल्क्यः,—

"सर्वमन्नमुपादाय सतिलं दक्षिणामुखः ।

उच्छिष्टसन्निधौ पिण्डान् दद्यात्तु पितृयज्ञवत्"—इति ।

अयमर्थः । ब्राह्मणार्थपक्वान्तिलमिश्रं सर्वमन्नमुपादाय पिण्डान् कृत्वोच्छिष्टसंनिधौ पितृयज्ञकल्पेन पिण्डान् दद्यात् । एतच्च चरुश्रपणाभावे वेदितव्यम् । यदा तु चरुश्रपणसद्भावस्तदाऽग्नौकरणशिष्टचरुशेषेण सह सर्वमन्नमादाय अग्निसन्निधौ पिण्डान् दद्यात् । तदाह मनुः,—

"त्रींस्तु तस्माद्धविःशेषात् पिण्डान् कृत्वा समाहितः ।

औदकेनैव विधिना निर्व्वपेद्दक्षिणामुखः"—इति ।

उच्छिष्टसन्निधिस्वरूपमाहात्रिः,—

"पितॄणामासनस्थानादग्रतस्त्विष्वरत्निषु ।

---

* एतत्परं,'पैतृकब्राह्मणेषु प्रथमं हस्तप्रक्षालनपूर्व्वकमाचमनार्थमुदकं दत्त्वा पश्चाद्वैश्वदेविकब्राह्मणेषु दत्त्वाऽनन्तरं प्रोक्षितमिति मन्त्रेण श्राद्धदेशं संप्रोक्ष्य दर्भपाणिः सर्व्वमुपरिकर्म्मजातं कुर्य्यादित्यर्थः'—इत्यधिकः पाठः मु० ।

उच्छिष्टसन्निधानन्तु नोच्छिष्टासनसन्निधौ"—इति।

त्रिवरत्निखितिति उच्छिष्टसंसर्गरहितासन्नदेशोपलक्षणार्थम्। अतएव व्यासः,—

"अरत्निमात्रमुत्सृज्य पिण्डांस्तत्र प्रदापयेत्।

यत्रोपस्पृशतां वाऽपि प्राप्नुवन्ति न विन्दवः"—इति।

पिण्डदाने कालमाह मनुः,—

"पिण्डनिर्वपणं केचित् पुरस्तादेव कुर्वते"—इति।

भोजनात् पुरस्तादर्चनानन्तरमग्नौकरणानन्तरं वा पिण्डनिर्वपणं केचिदिच्छन्ति। अपरे तु भोजनानन्तरमाचमनादर्वागूर्द्धं वा ब्राह्मणविसर्जनात् पश्चाद्वा पिण्डनिर्व्वपणं कचिदिच्छन्तीति, केचिदित्यनेनावगम्यते। भोजनात् पुरस्तात् पिण्डनिर्वपणं सपिण्डीकरणात् प्राग्विहितेष्वप्रशस्तेषु श्राद्धेषु, सपिण्डीकरणादिप्रशस्तश्राद्धेषु पश्चादेव पिण्डनिर्वपणम्। तदाह लोकाचिः,—

"अप्रशस्तेषु यागेषु पूर्वं पिण्डावनेजनम्।

भोजनस्य, प्रशस्ते तु पश्चादेवोपकल्पयेत्"—इति।

आचमनात् प्रागूर्ध्वं वा ब्राह्मणविसर्जनादूर्ध्वं वा पिण्डनिर्वपणमिति पक्षाः शाखाभेदेन व्यवस्थिताः। तथाच स्मृत्यन्तरम्,—

"मुनिभिर्भिन्नकालेषु पिण्डदानन्तु यत् स्मृतम्।

तत् स्वशाखामतं यत्र तत्र कुर्याद्विचक्षणः"—इति।

तत्राश्वलायनशाखिनामाचमनात् प्रागूर्ध्वं वेति पक्षयोः समत्वेन विकल्पः। तथाचाश्वलायनः। "भुक्तवत्स्वनाचान्तेषु पिण्डान् निदध्यादाचान्तेषु वा"—इति। यस्यां शाखायां कालविशेषोन श्रुतः, तत्र

प्रयोगसौकर्यार्थमाचमनादूर्ध्वं पिण्डनिर्वपणपक्षएव ग्रहीतव्यः । पिण्ड-निर्वपणेतिकर्त्तव्यता ब्रह्माण्डपुराणेऽभिहिता,—

"सव्योत्तराभ्यां पाणिभ्यां कुर्यादुल्लेखनं द्विजः ।
प्रघर्षणं ततः कुर्यात् श्राद्धकर्मण्यतन्द्रितः ।
खण्डनं पेषणं चैव तथैवोल्लेखनक्रिया ।
वज्रेणाथ कुशैर्वाऽपि उल्लिखेत् तु महीं द्विजः"—इति ।

खण्डनं कुशादेश्छेदनं, पेषणं भूघर्षणं, वज्रशब्देन स्फ्य उच्यते[१] । उल्लेखनमन्त्रश्च कात्यायनेन दर्शितः । "उल्लिख्यापहतादति" । अनन्तरं प्रोक्षयेत् । "तामभ्युक्ष्य"—इति आश्वलायनस्मरणात् । तत्र कुशानास्तृणुयात् । तदुक्तं ब्रह्माण्डपुराणे । "क्षिपेत् कुशांस्तत्र च दक्षिणाग्रान्"—इति । ततोऽवनेजनं कुर्यात् । तदाह सुमन्तुः—

"असाववनेनिक्ष्वेति पुरुषं पुरुषं प्रति ।
त्रिस्त्रिरेकेन हस्तेन विदधीतावनेजनम्"—इति ।

असाविति पित्रादीन् नामगोत्राभ्यां सम्बोध्य एकेन दक्षिण-हस्तेन प्रतिपुरुषं त्रिस्त्रिरवनेजनमुदकनिर्वपणं कुर्यादित्यर्थः । अत्राश्व-लायनेनावनेजने मन्त्रान्तरमुक्तम् । "प्राचीनावीती लेखां त्रिरु-दकेनोपनयेच्छुन्धन्तां पितरः"—इत्यादि । तदविरुद्धं, शाखाभेदेन व्यवस्थोपपत्तेः । पिण्डदानमन्त्राः कात्यायनेन दर्शिताः । "असावे-तत्तइति ये च त्वामन्वित्येके"—इति । असावित्यमुकगोत्रामुक-शर्म्मन्निति संबोध्य एतत्ते इति मन्त्रेण पिण्डदानं कुर्य्यात् । एके

(१) इत्यमेव पाठः सर्व्वेषु पुस्तकेषु ।

ये च त्वामन्विति मन्त्रेण पिण्डदानं कुर्यादित्याहुः। पिण्डदानं च सव्यं जान्वाच्य* कर्त्तव्यम्। तदुक्तं वायुपुराणे,—

"मधुसर्पिस्तिलयुतांस्त्रीन् पिण्डान्निर्वपेद्बुधः।
जानु कृत्वा तथा सव्यं भूमौ पितृपरायणः"—इति॥

पिण्डदानानन्तरकर्त्तव्यमाह मनुः,—

"न्युप्य पिण्डान् पितृभ्यस्तु† प्रयतो विधिपूर्वकम्।
तेषु दर्भेषु तं हस्तं निमृज्याल्लेपभागिनाम्"—इति॥

तत्र मन्त्रो विष्णुना दर्शितः। "अत्र पितरो मादयध्वमिति दर्भमूलेषु करावघर्षणम्"—इति। अनन्तरकर्त्तव्यमाह कात्यायनः। "अत्र पितर इत्युक्त्वोदङ्मुख आतमनादावृत्यामीमदन्त पितर-इति जपति"—इति। आतमनात् प्राणायामोत्यवायुपीडावधि उदङ्मुख आसीत, ततोऽनुच्छ्रसन्नेव पर्यावृत्यामीमदन्तेति मनसा जपित्वोच्छ्रसेत्। अत्र विशेषः कर्मप्रदीपे दर्शितः,—

"वामेनावर्त्तनं केचिदुदगन्तं प्रचक्षते।
आवृत्य प्राणमायम्य पितॄन्ध्यायन्यथार्हतः॥
जपंस्तेनैव चावृत्य ततः प्राणान् प्रमोचयेत्"—इति।

अमी मदन्तेत्यनुमन्त्रणानन्तरं विष्णुः। "अमी मदन्तेत्यनुमन्त्र्य शेषावघ्राणं कृत्वा शुन्धन्तां पितर इति पूर्ववदुदकनिनयनं पिण्डोपरि, ततोऽसावभ्यंक्ष्वेत्यभ्यञ्जनं दद्यादसावंक्ष्वेत्यञ्जनं, अथ वस्त्राभावे

---

* जान्वाच्य,—इति मु० पुस्तके पाठः।

† ततस्तांस्तु,—इति मु० पुस्तके पाठः।

इग्रामूर्ज्जां वा एतद्वः पितरो वासो मानोत् प्रेत्य* पितरो युङ्ध्वम्"—इति । तदनन्तरं व्याघ्रः,—

"गन्धपुष्पाणि धूपञ्च दीपञ्च विनिवेदयेत् ।

एतद्वः पितरो वासो दद्यान्दत्वा पृथक् पृथक्"—इति ॥

अर्च्चनानन्तरं मत्स्यः,—

"यत् किञ्चित्पच्यते गेहे भक्ष्यं भोज्यमगर्हितम् ।

अनिवेद्य न भोक्तव्यं पिण्डमूले कथञ्चन"—इति ॥

तदनन्तरं बृहस्पतिः,—

"अनभ्यर्च्चोदपात्रं तु तेषामुपरि निक्षिपेत्"—इति ।

अनन्तरं विष्णुः । "अथैतानुपतिष्ठेत नमो वः पितर इत्यादिना मनोन्वाहुवामह इति त्वचान्तेनाथैतान् पिण्डांश्चालयेत् परेतन पितर इति"। अनन्तरकृत्यमाहाश्वलायनः । "अग्निं प्रत्येयादग्ने तमद्याश्वन्न स्तोमैरिति अग्निमग्नौकरणाग्निं गार्हपत्यं यदन्तरिक्षं पृथिवीम्"—इति । अनन्तरकृत्यमाह मत्स्यः,—

"अथाचान्तेषु चाचम्य वारि दद्यात् सकृत् सकृत्"—इति ।

ब्राह्मणहस्तेषु सकृत्सकृदपो दद्यादित्यर्थः । एतदाचमनात् प्राक् पिण्डदानपक्षे वेदितव्यम् । आचान्तेषु तु पिण्डदानपक्षे आचम्य पिण्डदानं कृत्वा ब्राह्मणहस्तेषूदकं सकृत् सकृद्दद्यात्, कुशाश्च देयाः ।

पद्मपुराणेऽपि,—

"अचान्तेषूदकं दद्यात् पुष्पाणि सयवानि च"—इति ।

अत्र यवग्रहणं तिलोपलक्षणार्थं, च शब्दः पुनरप्युदकदानसमुच-

---

* होमानुगतोन्यत्,—इति मु० पुस्तके पाठः ।

यार्थः। कृतकार्यत्वेन तेषु च यवादिषु कुत्रचित् शुचौ देशे विसृष्टेषु पुनरुदकादिकं दद्यात्। तथा च मत्स्यः,—

"आचान्तेषु पुनर्दद्यात् जलपुष्पाक्षतोदकम्"—इति।

अनन्तरकर्त्तव्यमाह स एव,—

"दत्त्वाऽऽशीः प्रतिगृह्णीयात् द्विजेभ्यः प्राङ्मुखो बुधः।
अघोराः पितरः सन्तु सन्त्वित्युक्ते पुनर्द्विजैः॥
गोत्रं तथा वर्द्धतां नस्तथेत्युक्तश्च तैः पुनः।
दातारो नोऽभिवर्धन्तां वेदाः सन्ततिरेवच॥
श्रद्धा च नो मा व्यगमद्बहु देयञ्च नोऽस्त्विति।
एताः सत्याशिषः सन्तु सन्त्वित्युक्तश्च तैः पुनः"—इति॥

अनन्तरं पात्रचालनं कृत्वा स्वस्तिवाचनं कुर्यात्। अतएव नारायणः,—

"अचालयित्वा तत्पात्रं स्वस्ति कुर्वन्ति ये द्विजाः।
निराशाः पितरस्तेषां शप्त्वा यान्ति यथागतम्"—इति॥

पात्रचालने विशेषमाह जातूकर्ण्यः,—

"पात्राणि चालयेत् श्राद्धे स्वयं शिष्योऽथवा सुतः।
न स्त्रीभिर्न च बालेन नासज्जात्या कथञ्चन"—इति॥

स्वस्तिवाचनप्रकारमाह पारस्करः। "स्वस्तीति भगवन् ब्रूहीति वाचनम्"—इति। यज्ञोपवीती वैश्वदैविकहस्ते उदकं दत्त्वा पुरूरवार्द्रवसंज्ञकेभ्यो विश्वेभ्यो देवेभ्यः स्वस्तीति भगवन् ब्रूहीति कर्त्ता ब्रूयात्। विप्रेण च स्वस्तीति वक्तव्यम्। पितृब्राह्मणहस्तेष्वप्येवमेव*।

* यज्ञोपवीती,—इत्यारभ्य एतदन्तोग्रन्थो नास्ति ग० पुस्तके।

अनन्तरकृत्यमाह याज्ञवल्क्यः । "ततः कुर्यादक्षय्योदकमेवच"—इति । अक्षय्यमस्त्विति ब्राह्मणहस्ते जलं दद्यादित्यर्थः । मार्कण्डेयोऽपि,—

"पितृणां नामगोत्रेण जलं देयमनन्तरम् ।
ब्राह्मणानां द्विजैर्वाच्यमक्षय्यमिदमस्त्विति"—इति ॥

हस्तेष्वित्यध्याहृत्य योजना । अनन्तरं दक्षिणां दद्यात् । मनुः,—

"स्वस्तिवाचनकं कुर्यात् अक्षय्योदकमेवच ।
सतिलं* नामगोत्रेण दद्याच्छक्त्या च दक्षिणाम् ॥
गोभूहिरण्यवासांसि भव्यानि† शयनानि च ।
दद्याद्यदिष्टं विप्राणामात्मनः पितुरेवच ।
वित्तशाठ्येन रहितः पितृभ्यः प्रीतिमाचरन्"—इति ॥

अत्र विशेषमाह पारस्करः । "हिरण्यं विश्वेभ्यो देवेभ्यो रजतं पितृभ्यः अन्यच्च गोकृष्णाजिनं यावच्छक्यं दद्यात्‡ ।

एकपंक्त्युपविष्टानां विप्राणां श्राद्धकर्मणि ।
भक्ष्यं भोज्यं समं देयं दक्षिणा त्वनुसारतः"—इति ॥

अनुसारत इति, निमन्त्रितब्राह्मणविद्यागुणतारतम्येनेत्यर्थः । पित्रुद्देशेन दक्षिणादानं प्राचीनावीतिना कार्यम् । अतएव जमदग्निः । "अपसव्यन्तु तत्रापि मत्यो भगवान् हि मे मनः"—इति । तत्रापि दक्षिणादानेऽपीति । यत्तु तेनैवोक्तम्,—

---

* सलिलं,—इति ना० स० पुस्तकयोः

† नव्यानि,—इति मु० पुस्तके ।

‡ यावच्छक्नुयात्,—इति ना० पुस्तके ।

"सर्वं कर्मापसव्येन दक्षिणादानवर्जितम्"—इति ।

तद्ब्राह्मणोद्देशेन दक्षिणादानपक्षे द्रष्टव्यम्। स च पक्षो देवलेन दर्शितः,—

"आचान्तेभ्यो द्विजेभ्यस्तु प्रयच्छेच्चैव दक्षिणाम्"—इति ॥

ब्राह्मणोद्देशेन दक्षिणादाने क्रममाह स एव,—

"दक्षिणां पितृविप्रेभ्यो दद्यात् पूर्वं ततो द्वयोः"—इति ।

वैश्वदेविकब्राह्मणयोरित्यर्थः। अत्र पितृविप्रेभ्य इति समभिव्याहाराच्चतुर्थ्यर्थे षष्ठी[1]। अनन्तरं याज्ञवल्क्यः,—

"दत्त्वा तु दक्षिणां शक्त्या स्वधाकारमुदाहरन्।
वाच्यतामित्यनुज्ञातः प्रकृतेभ्यः स्वधोच्यताम् ॥
ब्रूयुरस्तु स्वधेत्युक्ते भूमौ सिञ्चेत्ततो जलम् ।
विश्वेदेवाश्च प्रीयन्तां विप्रैश्चोक्त इदं जपेत् ॥
दातारो नोऽभिवर्धन्तां वेदाः सन्ततिरेव च ।
श्रद्धा च नो मा व्यगमद्बहु देयञ्च नोऽस्त्विति ॥
इत्युक्त्वोक्त्वा प्रिया वाचः प्रणिपत्य प्रसादयेत् ।
वाजे वाजे इति प्रीतः पितृपूर्वं विसर्जयेत्"—इति ॥

अनन्तरं पुत्रार्थी मध्यमपिण्डं पत्न्यै दद्यात्। तथा च वायुपुराणे,—

"पत्न्यै प्रजार्थी दद्यात्तु मध्यमं मन्त्रपूर्वकम्"—इति ।

मध्यमं पिण्डमित्यर्थः। तत्प्रकारः। तत्र प्राचीनावीती, "अपां

(१) पितृविप्रेभ्य इत्यत्र चतुर्थीनिर्देशात् तत्समभिव्याहारात् द्वयोरित्यत्रापि चतुर्थ्यर्थ एवेति भावः। पितृविप्रेभ्य इत्यत्र पितृभ्य इति पाठस्तु प्रामादिक एव।

त्वौषधीनामं रसं प्राशयामि भूतकृतं गर्भं धत्त्व"—इति पत्न्या-अञ्जलौ मध्यमपिण्डं प्रयच्छेत्। तत्प्राशन* मन्त्रस्तु मत्स्येन दर्शितः,—

"आधत्त पितरो गर्भमन्त्रः सन्तानवर्द्धनम्"—इति।

मनुरपि,—

"पतिव्रता धर्मपत्नी पितृपूजनतत्परा।
मध्यमन्तु ततः पिण्डमद्यात्सम्यक् सुतार्थिनी।
आयुष्मन्तं सुतं विन्देत् यशोमेधासमन्वितम्॥
धनवन्तं प्रजावन्तं धार्मिकं सात्विकं तथा"—इति।

पिण्डप्रदानस्यायोग्यत्वमाह स एव,—

"अप्राप्तयौवने वृद्धे सगर्भे रोगसम्भवे।
बालपुत्रकलत्रेऽपि न दद्यात् पिण्डमञ्जलौ"—इति†।

पत्न्या असन्निधानादौ पिण्डानां प्रतिपत्त्यन्तरमाह वृहस्पतिः,—

"अन्यदेशगता पत्नी गर्भिणी रोगिणी तथा।
तदा तं जीर्णवृषभः छागो वा भोक्तुमर्हति"—इति॥

आपस्तम्बोऽपि प्रतिपत्त्यन्तरमाह,—

"यदि पत्नी विदेशस्था उच्छिष्टा यदि वा मृता।
दुरात्मा नानुकूला च तस्य पिण्डस्य का गतिः॥
आकाशं गमयेत्पिण्डं जलस्थो दक्षिणामुखः।
पितॄणां स्थानमाकाशं दक्षिणा दिक् तथैव च"—इति॥

यत्तु देवलेनोक्तम्,—

---

* तत्प्रकार इत्यादिः एतदन्तो ग्रन्थो नास्ति मुद्रितातिरिक्तपुस्तकेषु।

† पिण्डप्रदानस्येत्यारभ्य एतदन्तो ग्रन्थो नास्ति मुद्रितातिरिक्तपुस्तकेषु।

"ततः कर्मणि निर्वृत्ते तान् पिण्डांस्तदनन्तरम्।
ब्राह्मणोऽग्निरजो गौर्वा भक्षयेदप्सु वा क्षिपेत्"—इति॥

तत्पुत्रार्थित्वाभावविषयम्। तीर्थश्राद्धे पिण्डानामप्स्वेव प्रक्षेपः। तदुक्तं विष्णुधर्मोत्तरे,—

"तीर्थश्राद्धे सदा पिण्डान् क्षिपेत्तीर्थे समाहितः।
दक्षिणाभिमुखो भूत्वा पित्र्या दिक् सा प्रकीर्त्तिता"—इति॥

अनन्तरमुच्छिष्टं सम्मार्जयेत्। अतएव याज्ञवल्क्यः,—

"तत्रैव सत्सु विप्रेषु द्विजोच्छिष्टं न मार्जयेत्"—इति।

अयमर्थः। विप्रविसर्जनात् प्रागुच्छिष्टं न मार्जयेदपि तु तेषु विसर्जितेषु पिण्डप्रतिपत्तौ च कृतायामिति। यत्तु व्यासेनोक्तम्,—

"उच्छिष्टं न प्रमृज्यात्तु यावन्नास्तमितो रविः"—इति।

यच्च वसिष्ठेनोक्तम्,—

"श्राद्धे नोद्वासनीयानि उच्छिष्टान्यादिनक्षयात्*।
श्च्योतन्ते वै स्वधाकारास्ताः पिबन्तः कृतोदकाः"—इति॥

तद्गृहान्तरसम्भवविषयम्। अतएव प्रचेताः,—

"भृत्यवर्गवृतो भुङ्क्ते कव्यशेषं स्वगोत्रजैः।
प्राप्तायां श्राद्धशालायां† द्विजोच्छिष्टं न मार्जयेत्"—इति॥

उच्छिष्टमार्जनानन्तरं वैश्वदेवं कृत्वा शेषमन्नं ब्राह्मणैः सह भुञ्जीत। तथा च मत्स्यपुराणम्,—

* उच्छिष्टान्नानि तत्क्रमात्,—इति ना० पुस्तके।
† आसायं श्राद्धकालोऽयं,—इति मु० पुस्तके।

"ततश्च वैश्वदेवान्ते सभृत्यसुतबान्धवः ।
भुञ्जीतातिथिसंयुक्तः सर्वं पितृनिषेवितम्"—इति ॥

यदा श्राद्धं निर्वर्त्य वैश्वदेवादिकं क्रियते, तदा तच्छेषादेव तत्कार्यम् । तदाह पैठीनसिः,—

"श्राद्धं निर्वर्त्य विधिवद्वैश्वदेवादिकं ततः ।
कुर्याद्भिक्षां ततो दद्याद्धन्तकारादिकं तथा"—इति ।

आदिशब्देन नित्यश्राद्धं परिगृह्यते । तत इति पितृपाकशेषादित्यर्थः । नित्यश्राद्धं पृथक्पाकेन कार्यम् । अतएव तदधिकृत्य मार्कण्डेयः । "पृथक्पाकेन नेत्यन्ये"—इति । अत्र नित्यश्राद्धमप्यनियतम् । तदाह सएव,—

"नित्यक्रियां पितृणाञ्च केचिदिच्छन्ति मानवाः ।
न पितृणां तथैवान्ये शेषं पूर्ववदाचरेत्"—इति ॥

यत्तु लौगाक्षिणोक्तम्,—

"पित्रर्थं निर्वपेत्पाकं वैश्वदेवार्थमेवच ।
वैश्वदेवं न पित्रर्थं न दार्शं वैश्वदैविकम्"—इति ॥

तदाहिताग्निकर्तृकश्राद्धविषयं, आहिताग्नेः श्राद्धात्प्रागेव वैश्वदेवस्य तेनैव विहितत्वात् ।

"पक्षान्तं कर्म निर्वर्त्य वैश्वदेवं च साग्निकः ।
पिण्डयज्ञं ततः कुर्यात्ततोऽन्वाहार्यकं बुधः"—इति ॥

पक्षान्तं कर्माग्न्याधानमन्वाहार्यकं दर्शश्राद्धम्(१) । यत्तु पुराणवचनम्,—

(१) "पूर्वेद्युरग्निं गृह्णाति उत्तरमहर्यजति"—इति श्रुत्वा, दर्शपौर्ण-

"प्रातिवासरिको होमः[१] श्राद्धादौ क्रियते यदि ।
देवा हव्यं न गृह्णन्ति कव्यञ्च पितरस्तथा"—इति ॥

तत् पितृपाकाद्वैश्वदेवकरणे वेदितव्यम् । अतएव पैठीनसिः,—

"पितृपाकात् समुद्धृत्य वैश्वदेवं करोति यः ।
आसुरन्तद्भवेच्छ्राद्धं पितृणां नोपतिष्ठते"—इति ॥

यदाऽग्नौकरणानन्तरं विकिरणानन्तरं वा वैश्वदेविकं कर्म क्रियते, तदाऽपि पृथक्पाकादेव तत्कार्यं, तच्छेषाद्वैश्वदेवकरणे दोषस्याचापि समानत्वात्[२] । अग्नौकरणानन्तरं वैश्वदेवकरणं च स्मृत्यन्तरेऽभिहितम्,—

"वैश्वदेवाहुतीरग्नावर्वाग्* ब्राह्मणभोजनात् ।

* वैश्वदेवाहुतीः सर्व्वा अर्व्वाग्,—इति मु० ।

मासाङ्गस्याग्न्याधानस्यामावस्यायां विधानात् पश्चात्तं कर्माग्न्याधानमिति भावः । एवं पिण्डपितृयज्ञादनु पश्चादाक्रियते इति व्युत्पत्त्या अन्वाहार्य्यपदेन दर्शश्राद्धमुच्यते । तथाचोक्तम् । "पितृयज्ञन्तु निर्व्वर्त्त्य विप्रश्चन्द्रक्षयेऽग्निमान् । पिण्डान्वाहार्य्यकं श्राद्धं कुर्य्यान्मासानुमासिकम्"—इति । "अमावास्यां द्वितीयं यदन्वाहार्य्यं तदुच्यते" —इति च ।

(१) प्रातिवासरिकोहोमो वैश्वदेवहोमः ।

(२) तच्छेषात् अग्नौकरणशेषादिकिरणशेषाच्च । तच्छेषाद्वैश्वदेवकरणेऽपि पितृपाकात् समुद्धृत्यैव तत्करणं भवति, तदानीमपि अन्नोत्सर्गस्याकृतत्वात् । एवञ्च पितृपाकात् समुद्धृत्य इति, प्रातिवासरिको होम-इति वचनद्वयोक्तदोषोऽत्रापि समानएव भवतीति भावः ।

जुहुयाद्धुतयज्ञादि श्राद्धं कृत्वा ततः स्मृतम्"—इति ॥

यदि पितृपाकशेषाद्वैश्वदेवं यदि वा पाकान्तरादुभयथाऽपि पितृपाकशेषादेव भोजनम् । तदाह याज्ञवल्क्यः,—

"प्रदक्षिणमनुव्रज्य भुञ्जीत पितृसेवितम्"—इति ।

असति तु पितृशेषे पाकान्तरं कृत्वाऽपि भोक्तव्यमेव । अभोजनस्य निषिद्धत्वात् । तथाच देवलः,—

"श्राद्धं कृत्वा तु यो विप्रो न भुङ्क्तेऽथ* कदाचन ।

देवा हव्यं न गृह्णन्ति कव्यानि पितरस्तथा"—इति ॥

यतः पितृशेषभोजनं नित्यं, अतएवैकादश्यादौ नित्योपवासपक्षे भोजनप्रत्याम्नायः स्मर्यते,—

"उपवासो यदा नित्यः श्राद्धं नैमित्तिकं भवेत् ।

उपवासं तदा कुर्यादाघ्राय पितृसेवितम्"—इति ॥

पितृसेवितभोजननियमोऽनुज्ञापक्षएव । अतएव शातातपः,—

"शेषमन्नमनुज्ञातं भुञ्जीत तदनन्तरम् ।

इष्टैः सार्धन्तु विधिवद्बुद्धिमान् सुसमाहितः"—इति ॥

भोजनानन्तरं दातृभोक्त्रोर्नियममाह बृहस्पतिः,—

"तान्निशां ब्रह्मचारी स्याच्छ्राद्धकृच्छ्राद्धिकैः सह ।

अन्यथा वर्त्तमानौ तौ स्यातां निरयगामिनौ"—इति ।

मत्स्यपुराणेऽपि,—

"पुनर्भोजनमध्वानं यानमायासमैथुनम् ।

---

* भुङ्क्ते तु,—इति मु० ।

श्राद्धकृच्छ्राद्धभुक्चैव सर्वमेतद्विवर्जयेत्* ॥

स्वाध्यायं कलहञ्चैव दिवास्वप्नञ्च स्वेच्छया"—इति।

श्राद्धभोजिनो विशेषमाह यमः,—

"पुनर्भोजनमध्वानं भारमायासमैथुनम्† ।

सन्ध्यां प्रतिग्रहं होमं श्राद्धभुक्त्वष्ट वर्जयेत्"—इति ॥

सन्ध्याहोमयोः प्रतिषेधस्त्वकृतप्रायश्चित्तस्य। कृते तु प्रायश्चित्ते कुर्य्यादेव। अतएव भविष्यत्पुराणम्,—

"दशकृत्वः पिबेच्चापो गायत्र्या श्राद्धभुग्द्विजः।

ततः संध्यामुपासीत जपेच्च जुहुयादपि"—इति॥

एवमुक्तरीत्या पार्वणं कर्त्तुमसमर्थः संकल्पविधिना श्राद्धं कुर्यात्। तदुक्तं स्मृत्यन्तरे,—

"अङ्गानि पितृयज्ञस्य यदा कर्त्तुं न शक्नुयात्।

संकल्पश्राद्धमेवासौ कुर्य्यादर्घ्यादिवर्जितम्"— ॥

व्यासोऽपि,—

"त्यक्ताग्नेः पार्वणन्नैव नैकोद्दिष्टं सपिण्डनम्।

अत्यक्ताग्नेस्तु पिण्डोक्तिस्तस्मात् संकल्प्य भोजयेत्‡"—इति॥

अयमर्थः। आलस्येन योऽग्निं त्यजति स त्यक्ताग्निः, न तस्य श्राद्धेऽधिकारः, किं तु त्यक्ताग्निव्यतिरिक्तस्य साग्निकस्य। विधुरादेस्तु(१)

* सर्व्वमेव विवर्जयेत्,—इति ना०।

† भाराध्ययनमैथुनम्,—इति मु०।

‡ योगयजेत्,—इत्यादर्शपुस्तकेषु पाठः। परन्तु भोजयेदिति पाठस्यान्यत्र दर्शनात् सङ्गततया च स एव मूले निवेशितः।

(१) विधुरोमृतभार्य्यः।

पिण्डोपलक्षितश्राद्धेऽधिकार उक्तः । यस्मादत्यक्ताग्निनाऽधिकारिणा श्राद्धमवश्यं कर्त्तव्यं, तस्माद्विस्मृते* पार्वणविधावशक्तः संकल्पविधानेन कुर्यादिति । संकल्पविधानलक्षणं स एवाह,—

"संकल्पं तु यदा कुर्यात्, न कुर्यात् पात्रपूरणम् ।
नावाहनाग्नौकरणं पिण्डांश्चैव न दापयेत्"—इति ॥

उच्छिष्टपिण्डो न दातव्यः,

"संकल्पं तु यदा श्राद्धं न कुर्यात् पात्रपूरणम् ।
विकिरश्च न दातव्यः ———— ————"

इति स्मृत्यन्तरात् । एवं दर्शे कर्त्तव्यं पार्वणश्राद्धमुक्तं, अथ तद्विकृतिभूतं प्रत्याब्दिकं निरूप्यते । तत्र लौगाक्षिः,—

"श्राद्धं कुर्यादवश्यन्तु प्रमीतपितृकः स्वयम् ।
इन्दुक्षये मासि मासि वृद्धौ प्रत्यब्दमेव च"—इति ॥

तत्रेतिकर्त्तव्यतामाह जातूकर्ण्यः,—

"पितुः पितृगणस्थस्य कुर्यात् पार्वणवत्सुतः ।
प्रत्यब्दं प्रतिमासञ्च विधिर्ज्ञेयः सनातनः"—इति ।

पितृगणस्थः सपिण्डीकृतः । तस्य प्रतिसांवत्सरिकमनुमासिकञ्च श्राद्धं पार्व्वणविधिना कुर्य्यात् । यमदग्निरपि,—

"आसाद्य† सहपिण्डत्वमौरसो विधिवत् सुतः ।
कुर्वीत दर्शवच्छ्राद्धं मातापित्रोर्मृतेऽहनि"—इति ॥

---

* तस्माद्विस्मृते,—इति पाठोऽत्र भवितुं युक्तः ।

† आपाद्य,—इति पाठो मम प्रतिभाति ।

ननु दर्शातिदेशान्मातामहानामपि श्राद्धं प्रसज्येत[१]। नायं दोषः। प्रत्याब्दिके षट्पिण्डानां पर्युदस्तत्वात्। तथाच कात्यायनः,—

"कर्षूसमन्वितं मुक्ता तथाऽऽद्यं श्राद्धषोड़शम्[२]।
प्रत्याब्दिकञ्च शेषेषु पिण्डाः स्युः षडिति स्थितिः"—इति।

कर्षूसमन्वितं सपिण्डीकरणम्[३]। यत्तु यमेनोक्तम्,—

"सपिण्डीकरणादूर्ध्वं प्रतिसम्वत्सरं सुतैः।
मातापित्रोः पृथक्कार्यमेकोद्दिष्टं मृतेऽहनि"—इति॥

यच्च मृताहं प्रकृत्य व्यासेनोक्तम्,—

"एकोद्दिष्टं परित्यज्य पार्वणं कुरुते नरः।
अकृतं तद्विजानीयाद्भवेच्च पितृघातकः"—इति॥

तत्र पार्वणैकोद्दिष्टयोर्विकल्पः। तत्रापि वृद्धाचारतो व्यवस्था। अमावास्यायां प्रेतपक्षे[४] च मृतानां पार्वणं नियतम्। तदाह शङ्खः,—

---

(१) दर्शे मातामहानामपि श्राद्धसत्त्वादिति भावः।

(२) कर्षूर्नाम पिण्डदानार्थमवटविशेषोऽन्वष्टक्यश्राद्धे गृह्ये विहितः। आद्यं पितृत्वप्राप्तेरादिभूतं, मरणोत्तरं कर्त्तव्येषु श्राद्धेषु मध्ये प्रथमकर्तव्यं वा। श्राद्धषोड़शं, "द्वादशप्रतिमास्यानि आद्यं षाण्मासिके तथा। सपिण्डीकरणञ्चैव इत्येतत् श्राद्धषोड़शम्"—इति कात्यायनेनैव विवृतम्।

(३) कात्यायनीये कल्पे सपिण्डीकरणे कर्षूविधानानुपलम्भात् सपिण्डीकरणस्य षोड़शश्राद्धान्तर्गतत्वाच्च कर्षूसमन्वितपदेनान्वष्टक्यश्राद्धग्रहणमेव युक्तमुत्पश्यामः।

(४) प्रेतपक्षोऽश्वयुक्कृष्णपक्षः।

"अमायां तु क्षयो यस्य प्रेतपक्षेऽथवा पुनः ।
पार्वणं तस्य कर्त्तव्यं नैकोद्दिष्टं कदाचन"—इति ॥

यतेस्तु न कार्य्यैकोद्दिष्टं, किं तु सर्वत्र पार्वणमेव । तथाच प्रचेताः,—

"दण्डग्रहणमात्रेण नैव प्रेतो भवेद्यतिः ।
अतः सुतेन कर्त्तव्यं पार्वणं तस्य सर्वदा"—इति ॥

अत्र केचित्पार्वणैकोद्दिष्टयोरन्यथा व्यवस्थामाहुः,—

"प्रत्यब्दं पार्वणेनैव विधिना क्षेत्रजौरसौ ।
कुर्यातामितरे कुर्युरेकोद्दिष्टं सुतादश"—इति

जातूकर्ण्यवचनात्[१] । तदयुक्तम्,

"एकोद्दिष्टं तु कर्त्तव्यमौरसेन मृतेऽहनि ।
सपिण्डीकरणादूर्ध्वं मातापित्रोस्तु पार्वणम्"—इति

पैठीनसिवचनविरोधात्[२] । जातूकर्ण्यवचनं तु क्षयाहव्यतिरिक्तप्रत्यब्दकर्त्तव्याचयष्टतीयादिविषयत्वेनाप्युपपद्यते । यत्तु सुमन्तुनोक्तम्,—

"कुर्याच्च विधिवच्छ्राद्धं पार्वणं योऽग्निमान् द्विजः ।
पित्रोरनग्निमान्धीर एकोद्दिष्टं मृतेऽहनि"—इति ॥

तदयुक्तम्,

---

(१) तथा चौरसक्षेत्रजयोः पार्व्वणमन्येषामेकोद्दिष्टमिति केषांचिन्मते व्यवस्था पर्य्यवस्यति ।

(२) पैठीनसिवचने औरसस्याप्येकोद्दिष्टविधानात्तद्विरोधः ।

"वह्न्यग्नयस्तु ये विप्रा ये चैकाग्नय एवच"[1]।
तेषां सपिण्डनादूर्ध्वमेकोद्दिष्टं न पार्वणम्"—इति

स्मृत्यन्तरे साग्निकस्याप्येकोद्दिष्टविधानात्[2]।

एकोद्दिष्टलक्षणमाह याज्ञवल्क्यः,—

"एकोद्दिष्टं दैवहीनमेकार्घैकपवित्रकम्।
आवाहनाग्नौकरणरहितं ह्यपसव्यवत्।
उपतिष्ठतामित्यक्षय्यस्थाने विप्रविसर्जनम्।
अभिरम्यतामिति वदेद्ब्रूयुस्तेऽभिरताः स्म ह"—इति।

कात्यायनोऽपि। "अथैकोद्दिष्टमेकं पात्रमेकोऽर्घ्य एकं पिण्डं* नावाहनं नाग्नौकरणं नात्र विश्वेदेवाः स्वदितमिति तृप्तिप्रश्नः सुस्वदितमित्यनुज्ञानमुपतिष्ठतामित्यक्षय्यस्थाने अभिरम्यतामिति विसर्गे अभिरताः स्मेत्यपरे"—इति। तच्चैकोद्दिष्टं त्रिविधं, नवं नवमिश्रं पुराणं चेति। अत्र प्रथमाहाद्येकादशाहान्तविहितं नवश्राद्धम्। तथा चाङ्गिराः,—

"प्रथमेऽह्नि तृतीये च पञ्चमे सप्तमेऽपिवा।
नवमैकादशे चैव तन्नवश्राद्धमुच्यते"—इति॥

वसिष्ठोऽपि,—

---

* एकः पिण्ड इति ना०।

---

(१) वह्न्यग्नयः श्रौताग्निमन्तः। एकाग्नयः स्मार्त्ताग्निमन्तः।

(२) तथाच पार्व्वणैकोद्दिष्टयोर्व्विकल्पव्यवस्थैव साधीयसीति भावः।

"सप्तमेऽह्नि तृतीयेऽह्नि प्रथमे नवमे तथा*।
एकादशे पञ्चमे स्युर्नवश्राद्धानि षट् तथा॥
केचित्पञ्चैव, नवमं भवेदन्तरितं यदि।
एकादशेऽह्नि तत् कुर्यादिति स्मृतिकृतो विदुः(१)"—इति॥

अत्र पक्षद्वयस्य व्यवस्था शिवस्वामिना दर्शिता,—

"नवश्राद्धानि पञ्चाहुराश्वलायनशाखिनः।
आपस्तम्बाः षडित्याहुर्विभाषामैतरेयिणाम्†"—इति।

वैश्यादीनां विशेषो भविष्यत्पुराणे दर्शितः,—

"नव सप्त विप्रां राज्ञां नवश्राद्धान्यनुक्रमात्।
आद्यन्तयोर्वर्णयोस्तु(२) षडित्याहुर्महर्षयः"—इति॥

षण्णां नवश्राद्धानामुपरि कर्त्तव्यं मासिकं नवमिश्रम्। तथा चाश्वलायनः। "नवमिश्रं षडुत्तरम्(३)"—इति। मासिकानामुपरि कर्त्तव्यं प्रत्याब्दिकादि पुराणम्। अतएव हारीतेन प्रायश्चित्तकाण्डे क्रमेण‡

---

* प्रथमेऽह्नि तृतीयेऽह्नि सप्तमे नवमे तथा,—इति ना०।

† विभाषा तैत्तिरीयिणाम्,—इति मु०।

‡ प्रायश्चित्तकाण्डक्रमेण,—इति ना० मु०।

---

(१) नवमदिनविहितं श्राद्धं यदि दैवात्तदानीं न कृतं, तदैकादशेऽह्नि तत् कर्त्तव्यमित्यर्थः।

(२) आद्यन्तयोर्वर्णयोर्ब्राह्मणशूद्रयोः।

(३) षण्णामुत्तरं षडुत्तरम्। नवश्राद्धानामुपरि कर्त्तव्यमित्यर्थः।

नवमासिकयोः प्रायश्चित्तमभिधायोत्तरकालीनं श्राद्धं पुराणशब्देन व्यवहृत्य प्रायश्चित्तं विहितम्,—

"चान्द्रायणं नवश्राद्धे प्राजापत्यं तु मासिके।
एकाहस्तु पुराणेषु प्रायश्चित्तं विधीयते"—इति॥

इत्थं पार्वणैकोद्दिष्टे अभिहिते, अथोभयात्मकं सपिण्डीकरणमुच्यते। तत्र लौगाचिः,—

"श्राद्धानि षोड़शापाद्य विदधीत सपिण्डनम्"—इति।

षोड़श श्राद्धानि आत्मकर्ष्णेन दर्शितानि,—

"द्वादश प्रतिमास्यानि आद्यषाण्मासिके तथा।
त्रैपक्षिकाब्दिके चेति श्राद्धान्येतानि षोड़श"—इति॥

अत्राद्यषाण्मासिकाब्दिकशब्दाः ऊनमासिकोनषाण्मासिकोनाब्दिकपराः। द्वादशमासिकानां कालो याज्ञवल्क्येन दर्शितः,—

"मृतेऽहनि तु कर्त्तव्यं प्रतिमासं तु वत्सरम्।
प्रतिसम्वत्सरञ्चैवमाद्यमेकादशेऽहनि"—इति॥

वत्सरं वत्सरपर्यन्तं मासि मासि मृतेऽहनि श्राद्धं कर्त्तव्यं, सपिण्डीकरणादूर्ध्वं प्रतिसम्वत्सरं मृतेऽहनि कर्त्तव्यं, आद्यं तु मासिकमेकादशेऽहनि कर्त्तव्यम्[१]। ऊनषाण्मासिकादीनां कालमाह गालवः,—

"ऊनषाण्मासिकं षष्ठे मासार्द्धे ह्यूनमासिकम्।
त्रैपक्षिकं त्रिपक्षे स्यादूनाब्दं द्वादशे तथा*"—इति॥

* द्वादशेऽहनि,—इति मु०।

(१) आद्यं मासिकमूनमासिकमित्यर्थः। तथाच आद्यमेकादशेऽहनीत्यस्य आद्यं द्वादशमासिकानामादिभूतं तेभ्यः पूर्वं कर्त्तव्यमित्यर्थो बोध्यः।

श्लोकगौतमोऽपि,—

"एकद्वित्रिदिनैरूने त्रिभागनोनएव* वा ।

श्राद्धान्यूनाब्दिकादीनि कुर्यादित्याह गौतमः"—इति ॥

ऊनमासिकस्य कालविकल्पमाह गोभिलः,—

"मरणाद्द्वादशाहे स्यान्मास्यूने वोनमासिकम्"—इति ।

ऊनानां वर्ज्यं कालमाह गार्ग्यः,—

"नन्दायां भार्गवदिने चतुर्दश्यां त्रिपुष्करे ।

ऊनश्राद्धं न कुर्वीत गृही पुत्रधनक्षयात्"—इति ॥

मरीचिरपि,—

"द्विपुष्करे च नन्दासु सिनीवाल्यां(१) भृगोर्दिने ।

चतुर्दश्याञ्च नोनानि कृत्तिकासु त्रिपुष्करे"—इति ॥

तिथिवारनक्षत्रविशेषाणां त्रयाणां मेलनं त्रिपुष्करम् । द्वयोर्मेलनं द्विपुष्करम् । के ते विशेषाः ? द्वितीयासप्तमीद्वादश्यो भद्रातिथयः, भानुभौमशनैश्चरवाराः, पुनर्वसूत्तरफल्गुनीविशाखोत्तराषाढ़ापूर्वभाद्रपदानक्षत्राणि(२) ।

---

* त्रिभागन्यून एव,—इति मु० ।

---

(१) नन्दासु प्रतिपत्षष्ठेकादशीषु । "सा दृष्टेन्दुः सिनीवाली"—इति कोषात् चतुर्दशीयुक्तामावस्या सिनीवालीशब्देनोच्यते ।

(२) तदुक्तं ज्योतिषे,—

"विषमचरणधिष्ण्यं भद्रा तिथिर्यदि जायते ।

दिनकरशनिक्ष्मापुत्राणां कथञ्चन वासरे ॥

मुनिभिरुदितः सोऽयं योगस्त्रिपुष्करसंज्ञितः"—इति ।

[१]एवमेतानि षोड़शश्राद्धानि कृत्वा ततः सपिण्डनं विदधीत। तस्य कालमाहाश्वि:। "अथ सपिण्डीकरणं सम्वत्सरे पूर्णे त्रिपक्षे वा यदहर्वा वृद्धिरापद्यते[२]"- इति। बोधायनोऽपि। "अथ सम्वत्सरे पूर्णे सपिण्डीकरणं त्रिपक्षे वा तृतीये मासि षष्ठे वैकादशे वा द्वादशाहे वा"—इति। एकादशाह-द्वादशाह-तृतीयपक्ष-तृतीय-मास-षष्ठमासैकादशमास-सम्वत्सरान्त-शुभागमाः,—इत्यष्टौ कालाः प्रकीर्त्तिताः। तत्र व्यवस्थामाह हारीतः,—

"या तु पूर्वममावास्या मृताहाद्दशमी भवेत्।
सपिण्डीकरणं तस्यां कुर्य्यादेव सुतोऽग्निमान्"—इति।

मृताहादूर्द्ध्वदिनमारभ्येत्यर्थः। कार्ष्णाजिनिरपि,—

"सपिण्डीकरणं कुर्य्यात् पूर्ववच्चाग्निमान् सुतः।
परतोदशरात्राच्चेत् कुहूरब्दोपरीतरः"—इति।

आहिताग्निना अमावास्यायां पिण्डपितृयज्ञस्यावश्यकर्त्तव्यत्वात् सपिण्डीकरणमन्तरेण तदसम्भवाच्चैकादशेऽह्नि दर्शागमे सपिण्डीकरणं

---

यस्य नक्षत्रस्यैकः पाद एकराशिघटकः अपरपादत्रयं चापरराशि-घटकं, तन्नक्षत्रं विषमचरणधिष्ण्यमित्युच्यते। तच्च कृत्तिकापुनर्व्वसु प्रभृति। परमत्र कृत्तिकायाः पृथगुपादानात् तद्विहाय पुनर्व्वसु-प्रभृतिकमेव दर्शितम्।

(१) श्राद्धानि षोड़शापाद्य,—इति लोगाक्षिवचनं व्याकरोति एव-मित्यादिना।

(२) त्रयाणां पूरणः पक्षस्त्रिपक्षः, तस्मिन्, मरणात् तृतीयपक्षे इति यावत्। वृद्धिः शुभागमः।

कार्य्यम् । पिण्डपितृयज्ञकर्त्तव्यता तु श्रूयते । "अमावास्यामपराह्ने पिण्डपितृयज्ञेन चरन्ति"—इति । सपिण्डीकरणात् पूर्वं पिण्डपितृयज्ञस्याभावो गालवेन दर्शितः,—

"सपिण्डीकरणात्प्रेते पैतृकं पदमास्थिते ।
आहिताग्नेः सिनीवाल्यां पितृयज्ञः प्रवर्त्तते"—इति ।

दर्शानागमे तु साग्निर्द्वादशेऽह्नि सपिण्डनं कुर्य्यात् । तदुक्तं भविष्यत्पुराणे,—

"यजमानोऽग्निमान् राजन्, प्रेतश्चानग्निमान् भवेत् ।
द्वादशाहे भवेत्कार्य्यं सपिण्डीकरणं सुतैः"—इति ।

गोभिलोऽपि,—

"साग्निकस्तु यदा कर्त्ता प्रेतश्चानग्निमान् भवेत् ।
द्वादशाहे तदा कार्य्यं सपिण्डीकरणं सुतैः"—इति ।

प्रेतस्य साग्नित्वे तृतीयपक्षे सपिण्डीकरणं कार्य्यम् । तदाह सुमन्तुः,—

"प्रेतश्चेदाहिताग्निः स्यात् कर्त्ताऽनग्निर्यदा भवेत् ।
सपिण्डीकरणं तस्य कुर्य्यात्पक्षे तृतीयके"—इति ।

उभयोः साग्निकत्वे द्वादशाहे सपिण्डीकरणं कार्य्यम् ।

"साग्निकस्तु यदा कर्त्ता प्रेतो वाऽप्याग्निमान् भवेत् ।
द्वादशाहे तदा कार्य्यं सपिण्डीकरणं पितुः"—इति ।

उभयोरनग्नित्वे द्वादशाहादयः सप्त काला इच्छया विकल्प्यन्ते । तदुक्तं भविष्यत्पुराणे,—

"सपिण्डीकरणं कुर्य्यात् यजमानस्त्वनग्निमान् ।

अनाहिताग्नेः प्रेतस्य पूर्णेऽब्दे भरतर्षभ ॥

द्वादशेऽहनि षष्ठे वा त्रिपक्षे वा त्रिमासिके* ।

एकादशेऽपि वा मासि मङ्गलं स्यादुपस्थितम्"—इति ।

एतेषु सप्तसु कालेषु द्वादशाहः प्रशस्तः। तदाह व्याघ्रः†,—

"आनन्त्यात्कुलधर्माणां पुंसाञ्चैवायुषः क्षयात् ।

अस्थितेश्च‡ शरीरस्य द्वादशाहः प्रशस्यते(१)"—इति ।

एतत्सर्वं त्रैवर्णिकविषयं, शूद्रस्य तु द्वादशाह एव प्रतिनियतः(२)।
अत एव सपिण्डीकरणं कर्त्तव्यमित्यनुवृत्तौ विष्णुः,—

"मन्त्रवर्जं हि शूद्राणां द्वादशेऽहनि कीर्त्तितम्§"—इति।

---

* त्रिमासि वा,—इति पाठान्तरम्।

† याज्ञवल्क्यः,—इति मु०।

‡ अस्थिरत्वात्,—इति मु०।

§ द्वादशाहे सपिण्डनम्,—इति मु०।

---

(१) कुलधर्म्माणामानन्त्यादित्यनेन येषां द्वादशाहे सपिण्डीकरणं कुलाचारः, तेषां द्वादशाहः प्रशस्तः इत्यभिहितम्। पुंसाञ्चैवायुषः क्षयादित्यनेन यदा ज्योतिरागमादिना संवत्सरादर्व्वागधिकारिण आयुःक्षयोऽवधार्य्यते, तदाऽपि द्वादशाहः प्रशस्त इत्युक्तम्। अस्थितेश्च शरीरस्य इत्यनेन यदा अनुपेक्षणीयकार्य्यानुरोधेन विदेशगमनमावश्यकं सम्भाव्यते, तदाऽपि द्वादशाहः प्रशस्त इति प्रतिपादितम्।

(२) एकादशाहाद्यष्टविधकालमध्ये द्वादशाहमपहाय सप्तविधकालविधानं ब्राह्मणादिवर्णत्रयविषयं, शूद्रस्य तु द्वादशाह एव सपिण्डीकरणकाल इत्यर्थः।

यदा संवत्सरपूर्त्तेः प्रागेवैकादशाहादिषु षोड़शश्राद्धानि कृत्वा सपिण्डीकरणं क्रियते[१], तदा पुनरपि स्वस्वकाले मासिकादीन्या-वर्त्तनीयानि । तदाह गोभिलः,—

"यस्य संवत्सरादर्वाग्विहिता तु सपिण्डता ।
विधिवत्तानि कुर्वीत पुनः श्राद्धानि षोड़श"—इति ।

विधिवदिति यथायोगमेकोद्दिष्टेन पार्वणेन वा विधिनेत्यर्थः। तदाह पैठीनसिः,—

"सपिण्डीकरणादर्वाक्कुर्य्याच्छ्राद्धानि षोड़श ।
एकोद्दिष्टविधानेन कुर्य्यात्सर्वाणि तानि तु ॥
सपिण्डीकरणादूर्द्ध्वं यदा कुर्य्यात्तदा पुनः ।
प्रत्यब्दं यो यथा कुर्य्यात् तथा कुर्य्यात्सदा पुनः"—इति ।

आवर्त्तनं चोर्द्ध्वभाविनामेव नाधोभाविनाम्[२] । तदाह कार्ष्णा-जिनिः,—

---

(१) यद्यपि एकादशाहादयः सपिण्डीकरणकालतयैवोक्ता न तु षोड़श-श्राद्धकालतया, तथापि षोड़शश्राद्धानन्तरं सपिण्डीकरणस्य कर्त्त-व्यत्वात् षोड़शश्राद्धान्यकृत्वा सपिण्डीकरणासम्भवात् क्रमानुरोधेन तदन्तापकर्षन्यायात् षोड़शश्राद्धान्यपि तेषु कर्त्तव्यानीति भावः'। तदन्तापकर्षन्यायश्च मीमांसापञ्चमाध्यायप्रथमपादीय-द्वादशमधि-करणम् ।

(२) तथाच यदा सपिण्डीकरणं क्रियते, तदूर्द्ध्वकालभाविनामेव श्राद्धानां स्वस्वकाले पुनरावृत्तिः कार्य्या, न तु तत्पूर्व्वभाविनां स्वकालकृताना-मित्यर्थः ।

"अर्वागब्दाद्यत्र यत्र सपिण्डीकरणं कृतम्।
तदूर्द्ध्वमासिकानां स्याद्यथाकालमनुष्ठितिः"—इति।

सपिण्डीकरणादूर्द्ध्वमावर्त्तनीयानामनुमासिकादीनां वृद्धिप्राप्तौ पुनरपकर्षः। तदाह शाठ्यायनिः,—

"सपिण्डीकरणादर्वागपकृष्य कृतान्यपि।
पुनरप्यपकृष्यन्ते वृद्ध्युत्तरनिषेधनात्"—इति।

निषेधश्च कात्यायनेनोक्तः,—

"निर्वर्त्त्य वृद्धितन्त्रन्तु मासिकानि न तन्त्रयेत्"—इति।

सपिण्डीकरणस्य गौणकालमाह ऋष्यशृङ्गः,—

"सपिण्डीकरणश्राद्धमुक्तकाले न चेत् कृतम्*।
रौद्रे हस्ते च रोहिण्यां मैत्रभे वा समाचरेत्"—इति।

सपिण्डीकरणेतिकर्त्तव्यतामाह याज्ञवल्क्यः,—

"गन्धोदकतिलैर्युक्तं कुर्य्यात्पात्रचतुष्टयम्।
अर्घ्यार्थं, पितृपात्रेषु प्रेतपात्रं प्रसेचयेत्॥
ये समाना इति द्वाभ्यां शेषं पूर्ववदाचरेत्"—इति।

कात्यायनोऽपि। "ततः संवत्सरे पूर्णे चत्वारि पात्राणि सतिलगन्धोदकैः पूरयित्वा त्रीणि पितॄणामेकं प्रेतस्य प्रेतपात्रं पितृपात्रेष्वासिञ्चति ये समाना इति द्वाभ्यामेतेन पिण्डोव्याख्यातः" —इति। यदा पिता म्रियते पितामहस्तिष्ठति, तदा प्रपितामहादिभिः सह पितुः सापिण्ड्यम्। तदुक्तं ब्रह्माण्डपुराणे,—

* कथम्,—इति ग०।

"मृते पितरि यस्याथ विद्यते च पितामहः ।
तेन देयास्त्रयः पिण्डाः प्रपितामहपूर्वकाः"—इति ।

केचित्तत्र सापिण्ड्यमेव(१) नाभ्युपगच्छन्ति,

"व्युत्क्रमाच्च प्रमीतानां(२) नैव कार्य्या सपिण्डता"—इति

वचनात् । अपरे पुनरस्य वचनस्य मातृपितृभर्तृव्यतिरिक्तविषयत्वं मन्यन्ते । उदाहरन्ति च स्कन्दपुराणवचनम्,—

"व्युत्क्रमेण मृतानाञ्च सपिण्डीकृतिरिष्यते ।
यदि माता यदि पिता भर्त्ता नैष विधिः स्मृतः*"—इति ।

अत्र वृद्धाचाराद्व्यवस्था द्रष्टव्या(३) । मातुः सापिण्ड्यं पितामह्यादिभिः सह कर्त्तव्यम् । तदाह शङ्खः,—

---

* सैव विधिः स्मृतः,—इति मु० । मम तु, भर्त्ता चैष विधिः स्मृतः,—इति पाठः प्रतिभाति । मूलोक्तपाठे तु, एष इत्यनेन बुद्धिस्थस्य सपिण्डीकरणनिषेधस्य परामर्शः । तथाच, मात्रादिषु सपिण्डीकरणमिष्यते, तत्र नैष विधिर्न सपिण्डीकरणनिषेधविधिरित्यर्थः ।

---

(१) सापिण्ड्यं सपिण्डीकरणम् ।

(२) पितामहे जीवति पितुर्मरणे पिता व्युत्क्रमात् प्रमीत इत्युच्यते ।

(३) व्युत्क्रममृतानां सपिण्डीकरणं न कार्य्यमित्येकं मतम् । व्युत्क्रममृतानामपि मातृपितृभर्तॄणां सपिण्डनं कार्य्यमित्यपरमतम् । तत्र वृद्धाचाराद्व्यवस्था । येषां पूर्व्वजैः व्युत्क्रममृतानां सपिण्डनं न कृतं, तेन न कार्य्यमेव तथाविधस्थले सपिण्डनम् । येषान्तु पूर्व्वजैः व्युत्क्रममृतानामपि मात्रादीनां सपिण्डनं कृतं, तैर्व्युत्क्रममृतमात्रादीनां सपिण्डनं कार्य्यमेवेति भावः ।

"मातुः सपिण्डीकरणं कथं कार्य्यं भवेत्सुतैः।
पितामह्यादिभिः सार्द्धं सपिण्डीकरणं स्मृतम"—इति

प्रमीतपितृकस्य विकल्पमाह यमः,—

"जीवत्पिता पितामह्या मातुः कुर्य्यात् सपिण्डताम्।
प्रमीतपितृकः पित्रा पितामह्याऽथवा सुतः"—इति।

पुत्रिकासुतो मातृसपिण्डनं मातामहादिभिः सह कुर्य्यात्। तथाच बोधायनः,—

"आदिशेत् प्रथमे पिण्डे मातरं पुत्रिकासुतः।
द्वितीये पितरन्तस्यास्तृतीये च पितामहम्"—इति।

चितारोहणे तु भर्त्रैव सापिण्ड्यं नियतम्[१]। तदाह शातातपः,—

"मृता याऽनुगता नाथं सा तेन सहपिण्डताम्*।
अर्हति स्वर्गवासेऽपि यावदाभूतसंप्लवम्[२]"—इति।

* सहपिण्डनम्,—इति मु०।

(१) तथाच पुत्रिकयाऽपि चितारोहणे कृते तस्या अपि सपिण्डीकरणं भर्त्रैव कर्त्तव्यं, न तु तत्पित्रादिभिरित्यर्थः। एवमनुमरणपक्षे, 'प्रमीतपितृकः पित्रा पितामह्याऽथवा सुतः'—इत्युक्तविकल्पोऽपि न भवति इति द्रष्टव्यम्।

(२) अनुमृतायाः भूतसंप्लवपर्य्यन्तं प्रलयकालपर्य्यन्तं स्वर्गवासे सत्यपि, सा भर्त्रा सह सपिण्डनमर्हतीत्यर्थः। यद्यप्यनुमरणेनैव तस्याः स्वर्गवास-एव भवति न तु प्रेतत्वमुत्पद्यते, तथापि भर्त्रा सह तस्याः सपिण्डनं कर्त्तव्यमिति तात्पर्य्यम्।

यमोऽपि,—

"पत्या * चैकेन कर्त्तव्यं सपिण्डीकरणं स्त्रियाः।

साऽमृताऽपि हि तेनैक्यं गता मन्त्राहुतिव्रतैः[१]"—इति।

अत्रैकशब्दः पितामह्यादिविकल्पनिवृत्त्यर्थः, न त्रिपुरुषव्यावृत्त्यर्थः। सपिण्डीकरणस्य पार्वणैकोद्दिष्टरूपत्वात्[२]। एतत्सर्वं ब्राह्मादिविवाहेषु द्रष्टव्यम्। आसुरादिविवाहे चतुर्धा विकल्पाः[३]। तत्र पञ्चत्रयमाह शातातपः,—

"तन्मात्रा तत्पितामह्या तच्छ्वश्र्वा वा सपिण्डनम्।

* पित्रा,—इति मा०।

(१) सा स्त्री अमृताऽपि जीवत्यपि मन्त्राहुतिव्रतैः तेन भर्त्रा सह ऐक्यं गता, अतो मृतायास्तस्याः पत्या सह सपिण्डीकरणं युक्तमित्यर्थः। अत्र, मन्त्राः पाणिग्रहणादिमन्त्राः, आहुतयो विवाहादिहोमाः, व्रतानि विवाहाङ्गतया विहितानि ब्रह्मचर्यादीनि। एभिः करणैः सा पत्या सहैक्यं गता, साङ्गविवाहेन तस्याः तच्छरीरार्द्धत्व-निष्पत्तेरिति भावः।

(२) पत्या चैकेन,—इत्येकशब्देन पितामहादयोन व्यावर्त्यन्ते। सपिण्डी-करणस्य पार्व्वणविकृततया पार्व्वणवत् त्रैपुरुषिकत्वस्य पिटपत्ते न्याय्यत्वात्। किन्त्वेकशब्देन पितामह्यादिभिः सपिण्डीकरणमित्ययं कल्पोव्यवच्छिद्यते इति भावः।

(३) आसुरादिविवाहोढ़ानां स्त्रीणां सपिण्डीकरणं तस्या मात्रा पिता-मह्या तत् श्वश्र्वा वा कार्य्यमित्यादिविशेषविधिवशात् पत्या सपिता-मह्यादिभिर्वा सपिण्डनमिति सामान्यविधिर्ब्राह्मादिविवाहोढ़ास्त्री-विषये व्यवतिष्ठते। अपवादविषयपरित्यागेनोत्सर्गस्य प्रवृत्तेरिति भावः।

आसुरादिविवाहेषु वर्णानां* योषितां भवेत्"—इति।

चतुर्थं पञ्चमाह सुमन्तुः,—

"पिता पितामहे योज्यः पूर्णे संवत्सरे सुतैः।

माता मातामहे तद्वदित्याह भगवन् शिवः"—इति।

मातुः सापिण्ड्ये गोत्रनियममाह† मार्कण्डेयः,—

"ब्राह्मादिषु विवाहेषु या तूढा कन्यका भवेत्।

भर्तृगोत्रेण कर्त्तव्या तस्याः पिण्डोदकक्रिया॥

आसुरादिविवाहेषु पितृगोत्रेण धर्मवित्"—इति।

गोलाचिरपि,—

"मातामहस्य गोत्रेण मातुः पिण्डोदकक्रियाः।

कुर्वीत पुत्रिकापुत्र एवमाह प्रजापतिः(१)"—इति।

पत्न्याः सपिण्ड्यं दर्शयति पैठीनसिः,—

"अपुत्रायां मृतायान्तु पतिः कुर्य्यात् सपिण्डताम्।

श्वश्र्वादिभिः सहैवास्याः सपिण्डीकरणं भवेत्(२)"—इति।

पत्युः सापिण्ड्यमाह गोलाचिः,—

---

* विन्नानां,—इति पुस्तकान्तरीयः पाठः समीचीनः। विन्नानामिति विवाहितानामित्यर्थः।

† गोत्रनिर्णयमाह,—इति मा० स०।

---

(१) पुत्रिकाया ब्राह्मादिविवाहेनोढ़ाया अपि पिण्डादिकं तत्पितृगोत्रेण पुत्रोदद्यादित्यर्थः।

(२) यदा पतिः सपिण्डनं करोति, तदा श्वश्र्वादिभिः सहैव स्त्रियाः सपिण्डनं कुर्य्यादित्यर्थः।

"भर्त्रभावे स्वयं पत्न्यः स्वभर्तॄणाममन्त्रकम्
सपिण्डीकरणं कुर्युः ततः पार्वणमेवच"—इति ।

सुमन्तुरपि,—

"अपुत्त्रे प्रस्थिते[१] कर्त्ता नास्ति चेच्छ्राद्धकर्मणि ।
तत्र पत्न्यपि कुर्वीत सापिण्ड्यं पार्व्वणं तथा"—इति ।

यत्तु स्मृत्यन्तरम्,—

"अपुत्त्रस्य परेतस्य नैव कुर्यात्सपिण्डताम् ।
अशौचमुदकं पिण्डमेकोद्दिष्टं न पार्वणम् ॥
अपुत्त्रा ये मृताः केचित्पुरुषा वा तथा स्त्रियः* ।
तेषां सपिण्डनाभावादेकोद्दिष्टं न पार्वणम्[२]"—इति ।

तत्पुत्त्रोत्पादनविधिप्रशंसापरतया व्याख्येयम्[३] । यतीनां सापिण्ड्यं निषेधत्युशना,-

* स्त्रियोऽपिवा,—इति मु० ।

(१) प्रस्थिते मृते । संस्थिते,—इति तु युक्तः पाठः ।

(२) सपिण्डनाभावात् पार्व्वणं नेति, "सपिण्डीकरणादूर्द्ध्वं प्रेतः पार्व्वणभाग्भवेत्"—इत्यनेन कृतसपिण्डनस्यैव पार्व्वणभागित्वोक्तेरिति भावः।

(३) अपुत्त्रस्यापि सपिण्डनं पार्व्वणञ्चास्त्येव, पूर्व्वोक्तवचनात् । अत्र तदभावोक्तिस्तु पुत्त्रोत्पादनविधिप्रशंसार्था । इत्थमभ्यर्हितः पुत्त्रोयत्तदभावे सपिण्डनं पार्व्वणञ्चास्य न भवति, अतस्तदुत्पादने सर्व्वथा यतितव्यमिति तद्विधिः प्रशस्यते । तथाच अपुत्त्रस्य सपिण्डनं पार्व्वणञ्च नास्तीति यतोऽप्यभाववचनं अनुदरा कन्येत्यादिवदिति भावः ।

"सपिण्डीकरणं तेषां न कर्त्तव्यं सुतादिभिः।
त्रिदण्डग्रहणादेव प्रेतत्वं नैव जायते[१]॥
एकोद्दिष्टं न कुर्वीत यतीनाञ्चैव सर्वदा।
अहन्येकादशे तेषां[†] पार्व्वणन्तु विधीयते"—इति।

इत्युभयात्मकं सपिण्डीकरणं निरूपितम्।

---

## अथ पार्वणविकृतिरूपं वृद्धिश्राद्धन्निरूप्यते।

तत्र याज्ञवल्क्यः—

"एवं प्रदक्षिणावृत्तो वृद्धौ[२] नान्दीमुखान पितॄन्।
यजेत दधिकर्कन्धुमिश्राः पिण्डाः[*] यवैः क्रिया"—इति।

एवं, पार्वणवदित्यर्थः। तथाच विष्णुधर्मोत्तरे,—

"वृद्धौ समर्च्चयेद्विद्वान् नित्यं नान्दीमुखान् पितॄन्।
सम्पादितो विशेषस्तु शेषं पार्वणवद्भवेत्"—इति।

पार्वणवदित्यनेनावाहनत्रिपुरुषोद्देशादयोऽतिदिश्यन्ते। अयं तु विशेषः सम्पादितः, नान्दीमुखसंज्ञकाः पितरः,—इति। एतस्य प्रदक्षिणावृद्वदरदध्यादीनां याज्ञवल्क्योक्तानामितरेषां च विशेषाणा-

---

* प्राप्ते,—इति मु०।

† मिश्रान् पिण्डान्,—इति ना० मु०।

---

(१) "वाग्दण्डोऽथ मनोदण्डः कायदण्डस्तथैवच। यस्यैषा नियता बुद्धिस्त्रिदण्डीति स उच्यते"—इत्युक्तं दण्डत्रयं बोध्यम्।

(२) वृद्धिराप्यायमानं कर्म्म विवाहादिकम्।

मुपलक्षणम्। ते च विशेषाः कात्यायनेन दर्शिताः। "आभ्युदयिके श्राद्धे प्रदक्षिणमुपचारः, पित्र्यमन्त्रवर्जनमृजवो दर्भाः, यवैस्तिलार्थं, सुसम्पन्नमिति तृप्तिप्रश्नः, सुसम्पन्नमित्यनुज्ञा, दधिबदराक्षतमिश्राः पिण्डाः, नान्दीमुखान् पितॄनावाहयिष्ये इति पृच्छति, नान्दीमुखाः पितरः प्रीयन्तामित्यक्षय्यस्थाने, नान्दीमुखान् पितॄनर्चयिष्ये इति पृच्छति, नान्दीमुखाः पितरः पितामहाः प्रपितामहाश्च प्रीयन्तामित्यनेन स्वधां कुर्यात्, युग्मानाशयेत्"—इति। प्रचेता अपि,—

"मातृश्राद्धन्तु पूर्वं स्यात् पितॄणां तदनन्तरम्।
ततो मातामहानाञ्च वृद्धौ श्राद्धत्रयं स्मृतम्॥
न जपेत् पैतृकं जप्यं(१) न मांसं तत्र दापयेत्।
प्राङ्मुखो, देवतीर्थेन क्षिप्रं देशविमार्जनम्"—इति।

प्राङ्मुखः, पिण्डदानादिकं कुर्य्यादित्यध्याहारः। अतएव प्रचेताः,—

"अपसव्यं न कुर्वीत न कुर्य्यादप्रदक्षिणम्*(२)।
यथा चोपचरेद् देवान् तथा वृद्धौ पितॄनपि।
प्रदद्यात्प्राङ्मुखः पिण्डान् वृद्धौ सव्येन(३) वाग्यतः"—इति।

पिण्डदाने विशेषमाह वसिष्ठः,—

---

* न कुर्य्यात्तु प्रदक्षिणम्,—इति ना०।

---

(१) अनेन पार्व्वणातिदेशप्राप्तपितृगाथादिजपोऽत्र निषिध्यते।

(२) अत्र पार्व्वणवत् वामावर्त्तेनोपचारो न कर्त्तव्यः, किन्तु दक्षिणावर्त्तेनेत्यर्थः।

(३) सव्येन उपवीतिना। प्राचीनावीतित्वस्यापसव्यतयोल्लेखात्।

"प्राङ्मुखो देवतीर्थेन प्राक्कूलेषु[१] कुशेषु च।
दत्वा पिण्डान् न कुर्वीत पिण्डपात्रमधोमुखम्"—इति।

पिण्डदानं न चोच्छिष्टसन्निधौ,

"प्रदद्यात् प्राङ्मुखः पिण्डान् वृद्धौ नाम्ना न वाग्यतः"—इति शातातपस्मरणात्। नामोच्चारणं च प्रथमपिण्डएव न द्वितीये। तदुक्तं चतुर्विंशतिमते,—

"एकं नाम्ना परं तूष्णीं दद्यात् पिण्डान् पृथक् पृथक्"—इति। एकैकस्मै द्वौ द्वौ पिण्डौ, तत्राद्यं नाम्ना द्वितीयं तूष्णीं दद्यादित्यर्थः। वृद्धिश्राद्धे पिण्डदानं वैकल्पिकम्। तथा च भविष्यत्पुराणम्,—

"पिण्डनिर्वपणं कुर्यात् न वा कुर्यान्नराधिप।
वृद्धिश्राद्धे महाबाहो, कुलधर्मानवेक्ष्य तु"—इति॥

वृद्धिश्राद्धनिमित्तान्याह लोगाक्षिः,—

"नवान्नचौलगोदाने सोमोपायनपुंसवे।
स्नानाधानविवाहेषु नान्दीश्राद्धं विधीयते[२]"—इति।

---

(१) प्राक्कूलेषु प्रागग्रेषु।

(२) गावः केशाः दीयन्ते खण्ड्यन्ते अत्रेति व्युत्पत्त्या गोदानं नाम केशान्तापरनामधेयस्तृह्योक्तसंस्कारविशेषः। सोमः सोमयागः। उपायनं प्रतिष्ठा। पुंसवः पुंसवनापरनामधेयो गर्भसंस्कारविशेषः। स्नानं, अध्ययनानन्तरं गृहस्थाश्रमप्रवेशात् पूर्व्वं कर्त्तव्यं समावर्त्तनापरनामधेयमाप्लवनं गृह्यादौ विहितम्। आधानमग्न्याधानम्। गर्भाधानं वा।

काष्र्णाजिनिरपि,—

"कन्यापुत्रविवाहेषु प्रवेशे नववेश्मनः।
नामकर्म्मणि बालानां चूडाकर्म्मादिके तथा॥
सीमन्तोन्नयने चैव पुत्रादिमुखदर्शने।
नान्दीमुखान् पितृगणान् पूजयेत् प्रयतो गृही"—इति॥

वृद्धगार्ग्योऽपि,—

"अग्न्याधानाभिषेकादाविष्टापूर्त्ते स्त्रियादृतौ[१]।
वृद्धिश्राद्धं प्रकुर्वीत आश्रमग्रहणे तथा"—इति॥

इत्थं श्राद्धानि निरूपितानि। अधुना तत्कर्त्ता निरूप्यते।
तत्र वृहस्पतिः,—

"प्रमीतस्य पितुः पुत्रैः श्राद्धं देयं प्रयत्नतः।
ज्ञातिबन्धुसुहृच्छिष्यैर्ऋत्विग्भृत्यपुरोहितैः[२]"—इति॥

विष्णुपुराणेऽपि,—

"पुत्रः पौत्रः प्रपौत्रो वा तद्वद्वा भ्रातृसन्ततिः।

(१) अभिषेकोराजाभिषेकः। इष्टं "अग्निहोत्रं तपः सत्यं वेदानाञ्चानुपालनम्। आतिथ्यं वैश्वदेवञ्च इष्टमित्यभिधीयते"—इत्युक्तलक्षणम्। पूर्त्तं, "वापीकूपतड़ागादि देवतायतनानि च। अन्नप्रदानमारामाः पूर्त्तमित्यभिधीयते"—इत्युक्तस्वरूपम्। स्त्रियादृतौ गर्भाधाने।

(२) "पुरोहितञ्च कुर्व्वीत वृणुयादेव चर्त्विजम्। तेऽस्य गृह्याणि कर्म्माणि कुर्य्युर्वैतानिकानि च"—इति स्मरणात् गृह्यकर्म्मकर्त्ता पुरोहितः, वैतानिककर्म्मकर्त्ता ऋत्विक्। वैतानिकं श्रौतम्। अतएव स्मर्य्यते। "अग्न्याधेयं पाकयज्ञानग्निष्टोमादिकान् मखान्। यः करोति वृतो यस्य स तस्यर्त्विगिहोच्यते"—इति।

सपिण्डसन्ततिर्वाऽपि क्रियार्हा नृप, जायते"—इति।

तत्र मुख्यानुकल्पौ[१] विविनक्ति शङ्खः,—

"पितुः पुत्त्रेण कर्त्तव्या पिण्डदानोदकक्रिया।

पुत्त्राभावे तु पत्नी स्यात् पत्न्यभावे तु सोदरः"—इति॥

स्मृतिसङ्ग्रहेऽपि,—

"पुत्त्रः कुर्यात् पितुः श्राद्धं पत्नी तु तदसन्निधौ।

धनहार्य्यथ दौहित्रस्ततो भ्राता च तत्सुतः॥

भ्रातुः सहोदरो भ्राता कुर्याद्दाहादि तत्सुतः।

तत्स्त्वसोदरो भ्राता तदभावे तु तत्सुतः"—इति॥

पुत्त्रशब्देन मुख्या गौणाश्च पुत्त्रा गृह्यन्ते[२]। तेषां सर्वेषामभावे पौत्त्रः कुर्यात्। तस्याभावे तु पत्नी। अतएव बृहस्पतिना पौत्त्रस्य पुत्त्रिकापुत्त्रसाम्यमुक्तं,—

"पौत्त्रोऽथ पुत्त्रिकापुत्त्रः स्वर्गप्राप्तिकरावुभौ।

रिक्थे च पिण्डदाने च समौ तौ परिकीर्त्तितौ"—इति।

न चैतावता तयोः समविकल्पः शङ्कनीयः,

---

(१) मुख्यकल्पः प्रथमकल्पः। अनुकल्पः प्रतिनिधिकल्पः आपत्कल्पः,—इति यावत्।

(२) मुख्यौ पुत्त्रिकौरसौ इतरे क्षेत्रजादयो गौणाः। "आज्याभावे यथा तैलं सद्भिः प्रतिनिधीकृतम्। तथैकादश पुत्त्राः स्युः पुत्त्रिकौरस-योर्विना"—इति स्मरणात्। पुत्त्रिकौरसयोरप्यौरसस्य श्रैष्ठम्। "संस्कृतायां सवर्णायां स्वयमुत्पादयेत्तु यम्। तमौरसं विजानीयात पुत्त्रं प्रथमकल्पितम्"—इति स्मरणात्।

"नैव* पौत्रेण कर्त्तव्यं पुत्रवांश्चेत् पितामहः"—इति कात्यायनस्मरणात् । पत्न्यभावे तु सोदर इत्ययं क्रमः, पत्न्या-दायहरणे द्रष्टव्यः । अन्यथा यो दायहरः, सएव कुर्यात् । अत एव विज्ञानेश्वरसम्मतो । "यस्यार्थहरः स पिण्डदायी"—इति । पुत्रः पितृवित्ताभावेऽपि पिण्डं दद्यात्तदभावे सपिण्डोदद्यात्, सपिण्डा भावे समानोदकादयः कुर्युः । तथा च मार्कण्डेयपुराणम्,—

"पुत्राभावे सपिण्डास्तु तदभावे सहोदकाः[१] ।
मातुः सपिण्डा ये वा स्युर्ये वा मातुः सहोदकाः ॥
कुर्युरेनं विधिं सम्यक् अपुत्रस्य अुताः† स्नुताः ।
कुर्य्यान्मातामहायैव पुत्रिकातनयस्तथा ॥
सर्वाभावे स्त्रियः कुर्युः स्वभर्तॄणाममन्त्रकम् ।
तदभावे च नृपतिः कारयेत्तस्य रिक्थतः‡ ।
तत्स्थानीयैर्नरैः§ सम्यक् दाहाद्याः सकलाः क्रियाः ।
सर्वेषामेव वर्णानां बान्धवो नृपतिर्यतः"—इति ॥

* नैतत्,—इति मु० ।
† सुताः,—इति गा० ।
‡ नास्तीदमर्द्धं गा० स० पुस्तकयोः ।
§ तज्जातीयैर्नरैः,—इति मु० ।

(१) "सहोदकाः समानोदकाः । "सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तते । समानोदकभावस्तु जन्मनाम्नोरवेदने"—इत्यनेन सपिण्डसमानोदकयोर्भेदउन्नेयः ।

सर्वाभावे स्त्रियः कुर्युरित्यासुरादिविवाहोढस्त्रीविषयम्। अत्र पुत्राभावे तु पत्नीत्यनेन सहाविरोधः। तस्याः पत्नीत्वाभावात् अतएव शातातपः तस्याः पत्नीत्वं निषेधति,—

"क्रयक्रीता तु या नारी न सा पत्न्यभिधीयते।

न सा दैवे न सा पित्र्ये दासीं तां कवयो विदुः[१]"—इति।

पूर्वमध्यमोत्तरासु पुत्रादीनां व्यवस्थितमधिकारं दर्शयति पराशरो विष्णुपुराणे,—

"पूर्वा क्रिया मध्यमा च तथैवोत्तरसंज्ञिताः।

त्रिप्रकाराः क्रिया ह्येतास्तासां भेदं शृणुष्व मे॥

आ दाहाद्दा द्वशाहाच्च* मध्ये याः स्युः क्रिया मताः।

---

* आद्याद्दाहाद्दशाहाच्च,—इति मु०।

---

(१) "आसुरोऽविशादानात्"—इत्यादिना धनदानपूर्व्वककन्याग्रहणस्यासुरविवाहत्वात् धनेन गृहीतायाश्च क्रयक्रीतत्वात् न तस्याः पत्नीत्वम्। अतएवासुरादिविवाहोढ़ायाः पत्नीत्वाभावात् सर्वाभावे तस्याः अधिकारः, ब्राह्मादिविवाहोढ़ायास्तु पत्नीत्वात् पुत्राभावे अधिकार इति सर्वाभावे स्त्रियः कुर्य्युरिति पुत्राभावे तु पत्नी स्यादित्यनयोर्वचनयोर्न विरोधः। यद्यपि आसुरविवाहमात्रे द्रविणादानोक्तेस्तद्विवाहेनोढ़ायाएव क्रयक्रीततया पत्नीत्वाभावो न गान्धर्वादिविवाहोढ़ाया इत्यासुरादिविवाहोढ़स्त्रीविषयमित्यत्रादिपदमसङ्गतं प्रतिभाति, तथापि आसुरविवाहेनोढ़ायाः सर्वाभावे अधिकार-दर्शनात् तदपेक्षया परतो निर्दिष्टेन गान्धर्वादिविवाहेनोढ़ायः अपि तथात्वमिति भावः।

ताः पूर्वाः, मध्यमा मासि मास्येकोद्दिष्टसंज्ञिताः॥
प्रेते पितृत्वमापन्ने सपिण्डीकरणादनु।
क्रियन्ते याः क्रियाः पित्र्याः प्रोच्यन्ते ता नृपोत्तराः॥
पितृमातृसपिण्डैस्तु समानसलिलैस्तथा।
तत्संघातगतैश्चैव राज्ञा वा धनहारिणा॥
पूर्वाः क्रियास्तु कर्त्तव्याः पुत्राद्यैरेव चोत्तराः।
दौहित्रैर्वा नरश्रेष्ठ*, कार्य्यास्तत्तनयैस्तथा"—इति॥

सपिण्डाद्यैरवनिपत्यन्तैः पूर्वाः क्रिया मध्यमाश्च कर्त्तव्याः। पुत्राद्यैरेव भ्रातृसन्तत्यन्तैः दौहित्राद्यैश्चोत्तराः क्रियाः कर्त्तव्याः, न सपिण्डाद्यैरवनिपत्यन्तैरित्यर्थः। औरसः सुतोऽनुपनीतोऽपि दाहादिकाः क्रियाः कुर्यात्। तदाह सुमन्तुः,—

"श्राद्धं कुर्यादवश्यन्तु प्रमीतपितृको हि यः।
व्रतस्थो वाऽव्रतस्थो वा एकएव भवेद्यदि"—इति॥

अव्रतस्थोऽनुपनीतः। तदाह वृद्धमनुः,—

"कुर्यादनुपनीतोऽपि श्राद्धमेको हि यः सुतः।
पितृयज्ञाहुतिं पाणौ जुहुयाद्ब्राह्मणस्य सः(१)"—इति॥

अत्र विशेषः प्रचेतसा† दर्शितः,—

* दौहित्रैर्भागिनेयैश्च,—इति मु०।
† व्याघ्रेण,—इति मु०।

(१) अनुपनीतस्याहिताग्नित्वाभावात्, "न पैत्रयज्ञियोहोमो लौकिकाग्नौ विधीयते"—इति मनुना पितृयज्ञियहोमस्य लौकिकाग्नौ निषेधाच्च अनुपनीतेन ब्राह्मणपाणावग्नौकरणहोमः कर्त्तव्य इति भावः।

"कृतचूडस्तु कुर्वीत उदकं पिण्डमेव च।
स्वधाकारं प्रयुञ्जीत वेदोच्चारं न कारयेत्"—इति॥

मातापित्रोरुभयोरपि कुर्वीतेत्यर्थः। तथा च स्मृत्यन्तरम्,—

"कृतचूडोऽनुपेतस्तु पित्रोः श्राद्धं समाचरेत्।
उदाहरेत् स्वधाकारं न तु वेदाक्षराण्यसौ"—इति॥

यत्तु मनुनोक्तम्,—

"न ह्यस्मिन् युज्यते कर्म किञ्चिदामौञ्जिबन्धनात्।
नाभिव्याहारयेद्ब्रह्म स्वधानिनयनादृते[१]"—इति॥

तत् त्रिवर्षकृतचूडाविषयम्। तथा च सुमन्तुः,—

"अनुपेतोऽपि कुर्वीत मन्त्रवत् पैतृमेधिकम्।
यद्यसौ कृतचूडः स्याद् यदि स्याच्च त्रिवत्सरः"—इति॥

अथ मातामहादिश्राद्धाधिकारनिर्णयः। तत्र व्यासः,—

"पितॄन्मातामहांश्चैव द्विजः श्राद्धेन तर्पयेत्।
अनृणः स्यात् पितॄणान्तु ब्रह्मलोकं च गच्छति"—इति॥

मातामहानामिति बहुवचनं मातुः पितामहप्रपितामहयोरपि[२] सङ्ग्रहार्थम्। तथा च पुलस्त्यः,—

"मातुः पितरमारभ्य त्रयो मातामहाः स्मृताः।
तेषान्तु पितृवच्छ्राद्धं कुर्युर्दुहितृसूनवः"—इति॥

(१) मौञ्जिबन्धनमुपनयनम्। स्वधानिनयनं श्राद्धसम्पादकमन्त्रजातम्। स्वधा श्राद्धं निनीयते सम्पाद्यते अनेनेति व्युत्पत्तेः।

(२) पितामहप्रपितामहयोरित्यत्र मातुरिति पूरणीयम्। तेन, श्राद्धकर्त्तुः प्रमातामह-वृद्धप्रमातामहयोरित्यर्थः।

पितृश्राद्धवन्मातामहश्राद्धमपि नित्यं, अकरणे प्रत्यवायस्मरणात्। तदुक्तं स्कन्दपुराणे,—

"पार्वणं कुरुते यस्तु केवलं पितृहेतुतः।

मातामहन्न कुरुते पितृहा स प्रजायते"—इति ॥

ऋष्यशृङ्गोऽपि,—

"पितरो यत्र पूज्यन्ते तत्र मातामहा ध्रुवम्।

अविशेषेण कर्त्तव्यं विशेषान्नरकं व्रजेत्"—इति ॥

मातामहश्राद्धं क्वचिदपवदति कात्यायनः,—

"कर्षूसमन्वितं मुक्ता तथा श्राद्धञ्च षोड़शम्।

प्रत्याब्दिकञ्च शेषेषु पिण्डाः स्युः षडिति स्थितिः"—इति ॥

कर्षूसमन्वितं सपिण्डीकरणश्राद्धम्। षोड़शग्रहणमेकोद्दिष्टोपलक्षणार्थम्। सज्ञातमरणे श्राद्धक्रममाह ऋष्यशृङ्गः,—

"भवेद्यदि सपिण्डानां युगपन्मरणं तथा।

सम्बन्धासत्तिमालोच्य तत्क्रमाच्छ्राद्धमाचरेत्"—इति ॥

अत्र पत्न्यादिसपिण्डेषु सम्बन्धासत्तिरेवं द्रष्टव्या। पतिपत्न्योः सम्बन्धः प्रत्यासन्नः, एकप्रतियोगिकत्वादव्यवधानाच्च[१]। पुत्रस्य तु मातापितृद्वयनिरूप्यत्वेन विलम्बितप्रतिपत्तेर्विप्रकृष्टः सम्बन्धः। भ्रातुस्तु पितृजन्यव्यवधानेन ततोऽपि विप्रकृष्टः। एवमन्यत्रोहनीयम्। पत्न्यादीनां पित्रोश्च सज्ञातमरणे ऋष्यशृङ्गः,—

(१) पतित्वं पत्नीमात्रनिरूप्यं, पत्नीत्वमपि पतिमात्रनिरूप्यमित्येकप्रतियोगिकत्वमतएवाव्यवहितत्वञ्च तयोःसम्बन्धस्य।

"पत्न्याः पुत्रस्य तत्पुत्रभ्रातुर्वा तत्तनयस्य च।
स्नुषायाश्च पित्रोश्च सञ्जातमरणं यदि॥
अर्वागब्दाच्छ्राद्धपितृपूर्वं सापिण्ड्यमाचरेत्"—इति।

तत्पुत्रः पुत्रपुत्रः। तत्तनयो भ्रातृतनयः। यत्तु देवलेनोक्तम्,—

"पितरौ प्रमृतौ यस्य देहस्तस्याशुचिर्भवेत्।
न दैवञ्चापि पित्र्यञ्च यावत् पूर्णो न वत्सरः"—इति॥

तत्पूर्वोक्तपत्न्यादिव्यतिरिक्तसपिण्डविषयम्। अतएव लौगाक्षिः,—

"अन्येषां प्रेतकार्याणि सत्यागुरुनिपातने।
कुर्यात् संवत्सरादर्वाक् श्राद्धमेकन्तु वर्जयेत्"—इति॥

प्रेतकार्याणि दहनादीन्याद्यश्राद्धान्तानि विवक्षितानि, "आद्यं श्राद्धमशुद्धोऽपि कुर्यादेकादशेऽहनि"—इति विशेषस्मरणात्। एकमित्यन्यदित्यर्थः*(१)। पित्रोः सञ्जातमरणे देवलः,—

"पित्रोरुपरमे पुत्राः क्रियां कुर्युर्द्वयोरपि।
अनुवृत्तौ च नान्येषां सञ्जातमरणेऽपि वा"—इति॥

---

* एकमित्येकस्य वर्ज्जयेदित्यर्थः,—इति ना०।
† वान्येषां,—इति ना०।

---

(१) तथाच पितृमातृमरणे वत्सरमध्ये पत्न्यादीनां दाहादि प्रेतकार्यं श्राद्धञ्च कर्त्तव्यमेव। पत्न्यादिभिन्नसपिण्डानान्तु दाहाद्याद्यश्राद्धपर्य्यन्तमेव कार्य्यं, न तेषां प्रेतश्राद्धमपि,—इति व्यवस्थानिष्कर्षः।

अनुगमनेन पित्रोः सङ्घातमरणे मातुरनुगमनेन दिनान्तर-मरणेऽपि तत्तद्द्वादशाहे क्रियां कुर्युः, अन्येषां पित्रोश्च सङ्घात-मरणे यथाकालं न कुर्युः, किन्तु* त्रिपचएव। तदाह लौगाक्षिः,—

"पत्नी पुत्रस्तथा पौत्रो माता तत्पुत्रका अपि† ।
पितरौ च यदैकस्मिन् म्रियेरन् वासरे तदा ॥
आद्यमेकादशे कुर्यात् त्रिपक्षे तु सपिण्डनम्"—इति ।

पित्रोरनुगमनं विना सङ्घातमरणे मातुरनुगमनं विना दिनान्त-मरणेऽपि मातुस्त्रिपक्षे सपिण्डनं कुर्यात् । तथा च देवलः,—

"एकाहमरणे पित्रोरन्यस्यान्यदिने मृतौ ।
सपिण्डनं त्रिपक्षे स्यादनुयानमृतिं विना"—इति ॥

मातृपितृश्राद्धद्वयस्य दैवात्कालैक्येऽपि पितृश्राद्धं पूर्व्वं कुर्यात् । तदाह कार्ष्णाजिनिः,—

"पित्रोः श्राद्धे समं प्राप्ते नवे पर्युषितेऽपि वा ।
पितृपूर्व्वं सुतः कुर्यादन्यत्रासत्तियोगतः"—इति ॥

अन्यत्र मातृपितृव्यतिरिक्तविषये सम्बन्धासत्तियोगतः कुर्या-दित्यर्थः । यत्तु प्रचेतसोक्तम्,—

"नैकः श्राद्धद्वयं कुर्यात् समानेऽहनि कुत्रचित्"—इति ॥

तदैकस्मिन् श्राद्धे क्रियमाणे दैवतैक्यात् यद्यन्यस्य प्रसङ्गात् सिद्धि-

---

* यथाकालं कुर्युः किञ्च,—इति ना० ।

† पत्नी पुत्रः स्नुषा पौत्रो भ्रातृतत्तनया अपि,—इति मु० ।

स्तद्विषयम्[१]। यथा नित्यश्राद्धामावास्याश्राद्धयोरमावास्याश्राद्धेन नित्यश्राद्धसिद्धिः प्रासङ्गिकी। यथा वा, दार्शिकयुगादिश्राद्धयोर्युगादिश्राद्धेनैव दार्शिकसिद्धिः[२]। पित्रोर्म्मृताहैक्ये सत्यन्वारोहणविषये लौगाक्षिणा विशेष उक्तः,—

"मृतेऽहनि समासेन पिण्डनिर्व्वपणं पृथक्।
नवश्राद्धन्तु दम्पत्योरन्वारोहणएव तु"—इति॥

पिण्डनिर्व्वपणं श्राद्धं समासेन पाकाद्यैक्येन पृथगसपत्नीकं[३] कुर्यात्। नवश्राद्धमपि तथा कुर्यात्। स्मृत्यन्तरमपि,—

"एकचित्यां समारूढौ दम्पती निधनं गतौ।
पृथक् श्राद्धं तथा कुर्यादोदनं न* पृथक् पृथक्"—इति॥

अनेकमातृभिरेकचित्यामन्वारोहणे कृते पाकाद्यैक्येन प्रथमं पितुस्तदनन्तरं साक्षान्मातुस्ततो ज्येष्ठादिक्रमेण कुर्यात्। तदाह भृगुः,—

* च,—इति मु०।

(१) अन्योद्देशेन प्रवृत्तावन्यस्यापि सिद्धिः प्रसङ्गः।

(२) तथा च अमावस्यतरत्र नित्यश्राद्धविधेः, युगादीतरत्र च दर्शश्राद्धविधेरनुष्ठानप्रयोजकत्वात् तत्तद्विधीनां प्रामाण्यमुपपद्यते। नित्यश्राद्धेनामावस्याश्राद्धसिद्धौ दर्शश्राद्धेन युगादिश्राद्धसिद्धौ चामावस्यादिश्राद्धविधीनां कुत्राप्यनुष्ठानप्रयोजकत्वाभावात् अप्रामाण्यं स्यादिति भावः। एवञ्च विशेषेण सामान्यसिद्धिर्न तु सामान्येन विशेषसिद्धिरिति तात्पर्य्यम्।

(३) तथाच पित्रोः श्राद्धं पृथगेव कुर्य्यात्, न तु पितुः श्राद्धं सपत्नीकं तथा कृत्वा तावतैव मातृश्राद्धं कृतं मन्येतेत्यर्थः।

"एककाले गतासूनां बहूनामथ वा द्वयोः ।
तन्त्रेण श्रपणं कुर्यात् श्राद्धं कुर्यात् पृथक् पृथक् ॥
पूर्व्वकस्य मृतस्यादौ द्वितीयस्य जघन्यतः ।
तृतीयस्य ततः कुर्यात् सन्निपातेष्वयं क्रमः"—इति ॥

पूर्व्वकस्य मुख्यस्य पितुः, द्वितीयस्य ततो जघन्याया जनन्याः, तृतीयस्य ततोऽपि जघन्यया मातुरित्यर्थः(१) । पार्वणैकोद्दिष्टयोः सन्निपाते जाबालिः,—

"यद्येकत्र भवेतान्तेदेकोद्दिष्टं च पार्वणम् ।
पार्वणं तत्र निर्वर्त्य एकोद्दिष्टं समाचरेत्*"—इति ॥

अनेकनिमित्तसन्निपाते निमित्तानुक्रमेण श्राद्धं कुर्यात् । तथा च कात्यायनः,—

"द्वे बहूनि निमित्तानि जायेरन्नेकवासरे ।
नैमित्तिकानि कार्याणि निमित्तोत्पत्त्यनुक्रमात्"—इति ॥

यद्यप्येकदेवताकश्राद्धद्वयमेकस्मिन्नहनि न युक्तं, एकानुष्ठानेनेतरप्रयोजनस्यापि प्रसङ्गात् सिद्धेः; तथापि नैमित्तिकानि वचनबलादनेकान्यप्यनुष्ठेयानि । तथा च जाबालिः,—

"श्राद्धं कृत्वा तु तस्यैव पुनः श्राद्धन्न तद्दिने ।
नैमित्तिकन्तु कर्त्तव्यं निमित्तानुक्रमोदयम्"—इति ॥

---

* एकोद्दिष्टन्तु निर्वर्त्त्य पार्वणं विनिवर्त्तयेत्,—इत्यन्यत्र पाठः ।

---

(१) मातृपदमत्र सपत्नीमातृपरं बोध्यम् ।

नित्यकाम्ययोरेकदेवताकयोः सन्निपाते काम्येनैव नित्यसिद्धिः। तदुक्तं स्मृतिसंग्रहे,—

"काम्यतन्त्रेण नित्यस्य तन्त्रं श्राद्धस्य सिध्यति"—इति॥

यत्राशौचविधानजातमजहत्स्वार्थप्रयुक्त्या दृशा
प्रोक्तं यत्र च संगृहीतवपुषां श्राद्धं समृद्धौ पदम्।
अध्यायं तदवाप्तनिर्णयविदां तार्त्तीयमार्त्तिच्छिदं
सोऽयं व्याकृरुते स्वतन्त्रमहिमा मन्त्रीश्वरोमाधवः॥

इति श्रीमहाराजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक-श्रीवीर-बुक्कभूपालसाम्राज्यधुरन्धरस्य माधवामात्यस्य कृतौ पराशरस्मृति-व्याख्यायां माधवीयायां तृतीयोऽध्यायः समाप्तः॥०॥

॥०॥ समाप्तश्चाचारकाण्डम् ॥०॥

# शुद्धिपत्रम्।

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम्। |
|---|---|---|---|
| २ | १२ | ज्ञाता | ज्ञाती |
| ५ | २५ | स्मृतिष | स्मृतिषु |
| ६ | १० | व्युत्पत्त्य् | व्युत्पित्त्य् |
| १९ | १८ | त्येष्ठे | ज्येष्ठे |
| " | १९ | निर्व्विघ्नम | निर्व्विघ्नन् |
| २३ | २४ | पूर्व्वपक्षा | पूर्व्वपक्षी |
| २४ | १९ | तथा | तथा च |
| २८ | ८ | मुि ा | मुनि |
| ३० | २२ | मुद्रितात्मविवेक | मुद्रितात्मतत्त्वविवेक |
| ३१ | २ | आसभ्यते | आरभ्यते |
| ३७ | २४ | चित्तम्य | चित्तस्य |
| ३८ | ६ | पारभते | मारभते |
| ४० | २७ | परिणाम्यमाणा | परिणाममाना |
| ४५ | १९ | इत्युक्त-प्र | इत्युक्त-स |
| ४६ | ९, १० | मी० अ० १ पा० २ सू० | मी० ६ अ० ८ पा० २२ सू० |
| ४७ | २० | प्रमात | प्रमीत |
| ५८ | १३ | धम्म | धर्म्मं |
| ५९ | २ | शिष्यैः | शिष्यैः, |
| ६१ | ८ | सव | सर्व्वे |
| ६९ | २१ | यस्य | तस्य |
| ७० | १२ | वत्सल | वत्सल ! |
| ७६ | २० | लक्षणमुच्यते | लक्षणो उच्यते |
| ८४ | २१ | नुणत्व | गुणत्व |
| ८६ | १२ | तत्रैकादशे | तत्रैकादशे |
| ९० | १० | भूलत्वेन | मूलत्वेन |
| ९२ | २१ | मल | मूल |
| ९६ | ३ | 'व्यसङ्गम्य | ''व्यसङ्गस्य |
| " | ११ | दहस्य | देहस्य |

